श्रीः

# काव्यादर्शः

## महाकविश्रीदण्ड्याचार्यविरचितः

सारस्वतवंशावतंसेन प्राच्यमहाविद्यालयसाहित्यदर्शनशास्त्राध्यापकेन
लवपुरवास्तव्य-जैनन्यायविशारद-कवितार्किक-नृसिंहदेव-
शास्त्रिणा दर्शनाचार्येण विरचितया अतिसरलया स्वोपज्ञ-
"सौभाग्यवती" सनाथया कुसुमप्रतिमाख्यया
व्याख्यया समुद्भासितः

प्राप्तिस्थानम्—

**मेहरचन्द्र लक्ष्मणदास**

**संस्कृत हिन्दी पुस्तक विक्रेता**

**सैदमिट्ठा बाजार, लाहौर।**



राजसंस्करण सजिल्द ४) ] द्वितीयावृत्ति जन्माष्टमी १९९० [ साधारण संस्करण सजिल्द ३)

# किञ्चित् प्रास्ताविकम् ।

इह खलु सर्वेऽपि प्राणिनः स्वस्वेष्टसाधनघटमाना बहुधाऽनिष्टमप्यासादयन्तीति प्रात्यहिकं नः प्रत्यक्षदृष्टमेतत् । तत्र विशेषतः किमिष्टं किमनिष्टञ्चेति जिज्ञासाकुलितहृदया मनुष्या एव भवितुमर्हन्ति । मनुष्याधिकारञ्च शास्त्रम् । ते यद्यनालोच्य शास्त्रं स्वमनीषिकयैव इष्टानिष्टे कल्पयन्ति अन्धगोलाङ्गूलन्यायेन गर्त्ते पतन्तोऽनर्थञ्चर्च्छन्ति श्रेयसो भ्रश्यन्ति च । यत उक्तम्—

**अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।**
**सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥** इति ।

काव्यादर्शप्रणेता (दण्डी) साहित्याचार्यशिरोमणिरप्याह—*"**दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति, तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात्**" इति । शास्त्रञ्चानेकविधमधिकारनानात्वात् । तेषु चेदं 'साहित्यशास्त्रं' मन्दामन्दमतीनां सर्वेषामपि हिताहितौपयिकबोधनक्षममनायासेनेति नात्र केषाञ्चिदपि विवादः । यतोऽस्य प्रयोजनान्येवामुमर्थं स्फुटमवगमयन्ति । उक्तं हि श्रीहेमचन्द्राचार्येण—'**काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशाय च**' इति । '**कान्तेव सरसतापादनेन सम्मुखीकृत्य रामादिवद्वर्त्तितव्यं न रावणादिवदित्युपदिशतीति सहृदयानां प्रयोजनम्**' इति च । तस्मात् अनायासेन सन्मार्गस्वरूपावगमलोलुपैः ऐहिकामुष्मिककल्याणेप्सुभिरवश्यमेव शास्त्रमिदमध्येतव्यं यत् 'साहित्यं' नामेति । एतस्यैव च 'अलङ्कारशास्त्रम्' इत्यपराप्यभिधाऽस्तीति बहवः ।

## १—किमिदं साहित्यं नाम ?

हितेन सह वर्त्तत इति सहितम् । सहितस्य भावः कर्म वेति साहित्यम् । '**गुणवचनब्राह्मणादिभ्यः कर्मणि च**' (५।१।१२४) इति सूत्रेण ष्यञन्तोऽयं शब्दः । साहित्यं, साहिती, साह्यम् इत्यनर्थान्तरम् । साहित्यप्रधानं शास्त्रं 'साहित्यशास्त्रम्' । भवति हि दृश्यश्रव्यादिनानाविधकाव्यस्वरूपनिरूपणपरमिदमलङ्कारशास्त्रं सर्व-

---

* दशकुमारचरितस्याष्टमोच्छ्वासे 'वसुरक्षितस्य' मन्त्रिवृद्धस्य 'अनन्तवर्माणं' राजानम्प्रत्युक्तिरियम् ।

शास्त्रमर्मविज्ञानाय साहितीं कुर्वदिति सर्वेषां विदुषां विदितचरमेवैतत् । एवञ्च—'साहित्य' शब्दोऽयं सकलासु भरतादिमुनिप्रणीतासु नाट्यादिकलासु व्याप्तिं भजमानो वर्त्तते यस्यैकदेश-मिदमलङ्कारशास्त्रमिति नः प्रतिभाति । 'अलङ्कार'शब्दश्च—अनुप्रासोपमालङ्कारादिषु प्रायः प्रसिद्धोऽस्ति, तत्प्रतिपादकत्वाच्छास्त्रस्य तथा व्यपदेश इति युज्यते, तावता दोषगुणादीनां निरूपणपरस्यापि अस्य शास्त्रस्य अलङ्कारनाम्नैव व्यपदेशो न परं दोषशास्त्रं गुणशास्त्रं रीतिशास्त्रं वेति जायते शङ्का, यद्यप्यत्र न वयं साक्षात् किमपि बीजं पश्यामः तथापि अलङ्कृतिरलङ्कार इति भावप्रधाननिर्देशेन दोषापगमगुणालङ्कारादिसंवलनकृतसौन्दर्यपरोऽयं शब्दः, तत्प्रति-पादकत्वादेव अस्यालङ्कारनाम्ना समभिव्याहार इति युक्तमुद्भावयामः । अत एव **'काव्यं ग्राह्यमलङ्कारात्'** (१ । १) । **'सौन्दर्यमलङ्कारः'** (१ । २) अलङ्कृतिरलङ्कारः । करणव्युत्पत्त्या पुनरलङ्कारशब्दोऽयमुपमादिषु वर्त्तते । **'स दोषगुणालङ्कारहानादाना-भ्याम्'** (१ । ३) स खल्वलङ्कारो दोषहानात्, गुणालङ्कारादानाच्च सम्पाद्यः कवेरित्या-दिसंदर्भेण 'वामनो'ऽप्यमुमेवार्थं समुपोदवलयत् । आस्तां तावदेतत् । एतच्छास्त्रस्य प्रणेतारः अनेके प्राक्तनाः भामहप्रभृतयोऽर्वाञ्चश्च श्रीमम्मटाद्या अभूवन् । अर्थात् द्विविधमलङ्कार-शास्त्रप्रस्थानमीक्षामहे 'भामहा'द्युपदिष्टमेकं यदनुसारिणो भोजराजप्रभृतयः । अभिनवगुप्त-पादादिभिरुद्भावितं यद्व्यसनपरतया मम्मटभट्टप्रभृतयो ग्रन्थाननेकान् वितेनिरे । तेषु प्राक्षु एवायं दण्ड्याचार्यः स्थितिपदमलभत । तत्र—

## २—कोऽयं दण्डी ?

अस्य 'काव्यादर्शस्य' रचयिता कविकुलतिलकः 'दण्डी' कुत्र कदा कतमं देश-मलञ्चकार इत्यादिनिश्चयाय न किमपि दृढं प्रमाणमुपलभामहे । विज्ञानवतां पुरोगाणामपि प्राचीनानां प्रायः स्वस्वनिबन्धबन्धनकालबन्धनौदासीन्यसाम्राज्यस्य सर्वतो जागरूकत्वादिति कस्यैदंयुगीनस्य गवेषणारसिकस्य महत् कष्टास्पदं नापतति, तथापि 'यद्वातद्वान्याय'मनु-रुन्धानैरिदं स्थापयितुं शक्यते—यदयं महाकविः महत्या आरभट्याऽस्मिन् ग्रन्थे वैदर्भीं रीतिं प्रशशंस, तथैव चोपनिबबन्ध वैदर्भीप्रधानं 'दशकुमारचरितं' नाम गद्यकाव्यम् इति तेनायं दाक्षिणात्यो विदर्भदेशोद्भव इति । विदर्भस्यैव 'बहाड' नाम्ना प्रसिद्धिरस्तीति साम्प्रतिकाः । अपि च—'ख्रिस्तीयषष्ठशतकादनन्तरसमुत्पन्नो वासवदत्तागद्यप्रणेता 'सुबन्धु' महाकविरिति पुरातत्त्वविदां विमर्शः । 'सुबन्धु'श्च—**'यश्च छन्दोविचितिरिव कुसुम-विचित्राभिः' 'छन्दोविचितिरिव मालिनीसनाथा' 'छन्दोविचितिमिव भ्राजमानतनुमध्याम्'** इत्येवं वासवदत्तायास्त्रिषु स्थलेषु दण्डिप्रणीतं 'छन्दोविचिति' नामानं छन्दोग्रन्थं सस्मार, तेन ख्रिस्तीयषष्ठशतके तदन्तिमभागे वा अयं 'दण्डी' बभूवेति सम्भावयामः । यतः—

> **"त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः ।**
> **त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥"**

इति 'राजशेखर' महाकविकृतायां 'सुभाषितहारावल्यां' धृतात् पद्याद् अस्य ग्रन्थ-

त्रयकर्तृत्वं सुप्रसिद्धम् । ते च ग्रन्थाः—काव्यादर्शः, दशकुमारचरितम्, छन्दोविचितिश्च—इति । यद्यपि केचित् छन्दोविचित्या दण्डिकर्तृत्वे विप्रतिपन्नाः तथापि ते न दृढप्रमाणाः ।

## ३ — किमयं गृहस्थः संन्यासी वेति ?

अस्मद्भावनया तु अयं 'दण्डी' कविर्गृहस्थ एवासीत् न संन्यासीति । दशकुमारादिग्रन्थेषु वर्णितस्य लोकव्यवहारस्य मुख्यतः संन्यासावस्थायां वर्णनाया गर्हिततरत्वात्, उपरतेश्च संन्यासस्थितिसाधकत्वात्, बाह्यप्रवृत्तेश्चोपरतिप्रतिबन्धकत्वात् । प्रायः संन्यासिकृतानां ग्रन्थानां वेदान्तविषयवर्णनापरकत्वेनोपलभ्यमानत्वाच्चेति । ननु—कथं 'दण्डी' इति संन्यासिषु व्यवहृतशब्देन तस्य व्याहार इति चेत् ? **'ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहोनालदण्ड'** इत्यादि दण्डशब्दात्रतिमति काव्ये रच्यमाने तस्य 'अयं दण्डी अयं दण्डी' इति कदाचिल्लोकैर्व्याहृतो भवेदयं कविः, तेन उपनाम्नैव प्रसिद्धिं लेभे इत्यस्यापि कथञ्चिदूहितुं शक्यत्वात् । अस्तु वा गृहस्थस्यापि सतः तेन नाम्ना व्याहार इति एतद्विषये बहुगवेषणा तुषकण्डनमनुरुन्धे बहिरङ्गत्वादित्यस्माकं विमर्शः । न च तादृशगर्हिततरपरनायिकासक्तिप्रभृतिवृत्तान्तप्रक्रियावतारणेनापि कविरयं धूर्त्ताग्रणीषु गण्यः स्यादित्याशङ्कनीयम्, तथावर्णनेऽपि कवीनामसङ्गतायाः प्रस्फुटतरत्वात् । उक्तञ्च 'रुद्रटेन' काव्यालङ्कारस्य चतुर्दशाध्याये—

> **नहि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः ।**
> **कर्त्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः ॥**
> **किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति ।**
> **आराधयितुं विदुषस्तेन न दोषः कवेरत्र ॥** इति ।

तस्मात् कैश्चिदाधुनिकविज्ञानच्छटाच्छुरितमतिपटलैः संस्कृतकविषु क्षिप्यमाणमसभ्यताप्रभृतिदोषजातमविचारितरमणीयमेव मन्तव्यमिति परिनिष्ठितधिषणानां सूरीणां परामर्शः । क्वचित् साक्षात् क्वचित् परम्परयाऽस्य शास्त्रस्यापि परमपुरुषार्थबोधनप्रवणतायाः सहस्रशः प्रमाणैः साधयितुं शक्यत्वात् ।

अस्य काव्यादर्शस्य त्रयः परिच्छेदाः सन्ति । **प्रथमे परिच्छेदे** वैदर्भ्या गौड्याश्च रीतेर्निरूपणपूर्वकं लक्ष्यलक्षणाभ्यां श्लेषाद्या गुणाः प्रपञ्चिताः, गद्यपद्यादिकाव्यभेदं निरूपयित्रा प्रसङ्गतश्चानुप्रासोऽपि सप्रभेदो वर्णितः । **द्वितीये परिच्छेदे** स्वभावोक्त्याद्या अर्थालङ्काराः । **तृतीये परिच्छेदे** यमकालङ्कारं सविस्तरं निरूप्य अतिवर्ज्या दश दोषाः सापवादाः प्रपञ्चिताः । एतावता अस्य ग्रन्थस्य परिसमाप्तिः । यथा काव्यसम्बन्धिषु अलङ्कारादिविषयेषु एतस्य ग्रन्थस्याध्ययनेन आशु बोधः सम्पद्यते न तथा नव्यरचितान्यग्रन्थाध्ययनेन जायते इति ममाभाति, यतोऽत्र वैदर्भीप्रियेण महाकविना विषयोद्योतशैली ऋजुमार्गेणैवाश्रिता । यथा चायमल्पकायोऽपि अपेक्षितविषयविमर्शनपरो ग्रन्थः, न च तथास्योपरि काचन सरला सुपरिष्कृता टीका वर्त्तते, येन जिज्ञासूनां बुद्धावस्य महत्त्वं बोधश्च झटिति जायेत, एतदालोच्य प्राचीनसंस्कृतसाहित्यप्रचारबद्धपरिकरैः **'मेहरचन्द लक्ष्मणदास'**

महोदयैः प्रेरितोऽहं '**कुसुमप्रतिमां**' नाम स्फुटार्थबोधनकरीं सरलतरामुदाहरणप्रपञ्चां टीकां व्यरचम् । तदुपरि च विषमस्थलोद्घाटनाय समधिकचारुविचारसञ्चारणाय च '**सौभाग्यवती**' इत्याभिधां विवृतिञ्च प्राणैषम् । परीक्षादित्सूनां छात्राणामुपकाराय च प्रायः प्रश्नोत्तरशृङ्खलाऽपि सङ्केतिता येन ते एतद्ग्रन्थस्योत्तरलेखे न व्यामोहमेष्यन्तीति । यद्यपि—अस्योपरि *'मालिन्यप्रोञ्छनी' जीवानन्दकृत'विवृतिः' कान्दिशीकैका 'प्रभा' च दृश्यते, परं ये गुणा अस्यां टीकायां विद्यन्ते, न ते तासु—इति स्वयमेव विपश्चिद्वर्याः तुलनात्मिकसमालोचनादृष्ट्या समुत्तोल्यावगच्छन्तु स्वात्ममुखात् स्वप्रशंसां को हि विज्ञवरः उत्तमां मनुते । अपि च—तत्तच्छ्लोकार्थस्य झटिति दर्शनाय मदीयदर्शितमार्गेण मम **पत्न्या** सङ्कलिता श्लोकानुक्रमणी अन्ते योजिता, आदौ च विषयानुक्रमणी, येन तत्तद्विषयविमर्शनवेलायां जिज्ञासूनां बुद्धिवैकल्यं न सम्भवेत् । किञ्च—एकाकिनैव मया टीकारचनाप्रूफपत्रसंशोधन-पुनर्निरीक्षणादिक्रियासु व्यग्रचेतसा यथामति अस्य ग्रन्थस्य संस्करणं कृतम्, तत्र यदि क्वचित् क्वचित् मनुष्यबुद्धिसुलभा वर्णमात्रादित्रुटिजनिता दोषाः सम्भाव्येरन् तर्हि तत्तत्स्थलसंशोधनेन तान् दोषानपबाध्य एतस्याः टीकायाः प्रचारं कुर्वाणा मय्यनुकम्पां विधास्यन्ति सहजकरुणावरुणालया महानुभावाः सूरय इति साञ्जलिः प्रार्थयते—

विदुषामनुचरः—

**नृसिंहदेवः**

## द्वितीयसंस्करणविषये
## द्वित्राः पङ्क्तयः !

अयि ! शास्त्ररसिकधौरेयाः ! महानुभावाः प्रियाः ! महाकविश्रीदण्ड्याचार्यविरचितस्यास्य काव्यादर्शस्य प्रथमसंस्करणमुद्रितां "कुसुमप्रतिमां" नाम टीकां निरीक्ष्य मुम्बई-मद्रासप्रभृतिप्रान्तस्थैर्विद्वद्भिर्यथाऽस्य प्रचारोऽभीष्टतरोऽमानि तथैतद्द्वितीयसंस्करणमुद्रणविलम्बजनितभूयोभूयोदौर्लभ्यखेदप्रकटनपूर्वकस्वग्राहकत्ववृत्तान्तसंवलितानेकदेशागतपत्रवृन्दसङ्घर्ष एवादरणीयतामभिव्यनक्त्यस्याष्टीकाया इति न स्वयमेव बहु प्रशंसयामः ।

संस्कृतपुस्तकालयाध्यक्षेण "मेहरचन्द्र लक्ष्मणदास" इत्यनेन बहुवारमभ्यर्थितोऽपि द्वितीयसंस्करणार्थं माथुरीपञ्चलक्षणी-मीमांसापरिभाषाद्यन्यग्रन्थीयटीकाटिप्पणसंस्करणादिषु व्यग्रतया नैवापीपरमस्याः परं संस्करणम् । सम्प्रति लब्धावकाशतया मय्योपस्थितानन्तान्तरायप्रतिहतोऽपि समपूपरं द्वितीयं संस्करणम् । अस्मिंश्च टीकायाः संशोधने बहुप्रयत्नः कृतः । सेयं पल्लवनसमुल्लासिताऽभिनवसुन्दरतरमुम्बईसीसकाक्षरैर्मुद्रापिता व्याख्याऽध्येतॄणां पूर्वतोऽपि हृदयङ्गमा भविष्यतीति दृढमाशासे । अपि नाम मदीये कृतेऽपि बहुसंशोधनप्रपञ्चे मनुष्यजनसुलभप्रमादवशात् जातापि काचित्की वर्णमात्रादित्रुटिः, सा हि गुणग्रहिलैर्महाभागैर्निजौदार्यवशात् स्वयं परिमार्ज्याऽहं नितान्तमुपकरणीयः ।

विदुषामनुचरः—

ता० १३—८—३३ **नृसिंहदेवः**

---

* इयं टीका मौलमर्थमल्पश एव स्पृष्ट्वा व्याख्यामार्गे प्रायः काठिन्यमनुधावति ।

# सटीककाव्यादर्शस्य संक्षिप्ता विषयसूची ।

## प्रथमः परिच्छेदः ।

# सविवृतिकुसुमप्रतिमायां धृतानां ग्रन्थकाराणां सूची ।

| | | |
|---|---|---|
| पाणिनिः । [ महावैयाकरणः ] | ... ... | [ अष्टाध्यायी ] |
| व्यासः । [ श्रीकृष्णद्वैपायनः ] | ... ... | [ महाभारतादि ] |
| पतञ्जलिः । | ... ... | [ महाभाष्यम् ] |
| भोजराजः । | ... ... | [सरस्वतीकण्ठाभरणम्] |
| जयदेवः । | ... ... | [ चन्द्रालोकः ] |
| क्षेमेन्द्रः । [ महाकविः ] | ... ... | [ औचित्यचर्चादि ] |
| | ... ... | [ अलङ्कारचन्द्रिका ] |
| वाग्भटः । | ... ... | [ वाग्भटालङ्कारः ] |
| विद्यानाथः । | ... ... | [ साहित्यकौमुदी ] |
| श्रीमम्मटाचार्यः । | ... ... | [ काव्यप्रकाशः ] |
| विद्याधरः । | ... ... | [ अलङ्कारशास्त्रम् ] |
| भट्टगोपालः । | ... ... | |
| अभिनवगुप्तपादाचार्यः । | ... ... | [ ध्वन्यालोकलोचनम् ] |
| वामनः । | ... ... | [ अलङ्कारसूत्रम् ] |
| केदारभट्टः । | ... .... | [ वृत्तरत्नाकरः ] |
| भामहः । | ... ... | [ अलङ्कारशास्त्रम ] |
| विद्यानाथः | ... ... | [ प्रतापरुद्रीयम् ] |
| उद्भटभट्टः । | ... .. | [ काव्यालङ्कारसङ्ग्रहः ] |
| रुद्रटः । | ... ... | [ काव्यालङ्कारग्रन्थः ] |
| भारविः । [ महाकविः ] | ... ... | [ किरातार्जुनीयम् ] |
| धनञ्जयः । | ... ... | [ दशरूपकम् ] |
| विश्वनाथः । | ... ... | [ साहित्यदर्पणः ] |
| भरतः । | ... ... | [ नाट्यशास्त्रम् ] |
| अमरसिंहः । | ... ... | [ अमरकोषः ] |
| मेदिनीकरः । | ... ... | [ मेदिनी ] |
| महेश्वरः । | ... ... | [ विश्वकोषः ] |
| हेमचन्द्रः [ महावैयाकरणः अलङ्कारशास्त्राचार्यः ] | | [ काव्यानुशासनम्—हैमकोषादि ] |
| श्रीकोकोककविः । | ... ... | [ रतिरहस्यम् ] |
| मनुः [ महर्षिः ] | ... ... | [ मनुस्मृतिः ] |
| कालिदासः [ महाकविः ] | ... ... | [ रघुवंशादि ] |
| व्यासः । | ... | [ श्रीमद्भागवतम् ] [ योगभाष्यम् ] |
| श्रीहर्षः [ महाकविः ] | ... ... | [ नैषधम् ] |
| श्रीअच्युतरायः । | ... ... | [ साहित्यसारम् ] |

सोमदेवसूरिः । ... .... [ यशस्तिलकम् ]
अप्पय्यदीक्षितः । ... [ कुवलयानन्दम् ] [ चित्रमीमांसादि ]
माघः [ महाकविः ] ... ... [ शिशुपालवधम् ]
श्रीकविगण्डभेरुण्डः । ... ... [ अलङ्कारमणिहारः ]
श्रीपण्डितराजो जगन्नाथः । ... ... [ रसगङ्गाधरः ]
श्रीकौण्डभट्टः । ... ... [ वैयाकरणभूषणम् ]
श्रीनागोजिभट्टः । ... ... [ लघुमञ्जूषा ]
बोपदेवः । ... [ कविकल्पद्रुमः, मुग्धबोधव्याकरणम् ]
शाकटायनः । ... ... [ शाकटायनसूत्राणि ]
जयरथः । ... ... [ अलङ्कारकृत् ]
... ... [ शाश्वतकोषः ]
राजानकरुय्यकः । ... ... [ अलङ्कारसर्वस्वम् ]
चक्रवर्त्तिभट्टाचार्यः ।
श्रीवाचस्पतिमिश्राः । ... ... [ भामत्यादि ]
श्रीगदाधरभट्टाचार्याः । ... ... [ व्युत्पत्तिवादः ]
शाण्डिल्याचार्यः । ... ... [ भक्तिमीमांसा ]
हरिः [ महावैयाकरणः ] ... ... [ वाक्यपदीयम् ]
राजानकरत्नाकरः [ महाकविः ] ... [ हरविजयम् ]
देवेश्वरः । ... ... [ कविकल्पलतिका ]
श्रीकृष्णभट्टः । ... ... [ सिद्धभैषज्यमणिमाला ]
प्रतीहारेन्दुः । ... [ काव्यालङ्कारसारलघुवृत्तिः ]
श्रीनखकुट्टः । ... ... [ नाट्यविषयकग्रन्थः ]
सिंहदेवगणिः । ... ... [ वाग्भटालङ्कारव्याख्या ]
श्रीमदवतारकविः । ... ... [ ईश्वरशतकम् ]
श्रीभट्टिः [ महाकविः ] ... ... [ भट्टिकाव्यम् ]
श्रीभानुजीदीक्षितः । ... ... [ अमरकोषव्याख्या ]
श्रीशङ्कराचार्याः । ... .... [ विष्णुसहस्रनामव्याख्या ]
विद्यारण्यस्वामी । ... ... [ पञ्चदशी ]
श्रीसुरेश्वराचार्याः । ... ... [ वार्त्तिकादि ]
श्रीहरिचन्दः [ महाकविः ] ... ... [ धर्मशर्माभ्युदयम् ]
अनुभूत्याचार्यः । ... ... [ सारस्वतसूत्राणि ]
श्रीभट्टमल्लः । ... ... [ आख्यातचन्द्रिका ]
श्रीनारायणभट्टः । ... ... [ वृत्तरत्नाकरव्याख्या ]

इत्यादि ।

# काव्यादर्शः

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ १ ॥

## कुसुमप्रतिमा

निर्दोषा सरसा गुणया सुरीतिः साध्वलङ्कृतिः ।
अनेकभावगम्भीरा पातु मां सा सरस्वती ॥ १ ॥
स्वाङ्के षडाननगजाननसूनुयुग्मं धृत्वा स्तनामृतपयः परिपाययन्ती ।
सा नीलकण्ठसुकृतौघफलं भवानी वाचां निरोधमपहन्तु ममाद्य माता ॥ २ ॥
दण्डिना कविनोन्नीते काव्यादर्शेऽतिनिर्मले ।
'कुसुमप्रतिमा' बिम्ब-मानमाधास्यति स्वयम् ॥ ३ ॥
सुलक्षणा वृत्तिविभूषिता च रसान्विता रीतिमती सुखार्था ।
सालङ्कृतिः कोमलवागुपेता भवेन्मदीया 'प्रतिमा' ऽद्य लोके ॥ ४ ॥
देवीदासाभिधं तातं विष्णुदेवीञ्च मातरम् ।
प्रणम्य मान्यं मान्याञ्च तयोरर्थं समर्थयन् ॥ ५ ॥
'कुसुमप्रतिमां' नाम काव्यादर्शेऽतिनिर्मलाम् ।
टीकां करोमि शिष्याणां हितमारचयन्नहम् ॥ ६ ॥

साहित्यशास्त्रविदां धौरेयः श्रीमहाकविर्दण्डी काव्यज्ञानोपयोग्यलङ्कारादिस्वरूपनिरूपणपरं 'काव्यादर्श' नामकं निबन्धं प्रणयन्नादौ सदाचारमार्गागतं मङ्गलकरणकार्यं शिष्यशिक्षायै परिपालयन् सरस्वत्या ध्यानात्मकं मङ्गलमारचयति—'चतुर्मुखे'ति । सरस्वती=वागधिष्ठात्री देवता मम=मदीये मानसे=हृदये नित्यं=सर्वदा रमताम्=विहारं करोतु । अर्थात् मम मानसज्ञानविषयीभूता भवतु येनाहं ग्रन्थरचनादिकर्मणि कदापि कुण्ठितबुद्धिर्न भवेयम् । विशेषणद्वयेन सरस्वतीं निरूपयति--कीदृशी सरस्वती इत्याह । 'चतुर्मुखे'ति । चतुर्मुखः=चतुराननो ब्रह्मा यस्य हृदये ईश्वरेण सर्गादौ वेदरूपा सरस्वती प्रचोदिता स हिरण्यगर्भाख्यः तस्य मुखानि=आननान्येव अम्भोजानि=कमलानि तेषां वनं=काननं समुदाय इत्यर्थः तत्र हंसवधूः=हंसस्य मानसौकसः वधूर्हंसी वरटा इति यावत् । 'हंसस्य योषिद्वरटा' इत्यमरः ।
यथा सकलदोषरहिता वेदरूपा सरस्वती हिरण्यगर्भमुखाम्भोजवासिनी तथा मम

---

१ गायत्रीपुरश्चरणसाधितशास्त्रमर्मज्ञतारूपम् ।

मानसे वर्तमाना सरस्वत्यपि शुद्धैव, नतु हालिकादिसाधारणजनमुखे विद्यमाना च्युतसंस्कृत्यादिदोषोपेतेति भावः ।

यत एवम्, अत एव सर्वशुक्ला=सर्वतः स्वरूपतोऽर्थतश्च शुक्ला=निर्मला पदपदांशवाक्यरसादिदोषवर्जिता इत्यर्थः । अन्यापि हंसी मानसाख्ये सरोवरे सदा रमते सर्वशुक्ला च भवतीति वस्त्वपि व्यङ्ग्यम् । अत्र सरस्वत्यां हंसवधूत्वारोपं प्रति चतुर्मुखे अम्भोजवनत्वारोपो हेतुरिति 'परम्परितरूपकं' नाम रूपकालङ्कारभेदः । वक्ष्यत्यग्रे 'उपमैव तिरोभूतभेदा रूपकमिष्यते' इति अलङ्कारप्रस्तावे । तच्च रूपकं न श्लिष्टशब्दनिबन्धनम् अम्भोजवनत्वारोपेणैव मानससरोवररूपार्थलाभात् । 'मानसे' इति पदस्य च प्रकृते श्लिष्टत्वाभावात् ।

काव्यरूपा च सरस्वती भगवन्मूर्त्तिरेव । तथा चोक्तं विष्णुपुराणे--

काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः ॥ इति ॥

एवञ्च 'मानसे रमताम्' इति कथनेन भगवद्रूपायाः सरस्वत्या उपासना क्रियते इति सूचितम् । उपासनया चैकाग्रीभूते चेतसि मनोयोगात्मकसामर्थ्येन सकलानामर्थानां स्फुरतिरप्यनायासेन जायते, तेन च रचितस्यास्य संदर्भस्यात्यादरणीयत्वमपि ध्वनितम् । 'रमताम्' इति क्रीडार्थकात् 'रमु' धातोर्लोटि प्रथमपुरुषैकवचने रूपम् ।

यद्यपि आशीर्वाद-वस्तुनिर्देश-नमस्कारात्मकभेदेन त्रिविधमेव मङ्गलम्[1], नतु ध्यानात्मकं मङ्गलं किञ्चित् क्वचित् प्रसिद्धमस्ति तथापि यत्र पूज्यबुद्धिर्भवति तदेव चिन्त्यते कीर्त्यते चेति 'तामेतादृशीं सरस्वतीं स्तौमि नमस्करोमि चे'ति व्यञ्जनया नमस्कारात्मकमङ्गलध्वनिरपि बोध्यः । अत्र भगवन्मूर्तिभूतायां सरस्वत्यां कविनिष्ठो रतिभावोऽपि व्यङ्ग्यः ॥ १ ॥

**पूर्वशास्त्राणि संहृत्य प्रयोगानुपलक्ष्य च ।**
**यथा सामर्थ्यमस्माभिः क्रियते काव्यलक्षणम् ॥ २ ॥**

ग्रन्थस्य प्रतिपाद्यं विषयं दर्शयितुं प्रतिज्ञां करोति—'पूर्वशास्त्राणि' इति । पूर्वेषां भरतादिकवीनां शास्त्राणि काव्यग्रन्थान् संहृत्य=समाहृत्य अर्थात् बृहद्भ्यः तेभ्यो ग्रन्थेभ्यः संक्षिप्तरीत्या सारमादाय, प्रयोगान्=प्रयुज्यन्ते प्रथ्यन्ते एते इति प्रयोगाः[2] विषयाः, नायकनायिकादिरूपा चन्द्रचन्दनरोलम्बादिरूपाः वा तान् च उपलक्ष्य=सम्यग् विचार्य अस्माभिः=मयेत्यर्थः । बहुवचनं स्वशिष्यादीनां स्वसिद्धान्तानुयायिनां वाभिप्रायेण नेतव्यम् । यथासामर्थ्यम्=सामर्थ्यमनतिक्रम्य वर्त्तत इति यथासामर्थ्यं यथाज्ञानम् । पदार्थानतिवृत्तिरूपे यथाऽर्थे

---

१ उक्तञ्च—

आशीर्वाद-नमस्कार-वस्तुनिर्देशभेदतः ।
मङ्गलं त्रिविधं प्रोक्तं ग्रन्थादौ तत्सुखावहम् ॥ इति ॥

मङ्गलसामान्यलक्षणन्तु – समाप्तिप्रतिबन्धकपापविशेषध्वंसकारणत्वं मङ्गलत्वम् । प्रपञ्चितश्चायमर्थोऽस्माभिर्न्यायमुक्तावलीप्रभादौ ।

२ 'अकर्त्तरि च कारके सञ्ज्ञायाम्' (पा० ३।३।१९) इति सूत्रेण कर्मणि घञ् ।

'अव्ययं विभक्ति०' (पा० २।१।६) इति सूत्रेण समासः। काव्यलक्षणम्=काव्यस्य[1] लक्षणं लक्ष्यते अन्येभ्यो व्यावर्त्यते (वस्तु) अनेनेति लक्षणम् असाधारणो धर्मः स्वरूपमिति यावत्, क्रियते=रच्यते। एतेनास्य ग्रन्थस्य काव्यमेव प्रतिपाद्यो विषय इत्युक्तं भवति। 'सर्वशास्त्राणि' इति पाठे तु सर्वाणि च तानि शास्त्राणि इत्यर्थो ज्ञेयः॥ २॥

**इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।**
**वाचामेव प्रसादेन लोकयात्रा प्रवर्त्तते॥ ३॥**

सम्प्रति ग्रन्थस्य प्रयोजनं वक्तुं 'वाच एव सर्वव्यवहारसाधिका' इत्यन्वयव्यतिरेकमुखेन दर्शयति द्वाभ्यां श्लोकाभ्याम्—'इह' इत्यादिना। इह=अस्मिन् लोके शिष्टानुशिष्टानाम्[2]=शिष्टैः=वेदशास्त्रादिप्रमाणविज्ञैः महेश्वरप्रभृतिभिः अनुशिष्टानाम्=प्रकृतिप्रत्ययादिभेदेन अन्वाख्यातानां संस्कृतानां, शिष्टानाम्=संस्कृतभिन्नानां प्राकृतादीनां जातिदेशादिभेदेनानेकविधानां वाचामेव=वाणीनामेव प्रसादेन=अनुग्रहेण सर्वथा=सर्वप्रकारेण सर्वप्रकारा इत्यर्थः, लोकयात्रा=लोकानामृष्यार्यम्लेच्छादीनां यात्रा आहारविहारादिरूपो व्यवहारः प्रवर्त्तते=सिद्धो भवति।

उत्तमप्रकृतयो देवर्ष्यादयः संस्कृतवाचा, मध्यमप्रकृतयः प्राकृतदेशीयादिभाषारूपया वाचा, अधमप्रकृतयः पिशाचाद्या नीचया वाचा, स्वं स्वं व्यवहारं साधयन्ति न कोऽप्येतादृशो व्यवहारो जगति वर्त्तते यो वाचां साहाय्यमन्तरा प्रचलितो भवेत्। अतएव 'व्यवहारः शब्दप्रयोग' इत्याचक्षते न्यायशास्त्रविदः इति भावः। इत्थं वाचां सत्त्वे व्यवहारसत्त्वमित्यन्वयो बोध्यः॥ ३॥

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥ ४॥**

'इदमन्धम्' इति। यदि शब्दाह्वयम्=शब्द आह्वयो नाम यस्य तत् शब्दाह्वयम् शब्दसंज्ञकं ध्वनिवर्णाद्यात्मकं वाङ्मयमिति यावत्। उक्तञ्चाग्नेयपुराणे—'ध्वनिर्वर्णाः पदं वाक्यमित्येतद्वाङ्मयं मतम्' इति। (अ० ३३७। श्लो० १) ज्योतिः=ज्योतिरिव ज्योतिः अर्थप्रकाशकम् यथा प्रकाशकं सौरादि तेजः सकलमर्थजातं प्रकाशयति तथा शब्दोऽपि तत्तदर्थबोधने क्षम इति प्रकाशकत्वसाधर्म्येण वाङ्मये ज्योतिष्ट्वारोपः। तथा च श्रुतिः—'**वाचैवायञ्ज्यो-**

---

१ कवेः कर्म काव्यम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा०५।१।१२४) इति सूत्रेण कविपदात् ष्यञ्। ब्राह्मणादिराकृतिगणः।

२ भक्तिश्रद्धादिभिर्वेदानुमतकर्मकर्त्तारः **शिष्टाः**। महाभारते तु—
न पाणिपादचपलो न नेत्रचपलो मुनिः।
न च वागङ्गचपल इति शिष्टस्य लक्षणम्॥ इत्युक्तम्।

'पृषोदरादीनि यथोपदिष्टम्' (६।३।१०९) इतिसूत्रमहाभाष्ये तु 'एतस्मिन्नार्यावर्त्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गताः तत्रभवन्तः शिष्टा' इत्युक्तम्। सारांशे तु सर्वेषां समेष्टिरेवेति बोध्यम्।

**(प्रश्नः)** कस्य प्रसादेन लोकयात्रा प्रवर्त्तते?। **(उत्तरम्)** अस्य पृष्ठस्य पं० ६।
**(प्र०)** कस्याभावे भुवनत्रयमन्धन्तमः स्यात्? **(उ०)** अस्य पृष्ठस्य पं० १८।

**तिषाऽऽस्ते'** (बृह० ६।३।) आसंसारम्=संसारमभिव्याप्य न दीप्यते=न प्रकाशते तदा कृत्स्नम्=समग्रं भुवनत्रयम्=भुवनानां स्वर्गमर्त्यपातालानां त्रयं त्रयो लोका इत्यर्थः । अन्धं तमः=गाढान्धकारस्वरूपम् अज्ञानान्धकारेण व्याप्तमिति यावत् जायेत=भवेत् ।

अयम्भावः-यथा सौरालोकाभावे सकलमर्थजातं तमोव्याप्तं भवति, सौरालोकमन्तरा व्यवहारस्य कर्त्तुमशक्यत्वात्, एवमेव वाचोज्योतिषोऽभावे समग्रं जगद् अज्ञानावृतमेव स्यात्। शब्दज्ञानस्यार्थप्रकाशकत्वेन तदभावे व्यवहाराभावात् । वाचैव सर्वेषां प्राणिनां व्यवहार-सिद्धिर्नान्यथेति निगूढाभिप्रायः । एवञ्च-'वाग्रूपज्योतिषोऽभावे व्यवहाराभाव' इति व्यतिरेको ज्ञेयः । 'आसंसारम्' इति 'आङ्मर्यादाभिविध्योः' ( पा० २ । १ । १३ ) इति पञ्चम्यन्तेन वा समासः, स चाव्ययीभावः, तेन पक्षे 'आसंसारात्' इत्यपि भवति ।

अत्र अभिधेयः=प्रतिपाद्यो विषयः काव्यम् । प्रयोजनं व्यवहारज्ञानम् । विषयप्रयो-जनयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । तज्ज्ञानकामोऽधिकारी इति प्रेक्षावतां प्रवृत्त्य-ङ्गभूतमनुबन्धचतुष्टयं ज्ञेयम् । उक्तञ्च—

सिद्धार्थं सिद्धसङ्कल्पं श्रोतुं श्रोता प्रवर्त्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ इति ॥ ४ ॥

**आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् ।**
**तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति ॥ ५ ॥**

वाङ्मयस्यावश्यकतां बोधयितुमाह—'आदिराजे'ति । आदिराजाः मन्विक्ष्वाकुमान्धा-तृप्रभृतयः तेषां यशः कीर्त्तिः एव बिम्बं प्रतिकृतिः । इदं कर्त्तृपदम् । वाङ्मयं=कविभिरुपनिबद्धं काव्यग्रन्थरूपं आदर्शम्=दर्पणं प्राप्य=इत्वा तेषाम्=आदिराजानाम् 'असन्निधाने' सामी-प्याभावेऽपि अर्थात् तेषु मृतेष्वपि न नश्यति=नैव नष्टं भवति इति त्वं स्वयं पश्य=विचारय । पाठ्यशिष्यजनाभिप्रायेणैवमुक्तिः । 'पश्य मृगो धावति' इत्यादिवत् वाक्यार्थस्य चात्र कर्मता ।

प्रसिद्धदर्पणे समीपस्थितानामेव प्रतिबिम्बः वाङ्मयाख्ये दर्पणे तु असन्निहितानामपि यशःप्रतिबिम्बस्थितिरिति उपमानापेक्षया उपमेयस्याधिक्यवर्णनात्मको व्यतिरेकालङ्कारः । तथा चोक्तं दण्डिना व्यतिरेकचक्रे—

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।
तत्र यद्भेदकथनं 'व्यतिरेकः' स कथ्यते ॥ इति ।

उपमानादुपमेयस्याधिक्यवर्णनं व्यतिरेक इत्यर्थः । एतच्चाग्रे स्पष्टीभविष्यति ।

'इदन्तु पुरावृत्तवर्णितानां यशःकीर्त्तनं प्रयोजनान्तरमनुसन्धेयम्' इति जीवानन्दोक्तं तुच्छम्, काव्यप्रयोजनेषु कुत्रापि यशःकीर्त्तनस्यागणितत्वात् । अन्यथा विरोधिनामयशःकीर्त्तन-मपि प्रयोजनान्तरं मृग्यं स्यात्, तत्त्वे वा तदपि न स्यादिति कृतं कुसृष्टिविवेचनया । वस्तु-तस्तु आदिराजादिचरितसम्बन्धिकाव्यप्रणयनेन कवेरेव यशआदिलाभ इति भङ्ग्यन्तरेण प्रसिद्धं काव्यप्रयोजनमेव पुष्टितां नीतमिति ध्येयम् ॥ ५ ॥

**गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः ।**
**दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥ ६ ॥**

१ आलोकमात्रोपलक्षणमिदम् ।

(प्र०) कीदृशी गौः ( वाणी ) प्रयोक्तव्या कीदृशी च न ? ॥ (उ०) पं० २०

प्रकारान्तरेण वाचामुपादेयभावं दर्शयन् कविभणितीनां वैशिष्ट्यं वर्णयति—'गौ' रिति । सम्यक्=दोषराहित्येन गुणालङ्कारादिसत्त्वेन प्रयुक्ता=गुम्फिता काव्याकारेति यावत् । गौः=वाणी बुधैः=रसभावादिनिपुणैः पण्डितैः कामदुघा=कामानाम् अभिलषितानां दोग्ध्री पूरयित्री अभीष्टसम्पादयित्री गौः=धेनुरेव स्मर्यते=स्वीक्रियते मन्यत इत्यर्थः । किञ्च सैव=प्रसिद्धा गौः=वाणी दुष्प्रयुक्ता=गुणालङ्कारादिरहिता दोषवती च प्रयुक्ता सती प्रयोक्तुः= रचयितुः कुकवेः गोत्वम्=गोर्भावो गोत्वं पशुत्वं मूर्खत्वमिति यावत् शंसति=प्रकटयति ।

निर्दोषां सगुणां सरसां सालङ्कारां वाचं प्रयुञ्जानः कविः श्लाघ्यो भवति तदन्यो निन्द्यते लोकैः, तस्माद् अदोषवत्त्वादिधर्मोपेतायां वाचि यतितव्यम्, तादृशी वागेव च काव्यमिति भावः । उक्तञ्चाग्निपुराणे सप्तत्रिंशदधिकत्रिंशत्तमेऽध्याये—

नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥ इति[1] ॥

दोषरहिता काव्यरूपा वाणी प्रयोक्तव्या नेतरेति तु परमार्थः । कामान्दोग्धीति कामदुघा । 'दुहः कब् घश्च' [ पा० ३।२।७० ] इति सूत्रेण सुबन्तोपपदात् 'दुह्' धातोः कप्प्रत्ययः घश्चान्तादेशः । स्त्रियां टाप् ।

गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् ।
स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सु भूम्नि च ॥ इति मेदिनी ॥ ६ ॥

**तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन ।**
**स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् ॥ ७ ॥**

उक्तमेवार्थमुपपादयन् दोषस्य सर्वथा वर्जनीयतामाह—'तत्' इति । 'तत्'=तस्मात् दुष्प्रयोक्तुः गोत्वप्रसिद्धेः काव्ये=वक्ष्यमाणलक्षणे अल्पमपि=ईषदपि दुष्टम्=दोषः कथञ्चन= केनापि प्रकारेण न उपेक्ष्यम्=नैव मर्षणीयम् । सर्वथापि काव्ये दोषो हेय एवेत्यर्थः । गुणालङ्कारादिसत्त्वेऽपि यदि कश्चिद्दोषः स्यात् तदपि न युक्तमिति दृष्टान्तेन स्फुटयति— 'स्यात्' इति । वपुः=शरीरम् सुन्दरम्=प्रकृत्या मनोहरमपि सुरूपतादिसद्गुणोपेतमपि

१ अन्यत्रापि—'एकः शब्दः सुप्रयुक्तः सम्यक् ज्ञातः स्वर्गे लोके च कामधुक् भवति' इति श्रुतिवाक्यमेतदर्थमूलं दृश्यते ।

महाभाष्येऽप्युक्तम्—

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥ इति ।

प्राञ्चोऽपि—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवणम् ॥ इत्याहुः ।

एतावता चतुर्वर्गसाधनं काव्यमित्यपि दर्शितं भवति ॥

(प्र०) दुष्टकाव्यवर्जने उपपत्तिम्ब्रूहि ? । (उ०) अस्य पृष्ठस्य पं० १८ ।

एकेन=एकावयवनिष्ठेन अत्यल्पेन इत्यर्थः । श्वित्रेण=कुष्ठविशेषेण दुर्भगम्=घृणास्पदं स्यात् भवतीत्यर्थः । यथा सर्वसुन्दरमपि शरीरं क्षुद्रश्वित्ररोगदुष्टं लोकदृष्टौ घृणां जनयति तथा गुणाद्युपेतमपि काव्यं यदि यत्किञ्चिद्दोषदुष्टं स्यात् तदा सहृदयैरुपेक्ष्यत एवेति सर्वथा काव्ये दोषा वर्जनीया[1] इति तात्पर्यम् । अत एवोक्तमाग्नेये पुराणे—'काव्यं स्फुरदलङ्कारं गुणवद्दोषवार्जितम्' इति । 'दुष्टम्' इत्यत्र 'दुष्' धातोः 'नपुंसके भावे क्तः' [३।३।११४] इति सूत्रेण क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः प्रत्ययः ।

अत्रोपमानोपमेयभावापन्नयोर्द्वयोः पूर्वोत्तरवाक्ययोर्बिम्बप्रतिबिम्बभावेन भिन्नधर्मनिर्देशात् दृष्टान्तालङ्कारः । उक्तञ्च जयदेवेन—

चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः' इति । प्रकृते च दुष्टकाव्यश्वित्रवपुषोर्बिम्बप्रतिबिम्बभावः । पूर्वार्धवाक्यमुपमेयवाक्यम्, परार्धवाक्यन्तूपमानवाक्यमिति बोध्यम् ॥७॥

**गुणदोषानशास्त्रज्ञः कथं विभजते जनः ।**
**किमन्धस्याधिकारोस्ति रूपभेदोपलब्धिषु ॥ ८ ॥**

सम्प्रति गुणदोषयोर्विभागस्यावश्यज्ञातव्यतां सदृष्टान्तमाह—'गुणदोषान्' इति । अशास्त्रज्ञः=जानातीति ज्ञः । 'इगुपधज्ञाप्रीकिरः कः' [ ३।१।१३५ ] इति 'ज्ञा' धातोः कः । शास्त्रस्य ज्ञः शास्त्रज्ञः न शास्त्रज्ञः अशास्त्रज्ञः । 'नलोपो नञः' [६।३।७३] इति सूत्रेण नञो नस्य लोपः । अशास्त्रज्ञोऽकविः अविद्वान् जन इत्यर्थः । गुणदोषान्=गुणाः माधुर्यौजःप्रभृतयः दोषाः श्रुतिकटुच्युतसंस्कृत्यादयः गुणाश्च दोषाश्चेति द्वन्द्वः तान् कथं=केन प्रकारेण विभजते=विविच्य ज्ञातुं समर्थो भवति, न कथमपीत्यर्थः । अकविर्जनः काव्यशास्त्रे 'अमुके गुणा उपादेया अमुके दोषा हेया' इति विशेषरूपेण ज्ञातुं नैव प्रभवतीत्यर्थः । अत्रैव दृष्टान्तमाह—अन्धस्य=नेत्राभ्यां हीनस्य पुरुषस्य रूपभेदोपलब्धिषु=चक्षुर्मात्रग्राह्यो गुणो रूपम्, तस्य भेदाः शुक्लनीलपीतरक्ताद्याः तेषाम् उपलब्धयः ज्ञानानि तासु अधिकारः=सामर्थ्यम् अस्ति किम्=नैवास्तीति सर्वप्रसिद्धमेवैतदित्यर्थः । तस्माद् गुणदोषविभागज्ञानाय काव्यशास्त्रेऽवश्यं प्रवृत्तिः करणीया ।

अत्रापि पूर्ववद् दृष्टान्तालङ्कारः । अशास्त्रज्ञान्धयोश्च बिम्बप्रतिबिम्बभावः । अशास्त्रज्ञान्धयोर्बिम्बप्रतिबिम्बभावप्रयोजकं सादृश्यन्तु विवेकाभाव एव तच्च साक्षाच्छब्दोपात्तत्वाच्छाब्दम्[2] ॥ ८ ॥

**अतः प्रजानां व्युत्पत्तिमभिसन्धाय सूरयः ॥**
**वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम् ॥ ६ ॥**

---

१ सरस्वतीकण्ठाभरणेऽपि—

दोषाः पदानां वाक्यानां वाक्यार्थानाञ्च षोडश ।
हेयाः काव्ये कवीन्द्रैर्ये तानेवादौ प्रचक्ष्महे ॥

इति दोषाणां वर्जनीयत्वमुक्तम् ।

२ न चात्र 'कथं विभजते जनः' इत्यतो न कथमपीत्यर्थबललभ्यमिदमिति कथं विवेकाभावस्य शाब्दत्वमिति वाच्यम्, उक्तार्थस्य काका लाभेन काकोश्च ध्वनेर्विकारत्वाच्छाब्दत्वमेव यत इति केचित् ।

एतदर्थमेव अलङ्कारशास्त्ररचने प्राञ्चः प्रावर्त्तिषत इति दर्शयति—'अत' इति । अतः= उक्तहेतोः गुणानां दोषाणां च विभागस्य अलङ्कारशास्त्रमात्रैकबोध्यत्वाद्धेतोः सूरयः= प्राञ्चो विद्वांसः भरतप्रभृतयः प्रजानाम्=लोकानाम् व्युत्पत्तिम्=पदपदार्थसम्बन्धज्ञानम् अभिसन्धाय=उद्दिश्य विचित्रमार्गाणाम्=विचित्रा अनेके मार्गा वैदर्भीप्रभृतयो रीतयो यासु तासां वाचाम्=काव्यनिबन्धानाम् क्रियाविधिम्=रचनाप्रकारं निबबन्धुः=जग्रन्थुः काव्यालङ्कारग्रन्थान् रचयाम्बभूवुरित्यर्थः । अन्यथा काव्यमार्गस्य दुर्ज्ञेयत्वादिति भावः ।

'बन्ध'बन्धने । न्युपसर्गस्यास्य धातोर्लिटि प्रथमपुरुषबहुवचने 'निबबन्धुः'इति रूपम्॥ ९॥

**तैः शरीरञ्च काव्यानामलङ्काराश्च दर्शिताः ।**
**शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ॥ १० ॥**

काव्यशरीरं प्राचां संवादपुरःसरं निरूपयति—'तैः' इति । तैः=पूर्वसूरिभिः काव्यानाम्=सहृदयहृदयोल्लासकानां गद्यपद्यात्मकानां निबन्धानां शरीरम्=लक्षणम् अलङ्काराश्च दर्शिताः=निरूपिता इत्यर्थः । अत्र—'अलङ्क्रियते एभिरिति अलङ्काराः' इति व्युत्पत्त्या अलङ्कारपदं काव्यशरीरशोभाधायकत्वेन गुणालङ्कारादिसर्वार्थबोधकम् । काव्यानां शरीरविषये स्वमतं दर्शयति—'शरीरं तावत्' इति । 'इष्टार्थव्यवच्छिन्ना पदावली' काव्यस्य शरीरम्= लक्षणमिति पिण्डितार्थः । इष्टाः मनोहरा रसाद्यनुगतत्वेन हृद्या ये अर्था वाच्यादिभेदेन त्रिप्रकाराः तैः व्यवच्छिन्ना मण्डिता चमत्कारविशेषजनिका या पदानामावली समूहविशेषः सा काव्यमित्यक्षरयोजना । अत्र 'काव्यानाम्' इति बहुवचनमविवक्षितम् । अथवा गद्यपद्याद्यनेकभेददृढीकरणाय तत् । वक्ष्यति चानुपदमेव 'गद्यपद्य' मित्यादि । इदञ्च काव्यलक्षणमग्निपुराणादेव दण्डिना गृहीतम् । तथाच तत्र सप्तत्रिंशदधिकत्रिशततमे [३३७] अध्याये इत्थमुक्तम् 'सङ्क्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली' इति[1] ॥ १० ॥

---

1 इदन्तु बोध्यम्—काव्यस्वरूपविषये अनेके प्रवादा वादिनाम् । इह केवलं शिष्यबुद्धिवैशद्याय लक्षणभेदं प्रदर्शयामः । पिण्डीभूतः शास्त्रार्थसारस्तु मत्प्रणीतकाव्यप्रकाशप्रभायां द्रष्टव्यः । तथाहि—'इष्टार्थव्यवच्छिन्ना पदावली काव्यम्' इति दण्डी । एवमेव चाग्निपुराणम् । जयदेवस्तु—

निर्दोषा लक्षणवती सरीतिर्गुणभूषिता ।
सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक् ॥ इत्याह ।
निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिञ्च विन्दति ॥

इति भोजराजः ।

'वाक्यं रसात्मकं काव्यम्' इति विश्वनाथः ।

'काव्यस्यात्मा ध्वनिरिति बुधैः'—इत्यानन्दवर्धनः ।

'शब्दार्थौ मूर्त्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम्' इति विद्यानाथः । 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इत्यग्निपुराणम् । 'काव्यस्यात्मनि अङ्गिनि रसादिरूपे न कस्य-

(प्र०) काव्यस्य किं लक्षणम्? केचाद्या अलङ्कारशास्त्रप्रणेतारः? (उ०)पं० ९।

[ काव्यभेदप्रदर्शनम् ]

**पद्यं गद्यञ्च मिश्रञ्च तत् त्रिधैव व्यवस्थितम् ।**
**पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ॥ ११ ॥**

उक्तं काव्यस्य स्वरूपम्, सम्प्रति तद्भेदान् दर्शयति—'पद्यम्' इति । तत्=पूर्वप्रकृतं काव्यं पद्यं गद्यं मिश्रञ्चेति त्रिधा एव=त्रिप्रकारमेव प्राक्तनैरालङ्कारिकैः व्यवस्थितम्=व्यवस्थापितं निरूपितामिति यावत् । अन्तर्भावितारिगजर्थः । एवकारेण अन्ये प्रकारा न सन्तीति सूचितम् । तत्र पद्यस्य लक्षणमाह—'पद्यम्' इति । 'चतुष्पदी'=चतुर्णां पादानां समाहारः चतुष्पदी 'द्विगोः' [पा०४।१।२१] इति सूत्रेण अदन्तत्वात् द्विगोर्ङीप् ततः 'पादः पत्' [६।४।१३०] इति सूत्रेण पदादेशः चतुष्पदी=पादचतुष्टयात्मकं यत् तत् 'पद्यम्' इत्युच्यते । प्राञ्चस्तु 'छन्दोनियमवद्वाक्यं पद्यमित्यभिधीयते' इत्याहुः । दर्पणकारोऽप्याह—'छन्दोबद्धपदं पद्यम्' इति । तत्र द्वयोः त्रयाणां चतुर्णां वा पादानां नैवाग्रहः परन्तु महाकाव्यादौ प्रायः पादचतुष्टयात्मकान्येव पद्यानि स्थापनीयानि, अतः 'चतुष्पदी' ति पद्यलक्षणमुक्तम् । तत्=पद्यं वृत्तं जातिश्चेति द्विधा=द्विप्रकारं भवति अर्थात् पद्यस्य द्वौ भेदौ वृत्तं जातिश्चेति । तत्र यत्राक्षरसंख्यया गणा निवेश्यन्ते तद् **वृत्तं** भवति, यथा—उक्तात्युक्तादि । यत्र तु मात्राभेदेन गणानां निवेशः तत् **जातिः**, यथा—आर्यागीत्यादि । आर्यादीनां लक्षणं वृत्तरत्नाकरादिषु द्रष्टव्यम् ॥११॥

[ वृत्तजात्योः प्रपञ्चस्थलप्रदर्शनम् ]

**छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः ।**
**सा विद्या नौस्तितीर्षूणां गम्भीरं काव्यसागरम् ॥ १२ ॥**

'छन्दोविचित्याम्' इति । 'छन्दोविचिति'र्नाम स्वरचितः छन्दोग्रन्थः तस्यां 'तत्प्रपञ्चः' तयोर्वृत्तजात्योर्विस्तारः सकलः=समग्रोऽपि निदर्शितः=नितरां निरूपितः 'मया' इति शेषः । अत्र उक्तात्युक्तादिवृत्तभेदः, समार्धसमविषमादिभेदाः तथा आर्यागीत्यादिभेदाश्च मया

---

विद्धिमतिः' इत्ति व्यक्तिविवेककारः । 'वक्रोक्तिः काव्यजीवितम्' इति वक्रोक्तिजीवितकारः । औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्' इति क्षेमेन्द्रः ।

'गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ तत्' इति च विद्यानाथः ।
सगुणा सालङ्कारा रसभारा दोषपरिहारा ।
जगदनुरञ्जनशीला कविकृतलीला सरस्वती जयति ॥ इत्यलङ्कारचन्द्रिकाकारः ।
साधुशब्दार्थसन्दर्भं गुणालङ्कारभूषितम् ।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्त्तये ॥ इति वाग्भटः ।
'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीति' **मम्मटाचार्याः** ।

**(प्र०)** कतिविधं काव्यम् ? पद्यस्य किं लक्षणम् ? पद्यभेदञ्च ब्रूहि ? ।

(उ०) अस्य पृष्ठस्य पं २ ।

१ 'कवनीयं काव्यम्' इति **लोचनकारः** । 'कवयति इति कविः, तस्य कर्म काव्यम्' इति **विद्याधरः** । कौति शब्दायते विमृशति रसभावानिति कविः तस्य कर्म काव्यम्' इति **भट्टगोपालः** ।

सविस्तरं प्रतिपादिता ग्रन्थगौरवादिभयेनात्र नोक्ताः, अतः काव्यशिक्षापरायणैः सैव प्रथम-मनुशीलनीया इत्यत आह—'सा विद्या' इति । सा=छन्दोविचितिः गम्भीरम्=अनेकविधच्छन्दोनिबद्धरसभावादिविशिष्टत्वात् अगाधम् काव्यसागरम्=काव्यमेव सागरम् काव्यरूपं समुद्रम् तितीर्षूणाम्=तरीतुमिच्छुकानां [छात्राणां कृते] उपायभूता नौः=नौकास्थानीया ज्ञेयेति शेषः । यथा दुस्तरसमुद्रतरणोपायभूता नौर्भवति तथा छन्दोविचितिविद्यापि काव्यरूपसमुद्रतरणाय=काव्यशरीरावगाहनाय नौरेवेति भावः । एतेन काव्याध्ययनात्पूर्वमत्यावश्यकं छन्दोविज्ञानमिति सूचितम् । उक्तञ्च वामनेन—**'छन्दोविचितेर्वृत्तसंशयच्छेदः'** [वा० सू० अ० १ । सू० ६ ।] इति । यद्यपि नानावृत्तात्मकं काव्यमस्ति यत्परिशीलनेन वृत्तानां स्वरूपं स्वयमेव हृदि कलितं भविष्यति तथापि मात्रावृत्तादिषु वैतालीयप्रभृतिषु क्वचित् शिष्याणां संशयोऽपि जायेत अतस्तदपाकरणाय वृत्तसंशयः छन्दःशास्त्रत एव निर्मलतयाऽपाकर्तुं शक्यत इत्यवश्यं छन्दःशास्त्रमध्येतव्यम् । वैतालीयलक्षणन्तु—'वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्तलर्गाः' (पिं० अ० ४ । सू० ३२)

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥

इत्येवमादिपिङ्गलसूत्रवृत्तरत्नाकरादिच्छन्दःशास्त्रतो ज्ञेयम् ।

केचित्तु—छन्दांसि विचीयन्ते विज्ञायन्ते निरूप्यन्ते अनयेति 'छन्दोविचितिः' पिङ्गलादिकृतः छन्दोग्रन्थः तस्यामिति व्याचख्युरिति । अत्र युक्तायुक्तं स्वयमूह्यम् ॥ १२ ॥

[ पद्यात्मककाव्यभेदनिरूपणम् ]

**मुक्तकं कुलकं कोषः सङ्घात इति तादृशः ।**
**सर्गबन्धाङ्गरूपत्वादनुक्तः पद्यविस्तरः ॥ १३ ॥**

उक्तेषु त्रिविधेषु काव्येषु आद्यस्य पद्यात्मकस्य मुख्यं महाकाव्यसञ्ज्ञकं भेदं दर्शयितुमाह—'मुक्तकम् कुलकं कोषः सङ्घातश्च' इत्येवमाकारः तादृशः तत्समानजातीयश्चापरोपि युग्मकादिः पद्यविस्तरः=पद्यात्मककाव्यभेदसमुदायः सर्गबन्धाङ्गरूपत्वात्='सर्गबन्धो महाकाव्यम्' इति वक्ष्यमाणलक्षणं यन्महाकाव्यं तदङ्गरूपत्वात् प्रधानभूतस्य तस्यैकदेशरूपत्वात् [मयाऽत्र] अनुक्तः=ग्रन्थगौरवं मन्यमानेन न प्रदर्शितः ग्रन्थान्तरतो ज्ञातव्य इति शेषः ।

तत्र मुक्तकस्य लक्षणमुक्तमग्निपुराणे—'मुक्तकं श्लोक एवैकश्चमत्कारक्षमः सताम्' [अ० ३३७] इति । श्लोकान्तरसम्बन्धेन परित्यक्तमेकपद्यात्मकं 'मुक्तक'मित्यर्थः । अन्ये त्वेवमाहुः—

एकः श्लोको मुक्तकं स्याद् द्वाभ्यां युगलकं स्मृतम् ।
त्रिभिर्गुणवती प्रोक्ता चतुर्भिस्तु प्रभद्रकम् ॥
बाणावली पञ्चभिः स्यात् षड्भिस्तु करहाटकः ॥ इति ॥

कोषस्य लक्षणन्तु साहित्यदर्पणे—यथा—

कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।
व्रज्याक्रमेण रचितः स एवातिमनोरमः ॥ इति ॥

---

(प्र०) महाकाव्यस्यावान्तरभेदाः के सन्ति ? अत्र ते कुतो न प्रपञ्चिताः ? मुक्तकादीनां लक्षणं ब्रूहि ? । व्रज्यायाः लक्षणे कीदृशो मतभेदः ?

(उ०) अस्य पृष्ठस्य पं० १६, १० पृ० पं० १

सजातीयानामेकत्र सन्निवेशो 'व्रज्या'। अन्योन्यानपेक्षकः परस्पराकाङ्क्षारहितः। अत्रेदं तत्त्वम्। द्विविधः कोषः। व्रज्याघटित एकः। तद्भिन्नो द्वितीयः। आद्यस्योदाहरणम्—आर्यासप्तशत्यादि। द्वितीयस्योदाहरणम्—सुभाषितावलीप्रभृति। अकारादिहकारान्ताक्षरसन्निवेशो 'व्रज्या' इत्येके। यत्र प्रत्येकं परिसमाप्तार्थैः पद्यैः कथा समाप्यते स 'सङ्घात' इत्युच्यते। उक्तञ्च—

यत्र कविरेकमर्थं वृत्तेनैकेन वर्णयति काव्ये।
सङ्घातः स निगदितो वृन्दावनमेघदूतादिरिति॥

एवमाद्या मुक्तकाद्या महाकाव्यस्यैकदेशरूपाः सन्तीति पृथङ् मया न लक्षिताः ग्रन्थान्तरतोऽवसेया इति तात्पर्यं दण्डिनः॥ १३॥

[ महाकाव्यस्य लक्षणम् ]

**सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्।**
**आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्॥ १४॥**
**इतिहासकथोद्भूतमितरद्वा सदाश्रयम्।**
**चतुर्वर्गफलोपेतं चतुरोदात्तनायकम्॥ १५॥**
**नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवैः॥ १६॥**
**विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः।**
**मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि॥ १७॥**
**अलङ्कृतमसङ्क्षिप्तं रसभावनिरन्तरम्।**
**सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः॥ १८॥**
**सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जकम्।**
**काव्यं कल्पान्तरस्थायि जायेत सदलङ्कृति॥ १९॥**

सम्प्रति यस्यैकदेशा मुक्तकाद्या अत्र पृथङ् न लक्षिताः तं सर्गबन्धरूपं महाकाव्यं लक्षयति—'सर्गबन्ध' इति। सर्गाणां बन्धो गुम्फो यत्र तन्महाकाव्यम्। अथवा सर्गैः अवान्तरार्थवर्णनैः सर्गशब्दोपस्थापितैः अध्यायविशेषैर्वा उपलक्षितो बन्धः सर्गबन्धः तन्महाकाव्यं भवति। रसवत्पद्यसमूहविन्यासविशेषः विन्यस्तरसवत्पद्यसमूहविशेषो वा **महाकाव्य**मिति निष्कृष्टं लक्षणम्। पञ्चषपद्यात्मकेऽपि समूहविवक्षा स्यात् अतस्तत्रातिव्याप्तिनिरासाय 'विशेष' पदोपादानम्। विशेषपदेन सर्वमाशीरादिलक्षणमाकृष्टं भवति।

तस्यैव किं स्वरूपमिति जिज्ञासायामाह—'उच्यते' इति। तस्य लक्षणम्=स्वरूपम् उच्यते=कथ्यते। अनन्तरमेवेति शेषः।

तत्राह—'आशी' रित्यादिना। इष्टानां शिष्यादीनां शुभाशंसनमाशीः। परास्मिन् यदुत्कृष्टज्ञानं=पूज्यताज्ञानं तदवधिकं यत्स्वास्मिन् अपकर्षज्ञानम् 'अहमस्य सेवक' इति बोधः तादृशबोधानुकूलो यः करपुटादिसंयोगविशेषः स एव प्रह्वीभावरूपो **नमस्क्रिया**। वस्तुनः प्रतिपाद्यस्य निर्देशः आरम्भे कथनं **वस्तुनिर्देशः**। वस्त्विति प्रकृत [ वर्ण्यमानराजादि ]

(प्र०) महाकाव्यस्य लक्षणं लिख?। (उ०) अस्य पृष्ठस्य पं० १०।

वृत्तान्तोऽस्मिन्निति 'वस्तु' प्रधानत्वेन प्रतिपाद्यः प्रबन्धनायको राजादिः अन्यद्वा तत्सम्बन्धीत्यर्थः । एवमाशीरादिषु मध्येऽन्यतमं तन्मुखम्=तस्य महाकाव्यस्य मुखमिव मुखं प्रारम्भो भवेदिति शेषः । तत्र आशीः यथा—रुक्मिणीहरणे कीचकवधादौ दशकुमारादौ वा । नमस्क्रिया यथा—रघुवंशादौ । वस्तुनिर्देशो यथा—कुमारसम्भवशिशुपालवधादौ ।

'इतिहासे'ति—इतिहासानां रामायणमहाभारतादीनां [ अन्यतमया ] कथया रामयुधिष्ठिरादीनामुदन्तेन उद्भूतं गुम्फितं निबद्धमिति यावत् । इतरद्वा=वा अथवा इतरत् रामायणादिवृत्तान्ताद् अन्यत् सदाश्रयम्=सन् सत्यात्मको वृत्तान्त आश्रयो वर्णनीयो यस्य तत् तादृशमित्यर्थः । एतेन प्रकरणसङ्ज्ञके नाट्यादिकाव्ये कल्पितवृत्तान्तस्य सत्त्वेऽपि 'महाकाव्य' सङ्ज्ञके काव्यविशेषे तस्य निषेधः सूचितः । चतुर्वर्गः तद्रूपं यत्फलं प्रयोजनं तेनोपेतम् । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकै' रित्यमरः । इदन्तु बोध्यम्—एकत्र काव्ये नहि चत्वार एव प्रयोजनं भवति । यद्यपि धर्माद्याः सर्वे वर्णनीयाः तथापि फलं पुनरेकमेव न्याय्यम् । अत एवोक्तं दर्पणे—'चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत्' इति । चतुरोदात्तनायकम्=चतुरो व्यवहारनिपुण उदात्तो धीरोदात्तो नायकः प्रधानपुरुषो यत्र तत् । यदि नायकसामान्यलक्षणे 'दक्षोऽनुरक्त' इत्युक्तेः अत्रोदात्तस्य 'चतुर' विशेषणं वृथैवाभाति इति कस्यचित् शङ्का स्यात् सा न युक्ता 'चतुर' पदोपादानेन महाकाव्ये धीरोदात्त एव नायकः कर्तव्य इत्यस्य सूचितत्वात् । धीरोदात्तलक्षणमुक्तं साहित्यदर्पणे यथा—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥ इति ।

तस्मिन् महाकाव्येऽन्यत् किं किं वर्णनीयमित्याह—'नगरे'त्यादि द्वाभ्याम् । सर्वाणि तृतीयान्तानि पदानि 'अलङ्कृत' मिति पदेनान्वयनीयानि । नगरम्=नगरी । अर्णवः=समुद्रः । शैलः=पर्वतः । ऋतवः=वसन्ताद्याः षट् । चन्द्रः=शशी, अर्कः=सूर्यः तयोरुदयः चन्द्रार्कोदयः एतेषां वर्णनैः । अत्र चन्द्रार्कोदयपदं तयोरस्तस्य वर्णनमप्युपलक्षयति । उद्यानम्=आरामः । सलिलक्रीडा=जलक्रीडा । मधुपानम्=मद्यगोष्ठी । रतस्य सुरतस्योत्सवः रतोत्सवः=सम्भोगशृङ्गारः, विप्रलम्भैः=अभिलाषविरहेर्ष्याप्रवासशापहेतुकैः पञ्चविधैरित्यर्थः [ इदन्तु ध्यातव्यम्—यदादौ विप्रलम्भं वर्णयित्वैव सम्भोगो वर्णनीय इति 'न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते' इत्युक्तत्वात् ] कुमारोदयः=सुतोत्पत्तिः तस्य वर्णनैः, मन्त्रः=शत्रूणां जयाय मन्त्रिभिः सह विचारः, दूतः=प्रेष्यः सच निसृष्टार्थः मितार्थः सन्देशहारकश्चेति त्रिविधो ज्ञेयः । प्रयाणम्=रणाभिमुखं यात्रा । आजिः=सङ्ग्रामः । नायकस्य=काव्यप्रधानपात्रस्य अभ्युदयः=ऐश्वर्यं रिपूणां जयादिरित्यर्थः एतैः, सर्वैरलङ्कृतं भूषितम् ।

पुनः कीदृशमित्याह—'असङ्क्षिप्तम्' इति । न सङ्क्षिप्तमसङ्क्षिप्तम् विस्तृतवृत्तान्तामित्यर्थः । महाकाव्ये ग्रन्थबाहुल्यभिया सङ्क्षेपेण वस्तुवर्णनं न चमत्कारमावहति । तद्यथा मम—

१ उक्तञ्च 'प्रतापरुद्रीये' नायकविषये—

महाकुलीनतौज्ज्वल्यं महाभाग्यमुदारता ।
तेजस्विता विदग्धत्वं धार्मिकत्वादयो गुणाः ॥

वसुदेवात्मजः कृष्णो वेणुमारणयन् बभौ ।
गोपेषु निजमित्रेषु नक्षत्रेषु शशी यथा ॥ इति ।

रसाः=शृङ्गाराद्याः । भावाः=प्रधानतया व्यञ्जनाख्यव्यापारेण व्यक्तीकृता व्यभिचारिणो निर्वेदाद्यास्त्रयस्त्रिंशत् । देवगुर्वादिविषया रतिश्च 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितो भाव' इति मम्मटोक्तेः । एतै रसभावैर्निरन्तरमन्तरशून्यं व्याप्तमित्यर्थः ।

इदन्तु बोध्यम्--शृङ्गारवीरशान्तानां मध्ये कोऽपि रसोऽङ्गी कार्यः अन्ये रसा भावादयश्च एतेषामङ्गत्वेन रूपेण निबन्धनीयाः । तथा चोक्तं साहित्यदर्पणे--'शृङ्गारवीरशान्तानामेकोङ्गी रस इष्यते । अङ्गानि सर्वेऽपि रसा' इति । अङ्गी=प्रधानः । तत्र शृङ्गारोऽङ्गी यथा नैषधे । वीरः शिशुपालबधे, शान्तो महाभारते, करुणो रामायणे ।

किञ्च--अनतिविस्तीर्णैः=नातिविस्तरैः अर्थात् त्रिंशदन्यूनद्विशत्यनधिकपद्यरूपैः सर्गैरुपेतं स्यात् । साहित्यदर्पणे तूक्तम्--'नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह' इति ।

कथम्भूतैः सर्गैरित्याह--'श्रव्यवृत्तै'रिति--श्रव्याणि हतवृत्तादिदोषरहितानि यानि वृत्तानि येषु तैः । तथा चोक्तम्--

यस्मिन् श्रुते च चित्तस्य वैरस्यं नच हृद्यता ।
तानि वर्ज्यानि वृत्तानि प्रसिद्धिप्रच्युतानि च ॥ इति ।

पुनः कीदृशैः सर्गैः 'सुसन्धिभि'रिति--सुशोभनाः सन्धयो नाटकलक्षणोक्ता मुखप्रतिमुखाद्याः पञ्च यत्र तैः । उक्तञ्च विश्वनाथेन दर्पणे--'सर्वे नाटकसन्धय' इति । पुनः कीदृशैः सर्गैः 'भिन्नवृत्तान्तै'रिति । भिन्नो विलक्षणो वर्णनीयो वृत्तान्तः विषयः प्रधानविषयोपयोगी यत्र तैरित्यर्थः । 'सदलङ्कृति' इति । सत्यः शब्दार्थशोभाद्वारा तत्तद्रसोपकारकारिण्य अलङ्कृतयः अनुप्रासोपमादयोऽलङ्कारा यत्र तत् । एवंविधदर्शितलक्षणविशिष्टं महाकाव्यं भवतीति सर्वोऽर्थः ।

सम्प्रति दर्शितलक्षणं महाकाव्यं स्तौति 'लोकरञ्जक'मिति । उक्तलक्षणैरुपेतं काव्यं लोकानां काव्यभावनाभावितभावानां सहृदयानां विनोदकरं सत् कल्पान्तरस्थायि=प्रलयकालपर्यन्तस्थिति जायेत=भवतीति विवक्षितार्थः । यतः तादृशकाव्यस्य पठनपाठनादिसम्प्रदायद्वारा सहृदयैरवश्यं रक्षा क्रियते, अत एव कल्पान्तरस्थायि । एवञ्च स्थिरकीर्तिप्रत्याशया कविभिस्तत्रावश्यं यत्न आस्थेय इति सूचितम् ॥ १४,१५,१६,१७,१८,१६ ॥

**न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति ।**
**यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः ॥ २० ॥**

उक्तलक्षणस्य महाकाव्यस्य क्वचित् खण्डकाव्यादौ केषाञ्चित् धर्माणां सत्त्वादतिव्याप्तिः,

---

१ ईशानसंहितायान्तु--

अष्टसर्गान्नतु न्यूनं त्रिंशत्सर्गाच्च नाधिकम् ।
महाकाव्यं प्रयोक्तव्यं महापुरुषलक्षणम् ॥ इत्युक्तम् ।

तस्मादयं निर्देशः प्रायिक एवाभाति ।

२ काव्यस्य भावनया संस्कारविशेषेण भावितः सुसंस्कृतः भावः आत्मा येषाम् ।

**(प्र०) कथमङ्गैः कैश्चिन्न्यूनमपि काव्यं न दुष्यति ? (उ०) अस्य पृष्ठस्य पं० २६**

कुत्रचिन्महाकाव्यादावपि केषाञ्चिदसत्त्वादव्याप्तिरित्याशङ्क्य तन्निरासार्थमाह—'न्यूनम्' इति । अत्र=उक्तेषु महाकाव्यस्य अङ्गेषु धर्मेषु मध्ये यैः कैश्चिद् अङ्गैः=धर्मैः न्यूनम्=हीनमपि काव्यम्=चमत्कारकारिण्या रचनायाः रचयितुः कवेः कृतिः न दुष्यति=दुष्टं निन्दितं न भवतीत्यर्थः । किमत्रास्ति कश्चन विशेषो येन तन्न दोषावहं भवतीत्यपेक्षायामाह—'यदि' इति । यदि उपात्तेषु=उपनिबद्धेषु वर्णितेषु नायकादिषु सम्पत्तिः=उचिता रसादिसामग्री तद्विदः= तत् काव्यं रचयितुं ज्ञातुं वा ये विदन्ति जानन्ति अर्थात् रसभावविदः सहृदयान् आराधयति= प्रीणयति । उक्तञ्च सरस्वतीकण्ठाभरणे—

नाऽवर्णनं नगर्यादेर्दोषाय विदुषां मनः ।
यदि शैलर्तुरात्र्यादेर्वर्णनेनैव तुष्यति ॥ इति ।

एतद्विषये प्राचा भामहेनाप्युक्तम्—'उपश्लोक्यस्य माहात्म्यादुज्ज्वलाः काव्यसम्पदः' इति । उपश्लोक्यो यशस्वी सदाचारो यथा रामयुधिष्ठिरादिः । काव्यसम्पदो रसभावादिः ।

उद्भटोप्याह—

गुणालङ्कारचारुत्वयुक्तमप्यधिकोज्ज्वलम् ।
काव्यमाश्रयसम्पत्त्या मेरुणेवामरद्रुमः ॥

रुद्रटेनाप्युक्तम्—'उदारचरितनिबन्धना प्रबन्धप्रतिष्ठा' इति ।
साहित्यमीमांसाकारोप्याह—'नायकगुणग्रथिताः सूक्तिस्रजः सुकृतिनामाकल्पमाकल्पन्ति' इति ।

भोजराजेनाप्युक्तम्—

कवेरल्पापि वाग्वृत्तिर्विद्वत्कर्णावतंसति ।
नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः ॥ इति ।

तस्मान्महाकुलीनत्वगुणोपेतनायकप्रबन्धादि सकलाङ्गपूर्णं वा कतिपयाङ्गोपेतं वा भवेत् सर्वथैव तत्र सहृदयानामादरो जायते । एवञ्च चमत्कारातिशयपुष्टं महाकाव्यम्, विच्छित्ति-विशेषोपेतञ्च खण्डकाव्यमित्यनयोर्विशेषे सति नैवाव्याप्तिदोषलेशोपीति सारार्थः ॥ २० ॥

एवं काव्ये नायकोत्कर्षो विधेयः, स च यावत् प्रतियोगिनः प्रतिनायकस्यापकर्षो न वर्ण्येत तावद् विच्छित्तिविशेषतां न भजते तस्मात्तस्याप्यपकर्षः प्रतिपाद्य इत्यावश्यकम्, परमेतत्कथं प्रतिपादनीयमित्यत्र प्रकारद्वयमाचष्टे 'गुणत' इति द्वाभ्याम्—

[ काव्ये नायकप्रतिनायकयोर्वर्णनम् ]

**गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।**
**निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥ २१ ॥**
**वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।**
**तज्जयान्नायकोत्कर्षवर्णनञ्च धिनोति नः ॥ २२ ॥**

गुणतः=महाकुलीनत्वादिगुणवत्त्वेन प्राक्=प्रथमं नायकम्=धीरोदात्तादिकम् उपन्यस्य=वर्णयित्वा तेन=उपन्यस्तनायकेन विद्विषाम्=नायकप्रतिपक्षभूतानां कुपथगामिनामु-

(प्र०) कथं काव्ये नायकप्रतिनायकौ वर्णनीयौ ? (उ०) अस्य पृष्ठस्य पं० २७

द्धतानामिति यावत् [यत्] निराकरणम्=पराजयवर्णनम् इत्येष मार्गः=एवमाकारा रीतिः वर्णनाप्रकारः प्रकृतिसुन्दरः=स्वभावेनैव रमणीयः। तथा सति कविकृतिः बलादपि सहृदयहृदयमावर्जयति, यदि [पूर्वं] सदाचारादिगुणयोगेन नायकः, कुत्सिताचारवत्त्वेन प्रतिनायकश्च वर्ण्येत पुनस्तयोर्वर्णितौ जयपराजयौ श्रोतॄणां श्रवणाय हृदयमाकर्षयतः इत्यर्थः। एतादृशकाव्यस्य लोकेष्वबाधितः प्रचारो भवतीति भावः। यथा रामायणे आदिमहाकाव्ये रामचरितं पित्राज्ञापालनादिरूपं परमः सदाचारः, अथ च रावणस्य परस्त्रीहरणादिरूपं परमो दुराचारः। तादृशेन रामेण च तादृशस्य रावणस्य पराजयो वर्णितः। 'गुणत' इति नायकस्य गुणाः सामान्यतः पूर्वमुक्ताः। अन्येऽपि शोभाविलासाद्याः केचन विशेषगुणा ज्ञेयाः। तथा चोक्तमन्यत्रापि—

शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी।
ललितौदार्यमित्यष्टौ सत्वजाः पौरुषा गुणाः॥ इति।

अत्र 'विद्विषा' मिति बहुवचनमविवक्षितम्। अथवा प्रतिनायकसाहाय्यकारिणामभिप्रायेण बोध्यम्।

'वंशवीर्ये'ति—वंशश्च वीर्यञ्च श्रुतादिश्च तानि इति द्वन्द्वः। तत्र वंशः=महाकुलीनत्वम् वीर्यम्=बलं शारीरकादि। श्रुतम्=शास्त्रम् आदिपदेन यज्ञदानादेरपि परिग्रहः। एतानि रिपोः शत्रोरपि [प्रतिनायकस्यापि] वर्णयित्वा तज्जयात्=तादृशगुणवच्छत्रुपराजयात् यत् च नायकोत्कर्षवर्णनम्=नायकमहिम्नो गुम्फनं तत् नः=अस्मान् धिनोति=प्रीणयति। 'धिनोति' इति प्रीणनार्थकात् 'धिवि' धातोर्लटि प्रथमपुरुषैकवचने रूपम्। यथा च हयग्रीववधे हयग्रीवस्य स्वर्गादिविजयवर्णनम्। त्वर्थे चायं चः पठितः। तेनास्मिन्नेव पक्षे स्वरुचिः प्रदर्शिता भवति॥ २१, २२॥

[गद्यस्य सभेदं लक्षणवर्णनम्]

**अपादः पदसन्तानो गद्यमाख्यायिका कथा।**
**इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल॥ २३॥**
**नायकेनैव वाच्यान्या नायकेनेतरेण वा।**
**स्वगुणाविष्क्रिया दोषो नात्र भूतार्थशंसिनः॥ २४॥**

पद्यात्मकं काव्यं निरूपयित्वा उद्देशक्रमप्राप्तं गद्यं निरूपयति—'अपाद' इति। अपादः=मात्राक्षरनियमितत्वरूपः पादः स यत्र नास्त्यसौ अपादः तादृशो यः पदसन्तानः=पदानां सुप्तिङन्तानां सन्तानः समूहविशेषस्तत् गद्यम्=इति गद्यकाव्यलक्षणम्। आख्यायिका कथा इति तस्य=गद्यस्य द्वौ प्रभेदौ=प्रकारौ 'भवत' इति शेषः। तयोः=द्वयोर्मध्ये किल=निश्चयेन आख्यायिका नायकेनैव वाच्या=आख्यायिकायां नायक एव स्वेतिवृत्तं कथयेदित्यर्थः। 'एव' शब्देन अन्यस्य निषेधो दर्शितः। अन्या=कथा नायकेन वाच्या वा=अथवा इतरेण वाच्या कथायां नायकस्तदितरश्चेतिवृत्तवक्ता स्यादित्यर्थः। अत्र चार्थे वा शब्दो बोध्यः। अन्यथा नायकवाच्यायां कथायामाख्यायिकालक्षणस्यातिव्याप्तिः स्यात्।

---

(प्र०) गद्यस्य किं लक्षणम्? कतिविधञ्च तत्? कुत्र नायकेन कृतं स्वगुणवर्णनं कथं दोषावहं न भवति? (उ०) अस्य पृष्ठस्य पं० २१।

ननु–आख्यायिकायां स्वमुखेन स्वगुणप्रशंसने नायकस्य उदात्तता नङ्क्ष्यति इत्याशङ्क्याह—'स्वगुणे'ति । अत्र=आख्यायिकायां भूतार्थशंसिनः=सत्यार्थवक्तुः नायकस्य स्वगुणाविष्क्रिया=स्वेषां गुणानां स्वमुखेन आविष्क्रिया प्रकाशः दोषो न=नैव दूषणं भवतीति शेषः । असत्यभूतानामनपेक्षितानां स्वगुणानां स्वमुखेन कथनमेव दोष इति भावः । यथा च 'आख्यायिका' संज्ञके कादम्बरीगद्ये महाश्वेताप्रसङ्गे चन्द्रापीडस्य नायकस्य स्वेतिवृत्तवक्तृत्वं न दोषः ।

सन्ति चान्येपि चूर्णिकाद्या गद्यभेदाः परं यथा महाकाव्ये मुक्तकादीनामन्तर्भावः तथा चूर्णकादीनामप्याख्यायिकादावन्तर्भावः इति ते पृथङ् न लक्षिताः । ते च ग्रन्थान्तरतोऽवसेया विशेषजिज्ञासुभिः । तथा चाह काव्यालङ्कारसूत्रे वामनः—'गद्यं वृत्तगन्धि चूर्णमुत्कलिकाप्रायञ्च' [अ० ३ । सू० २२] 'पद्यभागवत् वृत्तगन्धि' [३ । २३] यथा—'पातालतालुतलवासिषु दानवेषु' । अस्मिन् गद्ये वसन्ततिलकाख्यस्य वृत्तस्य भागः प्रत्यभिज्ञायते । 'अनाविद्धललितपदं चूर्णम्' [३ । २४] न विद्धानि अनाविद्धानि अदीर्घसमासभाञ्जि च तानि ललितपदानि अनुद्धतानि पदानि यस्मिन् तदनाविद्धपदं 'चूर्ण' मित्युच्यते । यथा—'अभ्यासो हि कर्मणां कौशलमावहति । नहि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधाति' इति । 'विपरीतमुत्कलिकाप्रायम्' [३ । २५] विपरीतम्=आविद्धोद्धतपदमित्यर्थः । यथा—'कुलिश[३]शिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गकुम्भस्थलगलन्मदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणि' इति । अग्निपुराणे तु—

'अपदः पदसन्तानो गद्यं तदपि गद्यते । चूर्णकोत्कलिकावृत्तगन्धिभेदात्त्रिरूपकम्' ॥ इत्युक्तम् ।

कथादीनां लक्षणान्युक्तानि साहित्यदर्पणे विश्वनाथेन । तथाहि—

कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥

यथा कादम्बर्यादिः ।[४]

---

१ 'गद्' व्यक्तायां वाचि इत्यस्माद् धातोः 'गदमदचरयमश्चानुपसर्गे' [पा०३।१।१००] इति सूत्रेण कर्मणि 'यत्' प्रत्ययः । २ पादेषु भवं पद्यम् । भवार्थे यत्प्रत्यये भसंज्ञायां पदादेशे रूपमिति कश्चित् । वयन्तु पादाः सन्त्यस्य 'अन्येभ्योपि दृश्यते' [वा० ५।२।१२०] इति यप् 'पद्दन्नो०'–[६।१।६३] इति पदादेशः ।

३ कुलिशं वज्रं तस्य शिखिरं कोटिः अग्रभाग इति यावत् तद्वत् खराणां तीव्राणां नखराणां करजाणां प्रचयः संघः तेन प्रचण्डः महापीडाजनको यः चपेटः करतलः अथवा प्रचण्डा या चपेटा करतलाघातः तेन (तया) पाटितं द्वैधीभावं नीतं यत् मत्तमातङ्गस्य मदस्राविगजस्य कुम्भस्थलं स्थूलांसप्रदेशः तस्माद् गलन्ती प्रच्यवन्ती या मदच्छटा मदधारा तया छुरितः चर्चितः चारुः मनोहरः यः केसरभारः स्कन्धकेशनिचयः तेन भासुरं भ्राजमानं मुखम् आननं यस्य स तस्मिन् तादृशे केसरिणि=सिंहे इत्यर्थः ।

४ इदन्तु नः परां वैचित्रीमावहति यद् यं गद्यभेदं दण्डी 'आख्यायिका' इति मन्यते विश्वनाथस्तमेव 'कथा' पदेन व्यवहरन्नुदाहरति ।

आख्यायिका कथावत्स्यात् कवेर्वंशादिकीर्त्तनम् ।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित् ॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते ।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ॥ इति ॥

यथा हर्षचरितादिः ॥ २३, २४ ॥

[ आख्यायिकास्वरूपे परमतखण्डनम् ]

**अपित्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् ।**
**अन्यो वक्ता स्वयं वेति कीदृग्वा भेदलक्षणम् ॥ २५ ॥**

'आख्यायिका नायकेनैव निबद्धव्या' इति नियमं ये स्वीकुर्वन्ति तेषां मतमनूद्य दूषयति—'अपितु' इति । तत्र=आख्यायिकायाम् अन्यैरपि=नायकभिन्नैरपि उदीरणात्=कथनात् अर्थात् नायकभिन्नवक्तुरपि स्ववृत्तकथनात् अनियमो दृष्टः=नायकमात्रवक्तृकत्व-नियमस्य अभावो दृष्टः, व्यभिचारो दृष्ट इति यावत् । यतः अन्यो वक्ता=नायकभिन्नो वक्ता स्वयं वेति=स्वयं वा नायको वक्ता इत्याकारकं भेदलक्षणम्=आख्यायिकायाः कथायाश्च परस्परं भेदकरणं 'कीदृग्' अस्ति इति शेषः । न किमपीत्यर्थः । उभयोः स्वरूपप्र-युक्ते भेदे जागरूके=विद्यमाने वक्तृभेदकृतो विशेषो नादरणीय इति भावः ॥ २५ ॥

**वक्त्रञ्चापरवक्त्रञ्च सोच्छ्वासत्वञ्च भेदकम् ।**
**चिह्नमाख्यायिकायाश्चेत् प्रसङ्गेन कथास्वपि ॥ २६ ॥**
**आर्यादिवत् प्रवेशः किं न वक्त्रापरवक्त्रयोः ।**
**भेदश्च दृष्टो लम्भादिरुच्छ्वासो वास्तु किं ततः ॥ २७ ॥**

कथाख्यायिकयोर्विषये वक्तृभेदकृतो विशेष इति प्राचां मतं निरस्तम्, सम्प्रति प्रकारान्तरेणान्येषां केषाञ्चिन्मतं खण्डयति—'वक्त्रञ्च' इति । वक्त्रम्, अपरवक्त्रञ्चेति छन्दो-भेदौ । वक्त्रलक्षणमुक्तं वृत्तरत्नाकरे-'वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि स्यातम्' इति । अपरवक्त्रलक्षणन्तु—'अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरा' वित्यन्य-

---

अग्निपुराणे त्वाख्यायिकालक्षणमित्थमुक्तम्—
कर्तृवंशप्रशंसा स्याद्यत्र गद्येन विस्तरात् ।
कन्याहरणसङ्ग्रामविप्रलम्भविपत्तयः ॥
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः ।
उच्छ्वासैश्च परिच्छेदो यत्र या चूर्णकोत्तरा ॥
वक्त्रं वापरवक्त्रं वा यत्र साख्यायिका स्मृता ॥ इति ।

अस्मिन्विषये ग्रन्थगौरवभयात् बहु विवेचना न प्रतन्यते । युक्तायुक्तं सूरयः स्वय-माकलयन्तु । अस्मद्भावनया तु मतभेदेनाख्यायिकादिस्वरूपे प्रकारभेद आभाति ।

(प्र०) कथाख्यायिकयोर्विषये कीदृशं प्राचां मतम् ? कथञ्च तत् खण्डितम् ? (उ०) अस्य पृष्ठस्य पं० ८

त्रोक्तम्। सोच्छ्वासत्वम्=कथांशभेदकस्य अध्यायादिवत् विरामविशेषस्य नाम उच्छ्वासः, तेन सह वर्त्तत इति सोच्छ्वासः तस्य भावस्तत्त्वम्। उच्छ्वासेन सहितत्वमित्यर्थः। एतत्त्रयं आख्यायिकायाः=उक्तलक्षणस्य गद्यकाव्यस्य भेदकम्=कथातो विशेषकं चिह्नम्=लक्षणमस्तीति चेद्=यदि [एवं कथयेयुः केचित् तन्न यतः] आर्यादिवत्=आर्यादिच्छन्दोविशेषवत् कथास्वपि=कथानामकेषु गद्येष्वपि किं 'वक्त्रापरवक्त्रयोः प्रवेशः' न स्यात् अपितु स्यादेवेति भावः।

अयमभिप्रायः—नहि कथायामार्यानामकच्छन्दोनिवेशे प्रवृत्तः कविः यदि वक्त्रापरवक्त्रच्छन्दसी निवेशयेत तदा कमपि दोषं करोति तावता वा कथायाः कथात्वमेव न भवति। अभ्यनुज्ञातञ्च कैश्चित् कथायामार्यादिवत् वक्त्रापरवक्त्रयोरपि निवेशकरणम्। तथाहि—'आर्यावक्त्रापरवक्त्राणां छन्दसा येन केनचित्' इति। तस्मादुक्तरीत्या कथायामार्यादिच्छन्दोनिवेशाभ्यनुज्ञाने उक्तविशेषकथनं केषाञ्चिदज्ञानमूलकमेवेति भावः।

सोच्छ्वासत्वस्यापि भेदकत्वं निरस्यति—'भेदश्च' इति। 'लम्भ' इति कथापरिच्छेदस्य नाम। आदिपदेन उल्लासादीनामपि ग्रहणम् 'वा' शब्दश्चार्थे लम्भादिः उच्छ्वासश्चेत् [यदि] कथाख्यायिकयोः भेदः=विशेषोऽस्तु ततः किम्=न किमपीत्यर्थः। अर्थात् लम्भादिरुच्छ्वासः कथायां स्यात् आख्यायिकायां वा स्यात् नैतावता कविर्दुष्यति नाप्युभयोरैक्यं भवति। यथा घटपटयोः स्वरूपभेदे विद्यमाने नहि नीलताद्यास्तयोर्विशेषका भवन्ति। कादम्बर्याञ्च नैव लम्भकस्य निवेशः। तस्मात् लम्भकादिकं व्यभिचारि सत् नोभयोरसाधारणो धर्म इत्यर्थः॥२६, २७॥

[ उक्तेऽर्थे स्वसिद्धान्तकथनम् ]

**तत्कथाख्यायिकेत्येका जातिः सञ्ज्ञाद्वयाङ्किता।**
**अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः॥ २८॥**

एवं प्राचां मतं निरस्य स्वसिद्धान्तमाह—'तत्कथा' इति। तत्=यस्मादुक्तानि लक्षणानि प्राचां व्यभिचारीणि तस्मात् हेतोः 'कथा आख्यायिका चेति सञ्ज्ञाद्वयाङ्किता=नामद्वयविशिष्टा एका जातिः=एकमेव गद्यकाव्यम् नानयोरवान्तरो विशेषः। यथा 'पटः वस्त्र'मिति एकस्यैव वस्तुनो नामद्वयसत्त्वेऽपि न विशेषः तथा प्रकृतेऽपि बोध्यम्। शेषाः=कथाख्यायिकाभ्यामतिरिक्ताः आख्यानजातयः=आख्यानसञ्ज्ञकादीनि गद्यकाव्यानि अत्रैव=कथायामाख्यायिकायां वा अन्तर्भविष्यन्ति=गर्भीभविष्यन्ति।

अयं भावः—वस्तुतः एकविधमेव गद्यकाव्यम्। तस्यैव कथा, आख्यायिका, आख्यानमित्यादीनि सञ्ज्ञाविशेषाः यथा घटः कुम्भः कलश इत्येकस्यैव वस्तुनः सञ्ज्ञाविशेषाः। यत्तु तेषां क्वचित् विशेषकरणं दृश्यते तत् शिष्यबुद्धिवैशद्यार्थमेव नतु वास्तविकभेदप्रदर्शनार्थम्। तथाच अग्निपुराणे—

आख्यायिका कथा खण्डकथा परिकथा तथा।
कथालिकेति मन्यन्ते गद्यकाव्यञ्च पञ्चधा॥ इत्युक्तम्।

एष एव च दण्डिनः स्वसिद्धान्तः। तस्मात् 'अत्रैवान्तर्भविष्यन्तीति भाविप्रयोगात्

१ घटत्वपटत्वधर्मप्रयुक्ते भेदे।

(प्र०) कथाख्यायिकाविषये दण्डिसिद्धान्तं लिख? (उ०) अस्य पृष्ठस्य पं० १८

प्रौढिवादेनाभेदप्रतिपादनं ग्रन्थकृतो न वस्तुत इति 'मालिन्यप्रोञ्छनी' कारोक्तिर्न मालिन्य-प्रोञ्छने समीचीना निश्चयार्थेऽपि भविष्यक्रियाप्रयोगदर्शनात् यथा—'गमिष्यति' इत्यादौ गमिष्यत्येवेत्यर्थः। नह्यत्र भाविसत्तायां वक्तुः सन्देहः। अग्निपुराणवचनमपि शिष्यधियां चातुर्यद्योतनायैवेति दण्डिनोभिप्राय इत्यस्मन्मतम् ॥ २८ ॥

**कन्याहरणसङ्ग्रामविप्रलम्भोदयादयः।**
**सर्गबन्धसमा एव नैते वैशेषिका गुणाः ॥ २९ ॥**

केचित्तु वर्ण्यविषयभेदेनापि कथाख्यायिकयोर्भेदं ब्रुवते तन्मतमपि तिरस्करोति—'कन्याहरणे'ति। कन्याहरण०=कन्याया अविवाहितायाः [वरेण सह स्वयंकृतनिश्चयायाः] हरणं नयनं तदर्थं सङ्ग्रामो युद्धम् अर्थात् राक्षसयुद्धेन कन्यां जित्वा राक्षसविधिना विवाह-करणम् विप्रलम्भः=विप्रलम्भाख्यः शृङ्गारः पञ्चप्रकारः। विप्रलम्भपदं सम्भोगस्याप्युप-लक्षणम्। विप्रलम्भानन्तरं सम्भोगवर्णनस्यौचित्यात्। उक्तं हि—

न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते।
कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्धते ॥ इति।

उदयः=सूर्यादीनाम्, नायकस्य वोदय ऐश्वर्यनिरूपणम्। आदिपदेन तडागादीनां ग्रहणम्, एते कन्याहरणसङ्ग्रामविप्रलम्भोदयादयः आख्यायिकाया वैशेषिकाः=भेदका गुणा धर्माः [यैरुक्ताः] न एते=नैव सन्तीत्यर्थः [यत एते] सर्गबन्धसमाः='सर्ग-बन्धो महाकाव्यम्' इत्युक्तलक्षणम् तत्समाः तत्साधारणाः महाकाव्येष्वप्येते कन्याहरणादयो भवन्ति, तस्मान्नाख्यायिकायाः असाधारणधर्मा एते किन्तु व्यभिचारिणः। अर्थात् एवञ्जातीयकाः धर्माः कथाख्यायिकयोर्नैव भेदमावहन्ति। एवञ्च 'कन्याहरणसङ्ग्रामविप्रलम्भो-दयान्विता' इत्यादि भामहादिकृतं लक्षणं दुष्टमेव मन्तव्यमित्याशयः ॥ २९ ॥

[कथाख्यायिकाविषये भामहादिमतनिरासः]

**कविभावकृतं चिह्नमन्यत्रापि न दुष्यति।**
**मुखमिष्टार्थसंसिद्ध्यै किं हि न स्यात्कृतात्मनाम् ॥ ३० ॥**

अथ कथायां कवेर्भावविशेषो भवति, आख्यायिकायान्तु स नो प्रतीयत इत्यनयोर्वि-शेषः इति भामहादीनां मतं स्यात् तदपि दूषयति—'कविभावकृत'मिति। कवेर्भावः कविभावः कविहार्दं तत्कृतं चिह्नम्=लक्षणम् अन्यत्रापि=कथायामिव आख्यायिकायामपि न दुष्यति=नैव दोषं जनयति। अर्थात् यथा माघकाव्यस्य सर्गसमाप्तिश्लोकेषु 'श्री'शब्दप्रयोगः, किराते च

१ 'कवेरभिप्रायकृतैरङ्कनैरङ्किता कथा' इति भामहोक्तिः।

२ तथाच माघः—प्रथमसमाप्तिश्लोकस्य द्वितीयपादे—
'तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति' इत्याह। एवमेव सर्वत्र।
तथा भारविस्तु —
'रिपुतिमिरमुदस्योदीयमानं दिनादौ दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः'
इत्यादिदिशा सर्वत्र सर्गसमाप्तौ 'लक्ष्मी'शब्दं प्रयुयोज।

(प्र०) कथाख्यायिकयोर्विषये भामहादिमतखण्डने का युक्तिः? (उ०) पृ० पं० ५

तथैव 'लक्ष्मी'पदं प्रयुक्तम् । एवमेव यदि आख्यायिकायामपि कृतं भवेत् तदापि न दोषः । तथाहि—इष्टार्थसंसिद्ध्यै=वाञ्छितार्थसाधनाय मङ्गलकरणायेत्यर्थः कृतात्मनाम्=पण्डितानाम् किं हि मुखम्=प्रारम्भः न स्यात्=अपितु सूरय इष्टार्थघटनाय यद्यदुपाददते तत्सर्वं सर्वत्रैव काव्येषु शोभाधायकमेव जायते । निरङ्कुशाः कवय इति भावः ॥ ३० ॥

[ मिश्रकाव्यनिरूपणम् ]

**मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः ।**

[ चम्पूकाव्यस्य लक्षणम् ]

**गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते ॥ ३१ ॥**

अधुना क्रमप्राप्तं मिश्रकाव्यमाचष्टे—'मिश्राणि' इति । नाटकादीनि=दृश्यसञ्ज्ञकानि काव्यानि मिश्राणि=मिश्रसंज्ञकानि 'भवन्ति' इति शेषः । अर्थात् तेषु गद्यं पद्यञ्च मिश्रितं भवत्यत एव 'मिश्राणि' इत्युच्यन्ते । तेषां=नाटकादीनाम् अन्यत्र=भरतादिग्रन्थेषु विस्तरः=प्रपञ्चः । 'अस्ति' इति शेषः । मया ग्रन्थगौरवभयादत्र न दर्शित इत्याशयः । न केवलं दृश्यकाव्येष्वेव गद्यपद्ययोर्योगः किन्तु श्रव्यकाव्येप्यसौ क्वचिद् भवतीत्याह—'गद्यपद्यमयी' इति । गद्यपद्यप्रचुरा काचित् 'चम्पूः' इत्यभिधीयते चम्पूनामकं तत्काव्यं भवतीत्यर्थः । 'काचित्'इति कथनेन न सर्वस्या गद्यपद्यमय्या चम्पूसञ्ज्ञा । तथा चोक्तं साहित्यदर्पणे—'गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते' इति गद्यपद्यमय्या अपि राजस्तुतेर्न 'चम्पू' संज्ञा किन्तु 'विरुद' संज्ञा । यथा विरुदमणिमाला ।

अत्र प्रचुरार्थकमयटा इदं सूचितं यत् यत्राधिकं गद्यं क्वचित् क्वचित् पद्यं भवेत् तस्य नैव चम्पूसंज्ञेति । यथा—हर्षचरितकादम्बरीदशकुमारचरितादौ न सा । एतेन भानुचन्द्रसिद्धचन्द्रकृतकादम्बरीव्याख्यायां—'इत्यादिचम्पूलक्षणयुक्तां कादम्बरीसञ्ज्ञिकां कथामारचयति' इत्युक्तं तदसमीक्ष्याभिधानम् कादम्बर्याश्चम्पूत्वानुपपत्तेः 'धिया निबद्धेयमतिद्वयी कथा' इति स्वयंग्रन्थकारकथोक्तेश्चेति दिक् ।

अत्र 'नाटकादीनि' इत्यादिपदेन प्रकरणादीनां रूपकाणामपि ग्रहणम् । तथा चोक्तं दशरूपके—

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥

एतेषां प्रपञ्चस्तु मया तद्व्याख्यायां कृतः ।

'गद्यपद्यमयी' इत्यत्र 'तत्प्रकृतवचने मयट्' [ ५।४।२१ ] इति सूत्रेण प्राचुर्ये मयट् ततः 'टिड्ढाणञ्०' [ ४।१।१५ ] इत्यनेन ङीप् ॥ ३१ ॥

[ भाषाभेदेन काव्यभेदवर्णनम् ]

**तदेतद् वाङ्मयं भूयः संस्कृतं प्राकृतं तथा ।**
**अपभ्रंशश्च मिश्रश्चेत्याहुरार्याश्चतुर्विधम् ॥ ३२ ॥**

पूर्वं गद्यपद्यादिभेदेन त्रिधा काव्यमुक्तम् । अधुना भाषाभेदेन तस्य चतुरो भेदानाह—

---

**(प्र०)** कानि मिश्राणि ? कुत्र च तेषां विस्तरः ? चम्पूलक्षणं किम् ? दशकुमारादिष्वपि क्वचित् २ पद्यसत्त्वे कुतो न चम्पूत्वम् ? **(उ०)** अस्य पृष्ठस्य पं० ६

**(प्र०)** भाषाभेदेन काव्यभेदम्ब्रूहि ? **(उ०)** अस्य पृष्ठस्य पं० ३०

'तदेतद्' इति । तत्=पूर्वोक्तं त्रिविधं वाङ्मयम्=काव्यशास्त्रम् भूयः=पुनः 'संस्कृतं' तथा 'प्राकृतं' 'अपभ्रंशः' 'मिश्रं' च इति प्रकारेण आर्याः=काव्यशास्त्रप्रणेतारो विद्वांसः एतच्चतुर्विधम्=चतुष्प्रकारम् आहुः=कथयन्ति । तथा चोक्तं सरस्वतीकण्ठाभरणे **भोजराजेन**—

संस्कृतेनैव कोप्यर्थः प्राकृतेनैव चापरः ।
शक्यो वाचयितुं कश्चिदपभ्रंशेन वा पुनः ॥
पैशाच्या शौरसेन्या च मागध्यान्यो निबध्यते ।
द्वित्राभिः कोऽपि भाषाभिः सर्वाभिरपि कश्चन ॥ इति ।

इत्थं भाषाणां बहुत्वात् स्वतन्त्राः कवयो यथारुचि एकया भाषया, द्वाभ्यां भाषाभ्यां तिसृभिर्वा ततोप्यधिकाभिर्वा भाषाभिर्यद् यद् उपनिबध्नन्ति सर्वं तत्सरसं काव्यमनेकविधतां यातीति भावः ॥ ३२ ॥

[संस्कृतप्राकृतयोर्लक्षणम्]

**संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः ।**
**तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः ॥ ३३ ॥**

संस्कृतादीनां स्वरूपमाह—'संस्कृतम्' इति । दैवी=देवानामियं 'दैवी' 'तस्येदम्' [४।३।१२०] इत्यण् । ततः 'टिड्ढाणञ्०' [४।१।१५] इति ङीप् । देवानां सम्बन्धिनी देवैर्ब्रह्मेन्द्रादिभिरादौ व्यवहारे प्रयुक्ता या वाक् तत् 'संस्कृतं' नाम स्वाभाविकसंस्कारवत्त्वात् 'संस्कृत'मित्युच्यते । 'श्रुतिरपि सर्गादौ 'स भूरिति व्याहरन् । स भूमिमसृजत' [तै०ब्रा० २।२।४।२] इत्येवमाद्या संस्कृतवागुच्चारणपूर्वकमेव प्रजापतेः सृष्टिमाह । तथाच दैवीवाक्त्वमेव संस्कृतलक्षणम् । आग्नेयेप्युक्तम्—'देवादीनां संस्कृतं स्यात्' इति । [सा च] महर्षिभिः= साक्षात्कृतधर्मभिः तदुत्तरकालभाविभिश्च पाणिन्यादिभिर्मुनिभिः अन्वाख्याता=कथिता प्रकृतिप्रत्ययादिविभागकल्पनया प्रकाशिता नतु रचिता संस्कृतवाचो नित्यत्वात् ।

पाणिनिप्रभृतयोऽर्वाञ्चनाः ततः पराञ्चो वा अन्ये तानि तानि व्याकरणानि रचयित्वा तत्र प्रकृतिप्रत्ययादिविभागञ्च कल्पयित्वा शिष्यान् प्रत्यर्थबोधोपायमाकलयाम्बभूवुः नतु कुम्भकारो घटमिव ते संस्कृतशब्दान् रचयामासुः । किन्तु स्थिताया एव नित्यायाः संस्कृतवाचोऽनुशासनमेव कृतवन्त इति भावः । अत एवेयं भाषा सर्वभाषामूलमित्यपि सूक्तं भवति । प्रपञ्चितश्चायमर्थो वाक्यपदीयादौ मत्प्रणीते "निरुक्तसारे" च ।

प्राकृतं लक्षयति—'तद्भव' इति । तस्मात् संस्कृतात् भव उत्पत्तिर्यस्य स तद्भवः प्राकृतक्रमः=अधमप्रकृतयः प्राकृताः तत्सम्बन्धित्वेन प्राकृतम् तस्य क्रमो व्यवस्था । वयन्तु संस्कृतरूपायाः प्रकृतेरुत्पन्नत्वात् प्राकृतमिति ब्रूमः । सर्वं प्राकृतं संस्कृतस्यैवापभ्रंशः । सच 'तत्समः' 'देशी' इति अनेकः=बहुविधः स्मृत इति शेषः। सङ्क्षेपेण तु द्विविधः—एकः तत्समः= संस्कृतसदृशः । द्वितीयः देशी=तत्तद्देशव्यवहृतः ।

यत्तु—'संस्कृतोत्पन्नत्वेन संस्कृतसदृशत्वेन तत्तद्देशव्यवहृतत्वेनानेको बहुविध' इत्याह

---

(प्र०) संस्कृतस्य किं लक्षणम् ? कतिविधश्च प्राकृतम् ? तल्लक्षणञ्च लिख ?
(उ०) अस्य पृष्ठस्य पं० १२

कश्चित् तन्मन्दम् । सर्वासां प्राकृतानां संस्कृतोत्पन्नत्वेन साम्ये सति उक्तरीत्या भेदत्रयकरणस्यायुक्तत्वतरत्वात्, वस्तुतस्त्वित्यादिस्वोक्तिविरोधाच्च ।

केचित्तु—'आर्षोत्थमार्षतुल्यञ्च द्विविधं प्राकृतं विदु'रिति भेदद्वयमाचक्षते ॥ ३३ ॥

[प्रकृष्टप्राकृतनिरूपणम्]

**महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।**
**सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥ ३४ ॥**

प्राकृतमेव प्रपञ्चयति 'महाराष्ट्राश्रयाम्' इति । महाराष्ट्रः दक्षिणापथवर्त्ती प्रसिद्धो देशः । स आश्रयो यस्याः सा तां महाराष्ट्राश्रयां भाषाम् प्रकृष्टम्=उत्तमं प्राकृतम् विदुः=जानन्ति सूरय इति शेषः । अत्र संस्कृतशब्दानामल्पस्यैव परिवर्त्तनसत्त्वात् संस्कृतप्रचुरत्वाच्च श्रोतॄणां श्रवणे महानादरोऽस्ति अतएव प्रकृष्टं तदिति भावः । अस्याः प्रकृष्टत्वे उपपत्तिं दर्शयति—'सागर' इति । सूक्तिरत्नानाम्=सूक्तयः रसभावाद्युपेतानि कविवचांसि ता एव रत्नानि तेषां सागरः=रत्नाकरः सेतुबन्धादि=सेतुबन्धाख्यो महाकाव्यम् तदादिर्यस्य तत् यन्मयम्=यदात्मकं यद्रचितमिति यावत् । यस्मान्महाकविभिरपि महाराष्ट्रभाषायां महान्तः सेतुबन्धप्रभृतयो ग्रन्था गुम्फिता अतो महाराष्ट्राणां भाषा उत्तमं प्राकृतमिति पिण्डितोऽर्थः ।

'साक्षात् संस्कृतोत्पन्नत्वेन संस्कृतवच्छ्रोतॄणां श्रुतिसुखजनकत्वात्' इति तु कुव्याख्यानम् साक्षादुत्पन्नत्वे प्रमाणाभावात् । आदिपदेन दशमुखवधादीनां महाराष्ट्रप्राकृतकाव्यानां ग्रहणमपि ज्ञेयम् ॥ ३४ ॥

[ प्राकृतनानात्वकथनम् ]

**शौरसेनी च गौडी च लाटी चान्या च तादृशी ।**
**याति प्राकृतमित्येवं व्यवहारेषु सन्निधिम् ॥ ३५ ॥**

अन्या अपि प्राकृतभाषा दर्शयति—'शौरसेनी' इति । शूरसेने भवा शौरसेनी । शूरसेनो नाम मथुरासमीपवर्त्ती देशः । एवं गौडी=गौडदेशभवा लाटी=लाटदेशीया अन्या=एतद्भिन्ना च तादृशी=तज्जातीया तत्तद्देशनाम्ना च प्रसिद्धा यथा—आवन्ती मागधी इत्यादि । 'प्राकृतम्' इत्येवमाद्या भाषा प्राकृतमिति नाम्ना व्यवहारेषु=नाटकादावधमपात्रादिप्रयोगेषु तद्देशीयलेखपाठादिक्रियासु वा सन्निधिम्=सामीप्यं याति=प्राप्नोति नानाविधं तत्प्राकृतं कविभिः काव्येषु विनिवेश्यते इति भावः॥ ३५ ॥

[ अपभ्रंशलक्षणम् ]

**आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः ।**
**शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम् ॥ ३६ ॥**

अपभ्रंशं दर्शयति—'आभीरादिगिर' इति । आभीरादिगिरः=गोपचाण्डालशकार-

---

१ भाषाणां स्वरूपविषये साम्प्रतिकैर्भाषावैज्ञानिकैर्बहु गवेषितम्, मयापि च यदनुसंहितं तदत्र ग्रन्थगौरवभयात्प्रकृतानुपयुक्तत्वाच्च नोक्तम् ।

(प्र०) प्राकृतेषु प्रकृष्टं प्राकृतं सोपपत्ति ब्रूहि ? (उ०) अस्य पृष्ठस्य पं० ५

(प्र०) अपभ्रंशं स्पष्टीकुरु ? (उ०) अस्य पृष्ठस्य पं० २८

प्रभृतीनां व्यवहारयोग्या वाचः [भाषाः] काव्येषु=नाटकादिषु कविभिरुपनिबध्यमाना अपभ्रंश इति नाम्ना स्मृताः=उक्ताः । आभीरो देशविशेषो गोपानाम् । अमरोप्याह— 'गोपे गोपालगोसंख्यगोधुगाभीरवल्लवा' इति । शास्त्रेषु=काव्यभिन्नेषु वेदादिषु तु संस्कृतात्=देवगिरः अन्यत् सर्वं प्राकृतादिकं अपभ्रंशतया=अपशब्दतया अपभ्रंशनामत्वेनेत्यर्थः, उदितम्=उक्तम् । 'ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह्वा यदेष अपशब्दः म्लेच्छा माभूमेत्यध्येयं व्याकरणम्' इत्येवमादिमहाभाष्यादावुक्तम् । तस्मात् संस्कृताद्भिन्नाः सर्वा वाचः अपभ्रंशसञ्ज्ञाः, यज्ञादिकर्मसु तासां निषेधादिति भावः ।

काव्येषु 'अपभ्रंश' शब्दः पारिभाषिकः । इदन्तु प्रासङ्गिकमुक्तम् ॥ ३६ ॥

[भाषाणां प्रयोगविषयः]

**संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादिकम् ।**
**आसारादीन्यपभ्रंशो नाटकादि तु मिश्रकम् ॥ ३७ ॥**

कुत्र कुत्र काः का भाषाः प्रयोक्तव्या इति तासां लक्ष्यमाह—'संस्कृतम्' इति । सर्गबन्धादि=[यदुक्तं महाकाव्यं तत्] संस्कृतम्=संस्कृतभाषारचितमेव कार्यम् । नान्यभाषानिवेशस्तत्र कर्त्तव्य इत्यभिप्रायः । उक्तञ्चाग्निपुराणे—

सर्गबन्धो महाकाव्यमारब्धं संस्कृतेन यत् ।
तद्भवं न विशेत्तत्र तन्मयं नापि किञ्चन ॥ इति ॥

आदिपदेन देवस्तुत्यादिखण्डकाव्यस्यापि ग्रहणम् तदपि संस्कृतेनैव कार्यम् । स्कन्धकादिकं प्राकृतम्=स्कन्धकं छन्दोविशेषः तदादिर्यत्र तत् 'प्राकृतम्' प्राकृतभाषयैव रचितं भवति । यथा-सेतुबन्धादिः । आदिना गलितकादीनां परिग्रहः । इदञ्च सट्टकस्यापि उपरूपकभेदस्योपलक्षकम्, तदपि प्राकृतमयमेव भवति । आसारादीनि=आसारादिच्छन्दोविशेषनिबद्धानि 'अपभ्रंश' इति संज्ञया व्यवह्रियन्ते, अर्थात् 'अपभ्रंश' नामककाव्ये आसारादीनामेव छन्दसां निवेशः कर्त्तव्यः यथा-वर्णपराक्रमादि । नाटकादि=नाटकमादि यस्य तत् 'मिश्रकम्' नानाभाषामयत्वात् मिश्रकसंज्ञं विज्ञेयम् । 'तु' रेवार्थे नाटकाद्येवेत्यर्थः । अर्थात् सट्टकं विहाय नाटकनाटिकाप्रकरणादिषु रूपकभेदेषु सर्वत्र यथापात्रमनेका भाषा आश्रयितव्या भवन्ति । यथा वेणीसंहारादयः ।

[कथाबृहत्कथयोर्भाषाभेदनिरूपणम्]

**कथा हि सर्वभाषाभिः संस्कृतेन च बध्यते ।**
**भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ॥ ३८ ॥**

'मिश्र' काव्यस्य लक्ष्यान्तरमाह—'कथा' इति । कथा=कथानामकं गद्यं पूर्वोक्तलक्षणं सर्वभाषाभिः=सर्वाभिर्भाषाभिः शौरसेन्यादिभिः संस्कृतेन च=देववाण्या च बध्यते=रच्यते । अतः सापि मिश्रं काव्यमित्यर्थः । 'हि' निश्चयार्थे । तथा च द्विविधा कथा-सर्वभाषामयी संस्कृतमयी चेत्यर्थः । कथाप्रसङ्गेन बृहत्कथानामकं काव्यं लक्षयति-भूतेति । भूतभाषामयीम्=भूतभाषा पैशाची भाषा तन्मयीं पैशाच्या भाषया रचितामित्यर्थः । अद्भुतार्थाम्=अद्भुतः अद्भुताख्यो

(प्र०) कुत्र २ काः २ भाषाः प्रयोक्तव्या इति विवृणु ? । (उ०) अस्य पृष्ठस्य पं० १०
(प्र०) मिश्रकाव्यस्योदाहरणान्तरं दर्शय ? । (उ०) अस्य पृष्ठस्य पं० २६

रसरूपोऽर्थो यस्यां ताम् अद्भुतरसभरिताम् बृहत्कथाम्=बृहत्कथानामकं काव्यम् आहुः=वदन्ति पण्डिता इति शेषः। यथा बृहत्कथासरित्सागरः। कथासरित्सागरस्तु संस्कृतेऽस्यैवानुवादः॥ ३८॥

[ दृश्यश्रव्यकाव्ययोर्निरूपणम् ]

**लास्यच्छलितशल्यादि प्रेक्ष्यार्थमितरत्पुनः ।**
**श्रव्यमेवेति सैषापि द्वयी गतिरुदाहृता ॥ ३९ ॥**

प्रकारान्तरेणापि काव्यस्य भेदद्वयं वक्ति—'लास्ये'ति । लास्यच्छलितशल्यादि प्रेक्ष्यार्थम्=दृश्यकाव्यमित्यन्वितार्थः । प्रेक्ष्यः=सहृदयैर्दृश्योऽर्थो रामाद्यभिनेयरूपो यत्र तत् प्रेक्ष्यार्थम् । शृङ्गाररसप्रधानं स्त्रीकृतं नृत्यं **लास्यम्**, पुन्नृत्यं **छलितम्**, ललाटे हस्तं दत्वा क्रियमाणं नृत्यं **शल्या** । आदिपदेन ताण्डवहल्लीशरासानां ग्रहः । इतरत् पुनः= प्रेक्ष्यार्थात् दृश्यात् भिन्नं यत्काव्यं मुक्तकादि तत् श्रव्यमेव=श्रोतुं योग्यं श्रव्यम् श्रुति-विषयत्वात् तद् अभिनेयं न भवतीत्यर्थः ।

उक्तञ्च सरस्वतीकण्ठाभरणे—

श्रव्यं तत्काव्यमाहुर्यन्नेक्ष्यते नाभिनीयते ।
श्रोत्रयोरेव सुखदं भवेत्तदपि षड्विधम् ॥ इति ।

इदमुक्तं भवति—नाटकादि तु श्रुतिविषयः सन्नपि दर्शनविषयत्वात् दृश्यमेव । मुक्तकादि तु केवलं श्रुतिविषय इत्यतो नानयोर्लक्षणसङ्करः । इति=उक्ताकारा प्रसिद्धा, द्वयी गतिः उदाहृता=द्विविधः काव्यमार्ग उक्त इत्यर्थः ॥ ३९ ॥[1]

[ अथ वैदर्भीगौड्योः स्फुटो विवेकः ]

**अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।**
**तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥ ४० ॥**

काव्यं सप्रभेदं प्रपञ्च्य गुणालङ्कारेषु निरूपयितव्येषु सौकर्याय तावत् रीतिं प्रदर्श-

१ लास्यादीनां लक्षणं ग्रन्थान्तरेषूक्तम् । तद्यथा—

लासः स्त्रीपुंसयोर्भावस्तदर्हं तत्र साधु वा ।
लास्यं मनसिजोल्लासकरं मृदङ्गहाववत् ॥
देव्यै देवोपदिष्टत्वात्प्रायः स्त्रीभिः प्रयुज्यते ॥ इति ॥

किञ्च—

कोमलं मधुरं लास्यं शृङ्गाररससंयुतम् ।
गौरीतोषकरञ्चापि स्त्रीनृत्यन्तु तदुच्यते ॥
मण्डलेन तु यत् स्त्रीणां नृत्यं हल्लीशकं विदुः ।
तत्र नेता भवेदेको गोपस्त्रीणां यथा हरिः ॥
उद्धतन्तु महेशस्य शासनात् तण्डुनोदितम् ।
भरताय ततः ख्यातं लोके ताण्डवसञ्ज्ञया ॥ इत्यादि ॥

(प्र०) लास्यादिकाव्यभेदं स्पष्टीकुरु ? (उ०) अस्य पृष्ठस्य पं० ४
(प्र०) रीतेर्मुख्यौ भेदौ कौ स्तः ? इतरे भेदा दण्डिना कुतो नाश्रिताः ?
(उ०) अस्य पृष्ठस्य पं० २०

यति 'अस्त्यनेक' इति । गिराम्=काव्यवाचां परस्परम्=अन्योन्यम् सूक्ष्मभेदः=परिपक्वबुद्धि-गम्यः स्वल्पो विशेषः अनेकः=नानाविधः [ प्राचीनैरुक्तः ] मार्गः=पदविन्यासप्रकारः रचना-प्रणाली 'रीति' सञ्ज्ञक इति यावत् अस्ति=कविभिराश्रित इत्यर्थः । तत्र=अनेकविधे मार्गे अर्थात् तेषु मार्गेषु मध्ये वैदर्भगौडीयौ=वैदर्भी गौडी च एते द्वे रीती प्रस्फुटान्तरौ प्रकर्षेण स्फुटं स्पष्टमन्तरं भेदो [विशेषो] ययोस्तौ [मार्गौ] वर्ण्येते=निरूप्येते 'मया' इति शेषः ।

अयं भावः—वामनेन तावत् ' रीतिरात्मा काव्यस्य ' [काव्या० २।६]· इत्युपक्रम्य 'विशिष्टा पदरचना रीतिः' [ २।७ ] इति च तां लक्षयित्वा 'साच त्रेधा वैदर्भी गौडीया पाञ्चाली चेति [ २।८ ] इति त्रिविधो गिरां मार्गः रीतिनामा प्रदर्शितः ।

सरस्वतीकण्ठाभरणादिषु भोजराप्रभृतिभिस्तु—

वैदर्भी चाथ पाञ्चाली गौडीयाऽवन्तिका तथा ।
लाटीया मागधी चेति षोढा रीतिर्निगद्यते ॥ इति

षड् मार्गाः निरूपिताः ।

विश्वनाथश्च—साहित्यदर्पणे नवमे परिच्छेदे 'पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत्' इत्युक्त्वा 'वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा' इति चतुरो मार्गानवर्णयत् । एषु [ एवंविधेषु ] सर्वेष्वेव पक्षेषु ग्रन्थकारस्यास्वरसः । तत्र बीजन्तु एतेषामन्योन्यं सूक्ष्ममल्प-मन्तरं सुकुमारमतिभिर्बालैर्ज्ञातुमशक्यमनुपयुक्तश्चेति द्वावेव मार्गौ वैदर्भीगौडीयौ स्फुटभेदौ निरूपणायोग्याविति तावेवात्र दर्श्येते ।

तथाहि—पाञ्चालीमार्गः वैदर्भीगौड्योर्मध्यवर्त्ती उभयस्वरूप एव । लाटीमार्गस्तु वैदर्भीपाञ्चाल्योरन्तरालवर्त्ती । एवमन्यदपि । ततश्च किञ्चित् किञ्चित् भेददर्शनस्य बालबुद्धि-व्यामोहकरत्वान्न फलं पश्याम इति दण्डिनोऽभिप्रायः ॥ ४० ॥[1]

**श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।**
**अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः ॥ ४१ ॥**
**इति वैदर्भमार्गस्य प्राणाः दश गुणाः स्मृताः ।**
**एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि ॥ ४२ ॥**

सम्प्रति प्रतिज्ञातयोर्वैदर्भीगौडीयमार्गयोः क्रमेण स्वरूपमाह—'श्लेष' इति । 'श्लेष' इत्यारभ्य 'समाधि' पर्यन्ता मूलोक्ता गुणाः=शब्दार्थयोरुत्कर्षाधायका धर्मा गुणशब्दवाच्या

---

१ एतद्विषयकः प्रपञ्च आग्नेयपुराणेऽपि द्रष्टव्यः ।

भोजराज इत्थमप्याह—

वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ।
**रीङ्** गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते ॥ इति ॥

रियन्ते परम्परया गच्छन्ति अनयेति करणसाधनोऽयं रीतिशब्दो मार्गपर्यायः । **'गुणवत्पदरचना रीति'**रिति स्फुटं रीतिलक्षणम् ।

(प्र०) कति गुणाः ? कानि च तेषां नामानि ? वैदर्भीगौड्योर्लक्षणं लिख ? ।

(उ०) अस्य पृ० पं० २१

वैदर्भमार्गस्य=वेदर्भी इत्याख्याया रीतिः वैदर्भरीतिमत्काव्यस्येत्यर्थः, प्राणाः=प्राणवज्जीवनभूता स्मृताः=कथिताः अलङ्कारशास्त्राचार्यैरिति शेषः । एवञ्च 'श्लेषादिगुणोपेता पदरचना **वैदर्भी**' इति वैदर्भीलक्षणमुक्तं भवति । तथा च वामनः—'समग्रगुणोपेता वैदर्भी' [ काव्या० २ । सू० ११ ] इत्याह । उक्तञ्च वृद्धैः—

अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता ।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥ इति ॥

गौडीं लक्षयति—'एषा'मिति । एषाम्=श्लेषादिदशगुणानां गौडवर्त्मनि=गौडीये मार्गे गौडीनाम्न्यां रीत्यामिति यावत् प्रायः=बाहुल्येन विपर्ययः=वैपरीत्यं दृश्यते=लक्ष्यते । एतेन 'वैदर्भीविपरीतधर्मवती पदरचना **गौडी**' इति गौडीलक्षणं निष्पन्नम् । 'प्राय' इति कथनेन क्वचित्सर्वथैव विपर्ययः क्वचित् केनाप्यंशेन इति सूचितम् । आह च वामनः–'ओजःकान्तिमती गौडीया' [ काव्या० २ । सू० १३ ] इति । अत्रैव वृत्तावुक्तम्—

समस्ताऽत्युद्भटपदामोजःकान्तिगुणान्विताम् ।
गौडीयामपि गायन्ति रीतिं रीतिविचक्षणाः ॥ इति ॥[२]

---

१ दोषमात्राभिः असाधुत्वादिदोषलेशैरपि अस्पृष्टा असम्बद्धा । विपञ्ची वीणा । 'वीणा तु वल्लकी विपञ्ची' इत्यमरः । तस्याः स्वराः षड्जादयः । तेषां सौभाग्यं यस्या इति विग्रहः । शिष्टं स्पष्टम् ।

२ वैदर्भ्या उदाहरणं यथा—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धं क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥

इदञ्च पद्यं कालिदासस्य शकुन्तलानाटके। 'वैदर्भीरीतिसन्दर्भे कालिदासः प्रगल्भते' इति च कथयन्ति । अत्र प्रायः सर्वेऽपि गुणाः । तथाहि—'छायाबद्धकदम्बकम्' 'शिथिल-ज्याबन्धम्' इत्यत्र बन्धस्य गाढत्वात् **ओजः** । 'मृगकुलम्' इति बन्धशैथिल्ये **प्रसादः** । 'महिषा निपानसलिलम्' इत्यत्र मसृणत्वात् **श्लेषः** । 'गाहन्ताम्' इत्यारभ्य समानेन मार्गेण उपक्रमोपसंहारकरणेन मार्गाभेदरूपा **समता** । 'गाहन्ताम्' इत्यारोहः 'महिषाः' इत्यवरोह इति **समाधिः** । 'शृङ्गैर्मुहुस्ताडितम्' इति पृथक्पदत्वात् **माधुर्यम्** । 'रोमन्थमभ्यस्यतु' इति बन्धस्याजरठत्वात् **सौकुमार्यम्** । 'शिथिलज्याबन्धमस्मद्धनुः' इत्यत्र बन्धस्य विकट-त्वाद् **उदारता** । एवं पदानामुज्ज्वलत्वात् **कान्तिः** । अर्थाभिव्यक्तिहेतुत्वात् **अर्थव्यक्तिः** । एवमनया रीत्या सर्वत्र वैदर्भी रीतिरूहनीया । गौड्या उदाहरणं यथा—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसम्पुटमितब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥ इति ।

[ श्लेषस्य लक्षणोदाहरणे ]

**श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम् ।**
**शिथिलं मालतीमाला लोलालिकलिला यथा ॥ ४३ ॥**

श्लेषादीनां क्रमेण सलक्ष्यं लक्षणमाह—'श्लिष्टम्' इति । अल्पप्राणाक्षरोत्तरम्=अल्पः प्राणः उच्चारणप्रयत्नो येषां तानि अल्पप्राणानि, तानि च अक्षराणि अल्पप्राणाक्षराणि, एतानि उत्तराणि प्रधानानि अधिकानि यत्र तत् तादृशम् । अल्पप्राणाश्च स्वराः वर्गाणां विषमा वर्णाः यरलवाश्चेति ज्ञेयम् । शिथिलम्=अनुत्कटमपि अस्पृष्टशैथिल्यम्=न स्पृष्टं प्रकाशितं शैथिल्यं यस्य तत् अर्थात् शिथिलस्यापि यस्य रचनाविशेषेण शैथिल्यं न लक्ष्यते तादृशं काव्यात्मकं वाक्यं श्लिष्टम्=श्लेषगुणोपेतं भवतीति शेषः । एवञ्च—अल्पप्राणादिवर्णघटितरचनाविशेषवत्त्वं **'श्लेषत्व'** मिति श्लेषगुणलक्षणमायातं भवति । उदाहरति 'मालतीमाला' इति । लोलालिकलिला=लोलैः इतस्ततः समापतद्भिः चञ्चलैरिति यावत् अलिभिः षट्पदैः कलिला आकुला व्याप्तेत्यर्थः, एवम्भूता मालतीमाला=मालत्याः जातेः चम्पाया इति यावत् माला दाम 'वर्त्तते' इति शेषः । 'सुमना मालती जाति' रित्यमरः ।

अत्र मकाराद्या वर्णा अल्पप्राणाः । एतैर्घटितत्वात् वाक्यं [ काव्यं ] कोमलमप्यनुप्रासमहिम्ना किञ्चिद् गाढमिवाभाति । अत एवायं श्लेषो गुणः । मकारलकारयोरसकृदावर्त्तनाद् वृत्त्यनुप्रासश्च । स्वभावस्पष्टं विचारगहनं वचः 'श्लिष्ट'मिति **भरतः** ।

वाग्भटोप्याह—'श्लेषो यत्र पदानि स्युः स्यूतानीव परस्परम्' इति । पृथग्भूतान्यपि पदानि यत्र स्यूतानीव एकश्रेणीप्रोतानीव समस्तानीव परस्परं भवन्ति स 'श्लेषगुणः' । उदाहृतञ्च तेनैव यथा—

मुदा यस्योद्गीतं सह सहचरीभिर्वनचरै-
र्मुहुः श्रुत्वा हेलोद्धृतधरणिभारं भुजबलम् ।
दरोद्गच्छद्दर्भाङ्कुरनिकरदम्भात्पुलकिता-
श्चमत्कारोद्रेकं कुलशिखरिणस्तेपि दधिरे ॥

अत्रापि ककाररकारादिभिरल्पप्राणैर्वर्णैर्घटितत्वाद्वाक्यस्यानुप्रासमहिम्ना शिथिलोऽपि बन्धो गाढ इवाभाति । मुदेत्यादीनि पृथग्भूतान्यपि पदान्येकश्रेणीप्रोतानीवाभान्तीति श्लेषो गुणः।

इदन्तु बोध्यम्—द्विविधोऽयं श्लेषः । शब्दश्लेषोऽर्थश्लेषश्च । तत्र बहूनां पदानामे—

---

रामेण खण्डपरशोर्धनुषि आकृष्टे तद्भङ्गध्वनिविषये लक्ष्मणस्योक्तिरियम् । अत्र बन्धस्य गाढत्वौज्ज्वल्ययोरुत्कटत्वादुल्बणावोजःकान्तिगुणौ समासभूयस्त्वञ्चेति गौडीया रीतिः।

१ तेपि कुलशिखरिणः=कुलाचलाः यस्य राज्ञो भुजबलं=बाहोः सामर्थ्यं सहचरीभिः=पत्नीभिः सह=सार्धम् वनचरैः=भिल्लैः मुहुः=वारंवारं मुदा=हर्षेण उद्गीतम्=व्याख्यातं श्रुत्वा=आकर्ण्य चमत्कारोद्रेकम्=आश्चर्यपूरम् दधिरे=धृतवन्तः । कथंभूताः पर्वताः दरोद्गच्छद्दर्भाङ्कुरनिकरदम्भात्=ईषदुत्पद्यमानकुशाङ्कुरसमूहमिषात् । पुलकिताः=रोमाञ्चिताः इत्यर्थः ।

(प्र०) श्लेषगुणस्य किं लक्षणम्? किमुदाहरणम्? कतिविधश्च सः? सोयं वैदर्भमार्गानुसारमुदाहर्त्तव्यः? (उ०) अस्य पृ० २

कवद्भासनमाद्यः। यथा मूले, टीकायाञ्च [मया] दर्शितम्। असम्भावितस्यार्थस्य युक्तिभिः सिद्धत्वेन कथनं द्वितीयः। द्विविधस्यापि उदाहरणमाह जयदेवः—

उल्लसत्तनुतां नीतेऽनन्ते पुलककण्टकैः।
भीतया मानवत्यैव श्रियाश्लिष्टं हरिं स्तुमः॥ इति॥

अत्र लक्ष्म्याः समुन्नतरोमसम्बद्धतादृशशेषवपुःकृशताजन्यभयमघटितार्थघटितमिति अर्थश्लेषः। 'नीतेऽनन्ते श्रियाश्लिष्टम्' इत्येकपदवद्भानाद् वर्णानां साजात्यात्स्फुटः शब्दश्लेषः॥ ४३॥

**अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात्।**
**वैदर्भैर्मालतीदाम लङ्घितं भ्रमरैरिति॥ ४४॥**

अस्मिन् श्लेषाख्ये गुणे गौडानामनादर इत्याह 'अनुप्रासधिया' इति। अनुप्रासो वर्णावृत्तिरूपः शब्दालङ्कारः तस्य धीः बुद्धिः तद्विषयकं ज्ञानमित्यर्थः तया बन्धगौरवात्= बन्धस्य रचनाया गौरवं गाढत्वं तस्मात् रचनागाढत्वज्ञानाद्धेतोरित्यर्थः। गौडैः=गौडदेशभवैः कविभिरपि तत्=तादृशं 'मालतीमाला' इत्यादि श्लेषगुणोपेतं काव्यम्, अर्थात् श्लेषस्योदाहरणम् इष्टम्=वाञ्छितम्। अनुप्रासप्रिया गौडा कवय इति भावः।

ननु—एवं वैदर्भीगौडीरीत्योरभेदः प्राप्त इत्याशङ्कायामाह—'वैदर्भै'रिति। अत्र 'इति' इत्ययं शब्दः अप्यर्थः। ततश्चायमर्थः—वैदर्भैः=विदर्भदेशभवैः कविभिरपि 'मालती दाम लङ्घितं भ्रमरैः' इति वाक्यम् [काव्यम्] इष्टं श्लेषगुणघटितत्वेन स्वीकृतमित्यर्थः।

अयं भावः—गौडा अनुप्रासस्थल एव श्लेषं मानयन्ति, वैदर्भास्तु क्वचित् अनुप्रासशून्यस्थलेऽपि श्लेषं स्वीकुर्वते तथा च न वैदर्भीगौडीरीत्योरभेदः। अत्र त्रयो मकाराः, द्वौ च तकारौ स्तः। तेषामावृत्तावपि व्यवधानस्थितत्वात् चमत्काराभावाच्चानुप्रासः तथापि श्लेषो गुणो वर्तते इति वैदर्भमतमित्याशयः। 'अशिथिलं वचः श्लिष्ट' मिति दण्ड्यनुयायिनां पन्थाः।

अयञ्च श्लेषो गुणः शब्दगतः। केचित्तु अन्यथापि लक्षयन्ति—

यत्रैकपदवद्भावः पदानां भूयसामपि।
अनालक्षितसन्धानां स श्लेषः परमो गुणः॥ इति।

उदाहरन्ति च यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः' इत्यादि। वामनोऽप्याह—'मसृणत्वं श्लेषः' [काव्याल० ३।१।१०] इति। 'यत्र हि व्यासेऽपि समासवदवभासः स श्लेष' इति तु निष्कर्षः। एवमाद्यनुप्रासाभावस्थलेऽपि वैदर्भाणां

---

१ पुलककण्टकैः=लक्ष्म्या रोमाङ्कुरैः उल्लसन्ती आविर्भूता या तनुता कृशता तां नीते प्रापिते शेषे सति अत एव भीतया त्रस्तया मानवत्यैव एवकारेणान्यावस्थाव्यावृत्तिः कथिता। एवम्भूतया श्रिया लक्ष्म्या आश्लिष्टम् आलिङ्गितं हरिम्=विष्णुं स्तुमः कीर्तयाम इत्यर्थः।

२ भ्रमरैः=अलिभिः मालतीदाम=सुमनोमाला लङ्घितम्=आक्रान्तमिति अन्वितार्थः।

(प्र०) श्लेषे गुणे गौडानामादरोऽस्ति न वा? वैदर्भीगौडीरीत्योर्भेदे बीजं स्पष्टीकुरु? कथञ्चोभयो रीत्योरभेदः शक्यशङ्कः? अनुप्रासाभावस्थलेऽपि श्लेषो गुणो भवति न वा? भवति चेत्कस्य मते? (उ०) अस्य पृ० पं० ८

श्लेषस्वीकार इत्युक्तं न विस्मरणीयम् । केचित्तु—क्रमकौटिल्यानुल्वणोपपत्तियोगरूपघटनात्मा श्लेषः [ अर्थश्लेषः ] इत्याहुः । उदाहरन्ति च—

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

अत्र दर्शनादयः क्रियाः । उभयसमर्थनरूपं कौटिल्यम् । लोकसंव्यवहाररूपमनुल्वणत्वम् । 'एकासनसंस्थिते' 'पश्चादुपेत्य' इत्यादि चोपपादकम् इत्येषां योगः । विचार्यमाणे तु अस्मदुक्तार्थश्लेषलक्षणान्न बह्वन्तरमाभाति । आह च वामनः—'घटना श्लेषः' इति । एतच्चाधुनिकैर्विश्वनाथप्रभृतिभिर्निराकृतः । शिष्यबुद्धिवैशद्यार्थमस्माकं क्वचित् पुनरुक्तमपि दोषो न मन्तव्यः ॥ ४४ ॥

[ प्रसादस्य लक्ष्यलक्षणे ]

**प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युति ।**
**लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः ॥ ४५ ॥**

प्रसादं [ लक्ष्यलक्षणाभ्यां ] निरूपयति—'प्रसादवत्' इति । प्रसिद्धार्थम्=प्रसिद्धः ख्यातः अर्थः प्रतिपाद्यं वस्तु यस्य तत्, प्रसिद्धार्थप्रतिपादकमित्यर्थः । उभयार्थका ये शब्दाः तेषामप्रसिद्धेऽर्थे प्रयोगो निहितार्थताख्यो दोषः तादृशदोषरहितम् । तथा प्रतीतिसुभगम्=प्रतीतौ अर्थावबोधे सुभगं सुन्दरं शीघ्रमेवार्थोपस्थापकं [ यत् ] वचः वाक्यं [ तत् ] प्रसादवत्= प्रसादगुणयुक्तं 'भवति' इति शेषः । इत्थञ्च 'निहितार्थदोषाभाववत्त्वे सति प्रकटार्थवत्त्वं [झटित्यर्थोपस्थितिः ] प्रसाद' इति लक्षणम् । अस्योदाहरणमाह—'इन्दोः' इति । इन्दीवरद्युति= इन्दीवरस्य द्युतिरिव द्युतिर्यस्य तत् श्यामलमित्यर्थः । लक्ष्म=कलङ्कः 'कलङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । इन्दोः=शशिनः लक्ष्मीम्=शोभां तनोति=विस्तारयति विकाशयतीति यावत् । अत्र इन्द्विन्दीवराद्याः शब्दाः प्रसिद्धेषु चन्द्रादिष्वर्थेषु प्रयुक्ताः [ झटिति ] श्रवणमात्रेणैव अर्थबोधं जनयन्तीत्ययमेव 'प्रसादः' इति । अयमेव च बन्धस्य 'शैथिल्यं प्रसादः' [ काव्या० अध्या० ३ । सू० ६ ] इति वामनेनोक्तः । अत्र 'प्रसिद्धार्थपदेन निहतार्थदोषाभाव उक्तः । उभयार्थकशब्दस्याप्रसिद्धेऽर्थे प्रयोगो **निहितार्थ** इत्युक्तम् । 'प्रतीतिसुभग' मितिपदेन अधिकपदत्वकष्टत्वादिदोषाणामभावः कथितः, तदाहि झटित्यर्थस्योपस्थितिर्न स्यात् । झटित्यर्थोपस्थितिरेव च प्रसादः । तदुक्तं वाग्भटालङ्कारे—

झटित्यर्थार्पकत्वं यत् प्रसत्तिः सोच्यते बुधैः ।
कल्पद्रुम इवाभाति वाञ्छितार्थप्रदो जिनः ॥ इति ॥

अत्र कल्पद्रुमादिपदानामुच्चारणमात्रेणैवार्थार्पकत्वात् प्रसत्तिः [प्रसादः] । उदाहरणं यथा वा मम— कृष्णे शिशौ जगद्गर्भे शयाने कोमलात्मनि ।
मक्षिकापादघातेन कम्पितं भुवनत्रयम् ॥ इति ॥

(प्र०) लक्ष्यलक्षणाभ्यां प्रसादगुणं प्रपञ्चय ? (उ०) अस्य पृ० पं० १३

अत्र कृष्णादीनि पदानि उच्चारणमात्रेणैवार्थार्पकाणीति प्रसादः । चन्द्रालोके जयदेवोऽपीत्थमाह—

यस्मादन्तः स्थितः सर्वः स्वयमर्थोऽवभासते ।
सलिलस्येव सूक्तस्य स 'प्रसाद' इति स्मृतः ॥ इति ॥

इदञ्च लक्ष्यलक्षणम् । अनयैव रीत्या सर्वत्रोह्यम् ॥ ४५ ॥

**व्युत्पन्नमिति गौडीयैर्नातिरूढमपीष्यते ।**
**यथाऽनत्यर्जुनाब्जन्मसदृक्षाङ्को वलक्षगुः ॥ ४६ ॥**

प्रसादगुणे गौडानां मतभेदं दर्शयति—'व्युत्पन्नम्' इति । गौडीयैः=गौडीरीतिप्रधानैः कविभिः नातिरूढमपि=नातिप्रसिद्धमपि अर्थात् निहितार्थतादिदोषदुष्टमपि व्युत्पन्नमिति=व्युत्पत्तिर्योगार्थः तद्युक्तं व्युत्पन्नं योगार्थघटितमपि बन्धस्य गौरवप्रतीतिप्रतिभासकतया वैचित्र्यवत् इति कृत्वा इष्यते=मन्यते 'प्रसादवद् वाक्य' मिति शेषः ।

अयमाशयः—यदि काव्यं शिथिलबन्धं भवेत् तदा तत्र निहितार्थत्वादिदोषसत्त्वे नैव प्रसादः । उक्तदोषाभावे सति शिथिलबन्धे प्रसादो गुणो भवतु नाम । यदि तु बन्धस्य समासादिवशात् गाढता स्यात् तदा निहितार्थत्वादिदोषाणां सद्भावेऽपि तत्काव्यं वैचित्र्यमावहत्येवेति गौडानां कवीनां मतम् । एतद्विपरीतन्तु वैदर्भाणाम् ।

परमसारस्तु—शिथिलबन्धे निहितार्थाद्याः दोषा भवितुमर्हन्ति, गाढबन्धे तु सन्तोऽपि ते काव्यं दुष्टं कर्तुं न समर्था इत्यनित्यदोषास्ते इति गौडं मतम् । तदेतदुदाहरणेन स्पष्टीकरोति 'यथा' इति । अनत्यर्जुनाब्जन्मसदृक्षाङ्कः=न अत्यर्जुनमिति अनत्यर्जुनं नातिश्वेतं किञ्चिन्नीलमित्यर्थः, एवम्भूतं यत् अब्जन्म=नीलकमलमिन्दीवरं तस्य सदृक्षः समः अङ्कः कलङ्को यस्य स तादृशः वलक्षगुः=वलक्षा धवलाः गावः किरणा यस्य स चन्द्र इत्यर्थः । 'अस्ति' इति शेषः ।

अत्र 'अर्जुन' शब्दः पाण्डवे कार्त्तवीर्ये च [सहस्रबाहौ] प्रसिद्धः, शुक्ले वर्णे तु यद्यपि वाचकः तथापि अप्रसिद्धः [एव], उभयार्थोपि अर्जुनशब्दोऽप्रसिद्धार्थे प्रयुक्तत्वात् निहितार्थदोषयुक्तः । 'अब्जन्म' इति शब्दोपि न केनचित् कविना इन्दीवरे कमले प्रयुक्तः, केवलम् 'अद्भ्यो जन्म यस्य' इति योगं मत्वैवात्र विन्यस्तः, एवमयं शब्दः 'अप्रयुक्त' दोषदुष्टः । किञ्च—अनत्यर्जुनाब्जन्म इव अङ्को यस्य इत्युपमागर्भितबहुव्रीहिसमासकरणेनापि तादृशार्थप्रतीतौ 'सदृक्ष' पदमधिकं [वृथैव] वर्त्तते, तस्मादत्र 'अधिकपदत्व' मपि दोषः । 'अनत्यर्जुनाब्जन्म' इति श्रुतिकटुश्चायं शब्दः । एवं 'वलक्ष' शब्दोऽपि अप्रयुक्तः श्रुतिकटुश्च । 'गो' शब्दो यद्यपि

---

१ काव्यप्रकाशकारमते काव्यसामान्यलक्षणे 'अदोषा' विति पदं सर्वथा सुसङ्गतमिति पण्डितरूपा सूक्ष्मयेक्षिकयाऽऽकलयन्तु । प्रपञ्चस्तु मया तत्प्रभायां कृतः ।

(प्र०) प्रसादगुणे गौडानां कीदृशं मतं कश्चास्मिन्नंशे वैदर्भीसकाशाद् गौड्या रीतेर्विशेष इत्युदाहरणादिविन्यासपूर्वकं स्पष्टीकुरु ? (उ०) अस्य पृ० पं० ६

वृषभादो प्रसिद्धः; किरणे पठितोऽप्यप्रसिद्ध इति निहितार्थः । एवं दोषप्रचुरमपि वाक्यमिदं [काव्यम्] गाढबन्धप्रभावाद् विच्छित्तिविशेषतामावहतीति काव्यत्वेन स्वीकुर्वन्ति **गौडाः** ।

इत्थमत्र गौड्यां रीतौ लक्षितप्रसादगुणाभावात् वैदर्भीरीतेर्भेदो दर्शितः । गौडानां मते बन्धगाढत्वे सत्यपि यदि वैचित्रीविशेषोऽनुभवसिद्धस्तदापि प्रसाद एवेति भावः ।

'**अर्जुनः** ककुभे पार्थे कार्त्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्यात् धवले पुनरन्यवत् ॥ नपुंसकं तृणे नेत्ररोगे स्यादर्जुनी गवि । उषायां बाहुदानद्यां कुट्टिन्यामपि च क्वचित्' ॥ इति मेदिनी । 'अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः' इत्यमरः । '**गौः** स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणादिग्वाग्भूष्वप्सु भूम्नि च' । इति मेदिनी ।

यत्तु मालिन्यप्रोञ्छनीकारः 'वस्तुतस्तु वैदर्भपक्षपातितया ग्रन्थकृतैवमुक्तम्, गौडानामपि दोषाणामनङ्गीकारादिति ध्येयम्' इत्याह तत्तुच्छं निष्प्रमाणकत्वात्, गौडानामेतादृशस्थले दोषसद्भावाङ्गीकारस्य सम्प्रदायसिद्धत्वात् सन्तोऽपि ते न दूषयन्ति काव्यमिति दोषाभासरूपत्वात्तेषाम्, नहि रुद्धः शत्रुः शत्रुर्नेति कृतं ग्रन्थविस्तरेण ।

अयं [ गौडाभिमतः ] प्रसादो गुणः अर्थवैमल्यात्मा गाढबन्धाविनाभावी अर्थगुण एव । शब्दगुणस्तु प्रसादः ओजोमिश्रितशैथिल्यात्मा अन्यः । उक्तञ्च वामनेन—**'शैथिल्यं प्रसादः'** [ का० सू० १ अधि० ३ । अ० ६ ] बन्धस्य शैथिल्यं शिथिलत्वं प्रसाद इत्यर्थः । ननु—ओजोविपर्ययात्मा प्रसादो दोष एव तत् कथं गुण इत्यत आह—**'गुणः संप्लवात्'** [ १।७ ] संप्लवो नाम मेलनम् । यदि ओजसा गुणेन सह शिथिलबन्धस्वरूपस्य प्रसादस्य मेलनं भवति तदाऽसौ गुण एव । 'ओजोमिश्रितः प्रसादो गुणः तदमिश्रितस्तु दोष' इति वामनहृदयम् । एतदभिप्रायेणैव दर्पणकारः प्रसादमित्थमुदाजहार—

यो[२] यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात्पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।

---

१ इदन्तु मया ग्रन्थानुरोधेन व्याख्यातम् वस्तुतस्तु गवादिशब्दा बहुषु स्थलेषु महाकविभिः किरणाद्यर्थेऽपि प्रयुक्ताः, तस्मादेतेषामप्रसिद्धार्थाभिधानमयुक्तमेवाभाति । ग्रन्थगौरवभयाद् बहु लिखितुं योग्यत्वेऽपि दिङ्मात्रमुदाहरामः । तथाहि—

विवस्वतानायिषतेव गावः स्वगोसहस्रेण समं जनानाम् ।
गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥

इत्यादौ किरणार्थेऽपि गोशब्दो महाकविना माघेन प्रयुक्त इति कथमस्याप्रसिद्धत्वं नाम । एवमाद्यन्यदप्यूह्यम् ।

२ पाण्डवानामिमा इति पाण्डव्यः तासां चमूनां सेनानां मध्ये यो यो जनः स्वभुजगुरुमदात् निजनिजबाहुबलस्यात्यन्तदर्पात् शस्त्रं बिभर्त्ति, पाञ्चालगोत्रे द्रुपदराजकुले यो यो जनः शिशुर्बालकः अधिकवयाः युवादिः गर्भशय्यां मातुर्गर्भदेशं गतो वा तिष्ठति, यो यो जनः तस्य कर्मणो मत्पितृबधरूपमहापातककार्यस्य साक्षी द्रष्टा, तथा मयि अश्वत्थाम्नि रणे चरति सति यश्च यश्च जनः प्रतीपः प्रतिकूलो भवेत्, क्रोधान्धः कोपविह्वलोऽहम्, इह रणे स्वयं जगतामन्तकस्यापि यमस्यापि सतः तस्य तस्य अन्तकः कृतान्तो विध्वंसयिता भवेयमिति सरलार्थः ।

योयस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥ इति ।

अत्र सर्वेष्वेव चरणेषु प्रसादगुणः स्पष्टः निजवीरत्वोत्कर्षप्रत्यायनाच्चोजः ।

तथा च वामनः—

श्लथत्वमोजसा मिश्रं प्रसादश्च प्रचक्षते ।
अनेन न विना सत्यं स्वदते काव्यपद्धतिः ॥ इति ॥ ४६ ॥

[ समताया लक्षणम् ]

**समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः ।**
**बन्धा मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥ ४७ ॥**

समतां नाम गुणं लक्षयति—'समम्' इति । बन्धेषु=गुम्फेषु सङ्घटनासु इति यावत्, अविषमम् न विषमम् अविषमं समानम् अर्थात् उपक्रमोपसंहारयोस्तुल्यं[यद् वाक्यं] तत् समम्= समताख्यगुणोपेतं भवतीत्यर्थः । 'उपक्रमोपसंहारयोः समानरचनावत्त्वं **समता**' इति निष्पन्नं समतालक्षणम् । ते=बन्धाः 'मृदुस्फुटमध्यमाः इति त्रिविधा भवन्ति । मृदुः=कोमलः । स्फुटः= विकटः तीव्र इति यावत् । मध्यमः=उभयस्वरूपः मृदुस्फुटतात्मकः । बन्धानामुक्तस्वरूपे कारणमाह–'मृदु'० इति । मृदुश्च स्फुटश्च उन्मिश्रश्च ते मृदुस्फुटोन्मिश्राः ते च ते वर्णाः 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नियमेन मृदुवर्णाः=ह्रस्वस्वराद्याः स्फुटवर्णाः=दीर्घस्वराद्याः, उन्मिश्रवर्णाः=मृदुस्फुटाः मृदुस्फुटोन्मिश्रवर्णानां विन्यासः=रचना योनिः=कारणं येषां ते बन्धा मृदुस्फुटमध्यमा भवन्तीति स्पष्टार्थः । अयं समताख्यो गुणः शब्दनिष्ठः । यदाह वामनः– 'मार्गाभेदः समता' [का० सू० १।११] आदिमध्यवसानेष्वैकरूप्यं अर्थात् येन मार्गेण उपक्रमः तस्यैव [श्लोके प्रबन्धे च] त्यागाभावः समता । उदाहरणं यथा **मम** 'श्रीकृष्णस्तवकशतके'—

कान्ताकटाक्षविशिखा नहि वेधयन्ति शान्त्यादिनिर्मलगुणा नच दूरयन्ति[1] ।
तांस्तान्नरान्नहि यमा अपि खेटयन्ति[2] ये कृष्णमञ्जुलसुधां नयनैः पिबन्ति ॥

अत्रोपक्रमादासमाप्ति स्फुटबन्धस्य निर्वाहात् समता[3] ।

---

(प्र०) समतायाः [ समतागुणस्य ] लक्षणं भेदमुदाहरणञ्च स्पष्टीकुरु ?
(उ०) अस्य पृ० पं० ८, पृ० ३२ पं० ६ ।

१ ननु—णाविष्ठवद्भावे 'स्थूलदूर०' [६।४।१५६] इत्यादिना गुणलोपयोः कृतयोः 'दवयति' इति भवितव्यमिति चेन्न 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इत्यत्र बहुलग्रहणात् स्थूलदूरादिसूत्रेण यद्विहितं तन्न भविष्यति । उक्तञ्च वामनेन—'दूरयतीति बहुलग्रहणात्' [का० सू० अ० २ । ७८ ] इति ।

२ भक्षयन्ति । 'खेट' भक्षणे । चुरादिः ।

३ आह च वामनः—

प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः ।
दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ॥ इति ।

अत्र [ कारिकायां ] वर्णशब्दोऽसमासमध्यमसमासदीर्घसमासानामप्युपलक्षणम् ।

उक्तञ्च—असमासा समासेन मध्यमेन च भूषिता ।
तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता ॥ इति ॥

कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद्गर्जितं गर्जितम् ॥

इति सिंहसद्भावे सर्वथा सामर्थ्यशून्यताबोधनरूपो मृदुरर्थः, तदनुरोधेन मृदुबन्धेनोपक्रान्तस्यापि उत्तरार्धे कुपितसिंहरूपस्यार्थस्योद्धतत्वात् कोमलबन्धत्यागो गुण एव जातः। ततो नात्र समतात्यागो दोषः। अत्रत्यमर्थपदं वक्त्रादीनामप्युपलक्षणम्। तस्माद् यत्र वक्त्रादीनामप्यौचित्यं तत्रापि बन्धस्य विषमतायां समतात्यागो न दोषः। यथा प्रकृते—'स्पर्धते रुद्धमद्धैर्य' इत्यत्र शृङ्गारी वक्ता, सच वायुं प्रति कुपितो विरहित्वात्, तादृशकोपवतः वायुम्प्रत्युक्तौ युक्तो विकटबन्धः। 'वररामामुखानिलैः' इत्यत्र कोपाभावात् वर्णनीयस्य नायिकारूपस्यार्थस्य मृदुत्वात् मृदुबन्ध एवोचित इत्यवं समतात्यागो गुण एव। अनेनैवाशयेन काव्यप्रकाशादौ पतत्प्रकर्षतादोषस्यापि क्वचिद् गुणभावः स्वीकृतः। यथा वा वेणीसंहारनाटके भीमोक्तौ—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि ! भीमः ॥

अत्र चतुर्थचरणे देवीकचसंयमनरूपस्यार्थस्य कोमलतया पादत्रयेनोपक्रान्तस्यापि विकटबन्धस्य त्यागो गुणः। इति गौडानां मतम्।

गुणमात्रग्रहिला वैदर्भास्तु नैवं मन्यन्ते। तेषामयमाशयः—यादृशेन बन्धेनोपक्रमः तादृशेनैवोपसंहारः कर्त्तव्यः, अन्यथा उत्थापितबन्धस्य त्यागो दोषः। एवञ्चैते यथा समतागुणप्रिया न तथा गौडा इति वैदर्भगौडीरीत्योर्विशेषः

अपिच योग्यगुणैः सह एकस्मिन् काव्ये वर्त्तमाना एवालङ्कारा रसमुत्कर्षयन्ति नतु गुणनिरपेक्षा इति **वैदर्भमतम्**। यथा—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि ! मृणालैरिति वदति दिवानिशं बाला ॥ इति।

अत्र रेफानुप्रासः शब्दमलङ्कुर्वन् विप्रलम्भमुपकरोति। रेफो हि विप्रलम्भशृङ्गारगतं माधुर्यगुणं व्यक्तीकरोति। गुणनिरपेक्षा अप्यलङ्कारा वैचित्र्यमावहन्ति वस्तुस्वभावस्यालौकिकत्वादिति **गौडमतम्**। यथा चात्रैव 'उच्छलच्छीकराच्छाच्छे' त्यादि, 'स्पर्धते रुद्धमद्धैर्य' इति च विकटानुप्रासो यद्यपि माधुर्यगुणाननुगुणो विद्यमानविप्रलम्भानुपकारकश्च तथापि वस्तुस्वभाववैचित्र्यात्सहृदयहृदये चमत्कारजनक इति नालङ्काराणां गुणसापेक्षता। एवञ्च वैदर्भाभिमतसमतागुणानुसारिणो गौडा न सन्तीति परः सारः ॥ ५० ॥

[ अथ माधुर्यगुणलक्षणम् ]

**मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः।**

[ रसलक्षणम् ]

**येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः ॥ ५१ ॥**

क्रमप्राप्तं माधुर्यं लक्षयति—'**मधुरम्**' इति। रसवत्=शृङ्गारादिरसोपेतं वाक्यं मधुरम्=माधुर्यगुणयुक्तं 'भवति' इति शेषः। अत्र शृङ्गारप्रभृतेः उपलक्षणात् भावतदाभासानामपि

(प्र०) माधुर्यगुणस्य लक्षणं निरूप्य उदाहरणे तत्सङ्गमनीयम्? (उ०) अ०पृ०पं०२६

ग्रहणम्' तेपि रसशब्दवाच्या इत्यर्थः । एते विद्यन्तेऽत्र [वाक्ये] इति 'रसवत्' इत्यर्थः । ननु–प्राचीनानां मते यथा अलङ्काराः शब्दार्थगतत्वेन रसमुपकुर्वन्ति तथा गुणा अपि, नवीनानां मते तु साक्षादेव गुणा रसधर्माः तत्कथं रसात्मकमेव माधुर्यं स्यात्–इत्याशङ्कायामाह–'वाचि' इति । वाचि=वाक्यरचनाहेतुभूते तत्तद्वर्णादौ वस्तुन्यपि=वाक्यप्रतिपाद्ये तत्तदर्थरूपे च रसस्थितिः=रसानां शृङ्गारादीनां रसनधर्मयोगित्वात् भावतदाभासादीनाञ्च स्थितिः व्यञ्जकत्वसम्बन्धो 'वर्त्तत' एवेति शेषः । तथाच–व्यञ्जकतासम्बन्धेन वाक्यस्य रसवत्त्वे नैव दोषः । कोऽसौ रस इति जिज्ञासायामाह–'येन' इति । धीमन्तः[1]=काव्यास्वादपराः सहृदयाः नतु मूर्खा हालिकाद्याः येन माद्यन्ति=हृष्टा भवन्ति तदास्वादवशादन्यविषयेभ्यो निवृत्तवृत्तयो जायन्ते स रसः । अत्रार्थे उपमामाह––'मधुना' इति । मधुना=वसन्तेन पुष्परसेन वा मधुव्रताः=मकरन्दलिहा [भ्रमराः] इव=यथा माद्यन्ति इत्यन्वयः ।

**अयमत्राशयः**—यद् वाक्यस्य रसव्यञ्जकवर्णादिमत्त्वं तदेव माधुर्यं नाम गुणः । अत एवोक्तं वाग्भटेन–'सरसार्थपदत्वं यत्तन्माधुर्यमुदाहृतम्' इति । तत्र मृदुवर्णा असमासा अल्पसमासा वा रचना शृङ्गारकरुणशान्तरसव्यञ्जिका । मध्यमवर्णा मध्यमसमासा हास्याद्भुतभयानकरसव्यञ्जिका । विकटवर्णा दीर्घसमासा च वीरबीभत्सरौद्ररसव्यञ्जिका । अर्था अपि विभावानुभावव्यभिचारिरूपा तत्तद्रसव्यञ्जका ज्ञेयाः । 'काव्यार्थभावनाजन्मा[2] चित्तवृत्तिविशेषो रस' इति रसस्य लक्षणम् । [रसविषयकः प्रपञ्चस्तु रसवत्प्रकरणे द्वितीयपरिच्छेदे करिष्यते] एवञ्च यद्यपि उक्तो गुणो रसस्वरूपो नास्ति तथापि रसव्यञ्जकवर्णादिनिष्ठव्यञ्जकतासम्बन्धेन तत्र [माधुर्ये] औपचारिको रसव्यवहार इति बोध्यम् ।

**वामनस्तु**–'पृथक्पदत्वं माधुर्यम्' [का०सू० १।२०] इत्याह । दीर्घसमासाभाववती रचनेत्यर्थः, तस्मादयं शब्दगुणः । उक्तिवैचित्र्यरूपं माधुर्यन्तु अर्थगुणः । उक्तञ्च **जयदेवेन**—

माधुर्यं पुनरुक्तस्य वैचित्र्यं चारुतावहम् ।
वयस्य ! पश्य पश्यास्य चञ्चलं लोचनाञ्चलम् ॥ इति ॥

'चित्तद्रवीभावजनकं वैचित्र्यं माधुर्य'मित्यर्थः । द्रवीभावश्च रसाद्याकारानुविद्धानन्दोद्बोधरूपः स्वाभाविकाद्यनेकविधः । सच शृङ्गारकरुणशान्तजन्य इति **प्रकाशकृत्** । द्रवीभाव एव माधुर्यं रचनाजन्यश्चेति **दर्पणकृत्** । रचना तु टवर्गं विना वर्गान्त्यानां वर्गमूर्धस्थितिरूपा ।

---

१ उक्तञ्च—

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥

नच––'काव्यालापांश्च वर्जयेत्' इत्यादिवचनेभ्यः काव्यनिषेधे कथं प्रेक्षावतां तत्र प्रवृत्तिरिति शक्यशङ्कम् असदर्थपरककाव्यालापनिषेधपरत्वात्तादृशवचसाम् ।

२ वैषयिकानन्देऽतिव्याप्तिवारणाय 'काव्यार्थभावनाजन्मा' इत्युक्तम् । 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति भरतसूत्रस्य परं सारमादाय सुकुमारमतीनां कृतेऽतिसरलमिदं रसलक्षणं दर्शितम् ।

उक्तञ्च काव्यप्रकाशे—

वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥
मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥

अस्यायमर्थः—टठडढवर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः तथा रेफणकारौ ह्रस्वान्तरितौ इति वर्णाः, समासाभावो मध्यमः समासो वेति समासः तथा माधुर्यवती [सुकुमारा] पदान्तरयोगेन रचना माधुर्यस्य व्यञ्जिका। एवमेव—

योग आद्यस्तृतीयाभ्यामन्त्ययोरेण तुल्ययोः ।
टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥

आद्यतृतीयाभ्याम्=वर्गप्रथमतृतीयाभ्याम् । अन्त्ययोः=द्वितीयचतुर्थयोः रेण अध उपरि उभयत्र वा योग इति सम्बन्धः शिष्टं स्पष्टम् । उदाहरणं तत एवावसेयम् । अत्रापि स्वबुद्धया यथायथमूह्यं ग्रन्थगौरवभयाद्विस्तरो न कृतः ।

उदाहरणरूपे पद्यांशे 'पश्ये'ति 'चल'मिति च यथाकथञ्चित् पुनरुक्तिश्चारुतावहेति माधुर्यलक्षणसङ्गतिः ॥ ५१ ॥

[ प्रसङ्गसङ्गत्या श्रुत्यनुप्रासलक्षणकथनम् ]

**यया कयाचिच्छ्रुत्या यत् समानमनुभूयते ।**
**तद्रूपा हि पदासत्तिः सानुप्रासा रसावहा ॥ ५२ ॥**

माधुर्ये गुणे वैदर्भाणां गौडानाञ्च मतभेदं दर्शयितुं वैदर्भेष्टायाः श्रुत्यनुप्रासघटिताया वर्णसंहतेः रसव्यञ्जकतामाचष्टे—'यया' इति । श्रुत्या=श्रूयतेऽनयेति श्रुतिः। 'स्त्रियां क्तिन्' [पा० ३।३।९४] इति सूत्रस्थेन 'श्रुयजीषिस्तुभ्यः करणे' इति वार्त्तिकेन ['श्रु' श्रवणे] श्रवणार्थकात् 'श्रु' धातोः क्तिन्प्रत्ययः । श्रुतिः=उच्चारणम् । 'श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्त्तयोः स्त्रियाम्' इति **मेदिनी** । यया कयाचित् कण्ठजनितया दन्तजनितया अन्यया वा ताल्वादिस्थानजनितया श्रुत्या=श्रवणसाधनीभूतेन उच्चारणेन यत् समानम्=पूर्वोच्चरितवर्णतुल्यम् अनुभूयते=तादृशानुभवविषयीक्रियते हि=निश्चयेन तद्रूपा=तादृशवर्णसादृश्यव्यञ्जनवती पदासत्तिः=पदानां सुप्तिङन्तानाम् आसत्तिः=अव्यवधानेन प्रयोगः [सा कविसमयप्रसिद्धा] सानुप्रासा=श्रुत्यनुप्रासवती [रचना] रसावहा=रसव्यञ्जिका भवति । निश्चयेन तादृशी पदासत्तिः रसपोषिका भवतीत्यर्थः ।

एतदुक्तं भवति—कण्ठताल्वादिसमानस्थानोच्चार्यमाणत्वरूपं यद् व्यञ्जनवर्णानां सादृश्यं स 'श्रुत्यनुप्रासः' । आह च दर्पणे **विश्वनाथः**—

उच्चार्यत्वाद् यदैकत्र स्थाने तालुरदादिके ।
सादृश्यं व्यञ्जनस्यैव 'श्रुत्यनुप्रास' उच्यते ॥ इति ।

---

१ रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः । अनुशब्दोऽनुगमार्थकः, प्रशब्दः प्रकृष्टार्थकः, आसशब्दो न्यासार्थकः । एवञ्च—'अतिव्यवधानशून्यत्वेन चमत्कृत्याधायिका या प्रकृतरसव्यञ्जकसदृशवर्णावृत्तिः सोऽनुप्रास' इति अनुप्राससामान्यलक्षणं फलितं भवति ।

**(प्र०)** श्रुत्यनुप्रासस्य किं लक्षणम्? केषाञ्च कवीनामयं प्रियतरः?

**(उ०)** अस्य पृ० पं० १६, पृ० ३७ पं० १ ।

अयञ्चानुप्रासोऽभिन्नवर्णविषयो वैदर्भाणामत्यन्तं श्रुतिसुखावहः [प्रियतरः] । एकवर्णविषयः छेकवृत्तिसंज्ञोऽनुप्रासस्तु गौडानामतिप्रिय इत्यग्रे वक्ष्यते । एवञ्च तादृशव्यञ्जनवद्वाक्यं रसावहं [ शृङ्गारविप्रलम्भकरुणशान्तान्यतमरसोपेतम्] भवति । एतादृशे स्थले काव्यशोभाकरो **माधुर्याख्यो** गुणः । उक्तञ्चाभियुक्तैः—

यथा ज्योत्स्ना शरच्चन्द्रं यथा लावण्यमङ्गनाम् ।
अनुप्रासस्तथा काव्यमलङ्कर्तुमिह क्षमः ॥ इति ।

इहेदमवधार्यम्—यद्यप्यलङ्कारप्रकरणे एवानुप्रासस्य निरूपणमुचितं भाति तथाप्यत्र प्रसङ्गवशात् रीतिभेदप्रदर्शनार्थं तस्य लक्षणं दर्शितम् । अत एवाग्रे वक्ष्यति—'काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रिया' इति सर्वमवदातम् ।

[ श्रुत्यनुप्रासस्योदाहरणम् ]

**एष राजा यदा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः ।**
**ततः प्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत् ॥ ५३ ॥**

श्रुत्यनुप्रासमुदाहरति—'एष'इति । ब्राह्मणप्रियः=ब्राह्मणाः प्रिया यस्य, अथवा ब्राह्मणानां प्रियः, एष राजा=प्रजानां रञ्जको नरपतिः 'राजा प्रकृतिरञ्जनात्' इत्यभियुक्तोक्तेः । यदा=यस्मिन् काले लक्ष्मीम्=राज्यश्रियम् प्राप्तवान्=अधिगतवान् ततः प्रभृति=तद्दिनादारभ्य अस्मिन् लोके=प्रजायां धर्मस्य=वेदविहितस्य चोदनालक्षणस्य यज्ञादेः कर्मणः उत्सवः=महः 'मह उद्धव उत्सव' इत्यमरः । अभवत्=अजायत । न्यायेन प्रजाशासनपरो राजा यज्ञदानादिधर्मकृत्यं प्रचारयामासेति पिण्डितार्थः ।

अत्र षकाररकारयोरेको मूर्धा स्थानमिति सादृश्यम् । एवं जकारयकारयोः तालुः । दकारलकारयोः दन्ताः । तथा च 'तत्तत्स्थाने उच्चार्यमाणत्वेन यद् व्यञ्जनसाम्यं तदेव श्रुत्यनुप्रासः । तत एव चात्र माधुर्याख्यो गुणः । स च धार्मिकराजविषयकरतिभावस्य व्यञ्जकः । इदं वैदर्भीरीतिमत् काव्यं वैदर्भाणामतिप्रियमित्युदाहरणदर्शनफलम् ।

श्रुत्यनुप्रासस्योदाहरणमाह विश्वनाथः—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥

---

१ विप्रलम्भस्य शृङ्गारत्वेपि पृथङ्निर्देशः सम्भोगशृङ्गारात्पूर्वं तस्य वर्णनार्थकताद्योतनार्थः ।

२ द्वितीयपरिच्छेदस्य तृतीये श्लोके ।

३ उक्तञ्च मानवे धर्मशास्त्रे—

तस्याहुः सम्प्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥इति । मनु० अ० ७श्लो० २६।

४ विरूपाक्षस्य=विषमनेत्रस्य हरस्येत्यर्थः, जयिनीः=विजेत्रीः वामलोचनाः=सुन्दरीः, स्तुमः=नमाम इत्यर्थः ।

अत्र 'जीवयन्ति' इति 'याः' इति 'जयिनीः' इत्यत्र च जकारयकारयोरेकत्र स्थाने तालौ उच्चार्यत्वात् सादृश्यम्, ततोऽयं सहृदयानामतीवश्रुतिसुखावहत्वात् श्रुत्यनुप्रासः। एवं दन्त्यकण्ठयानामप्युदाहरणं ज्ञेयम्। यथा वा **मम**—

हरन्ति यूनां हृदयानि कान्ता-कचाः कुचाकीर्णसरा ललन्तः।
कैलाशविस्तीर्णशिलैकदेशे कृष्णा भुजङ्गा इव संसरन्तः॥

अत्र 'हरन्ति' इति 'कान्ता' इति 'कचा' इत्यत्र हकारककारविसर्गाणामेकत्र कण्ठे स्थाने उच्चार्यमाणत्वात् सादृश्यम्, अतोऽयं श्रुत्यनुप्रासः॥ ५३॥

[ अत्र वैदर्भगौडकवीनां मतभेदकथनम् ]

**इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः।**
**अनुप्रासादपि प्रायो वैदर्भैरिदमिष्यते॥ ५४॥**

उक्तविषये वैदर्भीगौडीरीत्योर्मतभेदं निरूपयति—'इति' इति। इति इदम्=पूर्वोक्तमुदाहरणम् गौडैः=गौडदेशभवैः कविभिः न आदृतम्=माधुर्यगुणवत्त्वेन नैव स्वीकृतम्। अर्थात् समानश्रुतयोऽप्यमी वर्णा रसोपकारं न जनयन्तीति गौडानामाशयः। [ तु पुनः ] अनुप्रासः=वक्ष्यमाणलक्षणस्तु वर्णावृत्तिरूपः तत्प्रियः=तेषां गौडानां प्रिय इष्ट एवेत्यर्थः। वर्णावृत्तिरूपमेवानुप्रासं रसोपकारकं मन्यन्ते गौडा इत्याशयः।

वैदर्भैः=विदर्भदेशभवैः कविभिस्तु इदम्=उक्तं श्रुत्यनुप्रासोदाहरणभूतं 'एष राजा' इत्यादि पद्यम्, प्रायः=बाहुल्येन अनुप्रासाद् अपि=वक्ष्यमाणलक्षणात् वर्णावृत्तिरूपाद् अनुप्रासादपि वर्णावृत्तिरूपमनुप्रासमपेक्ष्यापीत्यर्थः। 'ल्यब्लोपे कर्मण्यधिकरणे च' [१।४।३१] इति वार्त्तिकेन 'प्रासादात् प्रेक्षते' इत्यादिवत् कर्मणि पञ्चमी। इष्यते=काम्यते आद्रियत इत्यर्थः। **यत्तु** 'अनुप्रासात् पूर्वोक्तात् श्रुत्यनुप्रासादपि प्रायः बाहुल्येन इदम् एष राजेत्यादि पद्यम् इष्यते' इति जैवं व्याख्यानं तन्निरानन्देम् एष राजेत्यादि पद्यस्य स्फुटं श्रुत्यनुप्रासोदाहरणत्वात् स्वपूर्वोक्तिविरोधात्, मूलकाराशयास्पृष्टत्वाच्च॥ ५४॥

[ अथानुप्राससामान्यलक्षणम् ]

**वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च।**
**पूर्वानुभवसंस्कारबोधिनी यद्यदूरता॥ ५५॥**

गौडसम्मतमनुप्रासं लक्षयति—'वर्णावृत्तिः' इति। वर्णावृत्तिः=वर्णानां व्यञ्जनानामक्षराणाम् आवृत्तिः पुनरुच्चारणम् अनुप्रासः। अर्थात् पुनरुच्चारणेन व्यञ्जनवर्णसादृश्यप्रतीतिरनुप्रासः। आह च **मम्मटः**—'वर्णसाम्यमनुप्रासः' इति। स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रास इति। सा चावृत्तिः कीदृशी इत्याह-पूर्वानु-

---

१ प्रमाद एवेत्यत्र तात्पर्यम्।

**(प्र०)** श्रुत्यनुप्रासवर्णानुवृत्तिरूपानुप्रासविषये वैदर्भगौडकवीनां मतभेदं तत्फलञ्च ब्रूहि? **(उ०)** अस्य पृ० पं० ६।

**(प्र०)** वर्णावृत्तिमनुप्रासं लक्षणोदाहरणाभ्यां स्पष्टयित्वा अनुप्रासस्य शिष्टानपि ग्रन्थान्तरगतान् भेदान् निरूपय? **(उ०)** अस्य पृ० पं० २४।

भव०=यदि पूर्वः प्रथमो यो वर्णः, तस्य योऽनुभवः श्रोत्रजं प्रत्यक्षम्, तेन यः संस्कारः भावनानामकः तस्य बोधिनी उद्बोधयित्री अदूरता=द्वितीयवर्णस्य सन्निधिर्भवति तदा वर्णावृत्तिरनुप्रासो भवतीत्यर्थः। सा च वर्णावृत्तिः पादेषु, पदेषु च=भवति। पद्यचतुर्थांशः पादः। सुप्तिङन्तं पदम्। एवञ्च पादगतः पदगतश्चानुप्रासः इति सामान्यतो द्विविधः।

यत्र अव्यवधानेन किञ्चिद्व्यवधानेन वा व्यञ्जनवर्णसादृश्यप्रतीतिः तत्रैव तादृशवैचित्र्यजनकवर्णावृत्तिरनुप्रासालङ्कार इति सारः। वर्णस्य वर्णयोर्वर्णानाञ्चावृत्तिरिति विवक्षितो विग्रहः। 'पादेषु च' इति प्रथमकल्पे सर्वश्लोकव्यापिन्येव वर्णावृत्तिरिष्टा। यत्र त्वेवं नास्ति तत्र पतत्प्रकर्षतादोषः। यथा—'कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकर' इत्यादिषु। 'पदेषु च' इति द्वितीयकल्पे नासौ दोषो विवक्षितः। अयमनुप्रासोऽनेकविधः। तथाहि **प्रतापरुद्रीये**—

भवेदव्यवधानेन द्वयोर्व्यञ्जनयुग्मयोः। आवृत्तिर्यत्र स बुधैः 'छेकानुप्रास' इष्यते॥

यत्राव्यवहितयोर्व्यञ्जनयुग्मयोर्द्वयोः पौनरुक्त्यं तत्र छेकानुप्रासः। यथा—

महीमहीनविभवे धत्ते क्षेमङ्करे करे। राजन्यजन्यविजयी राजा राजद्गुणोदयः॥

अत्र पादचतुष्टयेऽपि 'महीमही' 'करे करे' 'जन्यजन्य' 'राजा राज' इत्याकाराणां व्यञ्जनयुग्मानामव्यवधानेनावृत्तेः छेकानुप्रासः। छेको विदग्धः तत्प्रियत्वादेष छेकानुप्रासः। यद्वा 'छेकास्तु गृहपक्षिणः' इत्यमरोक्तेः छेकभाषणोपलक्षितोऽनुप्रासः छेकानुप्रासः। तेषां प्रायो द्विर्भाषितं भवति तत्सादृश्यात्तथाव्यवहारः। यथा वा **मम**—

प्रिया प्रियालोकविलोकनोत्का सदा सदानन्दमना गवाक्षे।
वीथ्यां निधायात्मदृशं वराकी चकार चिन्तां परमां प्रियस्य॥

अत्र 'प्रिया प्रिया' 'सदा सदा' इत्याकाराणां व्यञ्जनयुग्मानामव्यवधानेनावृत्तिरूपः छेकानुप्रासः।

एकद्विप्रभृतीनां तु व्यञ्जनानां यदा भवेत्। पुनरुक्तिरसौ नाम 'वृत्त्यनुप्रास' इष्यते॥

उदाहरणं यथा मदीय 'श्रीकृष्णस्तवकशतके'—

यत्पादशौचपरिमार्जनशौचभावं धत्ते शिवोऽपि शिवमूर्तिरघौघहारी।
लोकांस्तु शिक्षयति शास्त्रनिशामनेन कृष्णं प्रशान्तवपुषं नमतादरेण॥ इति॥

अत्राऽसकृत् शकारावृत्त्या वृत्त्यनुप्रासः। 'अघौघहारी' इत्यत्र घकारस्य सकृदनुवृत्तिरपि। श्रुत्यनुप्रासस्तु पूर्वमुक्तः। मम्मटसम्मतो लाटानुप्रासः 'साहित्यसारे'ऽपि भणितः। तद्यथा—

वागर्थावृत्तिके लाटानुप्रासो भेदसम्मतेः।
बाले बालेन्दुभस्मेरे स्मेरेणाक्ष्णावलोकय॥

भेदसम्मतेः=अन्वयभेदस्य सम्मतत्वेन हेतुना। वागर्थावृत्तिके=वागर्थयोः सार्वांशिकसाम्येनावृत्तिः पौनःपुन्यं यस्मिन् काव्ये तत्र 'लाटानुप्रासो' भवतीत्यर्थः। श्लोकार्धमुदाहरणम्। अत्र 'बाले बाले' 'स्मेरे स्मेरे' इत्यादिशब्दार्थयोरभेदेऽपि अन्वयमात्रभेदात् लाटदेशीयजनप्रियत्वाच्च लाटानुप्रासः॥ ५५॥

---

१ फणीन्द्रसदृशे। राजा महीं करे धत्ते इत्यन्वयः।

[ वर्णावृत्त्यनुप्रासस्योदाहरणम् ]

**चन्द्रे शरन्निशोत्तंसे कुन्दस्तबकसन्निभे ।**
**इन्द्रनीलनिभं लक्ष्म सन्दधात्यलिनः श्रियम् ॥ ५६ ॥**

तत्रादौ स्वरवैषम्येणानुप्रासमुदाहरति—'चन्द्र' इति । 'शरन्निशोत्तंसे=शरदो निशा शरन्निशा शारदी रात्रिरित्यर्थः। तस्याः शरन्निशाया उत्तंसे शिरोभूषणभूते, कुन्दस्तबकसन्निभे=कुन्दं माघ्यप्रसूनं तस्य स्तबको गुच्छः तत्सन्निभे तत्तुल्ये माघ्यपुष्पगुच्छसदृशे चन्द्रे=निशाकरे इन्द्रनीलनिभम्=इन्द्रनीलाख्यमणिसमं श्यामामित्यर्थः; लक्ष्म=चिह्नं कलङ्क इति यावत् अलिनः=भ्रमरस्य श्रियम्=शोभां कान्तिं सन्दधाति=धारयति ।

अत्र प्रथमे द्वितीये तृतीये च पादे शकार-ककार-वकार-नकार-लकाराणां वर्णानां पुनरावृत्तिद्वारकसाम्यप्रतीतिरिति वृत्त्यनुप्रासो ज्ञेयः। चतुर्थे पादे तु दकार-धकार-तकार-नकाराणां दन्तरूपेणैकेन स्थानेनोच्चार्यमाणत्वेन श्रुत्यनुप्रासोऽपि । अनेनालङ्कारद्वयेन तादृशवर्णविन्यासरीत्या माधुर्याख्यो गुणो व्यज्यते । व्यक्तीभूतश्च तत् शृङ्गाररसस्य उद्दीपनविभावभूतं चन्द्रमुपस्कृत्य [ विप्रलम्भ ] शृङ्गारं पोषयति । तदिदं माधुर्यं शब्दगतम् । अत्रैव रूपकोपमाभ्यामुज्जीविता निदर्शनाऽर्थालङ्कृतिः, तया चोपस्कृतस्तादृशो वाच्यार्थः शृङ्गारपरिपोषकृदित्यर्थगतमपि माधुर्यं ज्ञेयम् । 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' । 'माघ्यं कुन्दम्'। 'पुष्पं प्रसूनं कुसुमं सुमम्' 'स्तम्बो गुच्छस्तृणादिनः' 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः' इति सर्वत्र अमरः ॥५६॥

[स्वरसादृश्येन अनुप्रासोदाहरणम्]

**चारु चान्द्रमसं भीरु ! बिम्बं पश्यैतदम्बरे ।**
**मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम् ॥ ५७ ॥**

स्वरवैषम्येणानुप्रासं निरूप्य सम्प्रति स्वरसादृश्येनापि वैचित्रीं मत्वा तन्निरूपयति—'चारु' इति । मानवतीं नायिकां प्रति कस्यचित् कामिन उक्तिरियम् । हे!भीरु !=भयशीले ! अम्बरे=गगने एतत्=पुरतोऽवलोक्यमानं चारु=मनोज्ञम् मन्मथाक्रान्तम्=मन्मथेन मदनेन [कामेन] आक्रान्तं पीडितं कामातुरमिति यावत् मन्मनः=मदीयं मानसम् निर्दयम्=निर्गता दया यस्यां क्रियायां तत् यथा स्यात् तथा ['निर्दयम्' इति क्रियाविशेषणम्] हन्तुम्=क्षोदयितुम् उद्यतम्=उदयं प्राप्तम् चान्द्रमसम्=ऐन्दवं चन्द्रसम्बन्धीत्यर्थः, बिम्बम्=मण्डलम् पश्य=आलोकयेति सान्वयोर्थः।

अत्र प्रथमे पादे चाकारयोः रुकारयोश्च स्वरविशिष्टयोः सादृश्यम् तेनात्र वृत्त्यनु-

१ 'चन्द्रे शरन्निशोत्तंसे' इत्यत्र व्यस्तं **रूपकम्** औपम्यस्य तिरोभूतभेदत्वात् । उक्तं दण्डिनैव—'उपमैव तिरोभूतभेदा रूपकमिष्यते' इति । 'कुन्दस्तबकसन्निभे' इत्यादौ **उपमा** । 'साधर्म्यमुपमा भेदे' इति मम्मटोक्तेः । 'सन्दधात्यलिनः श्रियम्' इत्यत्र **निदर्शना** । 'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना' इति जयदेवोक्तेः । परन्तु इयं पदार्थवृत्तिनिदर्शना 'पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्' इति तदुक्तेश्च । एतद्विषये [शास्त्रार्थसम्बन्धरूपेण] बहु विचारोऽवतारयितुं शक्यते परं सुकुमारमतिव्याकुलताभिया तदुपेक्षितम् । अत्र चन्द्रलक्ष्मणि [चन्द्रकलङ्के] अलिगतश्रीपदार्थारोपो निदर्शना ।

(प्र०) स्वरसादृश्येनानुप्रासं स्पष्टीकुरु ? (उ०) अस्य पृ० पं० १८ ।

प्रासः । द्वितीये पादे म्बम्बयोः, तृतीये च मन्ममन्मयोरिति सकृत्साम्यात् छेकानुप्रासः । चतुर्थे पादे तु दकारयोः तकारयोश्च स्वरवैसादृश्यं तेनात्र अन्यप्रकारोऽपि वृत्त्यनुप्रासः। अत्र काव्ये शब्दगतमर्थगतञ्च द्विविधमपि माधुर्यं गुणः । सोयमेवं शब्दार्थोभयगतत्वेन चमत्कारकरत्वात् विप्रलम्भशृङ्गारस्य परिपोषकरः ।

अत्र च विरहिणि निर्दयतया हननोद्यमस्यासम्बन्धेपि तत्कल्पनात् सम्बन्धातिशयोक्तिरलङ्कारः[1] । उक्तञ्च जयदेवेन—

सम्बन्धातिशयोक्तिः स्यात् तदभावेऽपि तद्वचः ।
पश्य सौधाग्रसंसक्तं विभाति विधुमण्डलम् ॥ इति ॥

इत्थञ्च स्वरसादृश्येन स्वरवैसादृश्येन च द्विविधोऽप्यनुप्रासो दर्शितः ।

उदाहरणान्तरं यथा वा **मम**—

मनो मनोहारिणि हारियौवने ! वने पिकीगीतवनेऽवने प्रिये ।
अत्यन्तमासक्तिमदं निपीय मदीयमामूर्च्छति हूर्च्छतीत्यपि ॥

अत्र प्रथमे पादे 'मनो मनो' इत्येवमादि सकृत्साम्यात् छेकानुप्रासः । तृतीयचतुर्थपादे 'निपीय मदीय' इत्यत्र स्वरविशिष्टयोर्यकारयोः सादृश्यात् वृत्त्यनुप्रासः । तथैव चतुर्थे छकारयोः स्वरविशिष्टयोरेव सादृश्यम् । केषाञ्चिन्मते तु—यदि 'वने वने' इत्यादि द्वयोः स्वरव्यञ्जनसमुदाययोरेकदैवावृत्तिर्विवक्षिता स्यात् तदा वृत्त्यनुप्रास एव ॥ ५७ ॥

[अनुप्रासलक्षणे 'अदूरता' पदस्य फलकथनम्]

**इत्यनुप्रासमिच्छन्ति नातिदूरान्तरश्रुतिम् ।**
**नतु रामामुखाम्भोजसदृशश्चन्द्रमा इति ॥ ५८ ॥**

'अदूरतैवानुप्रासं प्रयोजयति' इति अन्वयव्यतिरेकाभ्यां स्पष्टीकरोति—'इति' इति । नातिदूरान्तरश्रुतिम्=अतिदूरम् अत्यधिकम् अन्तरं व्यवधानं यस्याः तादृशी चासौ श्रुतिः इति अतिदूरान्तरश्रुतिः न अतिदूरान्तरश्रुतिर्यस्य स तथाविधः तं नातिदूरान्तरश्रुतिम् । 'सुप्सुपे'ति समासः । तादृशम् अनुप्रासम्=उक्तमलङ्कारम् इच्छन्ति=कामयन्ते 'गौडाः कवय' इति शेषः। रामामुखाम्भोजसदृशः=रामा रमणी तस्याः मुखम् आननमेव अम्भोजं कमलं तत्सदृशः, चन्द्रमाः=शशी 'अयमस्ति' इति शेषः । इति=इत्याकारकं तृतीयचतुर्थपादयोः माकारयोः साम्येऽपि अतिदूरान्तरश्रुतिम् अनुप्रासं न तु=नैव इच्छन्ति इति पूर्वेण तन्त्रान्वयः। एवमन्वयव्यतिरेकाभ्यामनुप्रासे अदूरता अवश्यमपेक्षितेति स्फुटीकृतम् ॥ ५८ ॥

[ दोषस्थलेऽनुप्रासस्य रसानुपकारकत्ववर्णनम् ]

**स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः ।**
**च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः ॥ ५९ ॥**

'पदासत्तिः सानुप्रासा रसावहा' इति पूर्वं [ ५२ ] कारिकायामुक्तम् । यत्र तु दोषो

---

१ अर्थालङ्कारोपीत्यर्थः । 'त्वरितमेव सम्भोगं देहि' अथवा 'कामेनार्त्तेपि मयि वल्लभे मानं न जहासि, अतस्त्वमपि निर्दयासि' इत्यादि व्यङ्ग्यमपि ज्ञेयम् ।

(प्र०) कुत्रानुप्रासो रसं नोपकरोति कथञ्च ? (उ०) अस्य पृ० पं० २६ ।

वर्त्तते तत्र विद्यमानोऽनुप्रासः सन्तमपि रसं नोपकरोतीति नैव तत्र माधुर्यमिति दर्शयति— 'स्मर' इति। काचिन्नायिका नायकोपेक्षया भ्रष्टमाना बभूव, तस्याः पश्चात्तापस्य वर्णनमिदम्। स्मरः=कामः खरः=कठोरः। कान्तः=वल्लभः खलः=प्रणयभङ्गात् कठोरस्वभावः। नः=अस्माकं कायः=देहः कृशः=क्षीणः। च=अथ च कोपः=क्रोधः कृशः=गलितः। मानः=गौरवम् च्युतः= भ्रष्टः। रागः=कान्तविषयकः प्रेमा प्रियप्राप्तिकामो वा अधिकः=प्रचुरः। मोहः=मूर्च्छा जातः= प्रावर्त्तत प्रतिक्षणमिति शेषः, असवः=प्राणाः गताः=विगतप्रायाः सन्तीत्यर्थः।

अत्र प्रथमे रकारयोः खकारयोः ककाराणाञ्च साम्याद् **वृत्त्यनुप्रासः**। उत्तरार्धे तु तकारादीनां दन्त्यानां साम्यात् **श्रुत्यनुप्रासः**। एवमत्र द्विविधोऽप्यनुप्रासो विसन्ध्युपहतविसर्गाभ्यां वाक्यदोषाभ्यां दुष्टत्वादस्य काव्यस्य श्वित्रोपहतां कामिनीं हारालङ्कार इव विप्रलम्भ-शृङ्गारं नैव पुष्टीकरोति ॥ ५६ ॥

**इत्यादिबन्धपारुष्यं शैथिल्यञ्च नियच्छति।**
**अतो नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥ ६० ॥**

उक्तपद्ये स्वसम्मतं दोषं स्वयमेव निरूपयति—'इत्यादि' इति। इत्यादि=एवंप्रकारकमनुप्रासोपेतमपि वाक्यं बन्धपारुष्यम्=बन्धस्य रचनायाः पारुष्यं श्रुतिकटुत्वं शैथिल्यञ्च= शिथिलभावम् आहतविसर्गतयाऽगाढत्वमपि नियच्छति=सूचयति बोधयतीति यावत्। अतः= हेतोः दाक्षिणात्याः=दक्षिणदेशभवाः वैदर्भाः कवयः एवम्=दोषसहितम् अनुप्रासम्=न प्रयुञ्जते=रचनायां नैव निवेशयन्ति।

अत्र पूर्वार्धे निरन्तरबहुविसर्गहेतुका श्रुत्युद्वेजनकारिणी श्रुतिकटुतातिपारुष्यं बन्धस्य, उत्तरार्धे तु आहतविसर्गतया बन्धशैथिल्यम्, तस्मादत्र न माधुर्याख्यो गुण इति वैदर्भाणामाशयः।

अत्रोदाहृते पूर्वस्मिन् पद्ये निरन्तरबहुविसर्गश्रवणाद् बन्धस्य पारुष्येण श्रुतिकटुत्वम्। तथा चोक्तमभियुक्तैः—'अनुस्वारविसर्गौ तु पारुष्याय निरन्तरौ' इति। बन्धस्य शैथिल्यन्तु आहतविसर्गतारूपेण दोषेणास्ति। आहतविसर्गता च ओत्वप्राप्तिविसर्गता अर्थात् 'आद्गुणः' [ ६।१।८७ ] इति पाणिनिसूत्रेण ओत्वप्राप्तिरिति बोध्यम्। अयमेव दोषः क्वचित् 'उपहतविसर्गता' नाम्नोक्तः अर्थात् 'अतो रोरप्लुतादप्लुते' [ ६।१।११३ ] इति 'हशि च' [६।१।११४] इति च पाणिनिसूत्रेण उत्वप्राप्तिः। परन्तु फलिते दोषस्वरूपे नैव भेदः। ओत्वप्राप्तिरपि न स्वरूपेण दोषः किन्तु तस्याः पुनः पुनर्निरन्तरतया प्रयोग एव दोषः। यथा चात्रैव—'च्युतो मानोऽधिको रागो०' इत्यादि। प्रपञ्चस्तु अस्मत्काव्यप्रकाशप्रभायां द्रष्टव्यः।

---

१ वाग्भटोऽप्याह—

पश्चाद्गुरुत्वं संयोगाद्विसर्गाणामलोपनम्।
विसन्धिवर्जनञ्चेति बन्धचारुत्वहेतवः ॥ इति।

विसर्गाणामलोपनमिति तु ओजोगुणस्थाने ज्ञेयम्। विरूपः सन्धिर्विसन्धिः, सन्धेरभावो वा विसन्धिः। अन्येऽप्युष्ट्रत्वाष्ट्रादिक्लिष्टपदवर्जनादयो बन्धचारुत्वस्य हेतवो ज्ञेया इति सूचनार्थः प्रकारार्थकेतिशब्दप्रयोगः।

**(प्र०)** कीदृशमनुप्रासं दाक्षिणात्या नैव प्रयुञ्जते? **(उ०)** अस्य पृ० पं० १२।

इदन्तु बोध्यम्—यत्र वक्त्राद्यौचित्यवशात् बन्धस्य पारुष्यं तत्र रसानुकूलतैव, तादृशे अनुप्रासवति काव्ये माधुर्यस्य सद्भावोऽपीष्टः। उक्तञ्च सम्प्रदायविद्भिः—

वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते।
रौद्रादौ च रसेत्यन्तं दुःश्रवत्वं गुणो भवेत्॥ इति।

अत्र तु [‘खरः खलः’ इति पद्ये] न वक्ता क्रोधी, नच वाच्यं समुद्धतम्, नापि रौद्रादिरसः [किन्तु शृङ्गारः] इत्येतत्त्रयाभावात् रसपरिपन्थी दोषः, माधुर्यगुणस्य चाभावः॥६०॥

[यमकस्य लक्षणम्, तस्यात्र अप्रपञ्चे हेतुवर्णनञ्च]

**आवृत्तिं वर्णसङ्घातगोचरां यमकं विदुः।**
**तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते॥ ६१॥**

ननु—यथा वर्णावृत्तिरूपोऽनुप्रासो रसोपकारी तथा यमकमप्यस्ति, तदप्यत्रैव निरूप्यतामिति शङ्कायामाह–‘आवृत्तिम्’इति। वर्णसङ्घातगोचराम्=वर्णानां पूर्वोच्चारितानां सङ्घातः समूहः अर्थात् स्वरव्यञ्जनसमुदायः गोचरो विषयो यस्याः ताम् आवृत्तिं पुनरुच्चारणरूपां यमकं=नाम अलङ्कारं विदुः=जानन्ति ‘अलङ्कारशास्त्रविद’ इति शेषः। तत् यमकम्=यमकालङ्कारविशिष्टं काव्यम् न एकान्तमधुरम्=नातिमात्रं माधुर्योपेतम् अतः=कारणात् पश्चात्=अलङ्कारप्रकरणे विधास्यते=निरूपयिष्यते इत्यर्थः।

यथाऽनुप्रासे झटित्यनुगतिसद्भावात् माधुर्यं नाम गुणो रसानुकूलतामापतति न तथा यमके तत्र कदाचिदर्थानुसन्धानव्यग्रतया रसप्रतीतिर्व्यवहिताऽपि भवति तस्मादत्र नोक्तमिति भावः। ‘एकान्त’ पदेन क्वचित् क्वचित् तत्रापि माधुर्यं भवत्येव अन्यथा यमकस्यालङ्कारत्वमेव न स्यादिति सूचितम्।

यमके माधुर्यं यथा मम—

अयि! मनो न मनोरथसन्ततिं परिविहाय सहायतमं हरिम्।
भजसि तापसतापसमुच्छिदं पथि मते कुमतेः परिसम्भ्रमत्॥ इति॥

अत्र बन्धस्य पृथक्पदत्वं नाम माधुर्यं [शब्दगतं] स्पष्टम्। तेनैव क्रमेण वर्णसङ्घातगोचराऽऽवृत्तिश्चेति यमकमपि॥ ६१॥

[विशेषेण ग्राम्यतादोषस्य रसप्रतिबन्धकत्ववर्णनम्]

**कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति।**
**तथाप्यग्राम्यतैवैनं भारं वहति भूयसा॥ ६२॥**

शब्दगतं माधुर्यं निरूप्य सम्प्रति अर्थगतं माधुर्यं दर्शयति ‘कामम्’ इति। सर्वः अपि=शब्दगतः अर्थगतश्च अलङ्कारः अनुप्रासोपमादिः अर्थे=वाच्यादिभेदेन त्रिविधे प्रतिपाद्ये कामम्=यथायोगं रसम्=शृङ्गारादिकं निषिञ्चति=परिपोषयति उद्योतयतीति यावत्, तथापि=रसोत्कर्षकस्यालङ्कारस्य सद्भावेऽपि अग्राम्यता=ग्राम्यः प्राकृतो हालिकादिर्जनः तद्व्यवहृतः शब्दोऽ-

(प्र०) ‘कामं सर्वे’ इत्यादि श्लोकः सतात्पर्यं व्याख्येयः? अथवा कस्य दोषस्य विशेषतः रसप्रतिबन्धकत्वम्? किंवा कस्मिन् दोषे सति विशेषतो माधुर्यं प्रतिबध्यते?

(उ०) अस्य पृ० पं० २६।

र्थश्चापि ग्राम्यः तस्य भावो ग्राम्यता न ग्राम्यता अग्राम्यता अप्राकृतता विदग्धजनाव्यवहार्‍तेत्यर्थः। सा एव भूयसा=बाहुल्येन एनम्=रसनिषेकरूपं भारम्=मर्यादां वहति=धारयति। 'सालङ्कारो रसव्यञ्जकोऽर्थोऽर्थगतं माधुर्य'मित्यर्थः। तथाच 'उक्तिवैचित्र्यं माधुर्यम्'[1] [ का० सू० ३।१२ ] इत्याह वामनः।

अयमाशयः—रसमात्रप्रतीतिं प्रति दोषाः प्रतिबन्धकाः, तेन द्विविधमाधुर्यम्प्रत्यपि दोषमात्रं प्रतिबन्धकमित्यायातम्। परन्तु ग्राम्यतादोषो विशेषेण माधुर्यं प्रतिबध्नाति। ततश्च ग्राम्यतादिदोषाभावे सत्येवालङ्काराः रसमर्थे निषिञ्चन्ति, अतः कविभिर्ग्राम्यतादोषवर्जने विशेषेण प्रयत्नो विधेयः॥ ६२॥

[ अर्थगतग्राम्यताया उदाहरणम् ]

**कन्ये कामयमानं मां न त्वं कामयसे कथम्।**
**इति ग्राम्योऽयमर्थात्मा वैरस्याय प्रकल्पते॥ ६३॥**

अर्थस्याग्राम्यत्वबोधाय अर्थगतां ग्राम्यतामुदाहरति—'कन्ये' इति। हे! कन्ये! कामयमानम्=[त्वया सह] सुरतार्थिनं माम् त्वम् कथम्=कुतः न कामयसे=नेच्छसि इति=अमुना प्रकारेण निरूपितः अयं ग्राम्यः=ग्राम्यतादोषवान् 'अर्थात्मा' वैरस्याय=रसविच्छेदाय रसास्वादविघाताय वा प्रकल्पते=समर्थो भवति, सहृदयहृदयोद्वेजकत्वादिति शेषः।

अयमाशयः—'कन्ये' इति पुत्रीसमायामेव सम्बोधनमुचितम्. नायिकाया अभिमुखीकरणे तु 'सुन्दरि! प्रिये! बल्लभे! इत्यादीन्येव सम्बोधनपदानि योग्यानि भवन्ति, तस्मादत्र अन्यथाकरणाद् अर्थस्य ग्राम्यतादोषः। न चात्र 'कन्या' शब्दगतो दोषः, यतो विदग्धा अपि बहुशः 'कन्या' शब्दं प्रयुञ्जते। यथा—'कन्येयं कलधौतकोमलरुचिः कीर्त्तिस्तु नातः परा' इत्यादिषु। तस्मादत्रार्थनिष्ठ एव दोषः। अतएव 'कटिस्ते हरते मन' इत्यादिषु प्राचीनैर्ग्राम्यत्वमुक्तम्। 'कामयमान' मित्युक्तिरप्यर्थे ग्राम्यतावहा। यतः कामो हि नाम सुरताभिलाषः सच कामिनीकुचकलशवद् गूढ एव चमत्कारजनकः, अगूढः संस्तु सामाजिकानां व्रीडां जनयन् [सहृदयेषु] रसोद्बोधं विहन्ति। एवं सति नात्र माधुर्याख्यो गुणः अत्र वक्ता विदग्धः। अविदग्धोक्तौ तु ग्राम्यतायाः गुणत्वम्।

अत्र च नायिकाम्प्रति नायककामस्य हेतोर्विद्यमानत्वेऽपि नायिकानिष्ठसुरतेच्छारूपस्य कार्यस्य अनुदयाद् 'विशेषोक्ति'रर्थालङ्कारः। उक्तञ्च मम्मटेन—'विशेषोक्तिरखण्डेषु कारणेषु फलावच' इति। ककारमकारयोरसकृदावृत्तौ अनुप्रासोपि शब्दालङ्कारः। एवमर्थालङ्कारसमन्वितोप्यनुप्रासवद्वाक्यार्थो ग्राम्यतादोषसद्भावात् सहृदयहृदयं नावर्जयति, तस्मान्नात्र माधुर्याख्यो गुण इति परः सारः॥ ६३॥

---

१ वर्ण्यमानस्यार्थस्य प्रकर्षे प्रतिपाद्ये भङ्गयन्तरेणोक्तिरुक्तिवैचित्र्यम्। उदाहरणे यथा मम—

सुधा सुधैव चूतस्य फलं मधु नचान्यथा। सखे ब्रूहि! यदन्यत्स्यात् स्वादु कान्ताधरच्छदात्॥

अत्रानेकोपमानातिशायि कान्ताधरच्छदमाधुर्यमिति वक्तव्ये 'सुधा सुधैव' इत्यादि भङ्गयन्तरेण प्रतिपादनं माधुर्यम्।

(प्र०) अर्थगतं ग्राम्यतादोषमुदाहर? तत्फलञ्च दर्शय? (उ०) अस्य पृ० पं० ११।

[ अर्थगतग्राम्यतादोषरहितोदाहरणकथनम् ]—

**कामं कन्दर्पचाण्डालो मयि वामाक्षि ! निर्दयः ।**
**त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥ ६४ ॥**

अधुना यथा उक्तो ग्राम्यता दोषो न भवति तथा दर्शयति—'कामम्' इति । हे वामाक्षि !=वामे मनोहरे कुटिले वा अक्षिणी यस्याः तत्सम्बुद्धौ कन्दर्पचाण्डालः=कन्दर्पः काम एव चाण्डालः निर्दयत्वसाम्यात् [ चाण्डालसदृशः ] मयि कामम्=अतिमात्रम् निर्दयः= निष्कृपो वर्त्तत इति शेषः । त्वयि=विषये निर्मत्सरः=मात्सर्यरहितः [इति] दिष्ट्या=तव हर्ष-स्थानमिदम् । कामजनितपीडाया अभावादित्यर्थः । इति=अमुना प्रकारेण उपनिबद्धः अर्थः= प्रतिपाद्यं वस्तु रसावहः=रसोद्बोधकरः सामाजिकानामिति शेषः, अत एव अग्राम्यः=ग्राम्य-ताख्यदोषरहित इत्यर्थः ।

अत्र 'कन्दर्पचाण्डालो मयि निर्दयः त्वयि तु निर्मत्सर' इति वाक्याभ्याम्' अहं कामपर-वशः त्वन्तु मां नेच्छसि'इति पूर्वोक्त एवार्थः प्रकारान्तरेण [विच्छित्तिविशेषशालितया] उपनिबद्धय-मानः कामिनीकुचकलशवद् गूढः सन् वक्तुर्विदग्धभावं व्यञ्जयन् सहृदयहृदयान्याहरतीति नैवं-विधे स्थलेऽर्थनिष्ठो ग्राम्यतादोषः । अतएव रसव्यञ्जकतयाऽत्र माधुर्यगुणसद्भावः । रूपकश्चाल-ङ्कारः । उक्तिवैचित्र्यरूपं वामनकृतं माधुर्यगुणलक्षणमप्यत्र घटितमिति सूक्ष्मं निरीक्ष्यम् ॥६४॥

[ शब्दगतस्य ग्राम्यतादोषस्य वर्णनम् ]

**शब्देऽपि ग्राम्यताऽस्त्येव सा सभ्येतरकीर्त्तनात् ।**
**यथा यकारादिपदं रत्युत्सवनिरूपणे ॥ ६५ ॥**

अर्थगतमाधुर्यस्य हतिकरी ग्राम्यता दर्शिता, सम्प्रति शब्दगतामपि तां दर्शयति— 'शब्दे' इति । 'शब्देऽपि ग्राम्यता [ दोषः ] अस्ति एव' । सा=शब्दगता ग्राम्यता सभ्येतर-कीर्त्तनात्=सभायां साधु सभ्यम् । 'तत्र साधुः' [४।४।९८] इति यति प्राप्ते स्वरे विशेषार्थं 'सभाया यः' इति [४।४।१०५] अनेन सूत्रेण 'सभा' शब्दाद् यः प्रत्ययः । सभ्यात् इतरद् असभ्यम्= ग्रामीणहालिकादिजनप्रयोज्यः शब्दविशेषः तस्य कर्त्तिनात्=उच्चारणात् 'भवति' इति शेषः । यथा रत्युत्सवनिरूपणे=रत्युत्सवः भोगोल्लासः तस्य निरूपणे वर्णने बोधने इति यावत् यका-रादिपदम्=यकार आदिर्यस्य तत् तादृशं पदम, 'यभ मैथुने' इत्यस्मात् मैथुनार्थकात् 'यभ' धातोर्निष्पन्नं 'यभना' दिपदमित्यर्थः । एतादृशप्रयोगोच्चारणेन प्रयोक्तुरसभ्यतयोपहसनीयता, श्रोतुश्च लज्जायमानता जायते तेन रसास्वादव्याघाते माधुर्यगुणाभावः ।

निधुवनादिपदानां प्रयोगास्तु विदग्धैरपि क्रियन्ते इति न तत्र ग्राम्यतादोषः । यथा— शिशुपालवधे महाकाव्ये माघः—

'अनिमिषितविरामा रागिणां सर्वरात्रं नवनिधुवनलीलाः कौतुकेनाभिवीक्ष्य' इत्यत्र 'निधुवन' पदं प्रायुङ्क्त । परं विदग्धैरत्र ग्राम्यतादोषो नाङ्गीक्रियते ॥ ६५ ॥

---

(प्र०) ग्राम्यतादोषाभावस्थले माधुर्यगुणं स्पष्टीकुरु ? (उ०) अस्य पृ० पं० २ ।

(प्र०) केषां शब्दानां प्रयोगे ग्राम्यतादोषः शब्दगतः कुत्र च ? केषां प्रयोगे चासौ माधुर्यगुणं न व्याहन्ति ? । (उ०) अस्य पृ० पं० १७, २८ ।

[अश्लीलतादोषस्य ग्राम्यतायामन्तर्भावकथनम्]

**पदसन्धानवृत्त्या वा वाक्यार्थत्वेन वा पुनः ।**
**दुष्प्रतीतिकरं ग्राम्यं यथा या भवतः प्रिया ॥ ६६ ॥**

[अर्थगतग्राम्यतावर्णनम्]

**खरं प्रहृत्य विश्रान्तः पुरुषो वीर्यवानिति ।**
**एवमादि न शंसन्ति मार्गयोरुभयोरपि ॥ ६७ ॥**

अश्लीलतादोषं ग्राम्यतायामेवान्तर्भावयति—'पदसन्धानवृत्त्या' इति । पदानां=सुप्तिङन्तानां सन्धानं=समावेशो यस्मिन् तत् पदसन्धानं वाक्यमित्यर्थः, तद्वृत्त्या तद्गतत्वेन अर्थात् वाक्यगतत्वेन वा=अथवा वाक्यार्थगतत्वेन यत् दुष्प्रतीतिकरम्=दुष्टप्रतीतिजनकं लज्जाजुगुप्साऽमङ्गलव्यञ्जकं यदश्लीलम् तदपि ग्राम्यम्=ग्राम्यमेव, ग्राम्यतादोष एवान्तर्भवति माधुर्यगुणव्याघातकरत्वात् । एतदुदाहरणेन स्पष्टीकरोति—'यथा' इति । या भवतः=[तव] प्रिया=बल्लभा 'अस्ति' इति शेषः । अस्य वाक्यस्य प्राकरणिकोक्तार्थबोधानन्तरं व्यञ्जनया याभवतः=मैथुनकारिणस्तव मैथुनसाधनत्वेन प्रीणनकर्त्री' इत्यसभ्यार्थस्य प्रतीतिः सहृदयानां [सामाजिकानां] लज्जामावहतीति असभ्यार्थव्यञ्जनपरमिदं वाक्यं व्रीडादाय्यश्लीलदोषदुष्टम्, अतो नात्र माधुर्याख्यो गुणः । 'यभ' धातोर्भावे घञि 'याभ' इति पदम् । यमनं याभः मैथुनमित्यर्थः । याभोऽस्यास्तीति 'याभवान्' । 'तदस्यास्त्यस्मिन्निति मतुप्' [ ४।२।९४। ] इति पाणिनिसूत्रेण मतुप् । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' [८।२।९] इति सूत्रेण मतोर्वस्य यः । व्रीडादाय्यश्लीलस्यान्यदुदाहरणं यथा **मम**—'साधनं ते महाराज ! महोच्छ्रायं विलोक्यते' इति सैन्यार्थकमपि साधनशब्दः पुंध्वजव्यञ्जनपरतयाऽश्लीलतां व्यनक्ति ।

'साधनं मृतसंस्कारे सैन्ये सिद्धौषधे मतौ ।
निर्वर्त्तनोपायमेढ्रदापनेऽनुगमे धने' इति मेदिनी ॥ ६६ ॥

वाक्यार्थगतं ग्राम्यतान्तःपात्यश्लीलमुदाहरति—'खरम्' इति । वीर्यवान्=प्रशस्तबलवान् कश्चित् शूरः पुरुषः खरम्=उत्कटं प्रहृत्य=शत्रून् घातयित्वा विश्रान्तः=विश्रमं विरामं प्राप्त इत्यर्थः । एवमभिधया वृत्त्या प्रकृतमुख्यार्थबोधोत्तरं वक्त्रादिवैशिष्ट्यसहकृतया व्यञ्जनया वृत्त्या वीर्यवान्=शुक्रवान् पुरुषः=तरुणः कश्चित् खरं=विकटं प्रहृत्य=सुरतघर्षणं कृत्वा विश्रान्त इत्यसभ्यार्थप्रतीतिः सामाजिकानां व्रीडामावहतीत्यर्थगतोऽश्लीलताख्यो दोषः । तस्मादत्रापि माधुर्याभावो रसव्याघातश्चेति तात्पर्यम् ।

अर्थगताश्लीलस्योदाहरणं काव्यप्रकाशे यथा—

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथास्य जायते पातो न तथा पुनरुन्नतिः ॥ इति ।

---

१ श्रियं सभ्यजनवशीकरणसम्पत्तिं लाति गृह्णाति इति श्लीलः । रश्रुतेर्लश्रुतिः न श्लीलोऽश्लीलः । 'लक्ष्मीवान् लक्ष्मणः श्लीलः श्रीमान्' इत्यमरः ।

(प्र०) अश्लीलतादोषस्य ग्राम्यतायामन्तर्भावं सोदाहरणं व्याख्याहि ?

(उ०) अस्य पृ० पं० २ ।

अत्र हन्तुं=हिंसां सुरतक्रियात्मकयोनिताडनञ्च कर्त्तुं प्रवृत्तस्य स्तब्धस्य=अनम्रस्य यभनार्थमुद्धतस्य च विवरैषिणः=परिच्छिद्रान्वेषिणः दुष्टस्य स्त्रीवराङ्गवेषिणश्च लिङ्गस्य च यथा पातः=अपचयः वीर्यस्खलनोत्तरं शैथिल्यञ्च जायते तथा पुनः उन्नतिः=वृद्धिः कामावेगेन दृढता च पुनर्न जायते, इत्येवमत्र पुंध्वजसम्बन्धी द्वितीयोऽसभ्योऽर्थो व्यङ्ग्यः। एवमादिकाव्ये रसव्याघातो भवति।

'एवमादि' इति। एवमादि=इत्याद्याकारकग्राम्यतादिदोषदुष्टं काव्यम् उभयोरपि=द्वयोरपि मार्गयोः=गौडीवैदर्भीरीत्योः न=नैव शंसन्ति=नाद्रियन्ते सूरय इति शेषः। द्वयोर्मार्गयोरनुप्रासप्रयुक्तभेदे सत्यपि ग्राम्यतादिदोषपरिहारे समानतैवेति परः सारः। आदिना अनुचितार्थत्वविरुद्धमतिकारितादीनां सङ्ग्रहः॥ ६७॥[1]

---

१ अत्रेदमत्यावश्यकमाकलनीयम्—द्विविधा तावत् व्यञ्जना शाब्दी आर्थी चेति। उक्तञ्च मम्मटेन—अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।

संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्॥ इति॥

यत्रानेकार्थानां शब्दानामभिधया युगपदनेकेष्वर्थेषूपस्थितेषु प्रकरणादिवशात् कस्मिंश्चिदेकस्मिन्नेवार्थेऽभिधा शक्तिर्नियमिता भवति तथापि तत्र द्वितीयार्थोपस्थितिर्जायते सा 'शाब्दी' व्यञ्जना नाम। एतादृशस्थले वाक्यगतः [शब्दगतः] एवाश्लीलतादिर्दोषः। यत्र वक्त्रादिवैशिष्ट्यादपरार्थप्रतीतिः तत्र 'आर्थी' व्यञ्जना। आर्थीव्यञ्जनास्थल एव अश्लीलतादीनामर्थगतत्वमिति हि वस्तुस्थितिः। एवं 'खरं प्रहृत्य विश्रान्त' इत्यादौ वक्त्रादिवैशिष्ट्येन 'मैथुनं कृत्वा श्रमङ्गत' इत्याकारकासभ्यार्थप्रतीतिः आर्थ्या व्यञ्जनयैव। नह्यत्रानेकार्थानां शब्दानां प्रकरणादिवशादभिधानियमनं केनाप्युद्भावयितुं सुशकम्, तस्मादत्र व्रीडाव्यञ्जकतयाऽर्थगताश्लीलत्वरूपो दोषः, यं दण्डी अर्थगतां ग्राम्यतामेव मन्यते।

'यथा या भवतः प्रिया' इत्यत्र तु अनेकार्थस्य शब्दस्य प्रकरणादिना 'भवतो या प्रिया' इत्येकस्मिन्नर्थे नियन्त्रणात् 'या भवतः [मैथुनिनः] तव प्रिया' इति व्रीडादायिनो द्वितीयस्यासभ्यार्थस्य प्रतीतिस्तु शाब्द्या एव व्यञ्जनया ज्ञेया, तस्मादेतादृशस्थले ग्राम्यतापरपर्यायस्याश्लीलतादोषस्य शब्दगतत्वमेव। यतो दोषगुणालङ्काराणां शब्दार्थगतत्वव्यवस्थायां शब्दपरिवृत्तिसहत्वाऽसहत्वे एव बीजमित्यालङ्कारिकाणां परिमार्जितोऽर्थः। यत्र शब्दः परिवृत्तिं न सहते तत्र दोषादीनां शब्दगतत्वम्, यत्र शब्दपरिवर्त्तनेऽपि अर्थः परिवृत्तो न भवति तत्र तेषामर्थगतत्वमिति निष्कर्षः।

स्थिते चैवं राजमार्गे 'खरं प्रहृत्य विश्रान्तः पुरुषो वीर्यवानिति' इत्यत्र वाक्यगतमश्लीलत्वं न मन्तव्यं शाब्द्या व्यञ्जनाया अभावात्। अपि चात्र 'वीर्य' शब्दस्थाने 'बल' शब्दनिवेशेऽपि नार्थस्य परिवृत्तिरिति असभ्यार्थप्रतीतौ अर्थगतमेवाश्लीलत्वम्। 'या भवत' इत्यत्र शब्दः परिवर्त्तनां न सहते तस्मादत्र शब्दगतत्वमेवेति दिक्। 'आदिना' इति। कारिकास्थादिपदेनेत्यर्थः। अनुचितार्थलक्षणं चन्द्रालोके यथा—'व्यनक्त्यनुचितार्थं यत् पदमाहुस्तदेव तत्' इति। अनुचितः विवक्षितार्थतिरस्कारकधर्मव्यञ्जकोऽर्थो यस्य तत् 'अनुचितार्थम्'। उदाहरणं यथा तत्रैव—'इयमद्भुतशाखाग्रकेलिकौतुकवानरी' इति।

इयं कामिनी अद्भुतरसस्य शाखिनो वृक्षस्याग्रे क्रीडाकौतुकं यस्याः सा तत्कर्त्रीति

[ ग्राम्यतादोषस्यापवादस्थलप्रदर्शनम् ]

**भगिनीभगवत्यादि सर्वत्रैवानुमन्यते ।**
**विभक्तमिति माधुर्यमुच्यते सुकुमारता ॥ ६८ ॥**

असभ्यार्थप्रतिपादकान्यपि कानिचित्पदानि न दुष्टानीति ग्राम्यताया अपवादमाह— 'भगिनी'त्यादि। भगिनी भगवती आदिर्यस्य तत् पदं सर्वत्रैव=काव्येषु व्यवहारेषु च अनुमन्यते= आद्रियते अदूषकतया स्वीक्रियते सर्वैरिति शेषः। तस्मादेतेषु प्रयुक्तेषु पदेषु नैव श्रोतॄणां वैमुख्य-मिति भावः। इति=उक्तप्रकारेण माधुर्यम्=माधुर्याख्यो गुणः विभक्तम्=विभागेन दर्शितं निरूपित-मित्यर्थः। अधुना 'सुकुमारता' नाम गुण उच्यते=लक्ष्यलक्षणविधया निरूप्यते इत्यर्थः। अत्रा-दिपदेन योनिलिङ्गादिपदानामपि ग्रहणम्, एतेषां प्रयोगेऽपि नैव ग्राम्यता [अश्लीलता] ॥ ६८ ॥[1]

---

यावत् तादृशी वानरी वनेचरी । अत्र नायिकायां 'वानरी'ति पदं रूपकवशादुपात्तं सद् [अनुचितार्थं] पशुभावं व्यनक्ति इत्यनुचितार्थो नाम दोषः ।

विरुद्धमतिकृत्=विरुद्धां प्रकृतार्थप्रतिबन्धकीभूतामप्रकृतार्थबुद्धिं करोतीति यत् तदित्यर्थः, उदाहरणं यथा–'अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे' इति । अत्र 'कार्यं विना मित्र'मिति विवक्षितम्। 'अकार्ये मित्रम्' इति तु विरुद्धा प्रतीतिः । प्रपञ्चस्तु काव्यप्रकाशादौ द्रष्टव्यः ।

१ **इदमत्रावधार्यम्—**

संवीतस्य हि लोकेस्मिन्न दोषान्वेषणं क्षमम् ।
शिवलिङ्गस्य संस्थाने कस्यासभ्यत्वभावनम् ॥

इत्याद्युक्त्या शिवलिङ्गादिपदानि सभ्यैः स्वयमेवाऽदुष्टतयाङ्गीकृतानि । एवमेव गुप्तं लक्षितञ्चापि पदं नैव दुष्टम् । उक्तञ्च—

ग्राम्यं घृणावदश्लीलामङ्गलार्थं यदीरितम् ।
तत्संवीतेषु गुप्तेषु लक्षितेषु न दुष्यति ॥ इति ॥

तत्र संवीतं न दुष्टं यथा—'योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम्' इति । अत्र 'तद्वीर्यनिषेकभूमिः' इत्यश्लीलमपि पदं संवीतत्वान्न दुष्टम् । अनादिपरम्परया सर्व-जनव्यवहार्यत्वं 'संवीतत्वम्' । 'गुप्त'न्तु असभ्यार्थेऽप्रसिद्धम् । यथा—सम्बाधपदं सङ्कटार्थे प्रसिद्धं स्त्रीचिह्नरूपेऽर्थे त्वप्रसिद्धमिति नैव दुष्टम् । लक्षितम्=लक्षणया स्त्रीचिह्नबोधकम् यथा—'जन्मभूमि' पदम् । यथा वा—

ब्रह्माण्डकारणं योप्सु निदधे बीजमात्मनः ।
उपस्थानं करोम्येष तस्मै शेषाहिशायिने ॥

अत्र ब्रह्माण्डोपस्थानशब्दयोः असभ्यार्थस्मृतिहेतुत्वेऽपि अन्यत्र लक्षितत्वेन गुणत्वम् ॥

अपि च सुरतारम्भगोष्ठ्यां शान्तबीभत्सरसादौ च व्यङ्ग्ये अश्लीलत्वं न दोषः किन्तु गुण एव । क्रमेण यथा—

करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥ इति ।

[सौकुमार्यस्य लक्षणम्]

**अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते ।**
**बन्धशैथिल्यदोषस्तु दर्शितः सर्वकोमले ॥ ६९ ॥**

'अनिष्ठुरे'ति—अनिष्ठुराक्षरप्रायम्=न निष्ठुराणि श्रुतिकटूनि परुषाणि अक्षराणि इति अनिष्ठुराक्षराणि तेषां प्रायः बाहुलता यत्र [नतु सर्वरूपता] तादृशं वाक्यम् इह=काव्यशास्त्रे सुकुमारम्=सुकुमारतागुणोपेतम् इष्यते=काम्यते कविभिरिति शेषः । तु=पुनः सर्वकोमले= सर्वरूपेण कोमलवर्णात्मके वाक्ये बन्धशैथिल्यदोषः=शिथिलबन्धत्वरूपो दोषः 'अस्ति' इति शेषः । यश्च मयैव 'मालतीमाला लोलालिकलिला यथा' इत्यत्रोक्तः । एवञ्च—अनेकेषां कोमलाक्षराणां मध्ये यद् बन्धस्य क्वचित् क्वचित् परुषाक्षरविन्यासेन गाढत्वसम्पादनं तदेव 'सौकुमार्य'मिति फलितम् । अल्पप्राणमहाप्राणाक्षरघटितबन्धस्य अशैथिल्ये तु 'श्लेष' इत्यनयोर्विशेषः । आह च वामनः—'अजरठत्वं सौकुमार्यम्' [का० सू० १ । २१] इति । शब्दगुणश्चायम् । अर्थगुणस्तु—'अपारुष्यं सौकुमार्यम्' [का० २ । ११] इत्यर्थाश्लीलत्वाभावत्वरूपमपारुष्यं तदित्यपि वामन आह ॥ ६९ ॥

[ सौकुमार्यस्योदाहरणम् ]

**मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।**
**कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥ ७० ॥**

सौकुमार्यमुदाहरति—'मण्डलीकृत्य' इति । मधुरगीतिभिः=मधुरा मनोहारिणी गीतिः गीतिरिव गीतिः केका येषां तैः कण्ठैः=गलैः उपलक्षिताः कलापिनः=मयूराः जीमूतमालिनि= जीमूतानां जलदानां मेघानां माला पङ्क्तिः अस्मिन्नस्तीति जीमूतमाली मतुबर्थे इति प्रत्यये साधुः । तस्मिन् काले=प्रावृषि समये बर्हाणि=पुच्छानि मण्डलीकृत्य=विस्तारयित्वा प्रनृत्यन्ति= प्रहृष्टाः सन्तः नर्त्तनं कुर्वन्तीत्यर्थः ।

अत्र मकारककारादीनां कोमलानां वर्णानां अन्तरान्तरा टवर्गीयडकाररकारादिसंयुक्ताक्षरविन्यासेनायं बन्धः कामप्यलौकिकीं सहृदयसाक्षिणीं चारुतां धत्ते इति 'सौकुमार्यं' नाम गुणः ।

अत्र प्रकृते वर्षाकालीने कलापिनां नर्त्तनव्यवहारे 'अन्येऽपि नर्त्तका मधुरं गायन्तो नर्तनं तन्वते' इत्याकारस्याप्रकृतव्यवहारस्य समारोपरूपा 'समासोक्ति' रलङ्कारः । उक्तञ्च जय-

---

अत्र करिहस्तादीनि पदानि असभ्यार्थानि तथापि सुरतारम्भगोष्ठ्यां कामिन उक्तित्वात् न दुष्टानि ।

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥

अत्र शान्तो रसः । अतः स्त्रीव्रणादीनि पदान्यदुष्टानि । एवमेव बीभत्सरसादावपि ग्रन्थान्तरतो ज्ञेयम् । ग्रन्थगौरवभयान्नोक्तम् ।

(प्र०) सौकुमार्यस्य लक्षणं ब्रूहि ? (उ०) अस्य पृ० पं० २ ।

(प्र०) सौकुमार्यस्योदाहरणे तल्लक्षणं घटयतु भवान् ? (उ०) अस्य पृ० पं० १५ ।

देवेन—'समासोक्तिः परिस्फूर्त्तिः प्रकृतेऽप्रकृतस्य चेत्' इति । स्वभावोक्तिश्च—'स्वभावोक्ति-रसौ चारु यथावद्वस्तुवर्णनम्' इत्युक्तेः । तस्मादुभयोः संसृष्टिः ।

जयदेवस्तु सौकुमार्यमित्थं सोदाहरणं लक्षितवान्—

सौकुमार्यमपारुष्यं पर्यायपरिवर्त्तनात् ।
स कथाशेषतां यातः समालिङ्ग्य हुताशनम् ॥ इति ॥

अस्यायमाशयः—अमङ्गलशब्दपरित्यागेन तत्पर्यायशब्दप्रयोगः'सौकुमार्यम्' पर्याय-परिवृत्या पारुष्याभावस्तदिति वाच्यार्थः । 'अग्नौ प्रविश्य मृतः' इत्यस्यार्थस्य पर्यायेणात्र कोमलरीत्या कथनम् । तथोक्तौ तु झटित्यमङ्गलप्रतीतेः पारुष्यम् ।

वयन्तु—'अश्लीलत्वाभावः सौकुमार्यं न गुणान्तर' मित्याशयं मन्यामहे । पारुष्य-मत्र न वर्णकृतं किन्त्वमङ्गलकृतमिति बोध्यम् । अन्ये तु 'प्रविश्य मृत' इत्यस्य प्रवेशेन वर्णकृतपारुष्यस्यैव तत्र सत्त्वेन तदभाव एवात्र विवक्षित इत्याहुः ॥ ७० ॥

[सौकुमार्यानङ्गीकर्तृणां मतनिरासः]

**इत्यनूर्जित एवार्थो नालङ्कारोऽपि तादृशः ।**
**सुकुमारतयैवेतदारोहति सतां मनः ॥ ७१ ॥**

सौकुमार्यमनङ्गीकुर्वतां नव्यानां मतनिरासायाह—'इति' इति । इति=उक्तरूपः मण्ड-लाकारेण कलापिनर्त्तनरूपः उक्तपद्यप्रतिपाद्योऽर्थः । अनूर्जितः=रसात्मकचमत्कारविशेषविरहित एव नातिमनोरम इत्यर्थः । रसवत एवार्थस्य सहृदयहृदयाकर्षकत्वादिति भावः । अलङ्कारः अपि=समासोक्तिरूपः स्वभावोक्तिर्वा न तादृशः=विलक्षणचमत्कारजनको नास्ति, रसवति काव्य एवा-लङ्कारस्यापि विच्छित्तिविशेषपोषकत्वं यतः । तथापि एतत्=उक्तं पद्यम्, सुकुमारतया एव=सुकुमारगुणयुक्ताक्षरबन्धवत्त्वेनैव सताम्=सहृदयानां सामाजिकानाम् मनः=चित्तम् आरोहति=आश्रयते, आश्रित्य मुग्धं करोतीत्यर्थः । ततश्चैतादृशस्थले सहृदयहृदयस्याकृष्टत्वादवश्यं सौकुमार्यगुणोऽङ्गीकर्त्तव्य इति भावः ।

**अयमत्राशयः**—अन्यद्धि अर्थालङ्कारवैचित्र्यम्, अन्यच्च गुणकृतं वैचित्र्यम् । गुणो ह्यक्षरविन्यासविशेषावसेयः अर्थालङ्कारस्य बोधनात् पूर्वमेव प्रतीयते । उक्तञ्चाभियुक्तैः—

तया कवितया किं वा तया वनितया तथा ।
पदविन्यासमात्रेण यया न ह्रियते मनः ॥ इति ॥

सरस्वतीकण्ठाभरणे भोजराजोऽपि—"अलङ्कृतमपि श्रव्यं न काव्यं गुणवर्जितम्" इत्याह । तस्माद् गुणवैचित्र्याभावेऽर्थालङ्कारस्य शोभा नास्तीत्यवश्यमेतादृशेषु काव्येषु सौकुमा-र्यमङ्गीकर्त्तव्यं गुणानां प्राणरूपत्वात् । अत एव पूर्वमुक्तम्—'प्राणा दश गुणाः स्मृता' इति ॥७१॥

[ अत्रैव गौडवैदर्भयोर्मतभेदकथनम् ]

**दीप्तमित्यपरैर्भूम्ना कृच्छ्रोद्यमपि बध्यते ।**
**न्यक्षेण क्षयितः पक्षः क्षत्रियाणां क्षणादिति ॥ ७२ ॥**

---

(प्र०) सौकुमार्यगुणमनङ्गीकुर्वतां मतस्य निरासप्रकारं विवृणु ?
(उ०) अस्य पृ० पं० १३
(प्र०) सौकुमार्ये गौडवैदर्भमतयोर्भेदं स्पष्टं प्रकटीकुरु ? (उ०) अस्य पृ० पं० २१

सौकुमार्यविषये गौडानां कवीनां मतमाह—'दीप्तम्' इति । अपरैः=गौडैः कृच्छ्रोद्यम्=कृच्छ्रेण कष्टेन उच्चार्यमपि ओजोगुणव्यञ्जकतया परुषवर्णघटिततया च कष्टेनोच्चारणार्हमपि दीप्तम्=वीररौद्रबीभत्सरसादिरूपामिति [मत्वा] भूम्ना=प्राचुर्येण बध्यते=गुम्फ्यते विरच्यत इति यावत्। अर्थात् **गौडाः** कवयः वीरादिरसाविष्टे काव्ये ओजोव्यञ्जकैः परुषवर्णैरावश्यकत्वेन सौकुमार्यं गुणं न रोचयन्ते। **वैदर्भास्तु** ओजस्विस्थलेऽपि सौकुमार्यं स्वीकुर्वन्ति । यथा (वेणीसंहारे)—

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्॥ इति ।

अत्र रौद्रो रसः तथापि नात्यन्तमुत्कटा वर्णाः सन्ति तस्माद् वर्णपारुष्याभावात्कोमलवर्णसत्त्वादत्रापि सुकुमारताख्यो गुण इति वैदर्भसम्मतं मतम् ।

गौडास्तु यथा यत्र सौकुमार्यं न मन्यन्ते तदुदाहरति—श्लोकार्धेन—'न्यक्षेण' इति । न्यक्षेण=न्यञ्चन्ति नितरामञ्चन्ति ब्राह्मणवधादिकं पापिष्ठं कर्म कुर्वन्तीति 'न्यञ्चः' कार्त्तवीर्याः तान् नीचः स्यति हन्तीति न्यक्षः=परशुरामः "न्यक्ष" इत्यस्य 'क' प्रत्यये पृषोदरादित्वात्सिद्धिः । तेन क्षत्रियाणाम्=राजन्यानाम्, पक्षः=समूहः क्षणात्=अल्पेनैव कालेन क्षयितः=नाशितः । समग्रं क्षत्रियकुलं स्यमन्तपञ्चके यमलोकं प्रति नीतमित्यर्थः ।

अत्र रौद्रो रसः, परं कोमलबन्धस्य परित्यागः कृतः, तदेतादृशस्थले सौकुमार्यं गौडैर्नापेक्ष्यते । यत्तु न्यक्षेण अन्धेन धृतराष्ट्रेण इति व्याख्यातं जीवानन्देन तन्निर्मूलं भारते तदीययुद्धापरिचयात् । अन्यद्वारा कृतेपि तत्र करुणरससम्भवेन रौद्ररसाभावात् । "कृच्छ्रोद्यम्" इति 'वदः सुपि क्यप् [पा० ३।१।१०६] इति सूत्रेण सुप्युपपदात् 'वद्' धातोर्भावे क्यपि रूपम् ॥७२॥

[ अर्थव्यक्तेर्गुणस्य लक्ष्यलक्षणे ]

**अर्थव्यक्तिरनेयत्वमर्थस्य हरिणोद्धृता ।**
**भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिह ॥ ७३ ॥**

'अर्थव्यक्ति' नामकं गुणं सोदाहरणं निरूपयति 'अर्थव्यक्तिः' इति । अर्थव्यक्तिः=अर्थस्य प्रतिपाद्यस्य विषयस्य [यत्] अनेयत्वम्=अकल्प्यत्वम्, अर्थात् अध्याहारादिना विनैव गृहीतैरेव शब्दैरुपस्थितिः सा अर्थव्यक्तिः एतन्नामा गुण इत्यर्थः । 'अव्यवहितान्वयप्रसिद्धार्थपदत्वमर्थव्यक्ति'रिति तु फलितम् । उदाहरति—'हरिणा' इति । इह=लोके हरिणा=वराहावतारेण विष्णुना खुरक्षुण्णनागासृग्लोहितात्=खुरैः क्षुरप्रैः क्षुण्णाः क्षोदिता हता ये नागाः पन्नगाः पातालवासिन इत्यर्थः, तेषाम् असृग्भिः रुधिरैः लोहितात् रक्तात् उदधेः=समुद्रात् उद्धृता=ऊर्ध्वमानीता रसातलादुद्धृत्योपरि स्थापितेत्यर्थः ।

अत्र यावन्तः शब्दा उपात्ताः तैरेवार्थः प्रतीयते नतु विवक्षितार्थबोधाय काचन अध्याहारादिना [कष्टा] कल्पना कृता ।

इयमर्थव्यक्तिः शब्दगुणः । यदाह वामनः—'अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः' [का०

---

१ सकलोपि विवक्षितोऽर्थ इत्यर्थः ।

(प्र०) अर्थव्यक्तिं लक्षणोदाहरणाभ्यां प्रपञ्चय ? (उ०) अस्य पृ० पं० २०

सू० १।२३] इति । अन्येऽपि—'अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम्' इत्याहुः । यथा च श्रीमद्भागवते—

यदा मृधे कौरवसृञ्जयानां वीरेष्वथो वीरगतिं गतेषु ।
वृकोदराविद्धगदाभिमर्शभग्नोरुदण्डे धृतराष्ट्रपुत्रे ॥
माता सुतानां निधनं निशम्य विलप्य घोरं परितप्यमाना ।
तदारुदद्बाष्पकलाकुलाक्षी तां सान्त्वयन्नाह किरीटमाली ॥ इति ।

अत्र निर्दिष्टैरेव पदैः विवक्षितार्थपरिसमाप्तेर्नाध्याहारादिरूपा क्लिष्टकल्पना अतोऽर्थव्यक्तिर्गुणः ।

अर्थगता अर्थव्यक्तिस्तु स्वभावोक्त्यलङ्कारेणैव चरितार्था । उक्तञ्च विश्वनाथेन—'अर्थव्यक्तिः स्वभावोक्त्यलङ्कारेण तथा पुनः' इति । जयदेवस्तु—

'शृङ्गारे च प्रसादे च कान्त्यर्थव्यक्तिसङ्ग्रह' इत्यर्थव्यक्तेः प्रसादगुणे सङ्ग्रहमाचचक्षे । साधु चैतत् तादृशार्थव्यापकत्वात्प्रसादस्य ।

वाग्भटकृतमर्थव्यक्तिलक्षणमपि फलतो दण्डिलक्षणसंवादि । तथाहि—

यदज्ञेयत्वमर्थस्य सार्थव्यक्तिः स्मृता यथा । त्वत्सैन्यरजसा सूर्ये लुप्ते रात्रिरभूद्दिवा ॥

अत्र रात्रेर्हेतुः सूर्यलोपः, सूर्यलोपस्य हेतू रजः, रजसो हेतुः सैन्यमित्यर्थस्य सुखलभ्यत्वादज्ञेयत्वम् । अत्रापि नैव क्लिष्टा कल्पनार्थस्य ॥ ७३ ॥

[ अर्थव्यक्तेः प्रत्युदाहरणवर्णनम् ]

**मही महावराहेण लोहितादुद्धृतोदधेः ।**
**इतीयत्येव निर्दिष्टे नेयत्वमुरगासृजः ॥ ७४ ॥**

अर्थस्य कथं नेयत्वं भवतीति प्रतियोगिनिरूपणद्वारा तामेवार्थव्यक्तिं स्पष्टीकरोति—'मही' इति । महावराहेण=आदिसूकरेण विष्णुना उरगासृजः=पन्नगरुधिरात् हेतोः लोहितात्=रक्तात् उदधेः=सागरात् मही=पृथ्वी उद्धृता=बहिरानीता, इति इयति=एवमादिप्रकारे [एतावति] निर्दिष्टे=प्रथिते कथिते इति यावत् नेयत्वम्=क्लिष्टकल्पनावत्त्वम् 'अर्थस्य भवती'ति शेषः ।

**अयं भावः**—'उरुगासृजः' इति कथिते कथमित्याकाङ्क्षायां सत्यां 'खुरक्षुण्णे'त्याद्यंशस्याध्याहारे सत्येव अर्थः स्फुटं प्रतीयते नान्यथा, तस्मादेतादृशस्थले नार्थव्यक्तिः । यत्र च रूढिप्रयोजनाभावे लक्षणा कृता स्यात् तत्रापि नेयार्थदोषस्थले नार्थव्यक्तिरित्यपि न विस्मरणीयम् ॥ ७४ ॥

---

(प्र०) कुत्र नार्थव्यक्तिरिति दर्शय ? (उ०) अस्य पृ० पं० १८ ।

१ रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनं 'नेयार्थत्वं' दोषः । यथा—"चरणे कमलाघातं मुखं सुमुखि ! तेऽकरोत्" इति । अत्र मुखस्य चरणाभावात् तदाघातासम्भवेन मुख्यार्थस्य बाधः, तेन निर्जितत्वं लक्ष्यम् । परमत्र लक्षणाया मूलं न रूढिः नवा प्रयोजनमिति नेयार्थत्वमस्य ज्ञेयम् । विशिष्टन्तु मत्प्रणीत**काव्यप्रकाशप्रभायां** द्रष्टव्यम् । वस्तुतस्तु—निर्जितत्वातिशयत्वस्य व्यङ्ग्यत्वे प्रकृते दोषाभाव एव तस्मादुदाहरणान्तरं मृग्यम् । यदपि प्रदीपानुसारिभिर्वामनादिभिः निर्जितत्वातिशयत्वस्य प्रयोजनत्वस्वीकारे उत्तमगुणे कमलादौ न्यूनद्वारा चरणाघातादिवर्णनेन वर्ण्यस्यैवापकर्षापत्तिभीतिः प्रकटीकृता तदपि तेषां

**नेदृशं बहु मन्यन्ते मार्गयोरुभयोरपि ।**
**नहि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी ॥ ७५ ॥**

उक्तेऽर्थे गौडवैदर्भयोरैकमत्यमाह—'नेदृशम्' इति । उभयोः=द्वयोः अपि मार्गयोः=वैदर्भीगौड्यो रीत्योः ईदृशम्=नेयत्ववद् वाक्यम् न=नैव बहु=उपयुक्तं मन्यन्ते=स्वीकुर्वन्ति, वैदर्भाः गौडाश्च कवय इति शेषः । अत्र युक्तिमाह—'न' इति । 'हि' यतः शब्दन्यायविलङ्घिनी=शब्दन्यायः शाब्दबोधो वाक्यार्थबोध इति यावत् तस्य विलङ्घिनी=उल्लङ्घनकर्त्री शाब्दबोधविलम्बकारिणी इत्यर्थः, प्रतीतिः=ज्ञानं न=नैव सुभगा=मनोरमा सहृदयहृदयग्राहिणी नेत्यर्थः । सहृदया अध्याहारादिना पदादिकल्पनया कष्टेन जायमानां शाब्दप्रतीतिं नाद्रियन्ते अतो नेयत्वं [दोषः] सर्वथा परिहर्त्तव्यमिति भावः ॥ ७५ ॥

[ उदारतायाः लक्षणम् ]

**उत्कर्षवान् गुणः कश्चित् यस्मिन्नुक्ते प्रतीयते ।**
**तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः ॥ ७६ ॥**

उदारतां लक्षयति-'उत्कर्षवान्' इति । यस्मिन्=वाक्ये (काव्ये) उक्ते=कथिते सति उत्कर्षवान्=वर्णनीयस्य नायकादेः उत्कर्षताजनकः प्रशंसाप्रतीतिकरः कश्चित्=लोकोत्तरः गुणः=दयादाक्षिण्यादिरूपः शौर्योदार्यादिरूपो वा धर्मः प्रतीयते=ज्ञायते तत्=वाक्यम् उदाराह्वयम्=औदार्यगुणोपेतं 'भवति' इति शेषः । तेन=औदार्यगुणेन काव्यपद्धतिः=द्विविधोऽपि काव्यमार्गः गौडवैदर्भसम्मतः काव्यरीतिरूपः सनाथा=उत्कृष्टा 'जायत' इति शेषः । 'वाक्यस्य वर्णनीयोत्कर्षजनकगुणाव्यञ्जकत्वमुदारत्व" मिति फलितं लक्षणम् ।

अयमर्थगतो गुणः । शब्दगतस्तु विकटत्वलक्षणो वामनेनोक्तः—'विकटत्वमुदारता' [का० सू० १।२२] यस्मिन् सति 'नृत्यन्तीव पदानि' इति जनस्य वर्णभावना भवति तत् विकटत्वं लीलायमानत्वं शब्दगतमौदार्यमित्यर्थः । उदाहरणञ्च तस्यैव यथा—"स्वचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनां झणितिरणितमासीत्तत्र चित्रं कलञ्च" इति । अत्र क्रमशो वर्धमानाक्षरपदत्वम् पदप्रथमाद्यक्षराणां पदान्तरप्रथमाद्यक्षरैः सादृश्यञ्च ॥ ७६ ॥

[ उदारताया उदाहरणम् ]

**अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिताऽसकृत् ।**
**तदवस्था पुनर्देव ! नान्यस्य मुखमीक्षते ॥ ७७ ॥**

उदारतामुदाहरति-'अर्थिनाम्'इति । हे ! देव !=राजन् ! अर्थिनाम्=याचकानां कृपणा=दीना अर्थाभावादातुरा दृष्टिः=ईक्षणम् त्वन्मुखे=त्वदानने असकृत्=पुनः पुनः पतिता=प्राप्ता सती

---

साहसमात्रं व्यनक्ति, बहुत्र प्रतीपव्यतिरेकादिषूपमानन्यूनत्वबोधनेपि उपमानोपमेयभावाक्षतेः । तस्मात् "तपर्त्तुपूर्त्तावपि मेदसां भरा विभावरीभिर्बिभराम्बभूविरे" इत्यादौ मुख्यार्थबाधे अतिबृहत्त्वं लक्ष्यते रूढिप्रयोजनान्यतरत्वञ्च नास्तीति नेयार्थता, अतिबृहत्त्वात्पृथक् बृहत्त्वातिशयताया अभावादिति सङ्क्षेपः ।

(प्र०) अर्थव्यक्तिविषये गौडानां विदर्भाणां च विमतिरस्ति नवा ? इति ग्रन्थप्रमाणेन स्पष्टीकुरु ? (उ०) अस्य पृ० पं० १ ।

पुनः=किन्तु तदवस्था=आतुरा भूता अन्यस्य=त्वद्भिन्नस्य मुखम्=आस्यं न ईक्षते=नैवालोकयते ।

अत्र राज्ञा एतादृशं प्रभूतं दानमर्थिभ्यो दत्तं येन पुनस्ते स्वकामप्रपूरणार्थं नान्यमुपसर्पन्ति नापि तादृशो दाताऽन्यः कश्चिदस्तीत्यर्थः सामाजिकहृदयेऽभिव्यज्यमानोऽतिशयेन चमत्कारमाधत्ते । यथा वा **मम—**

यं पश्यसि जगन्मात ! दयादृष्ट्या स्वसेवकम् ।
पुनर्नासौ परं कामं चिनोति मनसा गिरा ॥

अत्र जगदम्बाया दयादृष्ट्या सकलाः कामाः पुर एव स्थिता भवन्ति न पुनर्भक्तस्य कामनाचिन्तावसर इति जगदम्बायाः कोऽपि उत्कृष्टो गुणः काव्यमुदारतागुणोपेतं दर्शयति ॥७७॥

**इति त्यागस्य वाक्येऽस्मिन्नुत्कर्षः साधु लक्ष्यते ।**
**अनेनैव पथाऽन्यत्र समानन्यायमूह्यताम् ॥ ७८ ॥**

उक्तोदाहरणे उदारतां घटयित्वा दर्शयति—'इति' इति । इति=उक्ताकारे त्यागस्य वाक्ये=राज्ञो दानप्रतिपादके काव्ये उत्कर्षः=राज्ञो दानोत्कर्षः साधु=समीचीनं यथा स्यात् तथा लक्ष्यते=प्रतीयते सहृदयैरिति शेषः, अन्यत्र=पद्यान्तरेऽपि अनेन एव पथा=दर्शितेनैव रीतिरूपेण मार्गेण समानन्यायम्=समनियमं (यथा स्यात् तथा) ऊह्यताम्=तर्क्यताम् अर्थात् उक्तरीत्यनुसारेणैव उदारतागुणोपेतं काव्यं विरच्यताम् ।

उदारताया अन्यदुदाहरणं यथा—

विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।
अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम् ॥

अत्र राज्ञो नलस्यौदार्यगुणवर्णनेन उदारतागुणः । एवं भङ्गिविशेषोक्त्याऽर्थप्रत्यायकत्वमुदारता इति दण्ड्याशयः फलति ।

जयदेवस्त्वित्थमाह—

उदारता तु वैदग्ध्यमग्राम्यत्वात्पृथङ्मता ।
मानं मुञ्च प्रिये ! किञ्चिल्लोचनान्तमुदञ्चय ॥ इति ।

अत्रैवार्थे वामनस्यापि संवादः । तथाहि—'अग्राम्यत्वमुदारता' [वा०सू०अ० ३।१३] ग्राम्यत्वप्रसङ्गे अग्राम्यत्वमुदारता ॥ ७८ ॥

प्रयो॰ [ अन्यमतेन उदारतायाः लक्षणम् ]

**श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ।**
**यथा लीलाम्बुजक्रीडासरोहेमाङ्गदादयः ॥ ७९ ॥**

अन्यमतेन उदारतां लक्षयति—'श्लाघ्यैः' इति । श्लाघ्यैः=सुन्दरैः सहृदयहृदयावर्जकैः प्रशंसनीयैः विशेषणैः=विशेष्यस्य धर्मैः युक्तम्=समन्वितं वाक्यम् उदारम्=औदार्यगुणयुक्तं कैश्चित्=कविभिः इष्यते=मन्यत इत्यर्थः । उदाहरणमाह—'यथा' इति । लीलाम्बुज०= 'लीलाम्बुजम्' इत्यत्र अम्बुजे 'लीला' पदनिवेशेन तदीयवर्णसौगन्ध्याद्यतिशयः प्रतीयते । एवं 'क्रीडासरः' इत्यत्र सरसि 'क्रीडा' विशेषणादानेन कमल-कुमुद-जलचर-विहङ्गशोभितस्वच्छस्वादुजलवत्त्वादिकं गम्यते । शुष्के कमले च सरोवरे क्रीडायाः कर्त्तुमनर्हत्वात्, शृङ्गाराद्यनु-

द्दीपकत्वाच्च तस्य । एवं 'हेमाङ्गदम्' इत्यत्र अङ्गदे हेमविशेषणोपन्यासः तस्य सुवर्णमयत्वेन बहुमूल्यत्वादिकव्यञ्जनार्थः । एवमादिषु औदार्यम् ।

अत्र 'कैश्चित्' इति कथनेन अस्मिन्मते स्वस्यानादरः प्रकटीकृतः । तत्र बीजन्तु—अपुष्टार्थदोषराहित्यस्य साभिप्रायविशेषणस्थले परिकरालङ्कारस्य च स्वीकार एव । अस्मद्भावनया तु भङ्गिविशेषोक्त्यार्थप्रत्यायकत्वमत्रापि घटत एवेति 'कैश्चित्' इत्युक्त्वाऽस्मिन्मते दण्डिनामनादरसूचनं स्वातन्त्र्यमावेदयति । अत एव—'चुम्बनं देहि मे बाले दुष्टकामस्य शान्तये' इत्यादिस्थले नोदारता किन्तु ग्राम्यतैव ॥ ७९ ॥

[ ओजोगुणस्य लक्षणम् ]

**ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम् ।**
**पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम् ॥ ८० ॥**

ओजोगुणं लक्षयति—'ओज' इति । समासभूयस्त्वम्=समसनं समासः पदानामेकीभावः तस्य भूयस्त्वं=दैर्घ्यं [ समासप्राचुर्यमित्यर्थः ] यत् तत् ओजः=ओजोनामा गुणः । एतद्=समासदैर्घ्यरूपमोजः गद्यस्य=गद्यकाव्यस्य उत्कलिकाप्रायस्य जीवितम्=प्राणभूतं सार इति यावत् । चूर्णकादिगद्ये तु न दीर्घः समासः इह त्वसावभ्यर्हित इति भावः । अत्र द्वयोरेव मार्गयोः समाना मतिः । पद्यात्मके काव्ये मार्गद्वयस्य भेदमाह—'पद्ये' इति । अदाक्षिणात्यानाम्=दाक्षिणात्यभिन्नानां कवीनां गौडानां पद्येऽपि=गद्यभिन्नेपि वर्णमात्रात्मके बन्धविशेषे इदम्=समासभूयस्त्वमोजः एकम्=अद्वितीयम परायणम् पर आश्रयः बन्धगाढताप्रिया गौडाः कवयः गद्यपद्यात्मके सर्वत्रैव काव्ये अनुप्रासवद्दीर्घसमासमपि रोचयन्ते, वैदर्भाणान्तु पद्यं काव्यं विहाय गद्य एव दीर्घसमासकरणे रुचिरिति विवेकः । अयमोजोगुणः शब्दगतः समासभूयस्त्वरूपत्वात्, तस्य च शब्दस्वरूपत्वात् । आह च वामनः 'गाढबन्धत्वमोजः' (का० सू० १ । ५ ) इति । अर्थगतमोजोगुणं लक्षणोदाहरणाभ्यामाह 'जयदेवः'—

ओजः स्यात्प्रौढिरर्थस्य सङ्क्षेपो वातिभूयसः ।
रिपुं हत्वा यशः कृत्वा त्वदसिः कोशमाविशत् ॥ इति ॥

अस्यायमर्थः—या अर्थस्य प्रौढिः=असतः केनचिदुत्कर्षकरूपेण वर्णनम् अनाश्रयस्याश्रयत्वेन कथनमिति यावत् सा अर्थनिष्ठमोजः । यो विस्तृततरार्थसङ्क्षेपः स शब्दनिष्ठमोजः । एकेनैव यत्नेनोभयमुदाहरति—'रिपुम्' इति । अत्र हननकर्तृत्वानाश्रयस्य करणस्य खड्गस्य तदाश्रयत्वरूपकर्तृत्वेन वर्णनादाद्यमोजः । सङ्क्षेपस्तु स्फुट इति द्वितीयमपि स्फुटम्, प्रकाशकारादीनां मते एतद्विषये प्रकारान्तरं तत एवावगन्तव्यम् ॥ ८० ॥

[ ओजोगुणे विशेषकथनम् ]

**तद्गुरूणां लघूनाञ्च बाहुल्याल्पत्वमिश्रणैः ।**
**उच्चावचप्रकारं तद् दृश्यमाख्यायिकादिषु ॥ ८१ ॥**

ओजोगुणस्य विशेषतां निरूपयति—'तद्' इति । तद्=समासभूयस्त्वात्मकमोजः गुरूणाम्=समासघटकीभूतपदनिष्ठानां गुरुवर्णानां महाप्राणाक्षराणाम् लघूनाम्=समस्तपदवर्त्तिनां लघूनाम् अल्पप्राणाक्षराणाञ्च बाहुल्याल्पत्वमिश्रणैः=बहुलस्य भावो बाहुल्यम् अल्पस्य भावोऽ-

ल्पत्वम् तयोर्द्वयोरुपाध्योर्मिश्रणैः सम्मेलनैः उच्चावचप्रकारम्=नानाविधं भवतीति शेषः । अर्थात् क्वचित् गुरुवर्णानां बाहुल्येन लघूनाञ्चाल्पत्वेन क्वचित् लघूनां बाहुल्येन गुरूणामल्पत्वेन च मिश्रणं कृत्वा समासभूयस्त्वरूपमोजो नानाप्रकारं विज्ञेयम् । तद्=ओजः आख्यायिकादिषु बाणादिमहाकविप्रणीतेषु गद्यकाव्येषु दृश्यम्=अवलोक्यम् । अत्र तदुदाहरणेन ग्रन्थगौरवं स्यादिति भावः । आदिपदेन चम्पूविरुदादीनां ग्रहणम् । परमिदं वैदर्भकवीनां मतानुरोधेनोक्तम् । गौडानां मते तु पद्यमयेष्वपि काव्येषु ओजस उच्चावचप्रकारता दृश्यते । यथा सूर्यशतकादौ । 'आख्यायिका' पदस्य विनिवेशेन कथायां रौद्रादिरसेऽपि न दीर्घः समास उचित इति सूचितम् ॥ ८१ ॥

**अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा ।**
**पीनस्तनस्थिताताम्रकम्रवस्त्रेव वारुणी ॥ ८२ ॥**

गौडमतानुसारेण पद्ये दीर्घसमासरूपमोजो दर्शयति—'अस्त०' इति । अस्तः=अस्ताचलः तस्य मस्तके=शृङ्गे पर्यस्ताः=परितो लम्बमानाः समस्ताः=सर्वे ये अर्कस्य=सूर्यस्य अंशवः=मयूखाः सायङ्कालत्वादारक्ताः किरणाः तैः संस्तरः=आवरणमाच्छादनं यस्याः सा एवंभूता वारुणी=वरुणदेवताका पश्चिमा दिक् । 'पीन०' इति—'पीने' पीवरे नवयौवनहेतोर्घने [ नतु शिथिले ] 'स्तने' कुचे 'स्थितं' पतितं आताम्रम् किञ्चिद् रक्तं 'कम्रं' सुन्दरं 'वस्त्रं' वसनमुत्तरीयं चोलिकाख्यं वा यस्याः सा तादृशी इव=नायिकेव लक्ष्यते इत्यर्थः ।

अत्र सर्वत्र समासबाहुल्यरूपमोजः ॥ ८२ ॥

[ ओजोगुणे मतान्तरकथनम् ]

**इति पद्येऽपि पौरस्त्या बध्नन्त्योजस्विनीर्गिरः ।**
**अन्ये त्वनाकुलं हृद्यमिच्छन्त्योजोगिरां यथा ॥ ८३ ॥**
**पयोधरतटोत्सङ्गलग्नसन्ध्यातपांशुका ।**
**कस्य कामातुरं चेतो वारुणी न करिष्यति ॥ ८४ ॥**

ओजोगुणविषये अन्येषां मतमाह—'इति' इति । पौरस्त्याः=पूर्वदिग्भवा गौडाः कवयः इति=उक्तप्रकारेण ओजस्विनीः=ओजोगुणवतीः गिरः=काव्यवाणीः बध्नन्ति=ग्रन्थयन्ति अर्थात् समासभूयस्त्वमेव तेषामोजोगुणलक्षणम् । अपरमतेन ओजोलक्षणमाह—'अन्ये तु' इति । अन्ये तु=केचित्तु कवयः गिराम्=काव्यवाक्यानाम् अनाकुलम्=अनाकुलत्वं [भावप्रधानो निर्देशः उत्कटसमासादिना श्रोतॄणां बुद्धेर्यो व्याकुलीभावः तद्विहीनत्वं हृद्यम्=सामाजिकहृदयावर्जकम् ओजः=ओजोगुणम् इच्छन्ति=कामयन्ते ।

समासदैर्घ्यम्, स्वल्पसमासता, समासाभावो वा यत्किमपि भवतु परं यदाकर्णनमात्रेण श्रोतारो बुद्धेराकुलीभावं न भावयेयुः यच्च श्रुतिसुखावहं स्यात् तदेव वाक्यमोजोगुणयुक्तमस्तीति एकेषां कवीनामाशयः । एतदुदाहरणेन स्पष्टीकरोति—'पयोधर०' इति । पयोधरः वारिद एव पयोधरः स्तनः कुचः तस्य यः तटः=प्रान्तभागः तस्य उत्सङ्गे=अङ्के लग्नः=सङ्गतः

(प्र०) गौडमतानुसारेण ओजोगुणमुदाहरणे लक्षणद्वारा स्पष्टीकुरु ?
(उ०) अस्य पृ० पं० ८ ।
(प्र०) मतान्तरेण ओजोगुणं विवृणु ? (उ०) अस्य पृ० पं० १६ ।

सन्ध्यातपः सायङ्कालिकसूर्यद्योतः स एव अंशुकं=किञ्चिद्रक्तं वसनं यस्याः सा तादृशी वारुणी= पश्चिमा दिक् कस्य=कामिनः पुंसः चेतः=हृदयं कामातुरम्=मदनविह्वलं न करिष्यति=अपितु सर्वस्यैव विधास्यति। 'प्रकाशो द्योत आतप' इत्यमरः।

यथा रक्तवसनाच्छन्नमालोकितं कामिनीकुचं सद्य एव पुरुषहृदये काममावेशयति तत्सा-म्यादुद्दीपकत्वाच्चेयमपि तथा करिष्यतीति कवेराकूतकम्।

अत्र पूर्वार्द्धं दीर्घसमासोपेतमपि 'अस्तमस्तके' त्यादिश्लोकवत् श्रोतृबुद्धिं नाकुलयति किन्तु विच्छित्तिविशेषतया विलक्षणं श्रवणजनितमानन्दं तनोतीति सहृदयाः साक्षिणः। उत्त-रार्धमपि 'कामातुर' मिति न दीर्घसमासवत् समासाभाववच्च तथापि तद्धृदयहारीति स्वयं संवेद-नीयम्। तस्मात्सर्वत्र समासभूयस्त्वमेव ओज इति नैतच्चारु, किन्तु दीर्घसमासवत्वमल्पसमास-वत्वञ्चापि एकस्मिन् काव्ये सहृदयावर्जकश्चेत् तदापि ओज इति सारः।

अर्थगतमोजोगुणन्तु वामन इत्थमाह—'अर्थस्य प्रौढिरोजः' [का० सू० अ० ३। अधि० २। सू० २] अर्थस्याभिधेयस्य प्रौढिः प्रौढत्वं यत् तत् ओजः। सा च पञ्चधा भवति। तद्यथा—

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च॥

पदार्थे वाक्यरचनं यथा—'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः' इति। अत्र चन्द्रपद-वाच्येऽर्थे 'नयनसमुत्थं ज्योतिरत्रेः' इति वाक्ये प्रयुक्तम्। पदसमूहश्च प्रकृते वाक्यमभिप्रेतम्। वाक्यार्थे च पदाभिधा यथा—'दिव्येयं न भवति, किन्तु मानुषी' इति वक्तव्ये 'निमिषति' इति कथनम्। वाक्यार्थस्य व्यासो यथा—'परस्वं नापहर्त्तव्यम्' इत्येकस्मिन् वाक्यार्थे वक्तव्ये—

परान्नं नैव हर्त्तव्यं परवस्त्रं तथा नच।
सुवर्णं नो परस्यापि चोरणीयं कदाचन॥ [इदं **मम**]

इत्येवमादिना व्यासेनाभिधानम्। वाक्यार्थस्य समासो यथा—

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥

अत्रैकवाक्ये बहुवाक्यार्थनिबन्धनात् समासः। वाक्यार्थस्य साभिप्रायत्वं यथा—'कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये' इति। अत्र 'पिनाकपाणे' रिति विशेषणस्य साभिप्रायत्वम्।

यत्त्वत्र 'एतच्चतुर्विधप्रौढिरूपमोजः शब्दगुणः साभिप्रायत्वरूपन्त्वर्थगुण' इति कश्चि-दाह तन्मन्दम्। वामनोक्तिविरोधात् प्रमाणशून्यत्वाच्च॥ ८३, ८४॥

[ कान्तेर्लक्षणम् ]

**कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात्।**
**तच्च वार्त्ताभिधानेषु वर्णनास्वपि दृश्यते॥ ८५॥**

क्रमप्राप्तं 'कान्ति' गुणं लक्षयति—'कान्तम्' इति। लौकिकार्थानतिक्रमात्=लोके विदितः लौकिकः लोकप्रसिद्ध इत्यर्थः, स चासावर्थः प्रतिपाद्यं वस्तु तस्यानतिक्रमात् अनुल्लङ्घनात्

**(प्र०)** कान्तेः किं लक्षणम्? **(उ०)** अस्य० पृ० पं० ३०।

त्यागाभावादिति यावत्, सर्वजगत्कान्तम्=सर्वेषां जगतां सुरासुरादिमनुष्यपर्यन्तानां कान्तं हृद्यम् बाधबुद्धयभावसहकृतझटित्यर्थज्ञानेन चमत्कारकारि यद् वाक्यं तत् कान्तम्=कान्तिनामक-गुणयुक्तं भवति । 'लोकप्रसिद्धवस्तुवर्णनं कान्ति'रिति तु फलितं लक्षणम् । तच्च=कान्तिगुण-युक्तं वाक्यञ्च वार्त्ताभिधानेषु=कुशलप्रश्नप्रियालापादिप्रस्तावेषु तथा वर्णनासु=यथास्थितवस्तु-स्वरूपनिरूपणासु अपि च दृश्यते=आलोक्यते कविसमये इति शेषः ।

केचित्तु—वार्त्ता इतिहासः तदभिधानेषु इतिहासानां यथावस्थितरूपेणैव वर्णनीयत्वात् अन्यथावर्णने तु श्रोतॄणामनाश्वासप्रसङ्गः, तेन च विनेयानां शिक्षाहीनानां राजकुमारादीनां कविकृतेषु बन्धेषु प्रवृत्तिरेव न स्यादिति व्याचक्षते ।

इयं कान्तिरर्थगुणः अर्थबोधात्प्रागप्रतीतेः । शब्दगता कान्तिस्तु—'औज्ज्वल्यं कान्तिः' [का० सू० ३।२५] इति बन्धस्योज्ज्वलत्वरूपा वामनोक्ता ज्ञेया । उदाहरणं तत्रैव यथा-'कुरङ्गी-नेत्रालीस्तबकितवनालीपरिसरः' इति । अयमाशयः—'पत्रम्' इति वक्तव्ये 'किसलय' मित्यादि, 'राज्ञि' इति वक्तव्ये 'राजनि' इति, 'जलधौ' इति वक्तव्ये 'अधिजलधि' इति, 'कमलमिव' इति वक्तव्ये 'कमलायते' इत्यादि शब्दगतकान्तेर्हेतुर्बोध्यः ।

'लौकिक' इत्यत्र 'लोकसर्वलोकाट्ठञ्' [५।१।४४] इति सूत्रेण विदितार्थे ठञ् ॥८५॥

[ कान्तेरुदाहरणम् ]

**गृहाणि नाम तान्येव तपोराशिर्भवादृशः ।**
**सम्भावयति यान्येव पावनैः पादपांशुभिः ॥ ८६ ॥**

आदौ वार्त्ताभिधाने कान्तिमुदाहरति--'गृहाणि' इति । 'नाम' इति सम्भावनामाह । तानि एव गृहाणि=प्रशस्तगृहाणि सन्ति इति शेषः । यानि भवादृशः=लोकोत्तरमहिमशाली तपोराशिः=पुण्यात्मा पावनैः=पवित्रैः पादपांशुभिः=चरणरजोभिः एव सम्भावयति=सम्भा-लयति स्वागमनेन पवित्रीकरोतीत्यर्थः ।

अत्र 'गृहाणि' इति पदं लक्षणया प्रशस्तगृहबोधकम्, प्रशस्ततताया आधिक्यञ्च व्यङ्ग्यम् । अत एव अर्थान्तरसङ्क्रमितवाच्यो लक्षणामूलो ध्वनिः काव्यमिदम् । अत्र सज्जन-चरणप्रवेशेन स्थानस्योत्तमतारूपो वर्णनीयोऽर्थो लोकप्रसिद्ध एव, तस्मादियं प्रियालापरूपा वार्त्ता, तत्सम्बन्धी अर्थगतः कान्तिगुणः ॥ ८६ ॥

**अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।**
**अवकाशो न पर्याप्तस्तव बाहुलतान्तरे ॥ ८७ ॥**

वर्णनायां कान्तिगुणमुदाहरति—'अनयोः' इति । हे ! अनवद्याङ्गि=अनवद्यानि रच-नादोषरहितानि सुन्दराणि अङ्गानि अवयवा यस्याः तत्सम्बुद्धौ जृम्भमाणयोः=एधमानयोः वृद्धिं गच्छतोरिति यावत् अनयोः स्तनयोः=कुचयोः तव बाहुलतान्तरे=बाहुरेव लता वेष्टनसाम्यात् तस्या अन्तरे मध्ये अर्थात् वक्षसि अवकाशः=स्थानं न पर्याप्तः=नैव पूर्णोऽस्ति । अतिपीनौ उत्तुङ्गौ च स्तनौ, वक्षश्च अल्पायामम्, तत्र यथोचितस्थानलाभाभावात् परस्परं संघट्टिताविव वर्त्तेते ।

अत्र स्तनयोर्वर्णनं प्रस्तुतम्, तयोरतिपीनोत्तुङ्गत्ववर्णनञ्च लोकप्रसिद्धानुसारमेव कृत-मिति वर्णनागतः कान्तिगुणः ।

**जयदेवस्तु**—इदं पद्यं 'बाहुलतयोरन्तरे स्तनपर्याप्तावकाशसम्बन्धेऽपि तदसम्बन्ध उक्त' इत्यभिप्रायेण सम्बन्धातिशयोक्तावुदाजहार । 'अत्युक्ति' नामकालङ्कारेऽपि च । सम्बन्धातिशयोक्तिलक्षणन्तु—'योगेऽप्ययोगः सम्बन्धातिशयोक्तिरितीर्यते' इत्याचचक्षे ॥ ८७ ॥

[ उदाहरणद्वयेऽपि कान्तिलक्षणघटनम् ]

**इति सम्भाव्यमेवैतद्विशेषाख्यानसंस्कृतम् ।**
**कान्तं भवति सर्वस्य लोकयात्रानुवर्त्तिनः ॥ ८८ ॥**

श्लोकद्वयेऽपि कान्तिगुणं घटयति—'इति' इति । इति=उक्तश्लोकद्वयनिरूप्यं सम्भाव्यम् एव=सम्भवस्वरूपमेवास्ति, नात्र कविना प्रौढोक्तिराश्रितेति भावः । एतत्=उपर्युक्तं श्लोकद्वयात्मकं काव्यम् विशेषाख्यानसंस्कृतम्=विशेष उत्कर्षः तस्य आख्यानं कथनं तेन संस्कृतं सम्यगलङ्कृतं सुशोभितं सत् लोकयात्रानुवर्तिनः=लोकयात्रा लौकिको व्यवहारः तदनुवर्त्तिनः तदनुसन्धानपरायणस्य लोकव्यवहारोत्पन्नसंस्कारवतः सर्वस्य=जनस्य कान्तम्=मनोरमं भवति, अतएव कान्तिगुणोपेतं काव्यमिदमित्यर्थः ।

'कान्त'मिति कथनेन लोकप्रसिद्धवस्तुवर्णनमात्रं न कान्तिरिति सूचितम् । अन्यथा 'गौरयं घासमत्ति' 'काको रटति शाखायाम्' इत्यादावपि कान्तिः स्यात् । किन्तु कान्तत्वमेव सा, अर्थात् विच्छित्तिविशेषशालित्वे सति [वैचित्रीजनकोत्कर्षबोधकविशेषणोपन्यासत्वे सति] लोकप्रसिद्धवस्तुवर्णना कान्तिः । वैचित्र्यस्यैव गुणालङ्कारस्वरूपत्वादिति तु न विस्मर्त्तव्यम् । यथा—

आगम्यतां सखे ! गाढमालिङ्ग्यात्र निषीदताम् ।
सन्दिष्टं यन्निजभ्रातृजायया तन्निवेदय ॥ इति ।

अत्रापि विच्छित्तिविशेषतया लोकप्रसिद्धसन्देशात्मकवस्तुवर्णनारूपा कान्तिर्ज्ञेया । यथा वा **मम**—

मत्ताश्वत्वरसङ्कुलेऽस्मिन् पण्यमार्गे भरोद्वहाः ।
वहन्ति भारं भूयांसं बलीवर्दा इवापरे ॥ इति ॥

अत्रापि लोकप्रसिद्धभारोद्वहनवस्तुवर्णनात्मिका स्फुटा कान्तिः ॥ ८८ ॥

[ कान्तिविषये गौडानां मतभेदकथनम् ]

**लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः ।**
**योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः ॥ ८९ ॥**

लक्षितकान्तौ गौडानां मतभेदमाह—'लोकातीत' इति । अप्यर्थे इवाव्ययम् । योऽर्थः=प्रतिपाद्यं वस्तु लोकातीत इव=लोकप्रसिद्धिमतिक्रम्य वर्त्तमानोऽपि अध्यारोप्य=उपचर्य उपचारं कृत्वा विवक्षितः=वक्तुमिष्टः स्यात् तेन=उपचरितेनार्थेन विदग्धाः=गौडाः कवयः अतितुष्यन्ति=बहुप्रसन्ना भवन्ति । इतरे जनाः=वैदर्भाः कवयः न=नैव तेन तुष्यन्ति न ते गौडमतानुरोधिन इत्यर्थः । 'विदग्धा' इति सोपहासमुक्तिविशेषेण दग्धा असम्भव्यर्थानुरोधिमनःक्लेशवन्त इत्यर्थः । प्रौढोक्तिप्रिया गौडाः, यथावद्वस्तुवर्णनाप्रियाः वैदर्भा इत्युक्तलक्षणां कान्तिं गौडा न मन्यन्त इति सारः ।

---

(प्र०) कान्तिविषये गौडानां मतभेदे वीजं ब्रूहि ? (उ०) अस्य पृ० पं० २५ ।

अनया रीत्या अत्युक्त्यतिशयोक्तिस्थले विद्यमाना कान्तिर्गौडमतानुरोधिनी कविप्रौढोक्तिमन्तरा द्वयोरलङ्कारत्वासत्त्वात्, तस्माद् 'अनयोरनवद्याङ्गि' इत्युदाहरणं वैदर्भमते कथं घटत इति सन्तः सूक्ष्मया धिया स्वयमालोचयन्तु। ग्रन्थगौरवभयात् नाधिकं तन्यते ॥८६॥

[ गौडमते निरुक्तकान्तेर्विपर्ययः ]

**देवधिष्ण्यमिवाराध्यमद्यप्रभृति नो गृहम्।**
**युष्मत्पादरजःपातधौतनिःशेषकिल्विषम् ॥ ९० ॥**

गौडमतेन वार्त्तायां निरुक्तकान्तेर्विपर्ययं दर्शयति—'देवधिष्ण्यम्' इति। अद्यप्रभृति=अद्यदारभ्य नः=अस्माकं गृहम्=सद्म युष्मत्पा०=युष्माकं पादरजसः पातेन चरणरेणोः सम्पर्केण धौतं क्षालितं विध्वस्तं दूरीकृतमित्यर्थः किल्विषं पापं यस्य तत् तादृशं सत् देवधिष्ण्यमिव=देवमन्दिरमिव आराध्यम्=संसेव्यं 'भविष्यति' इति शेषः।

अत्र महापुरुषाणां चरणरजःस्पर्शेन गृहस्य पवित्रता लोकप्रसिद्धैव। देवतासाम्यं तु तत्र कविप्रौढोक्त्यारोपितमेवेति वार्त्तायां विपर्ययः ॥ ९० ॥

**अल्पं निर्मितमाकाशमनालोच्यैव वेधसा।**
**इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥ ९१ ॥**

वर्णनायां गौडमतेन निरुक्तकान्तेर्विपर्ययमाह—'अल्पम्' इति। भवत्याः स्तनजृम्भणम्=स्तनयोर्वक्षोजयोर्जृम्भणं उपचयः वृद्धिरिति यावत् एवंविधम्=विशालम् अधिकावकाशापेक्षि भावि=भविष्यति इदम् अनालोच्य=एतत् अविविच्यैव वेधसा=विधात्रा आकाशम्=गगनम् अल्पम्=न्यूनं निर्मितम्=रचितमित्यन्वितोऽर्थः।

अत्र प्रजापतेरविचारपूर्वकाकाशरचनावर्णनया स्तनयोरतिपीनत्वोत्तुङ्गत्वे प्रतिपादिते। तदेतत्सर्वमत्युक्तिरूपं कवेः स्वप्रौढिकल्पितं नतु लोकप्रसिद्धेन रूपेण वर्णितम्, तादृशं तत् प्रयोक्तुरुपहसनीयतां प्रकटीकरोति, तस्मान्नेदृशं वाक्यं कान्तामिति वैदर्भाभिप्रायः ॥ ९१ ॥

**इदमत्युक्तिरित्युक्तमेतद्गौडोपलालितम्।**
**प्रस्थानं प्राक् प्रणीतन्तु सारमन्यस्य वर्त्मनः ॥ ९२ ॥**

उक्तमर्थमुपसंहरति—'इदम्' इति। इदम्=उपरि दर्शितमेवम्प्रकारं काव्यम् 'अत्युक्तिः' इत्युक्तम्=अत्युक्तिनाम्ना कथितमालङ्कारिकैः। तथा च **जयदेवः**—

अत्युक्तिरद्भुतातथ्यशौर्योदार्यादिवर्णनम्।
त्वयि दातरि राजेन्द्र! याचकाः कल्पशाखिनः ॥ इति ॥

अत्राद्भुतं मिथ्यारूपमौदार्यमुक्तमत्युक्तिः। सरस्वतीकण्ठाभरणे 'भोजराजो' प्याह—

लौकिकार्थमतिक्रम्य प्रस्थानं यत्र वर्ण्यते। तदत्युक्तिरिति प्रोक्तं गौडानां मनसो मुदे ॥ इति।

एतद्=उक्तम्पद्यं गौडोपलालितम्=गौडैः कविभिर्मनोहरतयाऽङ्गीकृतमित्यर्थः। परमत्र वैदर्भाणामरुचिरेवेत्याह—'प्रस्थानम्' इति। प्राक्=पूर्वं प्रणीतम्=रचितम् प्रस्थानम्=लोकप्रसिद्धवस्तुवर्णनारूपम् अन्यस्य=गौडभिन्नस्य वर्त्मनः=वैदर्भमार्गस्य सारम्=उत्कृष्टत्वेनोपादेयमस्ति।

---

(प्र०) गौडमते वार्त्ताकान्तेर्विपर्ययमुदाहर? (उ०) अस्य पृ० पं० ५।
(प्र०) वर्णनायां कान्तेर्गौडमतोदाहरणं कथय? (उ०) अस्य पृ० पं० १३।

एवम्प्रकारो गौडीवैदर्भीरीत्योः कान्तिगुणे भेदो ज्ञातव्यः। केषाञ्चिचिन्मते तु वैदर्भमतानुसारेण कान्तिविपर्ययो गुणगतो दोषः। उक्तञ्च–'कान्तेर्विपर्ययाद्वाक्यं ग्राम्यामित्यभिधीयते' इति। यथा–

विरहे ते निषीदन्तं विषीदन्तं तवान्तिके।
कन्ये! कामयमानं मां न त्वं कामयसे कथम्॥

अत्र ग्राम्यतया कान्तिराहित्यं बोध्यम्। अर्थस्वरूपे च कान्तिविपर्ययोऽयमाभाति॥६२॥

[ समाधेर्लक्षणम् ]

**अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना।**
**सम्यगाधीयते यत्र स समाधिः स्मृतो यथा॥ ६३॥**

क्रमप्राप्तं समाधिं गुणं लक्षयति–'अन्यधर्म' इति। अन्यधर्मः=अन्यस्य अप्राकरणिकस्य अप्रस्तुतस्येति यावत् यो धर्मः गुणक्रियादिरूपः ततः=तस्माद् अन्यत्र=तद्भिन्ने प्राकरणिके प्रकृते वस्तुनि लोकसीमानुरोधिना=लोकमर्यादामनुसरता वक्त्रा यत्र=वाक्यार्थे सम्यक्=समीचीनतया आधीयते=साध्यवसानया गौण्या लक्षणया उपचर्यते आरोप्यते सः=आरोपात्मको वाक्यार्थः समाधिः=समाधिनामकगुणवानित्यर्थः। एवञ्च 'प्रकृते वस्तुनि अप्रकृतस्य लोकप्रसिद्धो विच्छित्तियुतो धर्मारोपः समाधि' रिति फलितं लक्षणम्। धर्मस्य समारोपे एवायं गुणः। यत्र तु धर्मिणः समारोपस्तत्र 'अतिशयोक्ति' रलङ्कार इत्यनयोर्विशेषः॥ ६३॥

[ समाधेरुदाहरणम् ]

**कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च।**
**इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः॥ ६४॥**

समाधिमुदाहरति—'कुमुदानि' इति। कुमुदानि=कैरवाणि नीलोत्पलानीत्यर्थः। निमीलन्ति=मुकुलीभवन्ति च=तथा च कमलानि=पद्मानि दिवाविकाशीनि सरोजानि उन्मिषन्ति=विकसन्ति। प्रातःकालवर्णनमिदम्। अत्र प्रस्तुतयोर्नेत्रयोर्निमीलनोन्मेषौ धर्मौ अप्रस्तुतयोः कुमुदकमलयोः सङ्कोचविकाशरूपधर्मतादात्म्येनाध्यवसितौ। सादृश्यातिशयसामर्थ्यात्, तौ च लोकप्रसिद्धावेवाभिन्नतयोक्तौ। एतत्स्वयं स्फुटीकरोति—'इति' इत्युत्तरार्धेन। इति=दर्शितप्रकारेण नेत्रक्रियाध्यासात्=नेत्रयोः क्रियाभ्यां निमीलनोन्मेषरूपाभ्यां सह अध्यासात्=आरोपात् तद्वाचिनी=तयोर्निमीलनोन्मीलनयोः वाचिनी प्रतिपादिका श्रुतिः=नेत्रक्रियावाचकः शब्दः लब्धा=स्वप्रतिपादकतया अवगता। अर्थात् नेत्रकमलयोरभेदमारोप्य तत्क्रिययोरपि अभेदबुद्ध्या द्वयोरेकेनैव शब्देन यत्प्रतिपादनं तदेव समाधिर्गुणः। सोऽयमर्थगुणः। अर्थ एवार्थान्तरस्यारोपात्। शब्दगतः 'समाधि' स्तु आरोहावरोहक्रमरूपः वामनोक्तोऽन्यः। तथाच वामनसूत्रम्—

(प्र०) समाधेर्लक्षणं लिखित्वा व्याख्याहि? उदाहरणे च योजय?

उ०) अस्य पृ० पं० ७।

१ अर्थगतं समाधिं वामनः प्रकारान्तरेणावर्णयत्। तथाहि—

'अर्थदृष्टिः समाधिः' (अध्या० २। सू०६) अर्थस्य दर्शनं दृष्टिः। समाधिकारणत्वात् समाधिः। अवहितं हि चित्तमर्थान् पश्यतीति०। 'अर्थो द्विविधोऽयोनिरन्यच्छायायोनिश्च' (अध्या० २। सू० ७) इति। तद्यथा—

'आरोहावरोहक्रमः समाधिः' [का० सू० १। १२] इति। आरोहस्यावरोहे सति परिहारः अवरोहस्य वा आरोहे सति परिहारः इति तत्सूत्रार्थः। तत्रारोहपूर्वकोऽवरोहो यथा—'निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे०' इति। अत्र 'निरानन्दः कौन्दे' इति गुर्वक्षरबाहुल्यादारोहः। 'मधुनि' इत्यत्र लघ्वक्षरप्राचुर्यादवरोहः। अवरोहपूर्वस्त्वारोहो यथा—'नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरव' इति। अत्र 'नरा' इति शैथिल्यादवरोहः 'शीलभ्रष्टा' इत्यत्र गुर्वक्षरप्राचुर्यादारोहः। एवञ्च द्विविधः समाधिः शब्दगतोऽर्थगतश्चेत्युक्तं भवति।

'वाग्भट' श्चेत्थमाह—

स समाधिर्यदन्यस्य गुणोऽन्यत्र निवेश्यते।
यथाऽश्रुभिररिस्त्रीणां राज्ञः पल्लवितं यशः॥ इति।

अत्रारिस्त्रीणामश्रुभिः राज्ञो यशः पल्लवितमित्युक्तम्, तत्र पल्लवगुणो वृक्षसम्बन्धी स यशस्यारोपितः।

यत्र तु धर्मधर्मिणोरुभयोरप्यारोपस्तत्रातिशयोक्तिरित्युक्तम्। तद्यथा **मम**—

आकाशेऽस्ति काचिद्वापी ततः पद्माऽतिपेलवा।
चन्दनाढ्यौ ततः शैलौ तत्रस्थामृतभागिनः॥ इति।

अत्र वाप्यादिशब्दैर्नाभिप्रभृतयोऽध्यवसिताः। अत्र च धर्मधर्मिणोरुभयोरेव समारोपः। अर्थगतस्य समाधेरपरमुदाहरणं यथा **मम**—

सखे! पश्य कथं विद्युच्चाञ्चल्यप्रतियोगिनौ।
स्फुरतः पुरतोऽस्माकमेतौ खञ्जनपोतकौ[1]॥

अत्र प्रस्तुतयोः कान्ताचपलनेत्रयोश्चापल्यं धर्मः अप्रस्तुतयोः खञ्जनयोः स्फुरणरूपतादात्म्येनाध्यवसितः॥ ९४॥

[ समाधिगुणस्य बीजप्रदर्शनम् ]

**निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्।**
**अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते॥ ९५॥**

---

आश्वपेहि मम शीधुभाजनाद्यावदग्रदशनैर्न दश्यसे।
चन्द्र! मद्दशनमण्डलाङ्कित खं न यास्यसि हि रोहिणीभयात्॥
मा भैः शशाङ्क! मम शीधुनि नास्ति राहुः
खे रोहिणी वसति कातर किं बिभेषि।
प्रायो विदग्धवनितानवसङ्गमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम्॥

अत्र पूर्वस्य श्लोकस्यार्थोऽयोनिः। द्वितीयस्य च अन्यच्छायायोनिरिति विस्तरस्त्वन्यतोऽवसेयः।

१ 'पोतक' पदनिवेशेन चाञ्चल्यातिशयो व्यङ्ग्यः।

(प्र०) कुत्र के २ शब्दाः कथं न ग्राम्यतादोषकरा इति सप्रमाणं सोदाहरणं विवृणु?
(उ०) अस्य पृ० पं० २२।

अर्थगतोऽयं समाधिर्गौणलक्षणामूल इत्युक्तम्, तदेव विशदीकरोति—'निष्ठ्यूत०' इति। निष्ठ्यूतम्, उद्गीर्णम्, वान्तम् इत्येवमादि पदम्, गौणवृत्तिव्यपाश्रयम्=गौणी या वृत्तिर्गुणयोगाद् जायमाना लक्षणा सैव व्यपाश्रयो विशिष्ट आश्रयो यस्य तत्, अर्थात् सादृश्यसम्बन्धेन मुख्यमपि यदमुख्यार्थे प्रयुक्तं तद् अतिसुन्दरम्=अतिहृद्यं समाधिगुणाश्रयो भवतीत्यर्थः। अन्यत्र=गौणवृत्त्यभावस्थले ग्राम्यकक्षाम्=ग्राम्यतादोषपक्षं विगाहते=प्राप्नोति।

निपूर्वकात् 'ष्ठिवु निरसने' इति निरसनार्थकात् 'ष्ठिवु' धातोः भावे क्तः। 'च्छ्वोः शूडनुनासिके च' [ ६। ४। १९ ] इति सूत्रेण वस्य ऊठि कृते यणि 'निष्ठ्यूतम्' इति रूपम्। उत्पूर्वकात् निगरणार्थकात् 'गॄ' धातोः भावे क्तः। ततः 'ॠत इद्धातोः' [ ७।१।१०० ] इति सूत्रेण ॠकारस्य इत् रपरः। 'रदाभ्यां निष्ठातो नः०' [८।२।४२] इति नकारे कृते 'र्वोरुपधाया दीर्घ इकः' 'हलि च' [८।२।७६] इति दीर्घे, णत्वे च रूपम्। 'वम्' धातोः 'नपुंसके भावे क्तः' [३।३।११४] इति क्तः। 'अनुनासिकस्य क्विझलोः क्ङिति' [६।४।१५] इति दीर्घे अनुस्वारपरसवर्णौ च रूपम्।

अयमत्राशयः—सादृश्यसम्बन्धप्रयुक्ता लक्षणा गौणी। 'गुणतो गुणवृत्तिरिष्यते' इत्युक्तेः। यदा मुख्यया शब्दवृत्त्या [ अभिधया ] निष्ठ्यूतोद्गीर्णवान्ताद्याः शब्दाः प्रयुज्येरन् तदा तु तत्र [ वाक्ये ] ग्राम्यतादोषो भवति। परं त एव ग्राम्यतादोषप्रयोजका शब्दा यदा गौण्या शब्दशक्त्या प्रयुक्ताः तदा परगुणवन्त एव भवन्ति। लक्षणायाः फलभूतस्तादात्म्यारोप एवात्र गुणः, एवञ्च समाधिगुणस्य मूलभूता गौणी लक्षणेति सिद्धम्। कारिकास्थं 'गौणवृत्ति' पदं सम्भावनामप्युपलक्षयति तेनोत्प्रेक्षास्थले मुख्यया वृत्त्यापि प्रयुज्यमानमश्लीलपदं न दोषावहमिति ध्येयम् ॥ ६५ ॥

**पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः।**
**भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥ ६६ ॥**

उक्तमर्थमुदाहरणे घटयति—'पद्मानि' इति। सायंकालिकपवनसङ्गेन स्खलत्परागाणां पद्मानां वर्णनमिदम्। पद्मानि=कमलानि [ कर्तृपदमिदम् ] अर्कांशुनिष्ठ्यूताः=अर्कस्य सूर्यस्य अंशवः किरणाः तैर्निष्ठ्यूताः नितरां क्षिप्ताः पावकविप्रुषः=वह्निस्फुलिङ्गान् पीत्वा=आचम्य उद्गीर्णारुणरेणुभिः=उद्गीर्णाः बहिष्कृताः अरुणाः रक्ता रेणवः धूलयः परागा यैः एवंभूतैः मुखैः भूयः=पुनः पुनः वमन्ति इव=उद्गिरन्तीवेति स्वरूपोत्प्रेक्षा। अत्र निष्ठ्यूतोद्गीर्णशब्दयोः शरीरसम्बन्धिकफादिनिक्षेपे शक्तिः, तथापि निक्षेपात्मकसादृश्यात् निक्षेपमात्रेऽर्थेऽनयोर्लक्षणा सा च गुणयोगाद् गौणी। एवञ्चास्मिन् काव्ये सहृदयहृदयावर्जकतां प्राप्ताविमौ शब्दौ समाधिगुणं स्फुटीकुरुतः नतु ग्राम्यतां भजेते।

यथा वा **मम**—

> उद्वन्त्यमूनीति हि नाकलोकः सौरप्रकाशेन चमत्कराणि।
> इत्याहुरेकेऽथ वयं भणामो निष्ठ्यूतमेतच्छशिनो रुजायाम् ॥

पूर्वत्रोत्प्रेक्षा, अत्र त्वपह्नुतिरिति विशेषः।

इदन्तु बोध्यम्—यद्यपि निष्ठ्यूतादिपदे गौण्या लक्षणया समाधिरेव गुणो न दोषः तथापि

'वमन्ति' इत्यत्र तु नैवास्ति लक्षणा किन्तु सम्भावनैव। शाब्दबोधस्तु यथा आरोपस्थले जायते तथा सम्भावनायामपि। इत्थञ्च लक्षणाफलीभूततादात्म्यप्रतीतिरिव सम्भावनापि चमत्कारजनकत्वेन गुणः, तस्मात्पूर्वत्रोक्तं 'गौणवृत्ति' इति पदं सम्भावनाया अप्युपलक्षकमिति युक्तमब्रूम ॥ ९६ ॥

[ गौण्या अभावे दोषस्थलप्रदर्शनम् ]

**इति हृद्यमहृद्यन्तु निष्ठीवति बधूरिति ।**
**युगपन्नैकधर्माणामध्यासश्च स्मृतो यथा ॥ ९७ ॥**

'इति' इति। इति=पूर्वश्लोकोक्तं गौण्या वृत्त्या प्रयुक्तं निष्ठ्यूतादि पदं हृद्यम्=सहृदयहृदयहारि समाधिनामकगुणयोगादिति शेषः, अहृद्यन्तु=अमनोहरं दुष्टन्तु यथा—बधूः निष्ठीवति=नवोढा थूत्करोति कफं मुखेन बहिः प्रक्षिपति इति=इत्यादि ज्ञेयमिति शेषः। यतः 'ष्ठिवु' धातोर्निरसने शक्तिरस्ति। 'बधू' पदप्रयोगस्तु शृङ्गारेऽत्यन्तोपयुक्तः। तत्र बीभत्साङ्गभूतकफवमनवर्णनमत्यन्तानुपयुक्तमिति भवति ग्राम्यता दोषः। एतावता—'अन्यधर्मस्यान्यत्रारोपः समाधि'रित्युक्तं भवति। तत्र बहूनां धर्माणामारोपे सति चारुतातिशय इत्याह—'युगपत्' इति। युगपत्=एककालावच्छेदेन नतु कालभेदेन नैकधर्माणाम्=अन्यदीयानां बहूनां गुणक्रियारूपाणां धर्माणाम् अध्यासः=आरोपः विषयनिगरणं विषयिवाचकपदेनैव विषयस्याभिधानमित्यर्थः स्मृतः=कथितः सूरिभिरिति शेषः। इत्थं यथा एकस्य धर्मस्य समारोपे समाधिः तथा बहूनामपि समारोपेऽस्ति स इति सारः। एतच्चानुपदमुदाहरणेन स्पष्टीकरोति ॥ ९७ ॥

**गुरुगर्भभराक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।**
**अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥ ९८ ॥**

युगपदनेकधर्मसमारोपे समाधिमुदाहरति—'गुरु०' इति। गुरुगर्भभराक्लान्ताः=गुर्व्यः नीरपूरसम्पर्केण स्थूलाः अन्यत्र भ्रूणवत्त्वात्स्थूला इति समानम्, गर्भस्य अन्तर्वर्त्तिनो नीरस्य भरेण भारेण क्लान्ताः मन्दाः मन्दगमनाः। अन्यत्र भ्रूणभरेण श्रान्ताः, स्तनन्त्यः=गर्जन्त्यः अन्यत्र कुन्थनशब्दं कुर्वत्यः, इमाः मेघपङ्क्तयः=जलदराजयः अचलाधित्यकोत्सङ्गम्=अचलस्य पर्वतस्य या अधित्यका ऊर्ध्वभूमिः तस्या उत्सङ्गं मध्यभागम् अन्यत्र स्त्रीलिङ्गसाम्यात् सख्याः क्रोडं गोदं समधिशेरते=सम्यक् तिष्ठन्तीत्यर्थः। 'अचलाधित्यकोत्सङ्ग' मित्यत्र 'अधिशीङ्स्थासां कर्म' [ १।४।४६ ] इत्याधारस्य कर्मसञ्ज्ञा।

अत्र मेघपङ्क्तिषु गर्भिण्या बहूनां गौरवादिधर्माणां युगपदध्यासात् चारुतातिशयः समाधिः। अतएव अतिशयोक्तिप्राणितः श्लिष्टविशेषणसाम्यात् **समासोक्तिरलङ्कारः**।

'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः ॥ ९८ ॥

**उत्सङ्गशयनं तस्याः स्तननं गौरवं क्लमः ।**
**इतीमे गर्भिणीधर्मा बहवोऽप्यत्र दर्शिताः ॥ ९९ ॥**

उक्तश्लोके गर्भिणीधर्मं स्वयं स्पष्टयति—'उत्सङ्गशयनम्' इति। अत्र उक्ते पद्ये तस्याः=सख्याः 'उत्सङ्गशयनम् स्तननं गौरवं क्लमः इति'=इत्याकारा इमे=बहवः=प्रचुरा अनेके 'गर्भिणीधर्माः' दर्शिताः=अध्यासेनोपनिबद्धाः।

ननु—'स्तनितं गर्जितं मेघनिर्घोषे' इत्यमरोक्तिबलात् स्तननशब्दात् मेघगर्जनात्मक-

एवार्थोऽवबुध्यते तत्कथमस्य गर्भिणीधर्मत्वेन साधारणत्वं स्याद् इति चेन्न, भौवादिक 'स्तन' धातोः शब्दमात्रार्थकत्वात् तथाविधस्तननस्य गर्भिण्या अपि सम्भवात् । अत एव—

मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादिसुरते मेघादिषु गर्जितप्रमुखम् ॥ इति ।

कोषान्तरेण 'स्तनित' शब्दः सुरतवाचकोऽप्युक्तः, तस्मात् 'स्तन' धातोः शब्दसामान्यवाचकत्वमपीति कृतं विस्तरेण ॥ ६६ ॥

**तदेतत्काव्यसर्वस्वं समाधिर्नाम यो गुणः ।**
**कविसार्थः समग्रोऽपि तमेनमनुगच्छति ॥ १०० ॥**

समाधिमुपसंहरति—'तद्' इति । तत्=तस्मात् पूर्वदर्शितरीत्या गौणवृत्तिव्यपाश्रयेण अतिमात्रं चारुतावहत्वात् समाधिः=नाम यो गुणः एतत् काव्यसर्वस्वं=सारभूतम् अवश्याश्रयणीयमित्यर्थः । समग्रः=अखिलः कविसार्थः=कवीनां सङ्घः गौडो वा वैदर्भो वा अन्योपि वा यः कश्चित् लाटो वा पाञ्चालो वा सः सर्वोऽपि कविरित्यर्थः. तम् एनम्=दर्शितस्वरूपं समाधिम् अनुगच्छति=अनुसरति । स्वकाव्ये एतस्य निवेशाय यत्नवान् भवतीत्यर्थः ॥ १०० ॥

[ द्वयोर्मार्गयोः प्राधान्यस्योपसंहारः ]

**इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात् ।**
**तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकवि स्थिताः ॥ १०१ ॥**

गौड्या वैदर्भ्याश्च रीतेर्वर्णितं भेदमुपसंहरति—'इति' इति । इति=दर्शितप्रकारेण तत्स्वरूपनिरूपणात्=तयोः गौडवैदर्भयोः स्वरूपं=लक्षणं तस्य निरूपणात्=वर्णनात् मार्गद्वयम् गौडीवैदर्भीरीतिद्वयं भिन्नम्=परस्परं विलक्षणम् 'अस्ति' इति शेषः । प्रतिकवि=कविं कविं प्रति स्थिताः=विद्यमानाः अर्थात् लाटपाञ्चालप्रभृतिदेशीयकविषु वर्त्तमानाः तद्भेदाः=उक्तरीतिद्वयानुस्यूताः प्रकाराः वक्तुं न शक्यन्ते=अनन्तत्वात् गणयितुमशक्याः सन्तीत्यर्थः, तस्मादनुक्ता अपि तेऽनयोर्द्वयोरेव रीत्योरन्तर्गता वेदितव्या इति दण्डिनोऽभिप्रायः ।

**इदमिह सम्प्रधार्यम्**—अग्निपुराणे उक्तम्—

अलङ्कृतमपि प्रीत्यै न काव्यं निर्गुणं भवेत् ।
वपुष्यललिते स्त्रीणां हारो भारायते परम् ॥ इति उपक्रम्य—
यः काव्ये महतीं छायामनुगृह्णात्यसौ गुणः ।
सम्भवत्येष सामान्यो वैशेषिक इति द्विधा ॥

इत्यादिना शब्दार्थोभयव्यापी सामान्यगुणः अन्तरव्यापी च वैशेषिक इत्युक्तम् । तत्र श्लेषः, लालित्यम्, गाम्भीर्यम्, उदारता, सती, यौगिकी चेति सप्त **शब्दगुणाः** । प्रसादः, सौभाग्यम्, यथासङ्ख्यम्, प्रशस्यता, पाकः, राग इति षट् **शब्दार्थोभयगुणा** उक्ताः परमेतेषां स्वरूपं न बहु प्रपञ्चितम् ।

वामनस्तु—'ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः' (काव्या० अधि० ३ । अध्या० १।४) इति दश शब्दगुणानसूत्रयत् । 'त एवार्थगुणाः' (काव्या० अधि० ३ । अध्या० २।१) इति तानेव दश अर्थगुणानवोचत् । अर्थात् नाम्ना तेषां समानता वाच्यवाचकगतत्वेन च भेदः । जयदेवस्तु—कान्तिं शृङ्गारे अर्थव्यक्तिं प्रसादे चान्त-

भाव्य शिष्टान् श्लेषादीनष्टौ गुणानाचचक्षे । तत्र कांश्चित् शब्दगतान् कांश्चिच्चार्थगतानमन्यत । तदेतत्तदीयलक्षणग्रन्थादवगन्तुं सुशकम् । सरस्वतीकण्ठाभरणे तु—

चतुर्विंशतिराख्यातास्तेषु ये शब्दसंश्रयाः ।
ते तावदभिधीयन्ते नामलक्षणयोगतः ॥
श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता ॥
ओजस्तथान्यदौर्जित्यं प्रेयानथ सुशब्दता ।
तद्वत्समाधिः सौक्ष्म्यञ्च गाम्भीर्यमथ विस्तरः ॥
सङ्क्षेपः समितत्वञ्च भाविकत्वं गतिस्तथा ।
रीतिरुक्तिस्तथा प्रौढिरथैषां लक्ष्यलक्षणे ॥

इति भोजराजेन चतुर्विंशतिसङ्ख्याका उक्ताः । सर्वेषाममीषां मतं खण्डयन्निव प्रकाशकारः—'माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश' इति त्रीनेव गुणानमन्यत, अन्यांस्तु क्वचित् क्वचिदन्तरभावयत् । तस्यायमाशयः—यद्यपि दण्डिवामनप्रभृतिभिर्दश गुणाः कल्पिताः, तथापि ते न युक्ताः ।

केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः ।
अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥

इति युक्तेः । तत्र वामनादिभिर्बहूनां पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चारोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणा [पदानां विच्छेदात् नृत्यप्रायत्वलक्षणा] उदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः, तेषामोजस्यन्तर्भावः अर्थात् चत्वारोऽप्येते गुणा गाढबन्धत्वेन दीप्तिहेतुत्वाद् ओजोव्यञ्जकरचनायामन्तर्भवितुमर्हन्ति । 'दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति' इत्योजोलक्षणात् । पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम् । प्रसादेनार्थव्यक्तिर्गृहीता । मार्गाभेदरूपा समता क्वचिद्दोषः । तथाहि—'मातङ्गाः किमु वल्गितै' रित्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः । कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात् तन्निराकरणेन अपारुष्यरूपं सौकुमार्यम्, औज्ज्वल्यरूपा कान्तिश्च स्वीकृता । एवं न दश शब्दगुणाः । एवमेवार्थगुणानां विषयेऽपि परमतं परास्य मम्मटाचार्येण त्रय एव गुणाः स्थापिताः ।

परन्तु वामनादीनामयमभिप्रायः—'रीतिरात्मा काव्यस्य' इति । सा च पदरचनारूपा। पदरचना च बन्धः एवमोजःप्रभृतयो बन्धगुणाः । वस्तुतो रीतिधर्मत्वेऽपि गुणानामात्मलाभस्य शब्दार्थाधीनत्वात् तस्य निरूप्यत्वाच्च शब्दार्थधर्मत्वमुपचारादित्युक्तं भवति । अत एव (गुणानां मुख्यतयाऽऽत्मधर्मत्वादेव) सूत्रे 'बन्धगुणा' इत्युक्तम् । नतु ते साक्षात्सम्बन्धेन शब्दार्थगता इति । एवञ्च सति उपक्रमोपसंहारादिलिङ्गैर्वामनाचार्यतात्पर्यपर्यालोचनया आत्मभूताया रीतेरेव शौर्यादिवद् गुणाः, तच्छरीरभूतशब्दार्थनिष्ठाः पुनरलङ्कारा इति निश्चीयते ।

एतेन गुणत्वादोजःप्रभृतीनामात्मनि [रीतौ] समवायवृत्त्या स्थितिः, अलङ्कारत्वाद् यमकोपमादीनान्तु शरीरं [शब्दार्थयुगले] संयोगवृत्त्या स्थितिरिति ग्रन्थकारस्य [वामनस्य तदनुयायिवर्गस्य च] अभिमतमिति मन्यामहे। कोह्यनुन्मत्तः अलङ्काराणां शरीरभूते शब्दार्थयुगले समवा-

---

१ माधुर्यव्यञ्जकमध्येऽसमासार्थकावृत्तिपदोपादानरूपप्रकारान्तरेणेत्यर्थः ।
२ मार्गो वैदर्भ्यादिरीतिः ।

यवृत्त्या स्थितिरिति मन्यते। एवञ्च गुणालङ्काराणामुभयेषामपि समवायवृत्त्या स्थितिरित्यभिमन्यमानैः भेदाभिधानम् गड्डरिकाप्रवाहनयेन इत्याद्युक्तं निरस्तं वेदितव्यम्। एतच्च 'विशिष्टा पदरचना रीतिः' 'विशेषो गुणात्मा' 'पूर्वे नित्याः' इत्यादि सूत्राणामर्थतत्त्वपर्यालोचनया गुणानां नित्यत्वमलङ्काराणान्त्वनित्यत्वमित्यवगतं भवति, नित्यानामेव काव्यव्यवहारप्रयोजकत्वञ्च सिद्धं भवति।

अपि च—यथा परमतेऽपि व्यङ्ग्यस्य प्राधान्ये ध्वनिरुत्तमं काव्यम्, तस्य गुणभावे गुणीभूतव्यङ्ग्यं मध्यमं काव्यम्, व्यङ्ग्यस्य सम्भावनामात्रे [अस्फुटतरे] चित्रसंज्ञकमवरं काव्यमिति त्रयः काव्यभेदाः कल्पिताः, तथाऽत्रापि गुणानां सामग्र्ये वैदर्भी, अविरोधिगुणान्तरस्यानिरोधेन ओजःकान्तिबाहुल्ये च गौडीया, माधुर्यसौकुमार्यप्राचुर्ये च पाञ्चालीति काव्यभेदाः भवितुमर्हन्त्येवेति मुधैव कतिपयगुणनिरासप्रयासः प्रकाशकाराणाम्, सुखावबोधत्वाच्च छात्राणामधिकं सङ्ख्यानं न विरुध्यते।

रीतिध्वनिवादिमतयोरियांस्तु विशेषः—यदाद्ये काव्यस्यात्मा रीतिः तद्व्यवहारस्य प्रयोजकास्तु गुणाः। द्वितीये तु ध्वनिरात्मा काव्यस्य, स एव च तद्व्यवहारप्रयोजकः। गुणास्तूभयत्राप्यात्मनिष्ठा एव। शब्दार्थयुगलञ्च काव्यशरीरम्, अलङ्काराश्च तन्निष्ठा एवेति च सर्वं समानम्।

यत्तु किं समस्तैर्गुणैः काव्यव्यवहारः ? उत कतिपयैः ? आद्ये कथमसमस्तगुणा गौडीया पाञ्चाली वा रीतिः काव्यस्यात्मा ? अथ कतिपयैस्तत् तदा 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः' इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यहारप्राप्तिः।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी । अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥

इत्यादौ गुणानैरपेक्ष्येण विशेषोक्तिव्यतिरेकालङ्कारयोरेव काव्यवहारप्रयोजकत्वञ्च दृश्यते इत्युक्तम् तत् स्वात्मपक्षसंवादिदोषाज्ञानमूलकमेव। तथाहि—आचष्टामत्रभवान् ? 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति यत्काव्यसामान्यलक्षणम्, तत्र शब्दार्थयोर्गुणसाहित्यमिष्यते, आर्थिकमुद्रया 'काव्यस्यात्मा रस' इति चोच्यते। अत्र किं समग्रगुणविशिष्टं काव्यम् कतिपयगुणविशिष्टं वा। नाद्यः एकैकगुणोदाहरणेषु काव्यत्वाभावप्रसङ्गात् समग्रगुणवैशिष्ट्याभावाच्च। नच द्वितीयः वस्त्वलङ्कारध्वनिषु गुणिनो रसस्याभावेन गुणस्यैवाभावात्।

अपि च—सर्वे रसाः सम्भूय काव्यस्यात्मा उतैकैको रसः ? आद्ये न कुत्रापि काव्यात्मसंभावना विरोधिनां रसानां सामानाधिकरण्याभावात्। द्वितीये वस्त्वलङ्कारध्वनिषु रसासम्भवात् आत्मविधुरेषु तेषु काव्यव्यवहाराभावप्रसङ्गाच्चेति कृतं परमतनिरासायासेन। प्रपञ्चस्तु मया काव्यप्रकाशप्रभायां कृतः ॥ १०१ ॥

[ मार्गानवगाहने दृष्टान्तकथनम् ]

**इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।**
**तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥ १०२ ॥**

उक्तमर्थं दृष्टान्तेन पुष्ट्यति—इक्षुक्षीरगुडादीनाम्=इक्षुः पुण्ड्रः क्षीरम्=दुग्धम् गुडः=इक्षुविकारः आदिना मधुरमात्रस्य परिग्रहः एतेषाम् माधुर्य्यस्य=मधुरिम्णः महत्=अनल्पम् अन्तरम्=भेदः 'वर्त्तते' इति शेषः। तथापि तत्=अन्तरम् सरस्वत्या=वागधिष्ठात्र्या देव्या 'अपि' आख्यातुम्=वक्तुं न शक्यते=न समर्थीभूयते किमुतान्यैरिति भावः। एवं काव्यानां माधुर्यस्यापि अनन्तमन्तरं विशिष्य निर्देष्टुमशक्यं किंतु दर्शितगौडवैदर्भमार्गद्वयान्तःपातित्वेनैव ते सर्वेऽपि भेदा अवगन्तव्या इति शिष्यशासनम् ॥ १०२ ॥

[ काव्यस्य कारणम् ]

**नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम् ।**
**अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः ॥ १०३ ॥**

निरूपितं काव्यस्वरूपम् । अथ काव्यस्य कारणमाह—'नैसर्गिकी' इति । नैसर्गिकी= निसर्गेण स्वभावेन निर्वृत्ता 'तेन निर्वृत्तम्' [ पा० ५।१।७६ ] इति सूत्रेण ठञ् प्रत्ययः । ततः 'टिड्ढाणञ्०' इति ङीप् । स्वाभाविकी=पूर्वजन्मानुभवजनितसंस्काररूपा प्रतिभा=शक्ति-विशेषः च=तथा बहु=नानाविधं व्याकरणादिप्रस्थानभिन्नम् निर्मलम्=गुरूपदेशद्वारा प्राप्तया संशयादिरहितम् श्रुतञ्च=शास्त्रञ्च तथा अमन्दः=भूयान् अभियोगः=अभ्यासरूपोऽभिनिवेशः अर्थात् काव्यज्ञोपदेशात् पुनः पुनः प्रवृत्तिः, एतत् त्रयं समुदितम् अस्याः काव्यसम्पदः=काव्य-रूपाया समृद्धेः कारणम्=हेतुः न तु हेतवः अर्थात् दण्डचक्रादिन्यायेन मिलितं सदेव त्रयं काव्यकारणम् । एतच्च कारणपदगतैकवचनेन सूचितम् । उक्तञ्च मम्मटेन—

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥

काव्यस्य उद्भवे निर्माणे उल्लासे चेत्यर्थः । केचित्तु केवलां प्रतिभामेव काव्योद्भवे हेतुमाहुः—

प्रतिभैव श्रुताभ्याससहिता कवितां प्रति ।
हेतुर्मृदम्बुसम्बद्धबीजव्यक्तिर्लतामिव ॥ इति ॥

उक्तञ्च—कवित्वं जायते शक्तेर्वर्धतेऽभ्यासयोगतः ।
तस्य चारुत्वनिष्पत्तौ व्युत्पत्तिस्तु गरीयसी ॥ इति ॥

वाग्भटोऽपि—प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम् ।
भृशोत्पत्तिकृदभ्यास इत्याद्यकविसङ्कथा ॥ इति—

केवलां प्रतिभामेव हेतुमाह । एतद्विषयकः प्रपञ्चः वामनप्रणीतकाव्यालङ्कारसूत्रेषु प्रथमेऽधिकरणे मदीयकाव्यप्रकाशप्रभायाञ्च द्रष्टव्यः ॥ १०३ ॥

[ अभ्यासः पूर्ववासनोद्योती ]

**न विद्यते यद्यपि पूर्ववासना गुणानुबन्धि प्रतिभानमद्भुतम् ।**
**श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम् ॥ १०४ ॥**

अत्र शास्त्राभ्यासस्यापि क्वचित् मुख्यतामाह—'न' इति । यद्यपि पूर्ववासना=प्रति-भाख्यः प्राक्तनः संस्कारो न विद्यते=नास्ति कस्यचित्पुंसः गुणानुबन्धि=गुणानां काव्यवैचित्रीणाम्[1] अनुबन्धि अनुषङ्गि अद्भुतम्=अदृष्टाश्रुतविषयविमर्शनक्षमम् अनर्गलकाव्यरचनाक्षमं वा प्रति-भानम्=बुद्धिरपि न विद्यत इति पूर्वेणान्वयः । तथापि श्रुतेन=काव्यज्ञगुरुशिक्षया यत्नेन च=

१ असद्भावनया तु—अत्रत्यं गुणपदं काव्यगतौचित्यपरम् । औचित्यस्य काव्य-सम्बन्धिसर्वाङ्गेषु व्यापकत्वेनावश्यापेक्षणीयत्वात् । उक्तं हि 'क्षेमेन्द्रेण'—

उचितं प्राहुराचार्याः सदृशं किल यस्य यत् ।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते ॥ इति ॥

एतद्धि पदप्रभृतिषु स्थानेषु मर्मस्वेव काव्यस्य सकलशरीरव्यापि जीवितमौचित्यं स्फुटत्वेन स्फुरदवभासते । एतद्विषयकं विशेषं चर्चं ग्रन्थान्तरे करिष्यामः ।

स्वाभिनिवेशेन 'अवश्यं कविर्भवेयम्' इत्याकारकेण हृदयोल्लासेन च उपासिता=सेविता पुनः पुनरावर्त्तितेति यावत् वाक्=सरस्वती ध्रुवम्=निश्चयेन कमपि=अलौकिकम् अनुग्रहम्=कृपालवं करोति एव=काव्यरचनायां सामर्थ्यमवश्यमापादयतीत्यर्थः। तथा च भासः—

काष्ठादग्निर्जायते मथ्यमानाद् भूमिस्तोयं खन्यमाना ददाति।
सोत्साहानां नास्त्यसाध्यं नराणां मार्गारब्धाः सर्वयत्नाः फलन्ति॥ इति।

तस्मात्सर्वथा काव्ये प्रवृत्तिराश्रयणीयेति भावः॥ १०४॥

[ उक्तार्थोपसंहारः ]

**तदस्ततन्द्रैरनिशं सरस्वती श्रमादुपास्या खलु कीर्त्तिमीप्सुभिः।**
**कृशे कवित्वेऽपि जनाः कृतश्रमा विदग्धगोष्ठीषु विहर्त्तुमीशते॥१०५॥**

इत्याचार्यदण्डिनः कृतौ काव्यादर्शे मार्गविभागो नाम प्रथमः परिच्छेदः।

उक्तमर्थमुपसंहरति—तत्=तस्माद्धेतोः अस्ततन्द्रैः=अस्ता प्रक्षिप्ता दूरीभूता तन्द्रा आलस्यविशेषो येषां तैरनलसैरित्यर्थः कीर्त्तिम्=कविताकरणजनितं [कालिदासादीनामिव] यश ईप्सुभिः=अभिलषद्भिः श्रमात्=उद्यममङ्गीकृत्य खलु=निश्चयेन सरस्वती[१]=वाक् देवी उपास्या= सेवनीया। अवश्यं शास्त्राभ्यासो विधेय इत्यत्र तात्पर्यम्। एतस्य फलान्तरं दर्शयति--कवित्वे= कवितायाम् काव्यस्य करणे ज्ञाने चेत्यर्थः, कृशे अपि=अल्पे सत्यपि कृतश्रमाः=शास्त्रपरि-शीलनाभ्यासवन्तो जनाः विदग्धगोष्ठीषु=कविसभासु विहर्त्तुम्=विहारं कर्त्तुं सम्यगादरं लब्धु-मित्यर्थः, ईशते=समर्था भवन्ति। 'उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः' इति न्याय-मनुसरतां पुंसामभ्यासवशात् काव्यकरणे काव्यज्ञाने च ऐहिकपारलौकिकफलसिद्धिर्भवत्येवेति कदापि तदभ्यासे प्रमादो न विधेय इति शम्॥ १०५॥

इति श्रीपण्डितदेवीदासतनुजनुषा सारस्वतवंशावतंसेन सतीविष्णुदेवीगर्भजेन
स्यालकोटवास्तव्य-जैनन्यायविशारद-कवितार्किक-[ तन्त्रचक्रवर्त्ति ]
दर्शनाचार्य-**नृसिंहदेव**शास्त्रिविरचितायां स्वोपज्ञ-
'सौभायवती' विवृतिसहितायां 'कुसुमप्रतिमा'-
ख्यायां काव्यादर्शव्याख्यायां
प्रथमः परिच्छेदः।

---

१ श्लिष्ट'सरस्वती'पदनिवेशेन 'मेधा'वर्धकश्रौतस्मार्त्तमन्त्रप्रयोगपूर्वकवागधिष्ठात्र्या देवताया अपि उपासना विवक्षिता। ते च मन्त्रा गुरूपसत्तिमपेक्ष्यैव फलप्रदा भवन्तीति न विस्मरणीयमिति शिवोम्।

इति प्रथमपरिच्छेदटीकायां 'सौभाग्यवती' विवृतिः।

# द्वितीयः परिच्छेदः ।

[ अलङ्कारसामान्यलक्षणकथनम् ]

**काव्यशोभाकरान् धर्मानलङ्कारान्प्रचक्षते ।**
**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥ १ ॥**

काव्यादर्शस्य वाणीयमलङ्कारभरान्विता ।
'कुसुमप्रतिमा' यत्र नरीनर्त्ति कविप्रिया ॥ १ ॥

प्रथमे परिच्छेदे काव्यस्वरूपमुक्तम्, रीतिद्वयभेदश्च सविस्तरं निरूपितः, प्रसङ्गप्राप्तया अनुप्रासाद्यलङ्कारस्य स्वरूपमपि प्रदर्शितम्, सम्प्रत्यस्मिन् द्वितीये परिच्छेदे विशेषतया अलङ्कारस्वरूपं निरूपयितुकामः श्रीदण्ड्याचार्यः प्रथममलङ्कारसामान्यलक्षणमाचष्टे—'काव्यशोभाकरान्' इति । काव्यस्य='इष्टार्थव्यवच्छिन्ना पदावली काव्यम्' इत्युक्तलक्षणस्य शोभा=तत्तद्विशेषचमत्कारजनकज्ञानगोचरत्वं रूपं सौन्दर्यं श्लेषादिगुणविशेषकृतवैचित्र्यं वा तत्करान्=अर्थात् काव्यशरीरस्य वैचित्र्यातिशयहेतून् धर्मान्=शब्दार्थनिष्ठान् अलङ्कारान् 'अलङ्कार' इत्याख्यातान् प्रचक्षते=कथयन्ति 'प्राञ्चः सूरयः' इति शेषः ।

यथा कनककुण्डलाद्याः कान्ताशरीरमतिशोभयन्ति तथैव शब्दार्थरूपस्य काव्यवपुषः श्लेषादिगुणकृतवैचित्र्यं पोषयन्तोऽनुप्रासोपमादयोऽलङ्कारपदाभिधां भजन्ते । इत्थञ्च पूर्वोक्ताः श्लेषाद्या गुणाः काव्यस्यान्तःशोभाधायकाः अलङ्कारास्तु बाह्यशोभाकरा इति गुणालङ्कारयोर्विवेक इत्युक्तं भवति । एतेनैवाभिप्रायेण वामनोपि **'काव्यशोभायाः कर्तारो धर्मा गुणाः'** [का० सू० ३।१] **'तदतिशयहेतवस्त्वलङ्काराः'** [३।२] इति गुणालङ्काराप्रभेदमाचख्यौ । तथा चोक्तमभियुक्तैः—

युवतेरिव रूपमङ्ग ! काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयनिरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः ॥
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥ इति ।

'ते च' इति । 'ते च' अलङ्काराः अद्य अपि=एतावत्कालपर्यन्तमपि विकल्प्यन्ते=विविधकल्पनाविषयीक्रियन्ते 'कविभि' रिति शेषः । अतो हेतोः कः=सुधीः साहित्यशास्त्रनिपुणमतिरपि तान् अलङ्कारान् कार्त्स्न्येन=साकल्येन वक्ष्यति=कथयिष्यति न कोऽपि पण्डितस्तान् सर्वान् सङ्कलयितुं समर्थ इत्याशयः ।

उक्तिवैचित्र्यमेवालङ्कारः, तच्च कल्पनैकमूलम्, कल्पनाश्च पुरुषबुद्धिप्रभवाः, पुरुषाश्चानन्ता इति ब्रह्मापि सकललोककल्पनासङ्कलने न समर्थ इतरेषान्तु कैव कथा [इति मया]

---

(प्र०) अलङ्कारसामान्यलक्षणं सप्रमाणं लिख्यताम् । (उ०) अस्य पृ० पं० ३ ।

सुकुमारमतिसौकर्याय स्वाभीष्टा कतिपयेऽलङ्काराः सारल्येन सङ्ख्याताः वस्तुत इतरे सन्ति न वा सन्ति इत्यस्मिन्नंशे विवादकरणमयुक्तमस्तीति गूढोऽभिसन्धिः।

प्रकाशकारस्त्वाह—

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥ इति।

अस्यायमाशयः—शब्दार्थलक्षणाङ्गातिशयद्वारा ये सम्भविनं रसमुपकुर्वन्ति यथा कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽप्युपकारका हाराद्याः, तद्वदतिशयहेतवोऽनुप्रासोपमादयोऽलङ्काराः। अत्रत्यः सूक्ष्मो विवादः परिनिष्ठितबुद्धिगम्यः सुकुमारमतीनां व्यामोहो माभूदिति कृत्वा नावतारितः परिचयमात्रन्तूक्तम्[1]॥ १॥

[ स्वोक्तेः पूर्वाचार्यमूलकत्ववर्णनम् ]

**किन्तु बीजं विकल्पानां पूर्वाचार्यैः प्रदर्शितम्।**
**तदेव परिसंस्कर्त्तुमयमस्मत्परिश्रमः॥ २॥**

ननु–यदि अलङ्काराः सङ्कलनानर्हाः तर्हि कुतो भवान् तेषां वर्णने प्रवृत्त इत्याशङ्कामपनुदति—'किन्तु' इति। किन्तु विकल्पानाम्=विविधानां कल्पनानां नवीनैः कृतानामलङ्कारभेदानां बीजम्=सामान्यमूलं सादृश्याख्यमुपमास्वरूपम् पूर्वाचार्यैः=वाल्मीकिप्रभृतिभिरेव प्रदर्शितम्=स्वरचितादिमहाकाव्येषूपनिबन्धनेन स्फुटीकृतम्। एतदेवाश्रित्य नवीनैः वैचित्र्यभेदेनालङ्कारविषये नाना कल्पनाः समुद्भाविता इत्यभिप्रायः। तदेव=बीजम् पूर्वाचार्योक्तं सामान्यलक्षणस्वरूपमुपमाख्यं विकल्पमूलभूतं हेतुं परिसंस्कर्त्तुम्=सम्यक् स्फोटयितुं शब्दार्थाभिधानसम्बन्धपूर्वकं विशदीकर्त्तुम् अयम् अस्मत्परिश्रमः=क्रियमाणोऽलङ्कारनिरूपणप्रयासः। 'अस्ति'[2] इति शेषः। तथा च नास्माकं निष्फला प्रवृत्तिरिति भावः। बुद्ध्या सन्निधापितत्वात् निरूपणप्रयासस्य 'अयम्' इतीदमा निर्देशः।

---

१ **साहित्यसारे** अलङ्कारसामान्यलक्षणमित्थमुक्तम्—

रसादिभिन्नत्वे शब्द-विशेषश्रवणोत्तरम्।
चमत्कारकरत्वं यदलङ्कारत्वमत्र तत्॥

एतदेव लक्षणं वक्रनयानुसारिण एवमाकलयन्ति—

'रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वमलङ्कारत्वम्' इति अनुप्रासादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात् तेषु लक्षणसमन्वयः। शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकताया विषयितयावच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादेः तन्निष्ठावच्छेदकतावच्छेदकत्वादिति कुवलयानन्दीयालङ्कारचन्द्रिकायामुक्तम्।

२ 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति महाभाष्यकारः। 'भवन्ती' इति लटः पूर्वाचार्याणां सञ्ज्ञा।

**(प्र०)** सकलालङ्कारभेदसंकलनाभावे बीजमुक्त्वा ग्रन्थकारोक्तौ प्रामाण्यं समर्थय ?।

**(उ०)** अस्य पृ० पं० ११।

सन्तु कल्पनावैचित्र्यात् नाना भेदा ये सङ्कलनानर्हाः परन्त्वस्मद्दर्शितपरिपाट्या ते स्वयमूहनीया इति ग्रन्थकर्तुर्हृदयम् ॥ २ ॥

[ पूर्वनिरूपितालङ्कारभिन्नालङ्कारनिरूपणप्रतिज्ञा ]

**काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः ।**
**साधारणमलङ्कारजातमन्यत् प्रदर्श्यते ॥ ३ ॥**

अलङ्कारनिरूपणप्रसङ्गेन पूर्वनिरूपितानां श्रुत्यनुप्रासादीनां पुनर्निरूपणापत्त्या पिष्टपिष्टिः स्यादिति तदतिरिक्तालङ्कारनिरूपणं प्रतिजानीते—'काश्चित्' इति । काश्चित् अलङ्क्रियाः=अलङ्काराः श्रुत्यनुप्रासाद्याः मार्गविभागार्थम्=गौडीवैदर्भीरीतिद्वयभेदप्रदर्शनार्थं 'प्राग् अपि' पूर्वस्मिन् परिच्छेदेऽपि उक्ताः=कथिताः सम्प्रति नोच्यन्ते इत्यर्थः । किन्तु अन्यत्=ततो भिन्नं साधारणम्=द्वयोर्मार्गयोः समानम् अलङ्कारजातम् प्रदर्श्यते=निरूप्यते अस्मिन्परिच्छेद इति शेषः ।

श्रुत्यनुप्रासच्छेकानुप्रासयमकरूपालङ्कारा गुणनिरूपणप्रकरणे द्वयोर्मार्गयोरसाधारणा उक्ताः, ततोऽन्ये साधारणा उपमाद्या अत्रोच्यन्ते । तृतीयपरिच्छेदे यमकस्य पुनर्निरूपणन्तु विशेषभेदप्ररूपणार्थमेवेति न कश्चिद्दोषः ॥ ३ ॥

**स्वभावाख्यानमुपमा रूपकं दीपकावृती ।**
**आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ॥ ४ ॥**
**समासातिशयोत्प्रेक्षा हेतुः सूक्ष्मो लवः क्रमः ।**
**प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् ॥ ५ ॥**
**उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता ।**
**विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने ॥ ६ ॥**
**सहोक्तिः परिवृत्त्याशीः सङ्कीर्णमथ भाविकम् ।**
**इति वाचामलङ्कारा दर्शिताः पूर्वसूरिभिः ॥ ७ ॥**

प्रतिज्ञातस्यालङ्कारजातस्योद्देशमाह—'स्वभावाख्यानम्' इत्यादिना चतुर्भिः श्लोकैः । तत्र स्वभावाख्यानम्=स्वभावोक्तिः । उपमा । रूपकम् । दीपकावृती=दीपकम्, आवृत्तिश्चेति द्वयम् । आक्षेपः । अर्थान्तरन्यासः । व्यतिरेकः । विभावना । समासः=समासोक्तिः । अतिशयः=अतिशयोक्तिः । उत्प्रेक्षा । हेतुः । सूक्ष्मः । लवः । क्रमः । प्रेयः । ऊर्जस्वि । पर्यायोक्तम् । समाहितम्=समाधिः । उदात्तम् । अपह्नुतिः । श्लेषः । विशेषः । तुल्ययोगिता । विरोधः । अप्रस्तुतस्तोत्रम्=अप्रस्तुतप्रशंसा । व्याजस्तुतिः । निदर्शना । सहोक्तिः । परिवृत्तिः । आशीः । सङ्कीर्णम् । भाविकम् । इति=उक्तप्रकारेण पूर्वसूरिभिः=प्राचीनकविभिर्भामहादिभिः वाचाम्=काव्यवाक्यानाम् अलङ्काराः=स्वभावोक्तिमारभ्य भाविकपर्यन्ताः पञ्चत्रिंशत्सङ्ख्याः दर्शिताः=उद्दिष्टाः नाममात्रेण सङ्कीर्तिता इत्यर्थः । एतेषामर्थगतत्वेऽपि 'वाचा' मित्युक्तिः शब्दार्थयोस्तादात्म्याङ्गीकाराद् बोध्या । **'स्थितोऽस्य वाचकस्य वाच्येन सहाभेदः सम्बन्ध'** इति (योगभाष्ये) व्यासोक्तेः । कुवलयानन्दे तु—

इत्थं शतमलङ्कारा लक्षयित्वा निदर्शिताः ।
प्राचामाधुनिकानाञ्च मतान्यालोच्य सर्वतः' ॥

इत्यलङ्काराणां शतसङ्ख्या कथिता । काव्यप्रकाशे षष्टिरुक्ता । एवं मतभेदा ऊह्याः ॥ ७॥

[ स्वभावोक्तिलक्षणम् ]

**नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती।**
**स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा॥ ८॥**

—*—

स्वभावं सर्वभावानां भावाभावाश्रयं भवम्।
भावगम्यं भवातीतं भावये भावनातिगम्॥ १॥

तत्र तावत् वस्तुस्वभावस्य प्रथमं बुद्धिविषयत्वात् स्वभावोक्तिं लक्षयति—'नानावस्थम्' इति। पदार्थानाम्=जातिगुणक्रियायदृच्छानां नानावस्थम्=नाना अनेकप्रकारा अवस्था दशाविशेषो यस्य तत् रूपम्=अवयवसंस्थानरूपामाकृतिं गौरादिवर्णं वा साक्षात्=प्रस्फुटं प्रत्यक्षमिव विवृण्वती=निरूपयन्ती या सा आद्या=प्रथमा मुख्येति यावत् अलङ्कृतिः=अलङ्कारः 'स्वभावोक्तिः=स्वभावोक्तिर्नामेत्यर्थः। च=तथा च इयमेव जातिः='जाति'रिति नाम्नाऽपि कथ्यते इति शेषः। इत्थञ्च—'कविप्रतिभागोचरत्वे सति नानावस्थस्य वस्तुनो स्वभाववर्णनं **स्वभावोक्ति**'रिति फलितं लक्षणम्। उक्तञ्च अलङ्कारचन्द्रिकायाम्—

जातिक्रियागुणद्रव्यैः स्वभावो यत्र दृश्यते।
स्वभावाख्या तु सा प्रोक्ता अलङ्कारोत्तमा यथा॥ इति।

अन्यत्राप्युक्तम्—

नानावस्थासु जायन्ते यानि रूपाणि वस्तुनः।
स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि 'जातिं' प्रचक्षते॥ इति।

मम्मटस्तु—

'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्' इति।

सर्वेषामेतेषां फले नैव विशेषः। सा चेयं चतुर्विधा—जातिस्वभावोक्तिः, गुणस्वभावोक्तिः, क्रियास्वभावोक्तिः, यदृच्छास्वभावोक्तिश्चेति। क्रमश उदाह्रियते इत्याशयेनाह 'यथा' इति॥८॥

[ स्वभावोक्तेरुदाहरणानि ]

**तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः।**
**त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः॥ ९॥**

उक्तांश्चतुर्विधां स्वभावोक्तिं लक्ष्ये योजयन्नादौ 'जातिस्वभावोक्ति'मुदाहरति— 'तुण्डैः' इति। एते=पुरोदृश्यमानाः मञ्जुगिरः=मञ्जु मनोरमा गीर्वाणी येषां ते हृदयहारिरावाः शुकाः=कीराः आताम्रकुटिलैः=आ समन्तात् ताम्राणि रक्तवर्णानि कुटिलानि वक्राणि च तानि आताम्रकुटिलानि तैः तथाविधैः तुण्डैः=आननैः, हरितकोमलैः=हरिताः हरितवर्णाश्च ते कोमला मृदवः तैरेवम्भूतैः पक्षैः=पत्रैः तथा त्रिवर्णराजिभिः=त्रयो वर्णा यत्र सा त्रिवर्णा हरितरक्तधूसरवर्णवती तादृशी राजिः लेखा यत्र तैः तथाभूतैः कण्ठैः=उपलक्षिताः राजन्ते इति शेषः। अत्र सर्वत्र 'इत्थम्भूतलक्षणे' [पा० ३।३।२१] इति सूत्रेण उपलक्षणे तृतीया।

अत्र शुकत्वं जातिः। तदवच्छिन्नानां सर्वेषामेव शुकानामाताम्रकुटिलत्वादिकमसा-

(प्र०) स्वभावोक्तेः किं लक्षणम्? (उ०) अस्य पृ० पं० १।

धारणो धर्मः कविकृतवर्णनाचातुरीवैचित्र्येण प्रत्यक्षमिव शुकमात्रगतो भासते। यद्यपि शुकाः सर्वेषां प्रत्यक्षाः तथापि अनवधानवशात् दर्शितधर्मावच्छिन्ना शुकजातिरप्रत्यक्षैव कविवर्णनया प्रत्यक्षमिवावभासते। एवमियं जातिस्वभावोक्तिः। 'तुण्डमाननं लपनं मुख' मित्यमरः।

शुको व्याससुते कीरे रावणस्य तु मन्त्रिणि।

शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकम्॥ इति मेदिनी।

'कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुल'मित्यमरः। उदाहरणं यथा वा **मम**--

एते कपोतशिशवोऽल्पतनूरुहाङ्गा घर्मार्तिघूर्णनयनाः कृतचुङ्कृताश्च।

व्यादाय तुण्डरसनां मुहुरर्थयन्ते पानीयबिन्दुसहितान् कणकान् स्वमातुः॥

[ शिशु ]पक्षिजातिस्वभावोऽयम्॥ ९॥

**कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः।**

**पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियाम्॥ १०॥**

क्रियास्वभावोक्तिमुदाहरति--'कलक्वणितगर्भेण' इति। 'कण्ठेन' इत्यत्र पूर्ववत् उपलक्षणे तृतीया। कलक्वणितगर्भेण=कलं हृद्यं क्वणितं कूजितं गर्भे यस्य तादृशेन कण्ठेन गलेन, उपलक्षितः आघूर्णितेक्षणः=आघूर्णिते मदाविष्टे ईक्षणे नयने यस्य सः एवंविधः पारावतः=कपोतः रिरंसुः=रन्तुमिच्छुः परिभ्रम्य=परितश्चङ्क्रमणं कृत्वा प्रियाम्=वल्लभां कपोतीं चुम्बति=तस्याः वक्त्रेण स्ववक्त्रं संयुनक्ति। अत्र एवंभूता एव पारावताः रिरंसाकाले कपोतीं चुम्बन्तीति पारावतस्य चुम्बनक्रियास्वभावो वर्णितः। विद्यमानाप्यत्र कपोतजातिवैचित्र्यवर्णनाविषयत्वेन कवेर्न विवक्षिता ( कविसंरम्भगोचरा नास्ति ) तस्मादियं क्रियास्वभावोक्तिरेव।

'रिरंसु'रित्यत्र सन्नन्ताद् 'रम्' धातोः 'सनाशंसभिक्ष उः' [ पा० ३।२।१६८ ] इति सूत्रेण 'उ'प्रत्ययः। रिरंसतीति रिरंसुः॥ १०॥

**बध्नन्नङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम्।**

**नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्त्तते॥ ११॥**

गुणस्वभावोक्तिमुदाहरति--'बध्नन्' इति। एषः=अनुभूयमानः प्रियास्पर्शः=प्रियायाः कान्तायाः स्पर्शः आलिङ्गनविशेषः अङ्गेषु=भुजाद्यवयवेषु रोमाञ्चम्=रोम्णां पुलकितभावं बध्नन्=सम्पादयन् मनसि=हृदये निर्वृतिम्=गाढमानन्दं कुर्वन्=जनयन् च=तथा नेत्रे=नयने आमीलयन्=सम्मुकुलीकुर्वन् मुद्रयन्नित्यर्थः प्रवर्त्तते=परम्परारूपेण प्रसृतो भवति। अत्र प्रियायाः स्पर्शो गुणो वैचित्र्येण वर्णित इति गुणस्वभावोक्तिः॥ ११॥

**कण्ठेकालः करस्थेन कपालेनेन्दुशेखरः।**

**जटाभिः स्निग्धताम्राभिराविरासीद् वृषध्वजः॥ १२॥**

द्रव्यस्वभावोक्तिमुदाहरति--'कण्ठेकाल' इति। कण्ठेकालः=कण्ठे गले काल इति कण्ठेकालः। अलुक्तत्पुरुषः समासः। 'हलदन्तात्सप्तम्याः संज्ञायाम्' [पा० ६।३।९] इति सूत्रेण सप्तम्या अलुक्। [तथा] करस्थेन=पाणिस्थितेन कपालेन=नरशिरोऽस्थ्ना [तथा] स्निग्धताम्राभिः=स्निग्धाभिश्चिक्कणाभिः ताम्राभी रक्ताभिः जटाभिः=सटाभिः उपलक्षितः [पूर्ववत् तृतीया] इन्दुशेखरः=इन्दुश्चन्द्रः शेखरः शिरोभूषणं यस्य सः चन्द्रचूडः वृषध्वजः=महादेवः आविरासीत्=प्रादुरभवत्।

अत्र 'वृषध्वज' शब्दो यादृच्छिकः [संज्ञावचनः] 'संज्ञा' एव प्रकृते 'द्रव्य' मुच्यते। संज्ञासंज्ञिनोश्चाभेदात् शिवो द्रव्यम् तस्माद् वृषध्वजगतस्य कण्ठेकालत्वादिरूपस्यासाधारण-धर्मस्य वर्णनाविशेषात् द्रव्यगतेयं स्वभावोक्तिः ॥ १२ ॥

[ स्वभावोक्तेरुपसंहारः ]

**जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम्।**
**शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम् ॥ १३ ॥**

स्वभावोक्तिमुपसंहरति-'जाति०' इति। जातिः=गोत्वादिः क्रिया=पाकादिः गुणः=शुक्लादिः द्रव्यम्=संज्ञा [नतु वैशेषिकतन्त्रसिद्धं गुणाश्रयः पृथिव्यादिः। वैयाकरणानां संज्ञायां द्रव्यशब्दव्यवहारात्] एतेषां यत् स्वभावाख्यानं=स्वभावस्य आख्यानं कथनं स्वभावोक्तिः ईदृशम्=दर्शितप्रकारं कविप्रतिभाकृष्टं विच्छित्तिविशेषशालि वर्णनमित्यर्थः। अस्यैव स्वभाव-विशेषस्य शास्त्रेषु=न्यायादिदर्शनेषु पुराणेतिहासादिषु वा साम्राज्यम्=प्राचुर्यम् 'अस्ति' इति शेषः। अतः काव्येषु अपि=कविप्रणीतेषु प्रबन्धेष्वपि एतत्=स्वभावाख्यानम् मुख्यतया ईप्सितम्=वाञ्छितं 'कविभि'रिति शेषः। विशेषेण कवयः स्वभावोक्तिमेवाद्रियन्त इति भावः।

अलङ्कारचन्द्रिकाकारस्तु एकेनैव श्लोकेन चतुर्विधां स्वभावोक्तिमुदाजहार। तद्यथा—

वामेन पाणिकमलेन मनोरमेण लीलावगुण्ठनपटं परिवर्त्तयन्ती।
मन्दस्मिताञ्चलचलेन दृगञ्चलेन चेतो न कस्य तरुणी तरलीकरोति ॥ इति।

अत्र 'तरुणी' जातिः। 'मनोरमत्वं' गुणः। 'परिवर्त्तनं' 'तरलीकरणञ्च' क्रिया। 'वामादि' सञ्ज्ञात्वात् द्रव्यम्। एषां चेष्टाभिर्वस्तुभूतायास्तरुण्याः कविप्रतिभोत्थवैचित्र्या स्वभाव-निरूपणात् स्वभावोक्तिरलङ्कारः। 'जयदेव' इत्थमाह—

'स्वभावोक्तिः' स्वभावस्य जात्यादिस्थस्य वर्णनम्।
कुरङ्गैरुत्तरङ्गाक्षि! स्तब्धकर्णैरुदीक्ष्यते ॥'

आद्यार्धं लक्षणम् उत्तरार्धं लक्ष्यम्। आदिपदेन क्रियादीनां परिग्रहः। अत्र कुरङ्गाणा-मेवमुदीक्षणं स्वभावः। नायिकां प्रति नायकोक्तिरियम्। हे उत्तरङ्गाक्षि! चञ्चलाक्षि! 'उत्तरङ्गाक्षै'-रिति पाठे तु हरिणविशेषणम्। उत्तरङ्गाणि चपलानि अक्षीणि येषां तैः। इयञ्च जातिस्वभावोक्तिः।

किञ्च— विधाय मूर्त्तिं कपटेन वामनीं स्वयं बलिध्वंसिविडम्बिनीमयम्।
उपेतपार्श्वश्चरणेन मौनिना नृपः पतङ्गं समधत्त पाणिना ॥

[ नैषधम् ] इयञ्च क्रियास्वभावोक्तिः। सर्वोऽपि जन उत्पतनभयादेवमेव वामनीं मूर्त्तिं कृत्वा निःशब्दं पक्षिणं गृह्णाति। कुवलयानन्देऽपि—

तौ संमुखप्रचलितौ सविधे गुरूणां मार्गप्रदानरभसस्खलितावधानौ।
पार्श्वोपसर्पणमुभावपि भिन्नदिक्कं कृत्वा मुहुर्मुहुरुपासरतां सलज्जम् ॥ इति।

इयञ्च वधूवरयोः सलज्जक्रियास्वभाववर्णनेन क्रियास्वभावोक्तिः। किञ्च श्रीहर्षचरिते—

---

१ बलिध्वंसी कपटवामनमूर्त्तिर्महाविष्णुः तन्मूर्त्यनुसारिणीमित्यर्थः। समधत्त=सङ्-घटितवान् जग्राहेत्यर्थः।

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण॥

अत्र 'पश्चात्' इत्यादिना संस्थानस्य 'घासग्रासे'त्यादिना क्रियाया वर्णनात् वर्णक्रियागतेयं स्वभावोक्तिरिति तु साम्प्रदायिकाः। वयन्तु 'जातिस्वभावोक्तिरिय' मिति ब्रूमः। अश्वमात्रस्य तथाविधस्वभावदर्शनात्। वाग्भटस्त्वित्थमुदाजहार—

बर्हावलीबहुलकान्तिरुचो विचित्रभूर्जत्वचा रचितचारुदुकूललीलाः।
गुञ्जाफलग्रथितहारलताः सहेलं खेलन्ति खेलगतयोऽत्र वने शबर्यः॥

अत्र चतुर्विधाऽपि स्वभावोक्तिरिति वक्तुं शक्यते। यथा वा मदीय**काव्यलतिकायाम्**—

चिनोति पापं कुरुते विगर्हणां तनोति दुःखं ननु हन्ति सन्नयम्।
विपत्तिमातत्य सतां प्रहृष्यति क्रमो विचित्रोऽस्त्यसतां त्रिलोक्याम्॥

अत्र दुर्जनक्रियास्वभावोक्तिः। एवञ्च महाकाव्येषु भूयानस्याः समाचारो दृश्यते।

---

१ त्रिभिरस्थिभिर्घटितं स्थानं 'त्रिकम्' पृष्ठवंशः तस्य नतिर्नम्रता तया विततं विस्तृतम् अङ्गं शरीरम् उच्चैः अतिशयेन द्राघयित्वा दीर्घं कृत्वा अनवरतं चलन् प्रोथो नासिका यत्र तादृशं तुण्डं मुखं यस्य सः। शिष्टं स्पष्टम्।

२ बर्हावलीभिर्मयूरपिच्छश्रेणिभिः बहुला महीया या कान्तिः तया रोचन्ते यास्तास्तथाविधाः, भूर्जत्वचा रचिता कृता चारुः मनोज्ञा दुकूललीला प्रावरणवसनव्यापारविशेषो याभिः, गुञ्जाफलैर्ग्रथिता हारलता याभिस्ताः खेलगतयः शबर्यो भिल्ल्योऽत्र वने सहेलं सलीलं खेलन्ति दीव्यन्ति।

३ तथाच यशस्तिलके चम्पूकाव्ये द्वितीय आश्वासे—

आधीयते यदिह वस्तु गुणाय कान्तं काये तदेव मुहुरेत्यपवित्रभावम्।
छायाप्रतारितमतिर्मलरन्ध्रबन्धं किं जीव! लालयसि भङ्गुरमेतदङ्गम्॥

अत्राङ्गानां नश्वरस्वभाववर्णना जातिः। छायया गौरश्यामादिवर्णेन प्रतारिता वञ्चिता मतिर्यस्य स त्वमेवंभूतः। मलरन्ध्रबन्धम्=मलानां विष्ठानां रन्ध्राणि छिद्राणि तेषां बन्धः प्रघट्को यत्र तत्तादृशमङ्गमित्यर्थः। शिष्टं स्पष्टम्। यथा वा रघुवंशस्य त्रयोदशे सर्गे—

ससत्त्वमादाय नदीमुखाम्भः सम्मीलयन्तो विवृताननत्वात्।
अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान्॥

अत्र तिमिजातेरेवंविधजलप्रवाहस्योर्ध्वविस्तारणं स्वभाव इति सेयं जातिक्रियास्वभावोक्तिः। यथा वा कुमारसम्भवे चतुर्थसर्गे ब्राह्मणवेषधारिमहादेववाक्यश्रवणोत्तरं पार्वत्या अवस्थावर्णनम्—

इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया।
विकुञ्चितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते॥

अत्र पार्वत्याः कोपजनितादृशचेष्टावर्णनात्मिका लोचनप्रेरणक्रियास्वभावोक्तिरियम्। अनया रीत्या सर्वत्रोह्यम्। ग्रन्थगौरवभयान्न विस्तरः। अधिकोदाहरणप्रपञ्चनन्तु शिष्यबुद्धिवैशद्यार्थम्।

इदन्तु बोध्यम्—यत्र स्वभाववर्णनेऽपि चमत्कृतिविशेषो न दृश्यते तत्र नायमलङ्कारः। यथा—

गोरपत्यं बलीवर्दो घासमत्ति मुखेन सः ।
मूत्रं मुञ्चति शिश्नेनापानेनैव तु गोमयम् ॥

इत्यादौ नालङ्कारत्वम् । परन्तु वस्तुनो रूपं द्विविधम् । सहजमागन्तुकञ्च । तदुक्तमभियुक्तैः—

स्वभाव एव भावानां स्वरूपमभिधीयते ।
निजमागन्तुकञ्चेति द्विविधं तदुदाहृतम् ॥ इति ।

ये तु वस्तुस्वरूपोल्लेखनाकारामर्थव्यक्तिं गुणेषु गणयन्ति तेषां मते स्वभावोक्तिर्नालङ्कारः किन्तु गुण एव । भोजस्तु—सार्वदिकवस्तुनो रूपोल्लेखे गुणत्वम्, जायमानागन्तुकरूपवर्णनायामलङ्कारत्वमित्याचष्टे । तथा च तस्योक्तिः—

अर्थव्यक्तेरियं भेदमियता प्रतिपद्यते ।
जायमानमियं वक्ति रूपं सा सार्वकालिकम् ॥ इति कृतमतिलेखेन ॥१३॥

[ अथ उपमायाः सामान्यलक्षणम् ]

**यथाकथञ्चित्सादृश्यं यत्रोद्भूतं प्रतीयते ।**
**'उपमा'नाम सा तस्याः प्रपञ्चोयं निदर्श्यते ॥ १४ ॥**

———:*:———

यस्योपमा न लोकेऽस्मिन् यस्य नाम महद्यशः ।
तमर्काभं स्वयञ्ज्योती रणत्कलमुपास्महे ॥ १ ॥

उपमां लक्षयति—'यथा'इति । यत्र=काव्ये यथाकथञ्चित्=येन केनापि प्रकारेण धर्मेण गुणेन क्रियया अन्येन वेत्यर्थः, उद्भूतम्=स्फुटम् अभिधेयमित्यर्थः, सादृश्यम्=साम्यं साधर्म्यमिति यावत् उपमानोपमेययोरिति शेषः । प्रतीयते=बुध्यते सा उपमा नाम=सा साम्यप्रतीतिः उपमानामालङ्कारः। तस्याः=उपमाया अलङ्कृतेः अयम्=वक्ष्यमाणः प्रपञ्चः=विस्तरः नानाभेदरूपः निदर्श्यते=निरूप्यत इत्यर्थः। एवञ्च—काव्यगतमलौकिकं चमत्कारकारि सादृश्यम् **'उपमा'** इति फलितम् । उक्तञ्च 'अप्पय्यदीक्षितैः' कुवलयानन्दे—'यत्रोपमानोपमेययोः सहृदयहृदयाह्लादकत्वेन चारु सादृश्यमुद्भूततयोल्लसति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते तत्रोपमालङ्कारः' इति । 'पण्डितराजेन' अपि भणितम्—'सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालङ्कृतिः' इति । सादृश्यं साधर्म्यं सारूप्यं साम्यमिति चानर्थान्तरम् । एतेन 'गौरिव गवयः' इत्यादौ सत्यपि साधर्म्ये नोपमाया अलङ्कारत्वं चारुत्वाभावात् ।

इदमत्रावधार्यम्—उपमाया घटकाश्चत्वारः पदार्थाः सन्ति—उपमानम्, उपमेयम्, समानो धर्मः, तद्वाचक इवादिश्च । तत्राधिकगुणमुपमानं चन्द्रादि । वर्ण्यमानमल्पगुणमुपमेयं कामिनीवदनादि, समानो धर्म आह्लादकत्वादिः। वस्तुतस्तु—यस्योपमा दीयते तदुपमानम् ।

यस्मै उपमा दीयते तदुपमेयमिति बालबुद्धेरव्यामोहकरी सरणिः। उक्तञ्च वामनेन—'उपमानेनोपमेयस्य गुणलेशतः साम्यमुपमा' ( काव्या० अध्या० २ सू० १ ) उपमीयते सादृश्यमानीयते येनोत्कृष्टगुणेनान्यत् तद् **उपमानम्**, यदुपमीयते न्यूनगुणं तद् **उपमेयम्**। सेयमुपमा तावत् द्विविधा लौकिकी कल्पिता च। लोकप्रसिद्धा लौकिकी। यथा—'कमलमिव मुखं मनोज्ञम्' इत्यादौ मुखकमलयोरुपमानोपमेयभावो लोके प्रसिद्धः। यथा वा—'हंसीव कृष्ण ते कीर्त्तिः स्वर्गङ्गामवगाहते' इति हंसीकीर्त्योरपि। कल्पिता तु—'गुणबाहुल्यतश्च कल्पिता' (काव्य० अध्या० २। सू० २) गुणानां बाहुल्यं गुणबाहुल्यम्, तत उपमानोपमेययोः साम्यात् कल्पितोपमा, कविभिः कल्पितत्वात् कल्पिता। यथा—

उद्गर्भहूणतरुणीरमणोपमर्दभुग्नोन्नतस्तननिवेशनिभं हिमांशोः।
बिम्बं कठोरबिसकाण्डकडारगौरैर्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति॥

अत्र तादृशस्तनहिमांशुबिम्बयोरुपमानोपमेयभावो न लोकप्रसिद्धः किन्तु कविकल्पितः।

उपमानोपमेयगतधर्माश्च गुणक्रियादिरूपा यथायथमवगन्तव्याः। तत्र—'हंसीव कृष्ण ! ते कीर्त्तिर्धवला लोकगामिनी, इत्यादौ धवलत्वं गुणः। 'हंसीवेयमिहायाता कान्ता स्वकान्तसन्निधौ' इत्यादावागमनादिक्रियारूपः। एवमन्यदप्यूह्यम् ॥ १४ ॥

[ तत्रादौ धर्मोपमाया उदाहरणम् ]

**अम्भोरुहमिवाताम्रं मुग्धे ! करतलं तव।**
**इति 'धर्मोपमा' साक्षात् तुल्यधर्मप्रदर्शनात् ॥ १५ ॥**

प्रतिज्ञानुसारमुपमाप्रपञ्चं कुर्वाणः प्रथमं 'धर्मोपमा' मुदाहरति—'अम्भोरुहम्' इति। अयि ! मुग्धे ! अपरिपक्वमते ! सुन्दरि ! तव करतलम्=पाणितलम् अम्भोरुहमिव=कोकनदमिव आताम्रम्=समन्ततो लोहितम् 'अस्ति' इति शेषः। इति=उक्ते वाक्ये साक्षात्=स्फुटम् तुल्यधर्मप्रदर्शनात्=आताम्रमितिपदोपात्तस्य तुल्यस्य धर्मस्य आताम्रत्वस्य रक्ततारूपसाधारणधर्मस्य प्रदर्शनात् उपादानात् इयं **'धर्मोपमा'** नाम उपमा। अर्थात् उपात्तधर्मा इयमुपमा। इयञ्च पूर्णा श्रौती, चतुर्णामपि उपमानोपमेयसाधारणधर्मतद्वाचकानामुपादानात्। अत्र अम्भोरुहमुपमानम्, करतलमुपमेयम्, आताम्रत्वं समानो धर्मः, इव शब्द उपमावाचकः। एवमेवाग्रेऽपि यथासम्भवं योजनीयम् ॥ १५ ॥

[वस्तूपमाया उदाहरणम्]

**राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव।**
**इयं प्रतीयमानैकधर्मा 'वस्तूपमै'व सा ॥ १६ ॥**

वस्तूपमां लक्ष्यलक्षणविधया दर्शयति—'राजीवम्' इति। ते=तव वक्त्रम्=आस्यं राजीवम् इव=कमलमिव तथा नेत्रे=नयने नीलोत्पले इव=रात्रिविकाशिकमले इव 'स्त' इति शेषः। [अस्मिन् 'काव्ये'] वाक्ये प्रतीयमानैकधर्मा=प्रतीयमानो गम्यमानो व्यङ्ग्य इति यावत् [नतु शब्देन साक्षादभिधीयमानः] एकः साधारणो धर्मो मनोज्ञत्वादिरूपो यस्यां सा तादृशी

इयम् 'वस्तूपमा' नाम अलङ्कारः । वस्तुनोः उपमानोपमेययोर्द्वयोरेवोपादानात् । वस्तूपमा धर्म्युपमा इति समानौ शब्दौ । अत्र राजीवमुपमानम्, वक्त्रमुपमेयम्, इवशब्दो वाचकः । एवं नीलोत्पलमुपमानम्, नेत्र उपमेयभूते, वाचकः इवशब्दः, उभयत्र मनोज्ञत्वादिः साधारणो धर्मः, स च नोपात्तः किन्तु उपमानोपमेयवाचिशब्दयोरुपादानादेव गम्योऽसावितीयम् 'अनुपात्तधर्मोपमा' ज्ञेया । इयमेवार्वाचां मते श्रौती धर्मलुप्तोपमा । प्राचां मते तु इयं 'वस्तूपमा' इति कथ्यते । अत्र मूलमाग्नेयं वचः—

यत्र साधारणो धर्मः कथ्यते गम्यतेऽथवा ।
ते धर्मवस्तुप्राधान्यात् धर्मवस्तूपमे इमे ॥ इति ।

इदमपि बोध्यम्—यत्र सादृश्यं नैव स्फुटं वर्त्तते तत्र धर्मोपादानं विना उपमाया नैव निर्वाहः । यथा 'सकलकलं पुरमेतज्जातं सुधांशुबिम्बमिव' इत्यादौ 'सकलकल' मित्यायंशानुपादाने नैव सुधांशुबिम्बपुरयोर्लोकप्रसिद्धं किमपि सादृश्यमस्ति । अत एव नवीना एतादृशस्थले उपमायामनुचितार्थत्वदोषमाकलयन्ते । तथैव 'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्' इत्यादावपि । नहि काव्यशशिनोः सादृश्यं लोके प्रसिद्धम् । तस्मादेतादृशस्थले नैव वस्तूपमेति निश्चेतव्यम् । परन्तु—कल्पितोपमायां क्वचिदनुचितार्थत्वं क्वचिन्नेत्यस्मद्गुरुचरणा आहुः । विस्तरस्तु अस्मत्काव्यप्रकाशप्रभायां द्रष्टव्यः ॥ १६ ॥

[ विपर्यासोपमाया उदाहरणम् ]

**तवाननमिवोन्निद्रमरविन्दमभूदिति ।**
**सा प्रसिद्धेर्विपर्यासात् विपर्यासोपमेष्यते ॥ १७ ॥**

विपर्यासोपमां दर्शयति—'तव' इति । उन्निद्रम्=विकसितम् अरविन्दम्=कमलम् तव आननम् इव=मुखमिव अभूत्=अर्थात् विकसितमासीत् । इति=उक्ते वाक्ये प्रसिद्धेः=उपमानोपमेयभावप्रसिद्धेः विपर्यासात्=वैपरीत्यात् [ कविकल्पनाद्वारा इति शेषः ] सा=[ इयम् ] उपमा 'विपर्यासोपमा' इष्यते=कविभिरिति शेषः ।

अयं भावः—वर्णनीयानां [ प्रस्तुतानाम् ] मुखादीनामुपमेयत्वम् अप्रस्तुतानाञ्चारविन्दादीनामुपमानत्वमस्ति इति लोकप्रसिद्धिः, तां त्यक्त्वा यदत्र वर्ण्यस्य मुखस्यैवोत्कर्षताप्रकटनायोपमानभावः अप्रस्तुतस्यारविन्दस्य ततोऽपकर्षताबोधनाय उपमेयभावःकल्पितःसोऽयं प्रसिद्धिविपर्यासः । अत एवेयं 'विपर्यासोपमा' इत्याभण्यते मनीषिभिः । इयमेव 'कल्पिता' इत्याह वामनः। तथा चोक्तमधस्तात् । अयञ्च **प्रतीपा**लङ्कार एवेति नव्याः । तथाह जयदेवः—

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् ।
त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः ॥

प्रसिद्धोपमानोपमेयभावस्य प्रतिलोम्यात् प्रतीपम् । पद्मवक्त्रयोरेवोपमानोपमेयभावो लोकप्रसिद्धो नतु वक्त्रपद्मयोरिति । कुवलयानन्दे चोदाहरणान्तरमपि—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये ! तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ इति ।

प्रोषितस्य प्रियां प्रति वियोगवेदनावर्णनमिदम् । अत्रापि नेत्रादीनामुपमेयत्वम्, इन्दीवरादीनामुपमानत्वमिति प्रसिद्धिविपर्यासः कृतः । चन्द्रालोके भङ्गयन्तरैरपि प्रतीपालङ्कार उक्तः तत एवावगन्तव्यः ॥ १७ ॥

[ अन्योन्योपमाया वर्णनम् ]

**तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।**
**इत्य'न्योन्योपमा' सेयमन्योन्योत्कर्षशंसिनी ॥ १८ ॥**

अन्योन्योपमां दर्शयति—'तव' इति । अम्भोजम्=कमलं तव आननम् इव=तवास्यमिव ते=तव मुखम्=आस्यम् अम्भोजम् इव इति=उक्तप्रकारे वाक्ये अन्योन्योत्कर्षशंसिनी= अन्योन्यस्य परस्परस्य अर्थात् अम्भोजोपमानत्वेन मुखस्य, मुखोपमानत्वेन अम्भोजस्य य उत्कर्षः=सौन्दर्यवैचित्री तस्य शंसिनी लक्षयित्री सा इयम्=उपमा 'अन्योन्योपमा' ज्ञेया ।

अत्र द्वे एव मुखाम्भोजे प्रस्तुते बोध्ये; अन्यथा एकस्य प्रस्तुतत्वे तदीयोत्कर्षप्रकटनप्रयासो व्यर्थः स्यात् कवेः ।

'मुखमम्भोजञ्च तुल्यम्' इत्यादौ परस्परस्य उपमानोपमेयभावे सत्यपि वैचित्र्याभावान्नायमलङ्कारः । पर्यायोपमाया औपम्यमेकवाक्यगतम् अत्र तु वाक्यद्वयगतमिति विशेषः । इयमेवार्वाचां मते **उपमेयोपमा** । उक्तञ्च मम्मटाचार्यैः—'विपर्यास उपमेयोपमा तयो' रिति । तयोरुपमानोपमेययोश्चेत्परिवृत्तिरर्थाद् वाक्यद्वये स्यात्तदोपमेयोपमा [मता] ।

जयदेवोऽपि—

पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता ।
धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ॥ इत्याह ।

यथा वा—

खमिव जलं जलमिव खं हंस इव चन्द्रश्चन्द्र इव हंसः ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥

अत्र प्रकृतयोरेवोपमानोपमेयत्वकल्पनम् । राज्ञि धर्मार्थसमृद्धेः शरदि गगनादिनैर्मल्यस्य च वर्णनीयत्वात् । शरद्वर्णनमिदम् । यथा वा—

कौमुदीव भवती विभाति मे कातराक्षि ! भवतीव कौमुदी ।
अम्बुजेन तुलितं विलोचनं लोचनेन च तवाम्बुजं समम् ॥ इत्याद्यन्यदप्यूह्यम् ।[1]

---

१ दर्पणकारस्तु [विश्वनाथः] एवमाह—'पर्यायेण द्वयोरेतदुपमेयोपमा मता' इति उदाहृतवांश्च—

हासः प्रसूनमिव हासमिव प्रसूनं पाणिः प्रवाल इव पाणिरिव प्रवालः ।
केशो द्विरेफ इव केश इव द्विरेफः सा भाति वीरुदिव सैव विभाति वीरुत् ॥ इति ॥

यथा वा **मम**—

शिवराज इवाम्बरमणिरम्बरमणिरिव चकास्ति शिवराजः ।
ज्योत्स्नेव तस्य कीर्तिस्तदीयकीर्तिरिव लसति लोके सा ॥ इति ॥

**त्वन्मुखं कमलेनैव तुल्यं नान्यन केनचित् ।**
**इत्यन्यसाम्यव्यावृत्तेरियं सा 'नियमोपमा' ॥ १९ ॥**

नियमोपमां निरूपयति—'त्वन्मुखम्' इति । त्वन्मुखम्=त्वदीयमाननं कमलेन एव=सरोजेनैव तुल्यम्=सदृशम् अन्येन केनचिदपि न=तुल्यमित्यर्थः । इति=अनेन प्रकारेण अस्मिन् वाक्ये अन्यसाम्यव्यावृत्तेः=अन्यस्य कमलभिन्नस्य चन्द्रादेः साम्यम् औपम्यं तस्य व्यावृत्तेः निराकरणात् इयं सा=सर्वप्रसिद्धा 'नियमोपमा' इति नाम्नी उपमा 'मता' इति शेषः ।

अत्र 'अनेकेषामुपमानानां सद्भावः उपमेयस्य प्रस्तुतस्य अपकर्षतापर्यवसायी' इति तन्निरासकरणेन प्रकृष्टतमेनैकेन सादृश्यकल्पनमुपमेयस्यैव [मुखादेः] उत्कर्षातिशयं पुष्णातीति ह्येयं नियमोपमा । यथा वा **मम**—

इन्द्रेणैव समो भूपस्तन्मन्त्री गुरुणा तथा ।
राज्ञी च कमलातुल्या नैषां साम्यं परस्थितम् ॥ १९ ॥

[ अनियमोपमाया लक्ष्यलक्षणे ]

**पद्मं तावत्तवान्वेति मुखमन्यच्च तादृशम् ।**
**अस्ति चेदस्तु तत्कारीत्यसावनियमोपमा' ॥ २० ॥**

अनियमोपमां दर्शयति—'पद्मम्' इति । पद्मं तावत् तव मुखम् अन्वेति=अनुसरति अनुकरोतीति यावत् । अन्यच्च=पद्मभिन्नं चन्द्रादि तादृशम्=पद्मवन्मनोहरं तत्कारि=त्वन्मुखानुकारि अस्ति चेद् अस्तु=नाम इति=एवंरूपेणानुकारिनियमाभावात् वाक्योक्ता असौ=प्रसिद्धा 'अनियमोपमा' मता इति शेषः ।

अत्र 'पद्मम्' इति कर्तृ, 'मुखम्' इति तस्य कर्म, तेन च मुखस्योपमानत्वेन वैचित्र्यातिशयः अतएवेयमुपमा नत्वन्यथा । प्रसिद्धोपमेयभावस्योपमानत्व एवास्या विच्छित्तिविशेषशालित्वात् ।

केचित्तु—'तव मुखं पद्ममन्वेति अन्यच्च पद्मवत् सुन्दरं वस्तु चन्द्रादि अन्वेति इति पूर्वेणान्वयः' इत्यादि व्याकृतवन्तः तन्मन्दम् यस्य कस्याप्युपमानकल्पनाया नियमाभावत्वे तादृशविच्छित्तिविशेषाभावात् तस्माद् यथाव्याख्यातमेवास्तु । अत्रोत्तरार्धं लक्षणम् ॥२०॥

[ समुच्चयोपमाया लक्ष्यलक्षणे ]

**समुच्चयोपमाप्यस्ति न कान्त्यैव मुखं तव ।**
**ह्लादनाख्येन चान्वेति कर्मणेन्दुमितीदृशी ॥ २१ ॥**

समुच्चयोपमां निरूपयति—'समुच्चयोपमा' इति । [हे ! प्रिये !] तव मुखम्=आननं कान्त्या=वर्णशोभया एव=केवलं इन्दुम्=चन्द्रम् न अन्वेति=न अनुसरति ह्लादनाख्येन=ह्लादो मोदविशेषः तदाख्येन तन्नामकेन च कर्मणा व्यापारेणापि 'इन्दुमन्वेति' । अत्र चकारः समुच्चयार्थः । इति=दर्शितदिशा उक्तवाक्ये ईदृशी=एवमाकारा 'समुच्चयोपमा अपि अस्ति' । इयञ्च समुच्चयोपमा क्रियया, गुणेन, गुणक्रियाभ्याञ्चेति त्रिधा बोद्धव्या । अत्र ह्लादकान्तिरूपयोः समुच्चितयोर्धर्मयोः साम्योक्तेः 'समुच्चयोपमा' इत्यर्थः ॥ २१ ॥

---

(प्र०) नियमोपमायाः किं लक्षणम् किञ्चोदाहरणम् ? कथञ्च तत्र तस्य सङ्गतिः ?
(उ०) अस्य पृ० पं० १

[अतिशयोपमाया लक्ष्यलक्षणे]

**त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः ।**
**इयत्येव भिदा नान्येत्यसा'वतिशयोपमा' ॥ २२ ॥**

अतिशयोपमां दर्शयति—'त्वयि' इति । 'तव मुखं त्वयि एव दृष्टम्' चन्द्रमाः=शशी [पुनः] दिवि=आकाशे दृश्यते=दृग्गोचरो भवतीत्यर्थः । इयती=एतावन्मात्रा अर्थात् आश्रय-भेदहेतुका 'एव' [मुखचन्द्रमसोः] भिदा=विशेषः 'अस्ति' इति शेषः । न अन्या=गुणक्रिया-दिनिमित्ता भिदा नैवास्तीत्यर्थः । इति=एवमाकारा उक्तवाक्यनिष्ठा 'अतिशयोपमा' कथ्यते ।

भिन्नाश्रयत्वेऽपि औपम्यमधिकं चमत्करोतीति 'अतिशयोपमा' ज्ञेया । एवञ्च 'भिन्ना-श्रयत्वेऽप्यधिकमौपम्यमतिशयोपमेति पर्यवसितं लक्षणम् । अत्र इवादिपदप्रयोगाभावात् औपम्यं [साम्यं] व्यङ्ग्यम् । नच रूपकध्वनिकाव्यमिदम् यतः अधिकरणभेदेन द्वयोर्मुख-चन्द्रमसोरभेदप्रतीतिर्नास्ति । अभेदप्रतीतिं विना रूपकाभावात् । नाप्ययं व्यतिरेकः उप-मानादुपमेयस्याधिकतायामपर्यवसानात् तद्विषयककविसंरम्भाप्रतीतिरिति सहृदयाः ॥ २२ ॥

[उत्प्रेक्षितोपमाया लक्ष्यलक्षणे]

**मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः ।**
**पद्मेऽपि सा यदस्त्येवेत्यसा'वुत्प्रेक्षितोपमा' ॥ २३ ॥**

उत्प्रेक्षितोपमां दर्शयति—'मयि' इति । अस्याः=कान्तायाः मुखश्रीः=मुखस्य कान्तिः शोभा मयि एव=नापरत्र इति=एवमाकारतया इन्दोः=चन्द्रस्य विकत्थनैः=स्वात्मप्रशंसनैः अलम्=उक्तरूपेण तेनात्मश्लाघा न कर्त्तव्येत्यर्थः । यत्=यस्माद्धेतोः पद्मे=कमले अपि सा= कान्ताननकान्तिः अस्ति एव=विद्यत एवेत्यर्थः । इति=एवमाकारा असौ 'उत्प्रेक्षितोपमा' ज्ञेया । उत्प्रेक्षितस्य अतात्त्विकत्वेन समारोपितस्योपमा उत्प्रेक्षितोपमा इत्यन्वर्था सज्ज्ञैव लक्षणम् ।

अयमत्राशयः—निरूपिता मुखशोभा वस्तुतश्चन्द्रे नास्तीति विवक्षितम्, किन्तु नाय-कचाटुवचनेन सा सम्भाविता, सम्भावनञ्चोत्प्रेक्षा भवति, अतः तन्मूलकत्वादियमुत्प्रेक्षितोपमा मता । अत्रापि साम्यं व्यङ्ग्यम् । तद्वाचकेवादेरभावात् ।

नवीनास्तु—अत्र चन्द्रस्य विकत्थनासम्बन्धेऽपि तत्सम्बन्धोक्तेः 'सम्बन्धातिशयोक्तिः स्यादयोगे योगकल्पनम्' इति लक्षणघटनात् सम्बन्धातिशयोक्तिरलङ्कार इत्याहुः ।

वयन्तु—'गर्वमसंवाह्यमिमम्' इत्यादिस्थलवत् 'अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत्' इत्युक्तेः प्रतीपविशेषच्छायामपि ब्रूमः । अत्रोत्प्रेक्षया मूलत्वाकल्पनं जैवं ग्रन्थकारक-ल्पनानानुषाङ्गि इत्युपेक्ष्यत एव सूरिभिः ॥ २३ ॥

[अद्भुतोपमाया लक्ष्यलक्षणे]

**यदि किञ्चिद्भवेत्पद्मं सुभ्रु ! विभ्रान्तलोचनम् ।**
**तत्ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥ २४ ॥**

अद्भुतोपमां दर्शयति—'यदि' इति । हे ! सुभ्रु !=सुष्ठु हृदयहारिणी मदनावेशका-रिणी भ्रूः भ्रकुटी यस्याः सा तत्सम्बुद्धौ यदि=नाम पद्मम्=कमलम् किञ्चित्=ईषत् विभ्रा-न्तलोचनम्=आघूर्णितनयनम् भवेत्=स्यात् तत्=तदा ते=तव मुखश्रियम्=आननकान्तिम् धत्ताम्=धारयतु इति=एवमाकारा असौ 'अद्भुतोपमा' मता इति शेषः ।

अत्र यद्यर्थबलेन सादृश्यमधिकं चमत्कारि द्योतितम् अर्थात् विभ्रान्तलोचनत्वादयो धर्मा वस्तुतो मुखनिष्ठा एव, तत्प्रतिद्वन्द्विनि पद्मे तु सम्भावनामात्रेणोन्नीता चमत्कारमावहन्ति, अत इयम् 'अद्भुतोपमा' । अन्यैरप्युक्तम्—

यत्रोपमेयधर्माः स्युरुपमानेऽधिरोपिताः ।
चमत्कारविधानार्थं तामाहुरद्भुतोपमाम् ॥ इति ॥

अग्निपुराणे तु एवमुक्तम्—

त्रैलोक्यासम्भवि किमप्यारोप्य प्रतियोगिनि ।
कविनोपमीयते या प्रथमे साद्भुतोपमा ॥ इति ।

एनामेव च प्रकाशकारादयो 'यद्यर्थोक्तौ च कल्पनम्' इति लक्षणेनातिशयोक्तिभेदमाहुः । उदाहरन्ति च—

राकायामकलङ्कं चेदमृतांशोर्भवेद् वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ इति ॥

अत्र राकेन्दोर्निर्लक्ष्मत्वस्य बहिरसम्भवेऽपि कविना सम्भवद्रूपतयोक्तौ आस्यं निरुपमतायां पर्यवस्यति ।

रुद्रटस्तु—इमामुत्पाद्योपमामाह । तथाहि—

अनुपममेतद्वस्त्वित्युपमानं तद्विशेषणञ्चासत् ।
सम्भाव्य सयद्यर्थं या क्रियते सोपमोत्पाद्या ॥ इति ॥

उदाहृतश्च तेनैव यथा—

कुमुददलदीधितीनां त्वक्सम्भूय च्यवेत यदि ताभ्यः ।
इदमुपमीयेत तया सुतनोरस्याः स्तनावरणम् ॥ इति ॥

अत्र हि कुमुददलदीधितित्वमुपमानम् तद्विशेषेण च्यवनञ्च द्वयमपि सयद्यर्थं सम्भावितम् । इतरे इमामेव 'सम्बन्धातिशयोक्ति' मचकथन् । यथा—

यदि त्रिलोकी गणनापरा स्यात् तस्याः समाप्तिर्यदि नायुषः स्यात् ।
पारे परार्धं गणना यदि स्याद् गणेयनिःशेषगुणोऽपि स स्यात् ॥ [श्रीहर्षः]

अत्र त्रिलोकीगणनापरत्वाद्यसम्बन्धेऽपि तत्सम्बन्धसम्भावनाकथनात् सम्बन्धातिशयोक्तिः । अथवा—

उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्ताफलमस्य वक्षः ॥ [माघः]

अत्र व्योम्नो गङ्गाप्रवाहद्वयासम्बन्धेऽपि सम्भावनायां सम्बन्धकथनात् सम्बन्धातिशयोक्तिः । अथवा—

पुष्पं प्रवालोपहितं यदि स्यात् मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ [कालिदासः]

अत्र पुष्पादीनां प्रवालोपहितत्वाद्यसम्बन्धेऽपि सम्भावनया तत्सम्बन्धकथनादुक्तैवातिशयोक्तिः । कुवलयानन्दादिमते चेयं **सम्भावनालङ्कारः** । तथा चोक्तम्—

सम्भावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥ इति ॥ २४ ॥

[ मोहोपमाया लक्ष्यलक्षणे ]

**शशीत्युत्प्रेक्ष्य तन्वङ्गि ! त्वन्मुखं त्वन्मुखाशया ।**
**इन्दुमप्यनुधावामीत्येषा 'मोहोपमा' मता ॥ २५ ॥**

मोहोपमां निरूपयति—'शशी' इति । हे ! तन्वङ्गि !=सुकुमारावयवे ! त्वन्मुखम्=त्वदास्यम् शशी=चन्द्र इति=एवमाकारम् उत्प्रेक्ष्य=भ्रमेणाभिन्नं मत्वा अनन्तरं त्वन्मुखाशया=तव मुखदर्शनकामनया इन्दुम् अपि=चन्द्रमपि अनुधावामि=अनुसरामि इति=इत्याकारया दिशा एषा=अलङ्कारविदां प्रसिद्धा मोहोपमा=अन्यस्मिन् अन्यबुद्धिर्मोहः तद्धेतुका उपमा मोहोपमा इति नामालङ्कृतिः मता=स्मृता सूरिभिरिति शेषः ।

अत्र मुखभिन्नेऽपि [मुखत्वधर्माभाववत्यपि] चन्द्रे यन्मुखत्वेन ज्ञानं [भ्रमः] तद्धेतुकत्वादियं मोहोपमेति लक्षणसमन्वयः । इमामेव नवीना 'भ्रान्तिमान् अलङ्कार' इत्याचक्षते । तथा चाह विश्वनाथः—'साम्यादतस्मिंस्तबुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता' इति । उदाहरणं यथा **रुद्रटस्य**—

पालयति त्वयि वसुधां विविधाध्वरधूममालिनीः ककुभः ।
पश्यन्तो दूयन्ते घनसमयाशङ्कया हंसाः ॥

अत्र वर्षाकाले यज्ञधूमधारिणीषु दिशासु घनत्व—[ मेघत्व ]—धर्मेण हंसानां भ्रान्तिः । परमत्र साम्यं व्यङ्ग्यम् ।

नलचम्पूकाव्ये चन्द्रोदयवर्णने यथा—

मुग्धा दुग्धधिया गवां विदधते कुम्भानधो बल्लवाः
कर्णे कैरवङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।
कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाशङ्कया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥

अत्र बल्लवानां भ्रान्तौ तथा वर्णनाद् भ्रान्तिमानलङ्कारः । अत्रापि 'शशी' इत्युपक्रम्य 'इन्दुम्' इति प्रक्रमभङ्गो गौडसम्प्रदायानुरोधेन सोढव्यः ॥ २५ ॥

[ संशयोपमाया लक्ष्यलक्षणे ]

**किं पद्ममन्तर्भ्रान्तालि ! किन्ते लोलेक्षणं मुखम् ।**
**मम दोलायते चित्तमितीयं 'संशयोपमा' ॥ २६ ॥**

संशयोपमां निरूपयति—'किम्'इति । अन्तर्भ्रान्तालि=अन्तर्गर्भे भ्रान्तौ सभ्रमौ अली भ्रमरौ यत्र तत् तादृशं किं पद्मम्=कमलं किम् अथवा ते=तव किम् लोलेक्षणम्=लोले चपले ईक्षणे नयने यस्मिन् एवम्भूतं मुखम्=आननमस्ति । मम चित्तम्=मनः दोलायते=संशयारूढं भवति इति=एवमाकारा इयम् संशयोपमा=संशयहेतुकत्वात् 'संशयोपमा' ज्ञेया इति शेषः ।

विच्छित्तिविशेषतया सादृश्यपर्यवसायिसंशयहेतुकोपमा 'संशयोपमा' इति लक्षणमागतम्भवति । भ्रान्तालित्वलोलेक्षणत्वयोर्द्वयोर्धर्मयोः बिम्बप्रतिबिम्बभावः संशयहेतुः, स च

संशयः सादृश्ये पर्यवसित इति तद्धेतुकेयमुपमा । इयमेव नव्यैः 'सन्देहालङ्कार' इत्युच्यते। उक्तञ्च मम्मटेन--'ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः' इति । द्विविधोऽपि 'काव्यप्रकाशे' उदाहृतः । किन्तु 'अलङ्कारमणिहारे' तस्य लक्षणमित्थमुक्तम्—

सम्भावना निश्चयान्यतरभिन्ना मनोरमा ।
सादृश्यहेतुका बुद्धिः 'सन्देहालङ्कृति'र्मता ॥

उदाहृतञ्च तत्रैव—

किन्तु तुषारासारः किं घनसारः किममृतसारो वा ।
शमयति यदिदं क्लममिति समशायि जनैर्हरेर्दृशो विषये ॥

भेदोक्तौ यथा--

अयं मार्त्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैव नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥

तदनुक्तौ यथा--

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ इति ।

यथा वा पण्डितराजानाम्—

तीरे तरुण्या वदनं सहासं नीरे सरोजं विकसद्विकासम् ।
आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला ॥ इति दिक् ॥२६॥

[निर्णयोपमाया लक्ष्यलक्षणे]

**न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युतिः ।**
**अतस्त्वन्मुखमेवेदमित्यसौ 'निर्णयोपमा' ॥ २७ ॥**

निर्णयोपमां निरूपयति—'न' इति । इन्दुनिग्राह्यस्य=इन्दुना चन्द्रेण निग्राह्यः तिरस्कार्यः तस्य चन्द्रकृतपराभवविशिष्टस्येत्यर्थः, पद्मस्य=कमलस्य द्युतिः=कान्तिः इन्दुलज्जाकरी=चन्द्रपराभवकारिणी न=नास्त्येव । 'सर्वं वाक्यं सावधारणम्' इति न्यायेनायमर्थः । अतः=अतो हेतोः 'इदम् त्वन्मुखमेव' नान्यत् अर्थात् त्वन्मुखमेवेन्दुपराजयकारि इति=एवमाकारा इयं 'निर्णयोपमा' संशयोत्तरकालिकत्वात् निर्णयस्य तद्धेतुकोपमा निर्णयोपमा। अग्निपुराणे [ ३४४ ] अध्याये निर्णयोपमाया लक्षणमित्थमुक्तम्--'उपमेयस्य संशय्य निश्चयान्निश्चयोपमा' इति । निर्णयोपमा निश्चयोपमा इत्यनर्थान्तरम् ।

अत्र पूर्वम् 'इदं त्वन्मुखं पद्मं वा' इति संशये जाते तत उत्तरं विशेषज्ञानात् 'त्वन्मुखमेवेदम्' इति निश्चयान्निर्णयोपमेति लक्षणसङ्गतिः । एनामेवोपमां नव्या 'निश्चयान्तसन्देहा-

(प्र०) निर्णयोपमां लक्ष्यलक्षणादिभिः प्रपञ्चय ? (उ०) अस्य पृ० पं० २३ ।

लङ्कार' इत्याहुः। अत एवोक्तं मम्मटेन 'न केवलमयं निश्चयगर्भो यावन्निश्चयान्तोपि सन्देहः स्वीकृतः। यथा--

इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम्।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि! निश्चितं परतः॥' इति।

अत्र 'क्व कलङ्क' इत्यादिभेदक्रोक्तिः। आदौ संशयः, अन्ते निश्चयश्च। 'विश्वनाथेन' पृथक् स्वीकृतो निश्चयालङ्कारो दण्डयभिमतोपमान्तःपात्येव॥ २७॥

[ श्लेषोपमाया लक्ष्यलक्षणे ]

**शिशिरांशुप्रतिस्पर्धि श्रीमत् सुरभिगन्धि च।**
**अम्भोजमिव ते वक्त्रमिति 'श्लेषोपमा' स्मृता॥ २८॥**

श्लेषोपमां निरूपयति-'शिशिरांशुप्रतिस्पर्धि' इति। ते=तव वक्त्रम्=आस्यम् अम्भोजम् इव=कमलमिव 'अस्ति' इति शेषः। कीदृशम् इत्याह—शिशिरांशुप्रतिस्पर्धि=शिशिरांशुः चन्द्रः प्रतिस्पर्धी प्रतियोगी विरोधी यस्य तत् इति अम्भोजपक्षेऽर्थः। शिशिरांशोः चन्द्रस्य प्रतिस्पर्धिनी निकारकारिणी या श्रीः कान्तिः सा अस्या अस्तीति तत् शिशिरांशुप्रतिस्पर्धि-श्रीमत् इति वक्त्रपक्षेऽर्थः। अम्भोजपक्षे 'श्रीमत्' इति पृथक् पदम् सश्रीकमित्यर्थः। तथा सुरभिगन्धि=सुरभिर्घ्राणतर्पणो गन्धो यस्य तत् इत्युभयत्रापि समानोऽर्थः। इति=एवमाकारा उपमा श्लेषहेतुकत्वात् 'श्लेषोपमा' स्मृता 'सूरिभि'रिति शेषः। श्लेषश्चात्र अर्थगतः शब्दपरिवृत्तिसहत्वात्। यत्र शब्दः परिवर्त्तनां न क्षमते तत्रासौ शब्दगतो भवति। सच समानोपमायामनुपदमेव स्फुटीभविष्यति। यद्यप्यत्र श्लेषोऽस्ति तथापि साक्षात् तज्जनिता नात्र वैचित्री किन्तु श्लेषेण केवलमुपमानोपमेयगतं साधर्म्यं द्योतितम्, द्योतितात्तस्मात्प्रधानतया उपमायाः प्रतीतिरिति तथैव व्यवहारः 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायादिति भावः॥२८॥

[ समानोपमाया लक्ष्यलक्षणे ]

**सरूपशब्दवाच्यत्वात् सा'समानोपमा' यथा।**
**बालेवोद्यानमालेयं सालकाननशोभिनी॥ २९॥**

समानोपमां निरूपयति—'सरूपशब्दवाच्यत्वात्'इति। समानरूपं यत् तत्सरूपम् अर्थात् वाच्य(अर्थ)भेदात् भिन्नमपि शब्दश्लेषकारणादभिन्नमिव प्रतीयमानं रूपं=तत्तद्वर्णात्मकं स्वरूपं यस्य तादृशो यः शब्दः तेन सरूपशब्देन वाच्यत्वात् सादृश्यस्य (साधारणधर्मस्य) प्रतिपाद्यत्वात् सा=प्रसिद्धा कविसमाजे 'समानोपमा' ज्ञेया इति शेषः। उदाहरति उत्तरार्धेन 'यथा' इति, इयम्=पुरोदृश्यमाना उद्यानमाला आरामराजिः बाला=[षोडशवार्षिकी] कामिनी 'इव' राजते इति शेषः। साम्यद्योतकं विशेषणमाह—'सालककाननशोभिनी' इति। कीदृशी सालकाननशोभिनी=अलकं चूर्णकुन्तलम् तेन सह वर्त्तत इति सालकं सालकञ्च तदाननं तेन शोभिनी इति बालापक्षे उपमानविशेषणम्, सालाः सर्जतरवः तेषां काननेन वनेन शोभिनीति उद्यानमालापक्षे उपमेयविशेषणम्।

---

(प्र०) श्लेषोपमायाः लक्ष्यलक्षणे दर्शय? (उ०) पृ० पं० ८।
(प्र०) [illegible]पमां प्रपञ्चय? (उ०) पृ० पं० २२।

अत्र भिन्नावप्युपमानोपमेययोः धर्मौ समानशब्दवाच्यत्वादभिन्नाविव सन्तौ सादृश्यं प्रयोजयतः, शब्दश्लेषमूलिका चेयं शब्दपरिवृत्त्यसहत्वात्। 'अथ बाला स्याद्वासूः'। 'सालः सर्जतरौ वृक्षमात्रप्राकारयोरपि' इति रभसः। कादम्बर्यादिमहागद्यकाव्येषु श्लेषोपमायाः भूयान् समाचारो द्रष्टव्यः॥ २६॥

[ निन्दोपमाया लक्ष्यलक्षणे ]

**पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम्।**
**समानमिति सोत्सेकमिति 'निन्दोपमा' स्मृता॥ ३०॥**

निन्दोपमां निरूपयति—'पद्मम्' इति। पद्मम्=कमलं बहुरजः=प्रचुरपरागम् अथ च रजोगुणबहुलम्, चन्द्रः=शशी क्षयी=कृष्णपक्षे स्वभावतः क्षीणकलः अथ च क्षयरोगी, ताभ्याम्=पद्मचन्द्राभ्यां तव आननम्=त्वदीयं मुखं समानमपि गुणान्तरेण तुल्यमपि सोत्सेकम्=अधिकोत्कर्षोपेतम् रजस्वलत्वाभावात् क्षयित्वाभावाच्चेत्यर्थः। इति=एवमाकारा सा=प्रसिद्धा [ कविसमाजे ] निन्दाहेतुकसादृश्यप्रतीतिः निन्दोपमा स्मृता=उपमानभूतपद्मचन्द्रयोः निन्दापूर्वकं मुखे साम्यप्रतिपादनात् 'निन्दोपमा' इति नाम्ना कथितेत्यर्थः।

उपमानयोः पद्मचन्द्रयोरपेक्षया उपमेयस्य मुखस्याधिक्यवर्णनात् 'व्यतिरेकालङ्कारो' ऽयमिति न भ्रमितव्यम्, यतोऽत्र केवलं साम्यबोधन एव कवेस्तात्पर्यं व्यतिरेके तु साम्यपूर्वकभेदे तात्पर्यं भवतीति विशेषः॥ ३०॥

[ प्रशंसोपमाया लक्ष्यलक्षणे ]

**ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः शम्भुशिरोधृतः।**
**तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते॥ ३१॥**

प्रशंसोपमां निरूपयति—'ब्रह्मण' इति। पद्मः=पङ्कजं ब्रह्मणः=प्रजापतेरपि उद्भवः=उत्पत्तिस्थानम्, चन्द्रः=शशी शम्भुशिरोधृतः=शम्भुना महादेवेन शिरसि उत्तमाङ्गे धृतः स्थापितः, तौ=पद्मचन्द्रौ त्वन्मुखेन=भवदाननेन तुल्यौ=समौ 'वर्तेते' इति शेषः। इति=एवमाकारा सा प्रसिद्धा प्रशंसोपमा उच्यते=कथ्यते कविभिः।

अत्र सर्वस्य जगतः उत्पादको ब्रह्मा, तस्यापि उत्पत्तिस्थानं पद्म, विष्णोर्नाभिकमलादुत्पन्नत्वाद् ब्रह्मणः। शशी च शिवेन शिरसा धृतो न त्ववयवान्तरे इति तयोर्महती प्रशंसा। तादृशप्रशंसायुक्तोपमाननिरूपितत्वादियं 'प्रशंसोपमा' कथ्यते।

अत्र प्रतीपालंकारोऽपि। तथाहि—

प्रतीपमुपमानस्योपमेयत्वकल्पनम्।
त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः॥ इत्याह जयदेवः।

एवमत्र 'तौ तुल्यौ त्वन्मुखेन' इत्युक्तौ मुखस्योपमानतां स्वीकृत्य प्रसिद्धस्तस्योपमेयभावः परित्यक्त इति प्रसिद्धोपमानोपमेयभावप्रातिलोम्यात् प्रतीपम्। एवञ्चानयोरङ्गाङ्गि-

---

(प्र०) निन्दोपमाया किं लक्षणम्? कथञ्च तस्य लक्ष्ये सङ्गतिः?
(उ०) अस्य० पृ० पं० ६।
(प्र०) प्रशंसोपमां प्रपञ्चय? (उ०) अस्य पृ० पं० १८।

भावः संकरः। अत्र 'पद्मः' इति पुंस्त्वनिर्देशात् अप्रयुक्तत्वं दोषः । स च पूर्वोक्तयुक्त्या गौडसम्प्रदायेन सह्यः ॥ ३१ ॥

[ आचिख्यासोपमाया लक्ष्यलक्षणे ]

**चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः ।**
**स गुणो वास्तु दोषो वे'त्याचिख्यासोपमां' विदुः ॥ ३२ ॥**

आचिख्यासोपमां निरूपयति—'चन्द्रेण' इति । त्वन्मुखं=तवास्यम् चन्द्रेण तुल्यम्=शशिना समम् इति मे=[मम] मनः आचिख्यासु=आख्यातुमिच्छु सः=आख्यानकामः गुणो वा दोषो वा अस्तु इति=एवमाकाराम् उपमां 'आचिख्यासोपमां' विदुः=जानन्ति कवयः ।

अत्र कान्ताननविषयकस्य हृदयभावस्य प्रकटीकरणात् पूर्वतो विलक्षणश्चारुतातिशय इत्यन्यविधैवेयमुपमाऽलङ्कारभूमिमासादयते ॥ ३२ ॥

[ विरोधोपमाया लक्ष्यलक्षणे ]

**शतपत्रं शरच्चन्द्रस्त्वदाननमिति त्रयम् ।**
**परस्परविरोधीति सा 'विरोधोपमा' मता ॥ ३३ ॥**

विरोधोपमां दर्शयति—'शतपत्रम्' इति । शतपत्रम्=कमलम्, शरच्चन्द्रः=शारदः शशी, त्वदाननम्=त्वदीयमुखम्, इति त्रयम्=एतत्त्रितयम् परस्परविरोधि=परस्परम् अन्योन्यं विरोधि प्रतिस्पर्धि । यदा शतपत्रं विकसति चन्द्रो मलिनो भवति, चन्द्रे च चन्दिते [शोभिते] शतपत्रं मुकुलीभवति, तवाननशोभायां जातायां तयोर्द्वयोरपि मालिन्यं पोस्फुटीति इति तेषां परस्परं विरोधः । सा [ इयम् ] मनोहरत्वाद्यनेकधर्मवत्त्वरूपविरोधवैचित्रीप्रन्थ-निमित्ता उपमा विरोधोपमा=एतन्नामालङ्क्रिया मता=सूरिभिरिति शेषः । अत्र दर्शित-प्रकारो विरोधः समतायां पर्यवस्यतीति विरोधेनोपमा 'विरोधोपमा' इत्यन्वर्थेयं सञ्ज्ञा ॥ ३३ ॥

[ प्रतिषेधोपमाया लक्ष्यलक्षणे ]

**न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।**
**कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥ ३४ ॥**

प्रतिषेधोपमामाचष्टे—'न' इति । इन्दोः=शशिनः ते=तव मुखेन=आननेन प्रति-गर्जितुम्=प्रतिस्पर्धां कर्तुम् जातु=कदाचिद् [ अपि ] न शक्तिः=सामर्थ्यं नास्ति, कथम्भूतस्य इन्दोः कलङ्किनः=मध्ये कालिमानं दधतः तथा जडस्य=मूर्खस्य अथ च शिशिरस्य । इति=एवमाकारा सा प्रसिद्धा प्रतिषेधोपमा=प्रतिषेधेनोपमा प्रतिषेधोपमा ज्ञेया ।

अत्र जडकलङ्किचन्द्रसादृश्यप्रतिषेधेन मुखस्यातिशयो द्योत्यते । किञ्च भेदे तात्पर्या-भावात् नायं व्यतिरेकः । निन्दोपमायां प्रतिषेधो नास्ति अत्र त्वस्तीत्यनयोर्विशेषो न विस्मर्तव्यः । नव्यास्तु—'अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा' इत्यादिवत् उपमानाद् उपमेयस्याधिक्ये पर्यवसानात् व्यतिरेकालङ्कारोऽयमित्याहुः ॥ ३४ ॥

[ चटूपमाया लक्ष्यलक्षणे ]

**मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी ।**
**तथापि सम एवासौ नोत्कर्षीति 'चटूपमा' ॥ ३५ ॥**

चटूपमां निरूपयति—'मृगेक्षणाङ्कम्' इति। ते=तव वक्त्रम्=मुखम् मृगेक्षणाङ्कम्=मृगस्य हरिणस्य ईक्षणयोः नयनयोः अङ्गविशेषयोः अङ्कः लक्ष्म यत्र तादृशम्, शशी=चन्द्रस्तु मृगेण=सर्वावयवयुक्तेन हरिणेन एव अङ्कितः=चिह्नितः मृगाङ्कत्वाच्छशिनः। तथापि=अधिकोपकरणवत्त्वेऽपि असौ=शशी सम एव=तवनानेन तुल्य एव [ त्वन्मुखतुल्य एव ] उत्कर्षी=उत्कृष्टः न=नास्ति इति=इत्याकारा चटूपमा चटुः प्रियवचनम् तदुपनिबन्धनवैचित्रीहेतोः 'चटूपमा' उच्यते। इयञ्चोपमा 'विशेषोक्ति' नामकालङ्कारगर्भितैव भवति। अन्यथा सर्वत्रोपमायां चटूक्तेर्विशेषो न स्यात्। उत्कर्षहेतौ सत्यपि उत्कर्षाप्रतिपादनात्।

यथाह जयदेवः—

कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे।
हृदि स्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपि॥ इति॥

अत्र तैलादिस्नेहक्षयहेतुभूते दीपे ज्वलति स्नेहक्षयेणावश्यम्भाव्यम्, प्रकृते तादृशे स्नेहक्षयस्य पुष्कलकारणे स्मरदीपज्वलने सत्यपि तस्याक्षयवर्णनं विशेषोक्तिः। स्नेहः तैलादिः रागश्चेति श्लेषः॥ ३५॥

[ तत्त्वाख्यानोपमायाः लक्ष्यलक्षणे ]

**न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे।**
**इति विस्पष्टसादृश्यात् तत्त्वाख्यानोपमैव सा॥ ३६॥**

तत्त्वाख्यानोपमां निरूपयति—'न' इति। इदम् पद्मम्=कमलम् न [किन्तु] मुखमेव, इमे चक्षुषी=नेत्रे न [किन्तु] भृङ्गौ=भ्रमरावेव इति=एवम्प्रकारेण विस्पष्टसादृश्यात्=सादृश्यस्य औपम्यस्य विस्पष्टत्वात् विशेषेण स्पष्टीकरणादित्यर्थः, सा [इयम्] प्रसिद्धा [ कविसमाजे ] तत्त्वाख्यानोपमा=तत्त्वाख्यानेन याथातथ्यकथनेन उपमा इति योगबलात् 'तत्त्वाख्यानोपमा' नाम उपमैव, अर्थात् भ्रमनिरासाय तत्त्वस्य कथनात् तद्धेतुकेयमुपमा। निर्णयोपमा संशयपूर्विका, इयन्तु भ्रान्तिपूर्विकेति द्वयोर्विशेषः। जयदेवस्तु इमां भ्रान्तापह्नुतिं व्याजहार। तथाहि—

'भ्रान्तापह्नुति'रन्यस्य शङ्कायां भ्रान्तिवारणे।
तापं करोति सोत्कम्पं ज्वरः किं न सखि! स्मरः॥ इति॥

अत्र तापं करोतीति स्मरवृत्तान्ते कथिते तस्य ज्वरसाधारण्याद् ऋजुबुद्ध्या सख्या ज्वरः किमिति पृष्टे 'न सखि! स्मर' इति तत्त्वोक्तया भ्रान्तिवारणं कृतम् [तेनेयं भ्रान्तापह्नुतिः]। दीक्षितास्तु कल्पितभ्रान्तिपूर्वामपीमामुदाजह्रुः। तद्यथा—

१ चन्द्रस्य सर्वावयवसम्पत्तिरूपे उत्कर्षकारणे सत्यपि।

२ अप्पय्यदीक्षितैरुदाहरणान्तरमप्युक्तम्—

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिश्चित्रा तथापि न समागमः॥ इति॥

अत्रापि अनुरागः=रक्तिमा रतिश्च। पुरःसरः=अग्रवर्त्ती आज्ञाकरश्चेति श्लेषमूलैव विशेषोक्तिः।

जटा नेयं वेणीकृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिलेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या कुसुमशर ! किं मां प्रहरसि ॥ इति ॥

अत्र कल्पितभ्रान्ति'जटा नेय' मित्यादिनिषेधमात्रोन्नेया पूर्वप्रश्नाभावात् । कस्याश्चन विरहिण्या उक्तिरियम् ॥ ३६ ॥

[ असाधारणोपमाया लक्ष्यलक्षणे ]

**चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव ।**
**आत्मनैवाभवत्तुल्यमि'त्यसाधारणोपमा' ॥ ३७ ॥**

असाधारणोपमामाचष्टे 'चन्द्र०' इति । तव मुखं चन्द्रारविन्दयोः=शशिपद्मयोः कान्तिम्=द्युतिम् अतिक्रम्य=उल्लङ्घ्य निहीनीकृत्येत्यर्थः, आत्मना एव तुल्यम् अभवत्= स्वेनैव समानमासीत् इति=इत्थमियम् असाधारणोपमा=असाधारणत्वेन सादृश्यस्य स्वमात्रगतत्वेनासाधारण्यात् उपमा असाधारणोपमा ज्ञातव्या ।

अत्र शशिपद्मयोः कान्त्या अतिक्रमणकथनेन प्रकृतस्य मुखस्य स्वेनैव सादृश्यवचनात् औपम्यमसाधारणं प्रतीयते इत्यसाधारणौपम्यनिमित्तेयं तथा व्यपदिश्यते इत्यर्थः । औपम्यस्यासाधारणत्वकथनेन सदृशान्तरव्यवच्छेदो अनुपमत्वं बोधयति ।

अन्ये [नव्याः] तु एनामेवाऽनन्वयालङ्कारमाहुः । तथाहि चन्द्रालोके—

उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ।
इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः ॥

'इन्दुरिन्दुरिव श्रीमान्' इत्युक्ते श्रीमत्त्वेन चन्द्रस्य नान्यः सदृशोऽस्तीति सदृशा-

---

१ हे ! कुसुमशर ! पुरारातेः हरस्य भ्रान्त्या मां किं कुतः प्रहरसि पीडयसि । यतो नेयं जटा किन्तु वेणीकृतः अवेणी वेणी सम्पद्यते तथा कृतः कचानां कलापः, तथा गले गरलं नैतद् अपितु इयं कस्तूरी, एवं शिरसि नैषा शशिलेखा किन्तु कुसुमम्, तथा इयमङ्गे भूतिः भस्म न भवति परन्तु प्रियविरहाज्जन्म यस्य एवम्भूतो धवलिमा पाण्डिमेत्यर्थः । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनसूत्राद् व्यधिकरणोपि बहुव्रीहिर्न दुष्टः ।

'अपि च 'अलङ्कारमणिहारे' अपह्नुतिसरे यदिदमुक्तम्—

न मुखमिदं लावण्याम्बुधिरेष न चाधरः प्रवालस्ते ।
नेमे दशना मुक्ता न नयनयुगमेतदीश ! मीनयुगम् ॥ इति ॥

तदपि दण्डिमते 'तत्त्वाख्यानोपमा' स्यात्, स्याद् यदि तत्त्वाख्यानम् परं भाववशः कविः भगवन्मुखादौ सौन्दर्यातिरेकव्यञ्जनबुद्धया प्रवृत्तः औपम्यमेवारोपितवानपह्नवपूर्वकम् । तस्मात्तन्मते शुद्धापह्नुतिरेवेयम् । यत उक्तं तेनैव—

आरोपफलो यः स्यात्प्रकृते धर्मनिह्नवः ।
अलङ्कृतिरियं शुद्धापह्नुतिर्नाम गद्यते ॥ इति शिवम् ॥

२ स्वभिन्नसदृशव्यावृत्तिः ।

न्तरव्यवच्छेदो लक्ष्यते । ततश्च स्वेनापि सादृश्यासम्भवादनुपमेयत्वे पर्यवसानम् । यथा वा मदीय'काव्यलतिकायाम्'—

अद्यापि सा चन्द्रमुखी मनोज-राज्यस्य कोषोऽस्ति सुधाभिवर्षी ।
तया निखाता मम मानसे ये ते तत्कटाक्षा इव तत्कटाक्षाः ॥ इति ॥

अत्र 'तत्कटाक्षा इव तत्कटाक्षा' इत्युक्ते तीक्ष्णत्वेन तत्सदृशोऽन्यो नास्तीत्यनुपमत्वे पर्यवसानम् ।

अत्र च एकस्योपमानोपमेयभावासम्भवेऽपि अनुपमेयत्वविवक्षया काल्पनिको भेदो ज्ञेयः । यथा—'आत्मानमात्मना वेत्सि' इत्यादौ ॥ ३७ ॥[1]

[ अभूतोपमाया लक्ष्यलक्षणे ]

**सर्वपद्मप्रभासारः समाहृत इव क्वचित् ।**
**त्वदाननं विभातीति ता'मभूतोपमां' विदुः ॥ ३८ ॥**

अभूतोपमां दर्शयति—'सर्व०' इति । त्वदाननम्=तवास्यम् क्वचित् सर्वपद्मप्रभासारः=सर्वेषां विश्वेषां पद्मानां कमलानां या प्रभा शोभा तस्याः सारः पुञ्जः समाहृत इव विभाति=एकत्रीकृत इव राजते इति=एवमाकारां ताम्=प्रसिद्धां [ हृद्यां ] अभूतोपमाम्=अभूतत्वेनोपमां विदुः=जानन्ति कवय इति शेषः ।

अत्र वस्तुतस्तादृशप्रभासारसमाहरणमभूतमेव, तत एवेयमभूतोपमा ।

नव्यानां मते अत्रेवशब्दः सम्भावनार्थकः असम्भविनश्च प्रभासारमयत्वस्य सम्भाव्यमानत्वात् तस्मादियमुत्प्रेक्षैव 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति मम्मटोक्तेः । वस्तुतः पद्मानां प्रभासारस्य समाहरणमसम्भवीति नोपमानत्वं सम्भवितुमर्हति प्रसिद्धस्यैवोपमानताया अङ्गीकारात् ततश्चेवशब्दोऽत्र सम्भावनार्थकः । सम्भावना चोत्कटकोटिकः संशयः । तस्मादियमुत्प्रेक्षैव युक्ता । उक्तञ्चाभियुक्तैः—

यदायमुपमानांशो लोकतः सिद्धिमृच्छति ।
तदोपमैव येनेवशब्दः सादृश्यवाचकः ॥
यदा पुनरयं लोकादसिद्धः कविकल्पितः ।
तदोत्प्रेक्षैव येनेवशब्दः सम्भावनापरः ॥ इति ।

विवृतश्चैतत् चित्रमीमांसायाम् अप्पय्यदीक्षितैः—दृष्टश्च लोके सम्भावनापरत्वमिव शब्दस्य । 'दूरे तिष्ठन् देवदत्त इव भाति' इति । यत्राप्रकृतस्य धर्मिणः सम्भावनं तत्रोत्प्रेक्षा,

---

१ रुद्रटस्तु—असाधारणोपमामेवाऽनन्वयोपमामाह । तथाहि—

सा स्यादनन्वयाख्या यत्रैकं वस्त्वनन्यसदृशमिति ।
स्वस्य स्वयमेव भवेदुपमानश्चोपमेयश्च ॥

उदाहरणं तस्यैव यथा—

आनन्दसुन्दरमिदं त्वमिव त्वं सरासि नागनासोरु ! ।
इयमियमिव तव च तनुः स्फारस्फुरदुरुचिरप्रसरा ॥ इति ॥

हे ! नागनासोरु !=करिकरोरु ! इत्यर्थः । स्पष्टम् ।

यत्र तु केवलं धर्मस्य सम्भावनया द्वयोः साम्यावगमः तत्रोपमेत्यनयोर्विशेष इति प्राचामाशयः। भामतीग्रन्थे कल्पतर्वादावपि चास्मिन्विषये सूक्ष्मं विवेचितं ग्रन्थगौरवभयाद् बालबुद्धेरनुपयुक्तत्वाच्च नेह विस्तरितम् ॥ ३८ ॥

[ असम्भावितोपमाया लक्ष्यलक्षणे ]

**चन्द्रविम्बादिव विषं चन्दनादिव पावकः।**
**परुषा वागितो वक्त्रादित्य'सम्भावितोपमा' ॥ ३९ ॥**

असम्भावितोपमां निरूपयति—'चन्द्रबिम्बाद्' इति। इतः=अस्मात् वक्त्रात्=आस्यात् परुषा=कठोराक्षरा वाक्=वाणी चन्द्रबिम्बात्=विधुमण्डलात् विषम् इव, चन्दनात् पावक इव=अनल इव। इति=एवमाकारा असम्भावितार्थकत्वात् असम्भावितोपमा='असम्भाविता' इत्याख्या उपमा ज्ञेया।

यथा चन्द्रमण्डलाद्विषनिःसरणं चन्दनाच्चानलप्रादुर्भवनमसम्भावितं तथा एतस्माद् वक्त्रात् [सज्जनमुखात्] परुषाया वाचो निःसरणमप्यसम्भावितमित्यसम्भावितोपमानानिरूपितसादृश्यनिबन्धनेयमसम्भावितोपमाऽऽख्यायते इत्याशयः। अत्र विषपरुषवचनयोरुपमायां चन्द्रचन्दनादेर्मुखस्य च बिम्बप्रतिबिम्बभावो बोध्यः। यथा वा **मम**—

मरोरिव जलं शीतं हिमादौष्ण्यं यथा भवेत्।
यथार्जवं फेरुहृदस्तथा स्याद् दुर्जनादभीः ॥

अत्र वक्ष्यमाणा बहूपमापि ॥ ३९ ॥

[ बहूपमाया लक्ष्यलक्षणे ]

**चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः।**
**स्पर्शस्तवेत्यतिशयं बोधयन्ती 'बहूपमा' ॥ ४० ॥**

बहूपमां वर्णयति—'चन्दन०' इति। चन्दनम्=मलयजः उदकम्=वारि चन्द्रांशुः=शशिकिरणः चन्द्रकान्तः=तदाख्यो मणिविशेषः चन्द्रकिरणसम्बन्धाद् यतो जलं स्रवतीति प्रसिद्धिः। आदिना हिमवालुकादीनां ग्रहणम्। चन्दनादीनां पूर्वं द्वन्द्वः चन्दनादिरिव शीतलः=शिशिरः तव स्पर्शः=अर्थात् चन्दनवत् उदकवत् चन्द्रांशुवत् चन्द्रकान्तवत् आदिना तादृशहिमवालुकाप्रभृतिपदार्थवच्च तव स्पर्शः शीतलोऽस्ति इति=इत्याकारम् अतिशयं=शैत्याधिक्यं बोधयन्ती=व्यञ्जयन्ती [या उपमा सा] 'बहूपमा' इति कथ्यते।

एकस्योपमेयस्य बहूपमानाख्यानादुपमेये स्पर्शे शैत्यं सादृश्यधर्मः समधिकेन रूपेण पर्यवसितो भवतीत्यत इयं बहूपमा। अत्र चन्दनादिपदानाम्—'उपमानानि सामान्यवचनैः' [पा० २।१।५५] इति सूत्रेण कर्मधारयः [तत्पुरुषः]। इमामेव नवीना मालोपमामाहुः—'मालोपमा यदेकस्योपमानं बहु दृश्यते' इति दर्पणोक्तेः। उदाहरणं तस्यैव यथा—

वारिजेनेव सरसो शशिनेव निशीथिनी।
यौवनेनेव वनिता नयेन श्रीर्मनोहरा ॥ इति ॥ ४० ॥

[ विक्रियोपमाया लक्ष्यलक्षणे ]

**चन्द्रबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम्।**
**तव तन्वङ्गि! वदनमित्यसौ 'विक्रियोपमा' ॥ ४१ ॥**

विक्रियोपमामाह—हे ! तन्वङ्गि !=कृशतनु ! तव वदनम्=मुखम् चन्द्रबिम्बात्=विधुमण्डलात् उत्कीर्णम् इव=उल्लिखितमिव, अथवा पद्मगर्भात्=कमलमध्यात् उद्धृतम् इव=निष्कासितमिव 'आभाति' इति शेषः । इति=एवमाकारा असौ विक्रियोपमा=विकारस्वरूपधर्मयोगादुक्ताख्योपमा कथ्यते ।

अत्र हि वदनं प्रस्तुतम्, तस्य प्रकृतिभूतौ चन्द्रबिम्बपद्मगर्भाविति द्वौ पदार्थौ उपमानस्थानिकावुक्तौ । ताभ्यामुत्कीर्णत्वात् उद्धरणत्वाच्च वदनं तयोर्विकृतिरेव प्रकृतिविकृत्योः साम्यं भवत्येवेति विक्रियात्मकधर्मविषयकत्वादियं 'विक्रियोपमा' ज्ञेयेति निर्गलितोऽर्थः ॥४१॥

[ मालोपमाया लक्ष्यलक्षणे ]

**पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः ।**
**विक्रमस्त्वय्यधाल्लक्ष्मीमिति 'मालोपमा' मता ॥ ४२ ॥**

मालोपमामाचष्टे—'पूष्णि' इति । पूष्णि=रवौ आतप इव, अह्नि=दिवसे पूषा=सूर्य इव, व्योम्नि=गगने वासरः=दिवस इव, विक्रमः=सामर्थ्यम् शत्रूणामुपर्याक्रमणपराक्रम इत्यर्थः, लक्ष्मीम्=शोभाम् अधात्=अधारयत् । इति=दर्शितरूपा उत्तरोत्तरोपमानानां परस्परं सम्बन्धयोगात् 'मालोपमा' मता । यथा मालायामेकस्य कुसुमस्य परेण कुसुमेन योगो भवति तथात्रापि पूष्णोऽह्नि, अह्नो व्योम्नि, व्योम्नो वासरे योगदर्शनात् वैचित्रीविशेषत्वादलङ्कारविशेषता । न चेयं बहूपमेति शङ्क्यम्, तत्र दर्शितविच्छित्तिविशेषाभावात् । नवीनानां मते तूभयत्रापि मालोपमैव । यथा वा **मम**—

क्षमा क्षमेव ते भूप ! धृतिर्यौधिष्ठिरी यथा ।
गुरुप्रज्ञेव ते बुद्धिर्दया बौद्धी दया यथा ॥

रुद्रटोऽप्याह—

श्यामालतेव तन्वी चन्द्रकलेवातिनिर्मला सा मे ।
हंसीव कलालापा चैतन्यं हरति निद्रेव ॥ इति ।

अत्रोपमेया कान्ता तनुत्वाद्यनेकधर्मयुक्ता, श्यामालतादीन्येकैकधर्मयुक्तान्युपमानानि । वाक्योपमापीयम् ॥ ४२ ॥

[ वाक्यार्थोपमाया लक्षणम् ]

**वाक्यार्थेनैव वाक्यार्थः कोपि यद्युपमीयते ।**
**एकानेकेवशब्दत्वात् सा 'वाक्यार्थोपमा' द्विधा ॥ ४३ ॥**

वाक्यार्थोपमां लक्षयति—'वाक्यार्थेन' इति । वाक्यार्थेन=पदसमूहो वाक्यम्, वाक्यस्यार्थः वाक्यार्थः शाब्दबोधः इति । यदि कोपि प्राकरणिको वाक्यार्थः वाक्यार्थेन=परेण वाक्यार्थेन उपमीयते=समीक्रियते सा 'वाक्यार्थोपमा' भवति । सा च द्विधा एकानेकेवशब्दत्वात्=अर्थात् एकेवशब्दनिबन्धना अनेकेवशब्दनिबन्धना चेति द्वौ प्रकारौ तस्या विज्ञेयौ ।

इदन्तु बोध्यम्—यत् प्रकृताप्रकृतयोर्वाक्यार्थयोः साङ्गेनोपमानभूतेनाङ्गिना सह साङ्गस्योपमेयभूतस्य [ प्रस्तुतवाक्यप्रतिपाद्यस्य ] अङ्गिनः साम्यं तदेव वाक्यार्थोपमा । वाक्यार्थमात्रसाम्ये वैचित्र्याभावात् वैचित्र्यस्य चालङ्कारत्वात् । अन्यथा—'यथाकाशे विधु-

भाति तथा भूमौ तवाननम्' इत्यादावपि वाक्यार्थोपमा स्यात्, सिद्धान्ते तु निष्कृष्टलक्षणा-सङ्गतेर्नात्र वाक्यार्थोपमा ॥ ४३ ॥

[ एकेवशब्दाया वाक्यार्थोपमाया उदाहरणम् ]

**त्वदाननमधीराक्षमाविर्दशनदीधिति ।**
**भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥ ४४ ॥**

एकेवशब्दनिबन्धनां वाक्यार्थोपमामुदाहरति—'त्वदाननम्' इति । अधीराक्षम्=अधीरे चपले अक्षिणी नयने यत्र तत्, आविर्दशनदीधिति=आविर्भवन्ती दशनानां दन्तानां दीधितिः मयूखमाला यत्र तत् तादृशम् त्वदाननम्=त्वद्वक्त्रम् आलक्ष्यकेसरम्=आ ईषत् लक्ष्याः प्रतीयमानाः केसराः किञ्जल्का यस्य तादृशम् भ्रमद्भृङ्गम्=भ्रमन्तः उपरि सञ्चरन्तः भृङ्गा भ्रमरा यत्र तादृशं पङ्कजम् इव=कमलमिव भाति=शोभते। अत्र पूर्वमर्धवाक्यं परेणार्ध-वाक्येन एकेवशब्दघटितेन उपमानभावं भजत इति 'एकेवशब्दनिबन्धना' इयं वाक्यार्थोपमा।

अयमाशयः—भृङ्गकेसररूपेणाङ्गेनाङ्गवता उपमानरूपेण पङ्कजेनाङ्गिना, नेत्रदशन-दीधितिरूपेणाङ्गेनाङ्गवतोऽङ्गिन उपमेयरूपस्याननस्य यत् साम्यं तद्वाक्यार्थगतमेवेति कृत्वेयं 'वाक्यार्थोपमा'। अर्थात् प्रथममुपमानोपमेययोरेव सादृश्यमवगमयत् पार्यन्तिकविचारणया 'अधीराक्षं भ्रमद्भृङ्गमिव' 'दशनदीधिति आलक्ष्यकेसरमिव' इत्यादिबोधोदयात् एकेवशब्द-वता वाक्येन सङ्गतमिति स्पष्टं वाक्यार्थोपमा ज्ञेया ॥ ४४ ॥

[ अनेकेवशब्दाया वाक्यार्थोपमाया उदाहरणम् ]

**नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।**
**मया मधुव्रतेनेव पायं पायमरम्यत ॥ ४५ ॥**

अनेकेवशब्दनिबन्धनां वाक्यार्थोपमामुदाहरति—'नलिन्या' इति । नलिन्याः=पद्मिन्या इव तस्याः तन्वङ्ग्याः=सुकुमार्याः पद्मम् इव=कमलमिव आननम्=मुखम् मधुव्रतेन इव=भ्रमरेणेव 'मया' पायम् पायम्=पुनः पुनः पीत्वा अरम्यत=अक्रीड्यत। तदवस्थेन मया तदवस्थायास्तस्याः तादृशं कमलमधुरं मुखमास्वादितमित्यर्थः । अत्रानेकेवशब्दघटिता वाक्यार्थोपमा। 'पा' धातोः 'आभीक्ष्ण्ये णमुल् च' [ पा० ३।४।२२ ] इति सूत्रेण पौनःपुन्ये द्योत्ये णमुल्। 'नित्यवीप्सयोः' [ ८।१।४ ] इति सूत्रेण द्वित्वम् । 'आतो युक्चिण्कृतोः' [ ७।३।३३ ] इति युक्। 'अरम्यत' इति भावे तङ् ॥ ४५ ॥

[ प्रतिवस्तूपमाया लक्षणम् ]

**वस्तु किञ्चिदुपन्यस्य न्यसनात्तत्सधर्मणः ।**
**साम्यप्रतीतिरस्तीति 'प्रतिवस्तूपमा' यथा ॥ ४६ ॥**

प्रतिवस्तूपमां लक्षयति—'वस्तु' इति । किञ्चित्=किमपि वस्तु=प्रस्तुतं प्रतिपाद्यम् [ वाक्यार्थम् ] उपन्यस्य=उपनिबध्य तत्सधर्मणः=तत्समानधर्मस्य अन्यस्य अप्रस्तुतस्य कस्यचिद् वाक्यार्थस्य न्यसनात्=प्रस्तुतस्यैव समर्थनाय ग्रहणात् यत् साम्यप्रतीतिः=सादृश्य-बोधः अर्थात् सादृश्यवाचकेवादिशब्दाप्रयोगेऽपि यद् व्यञ्जनयैव सादृश्यज्ञानं अस्ति=जायते सा 'प्रतिवस्तूपमा' ज्ञेया। प्रतिवस्तु प्रतिवाक्यार्थमुपमा साधारणो धर्मोऽस्याम् इति व्युत्पत्तेः।

यथा=इत्युदाहरति अग्रिमे श्लोके। एवञ्च—'भिन्नशब्दबोध्यैकधर्मगम्यं प्रस्तुताप्रस्तुतं वाक्यार्थसादृश्यं प्रतिवस्तूपमा' इति निष्कृष्टं लक्षणम्। 'तत्सधर्मेण' इत्येकधर्मवतः । सच धर्मो भिन्नवाचकतया निर्देष्टव्यः, अन्यथा कथितपदत्वदोषापत्तिरनिवार्या ॥ ४६ ॥

[ प्रतिवस्तूपमाया उदाहरणम् ]

**नैकोपि त्वादृशोऽद्यापि जायमानेषु राजसु ।**
**ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥ ४७ ॥**

प्रतिवस्तूपमामुदाहरति—'नैक' इति । जायमानेषु=उत्पद्यमानेषु जातेषु च राजसु=भूपेषु मध्ये अद्य अपि=अधुनापि त्वादृशः=त्वत्सदृशः एकः अपि नास्ति=न वर्त्तते ननु=निश्चितमेतत् यत् पारिजातस्य=सुरतरुपुष्पस्य पादपः=वृक्षः द्वितीयः=अन्यः [तत्सदृक्षः] नास्ति एव=नैव वर्त्तते ।

'अत्र त्वत्सदृशो नास्ति' 'द्वितीयो नास्ति' इति वस्तुतः साधारणधर्मः एक एव, परं पुनरुक्तिभिया [कथितपदतादोषवारणाय] शब्दभेदेन उपात्तः । 'पारिजातस्य पादप' इत्यत्र 'राहोः शिरः' इत्यादिवदौपचारिकी षष्ठी । 'पञ्चैते देवतरवो मन्दारः पारिजातक' इत्यमरः ।

नवीनास्तु[1] प्रतिवस्तूपमां स्वातन्त्र्येणालङ्कारमाहुः—

वाक्ययोरेकसामान्ये प्रतिवस्तूपमा मता ।
तापेन भ्राजते सूर्यः शूरश्चापेन राजते ॥ इति ।

अस्यायमर्थः—यत्रोपमानोपमेययोरेकः समानो धर्मः पृथङ् निर्दिश्यते सा प्रतिवस्तूपमा । यथात्रैव 'भ्राजते राजते' इत्येक एव धर्मः उपमानोपमेयवाक्ययोः पृथक् भिन्नपदाभ्यां निर्दिष्टः । कथितपदेन पुनर्निर्देशे तु कथितपदं दोषमवोचाम । यथा वा—

स्थिरा शैली गुणवतां खलबुद्धया न बाध्यते ।
रत्नदीपस्य[2] हि शिखा वात्ययापि न नाश्यते ॥

अत्र पूर्वार्धमुपमेयवाक्यम्, उत्तरार्धन्तूपमानवाक्यम्, उभयत्र च नाशाभावरूपः समानधर्मः शब्दभेदेनोपात्तः सामान्याभावमात्रबोधकस्यापि बाधतेरत्र नाशरूपविशेषपरत्वात् अयमेव च पूर्वोदाहरणाद्विशेषः ।

किञ्च--अर्थावृत्तिदीपकं प्रस्तुतानामप्रस्तुतानां वा, प्रतिवस्तूपमा तु [नियमेन] प्रस्तुताप्रस्तुतानामिति विशेषः । आवृत्तिदीपकं वैधर्म्येण न सम्भवति, प्रतिवस्तूपमा तु वैधर्म्येणापि दृश्यते । यथा—

विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ।
नहि बन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ इति ।

नच वाच्यम् 'वैधर्म्येण उपमा' इति परस्परव्याहतं वचः उपमायाः साधर्म्यरूपत्वात्, उपन्यस्तेन वैधर्म्येण 'नहि बन्ध्या' इति वाक्यार्थेन आक्षिप्तस्य 'अपि तु प्रसवित्र्येव विजानाति' इति वाक्यार्थस्योपमानत्वेन विलक्षणत्वात्, मुखतो वैधर्म्यप्रतीतावपि साधर्म्य एव

१ जयदेवप्रभृतयः ।
२ रत्नमेव दीपः रत्नदीपः तस्य ।

पर्यवसानाच्च । एवञ्चात्रापि पूर्वार्धमुपमेयवाक्यम्, उत्तरार्धन्तूपमानवाक्यम् । परिश्रमज्ञान-तदभावौ वाक्यार्थयोः साम्यं प्रयोजयतः । अन्यदपि—

चकोर्य एव चतुराश्चन्द्रिकापानकर्मणि ।
विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि ॥ इति ।

अत्रापि चातुर्यचातुर्याभावौ वाक्यार्थयोः साम्यप्रयोजकौ । इत्थञ्च वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मयोर्वाक्यार्थयोर्यत्रार्थिकमौपम्यं सा 'प्रतिवस्तूपमा' पृथगेवालङ्कारो नतूपमाविशेष इति नव्यानामाशयः । अतएव पण्डितराजाः—'वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकवाक्यार्थयोरार्थमौपम्यं प्रतिवस्तूपमा' इति प्रतिवस्तूपमामलक्षन् । 'दिवि भाति यथा भानुस्तथा त्वं भासि वै भुवि' इत्यादौ वाक्यार्थोपमायामतिव्याप्तिवारणाय 'अर्थ'मिति पदम् ।

प्राञ्चस्तु—सादृश्यबोधसम्भवादुपमात्वप्रसक्तौ नैवालङ्कारान्तरत्वं किन्तूपमैव । एतेनैवाभिप्रायेण वामनोऽपि 'प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः' [काव्या० सू० अध्या० ३ सू० १] इत्याह । श्रीगोपेन्द्रतिप्पभूपालेन च तट्टीकायामुपमाप्रपञ्च उक्तः ॥ ४७ ॥[२]

[ तुल्ययोगोपमाया लक्षणम् ]

**अधिकेन समीकृत्य हीनमेकक्रियाविधौ ।**
**यद् ब्रुवन्ति स्मृता सेयं 'तुल्ययोगोपमा' यथा ॥ ४८ ॥**

तुल्ययोगोपमां लक्षयति—'अधिकेन' इति । एकक्रियाविधौ=एका चासौ क्रिया एकक्रिया एकजातीया क्रिया तस्या विधिर्विधानं करणमिति यावत्, तस्मिन् एकजातीयक्रियानुष्ठाने हीनम्=न्यूनगुणं वस्तु अधिकेन=अधिकगुणवता समीकृत्य=सदृशयित्वा [ 'उदरं पूरयित्वा भुङ्क्ते' इत्यादिवत् प्राक्काले 'क्त्वा'प्रत्ययं समीकुर्वन्नित्यर्थः [ समीकुर्वन्तः ] यत् ब्रुवन्ति=यत् निरूपयन्ति 'कवय' इति शेषः । सा=इयम् तुल्ययोगोपमा=तुल्ययोगात् क्रियायामधिकहीनयोः समानसम्बन्धात् उपमा औपम्यमित्यन्वर्थबलात् 'तुल्ययोगोपमा' नामाल-

---

१ परमताभिप्रायेणैतत् । अस्मद्भावनया तु–सादृश्यबोधमात्रात्सर्वत्रोपमात्वप्रसक्तौ समासोक्त्यादीनां सर्वेषामपि उपमालङ्कारभेदान्तःपातित्वमेव स्यात्, तस्मात् 'उपमाप्रपञ्च' इति वामनसूत्रं सादृश्यमूलकत्वसंसर्गित्वमात्रबोधनपर्यवसायीत्येवाभाति ॥

अतएव तु तृतीयाध्यायसमाप्तौ वृत्तिग्रन्थे स्वयमेवोक्तम्—

एभिर्निदर्शनैः स्वीयैः परकीयैश्च पुष्कलैः । शब्दवैचित्र्यगर्भेयमुपमैव प्रपञ्चिता ॥
अलङ्कारैकदेशा ये मताः सौभाग्यभागिनः । तेऽप्यलङ्कारदेशीया योजनीयाः कवीश्वरैः ॥ इति ।

२ प्रतिवस्तुप्रभृतय उद्दिश्यन्ते यथाक्रमम् । प्रतिवस्तुसमासोक्तिरथाप्रस्तुतशंसनम् ॥
अपह्नुतिरूपकञ्च श्लेषो वक्रोक्त्यलङ्कृतिः । उत्प्रेक्षातिशयोक्तिश्च सन्देहः सविरोधकः ॥
विभावनानन्वयः स्यादुपमेयोपमा ततः । परिवृत्तिः क्रमः पश्चाद्दीपकं च निदर्शना ॥
अर्थान्तरस्य न्यसनं व्यतिरेकस्ततः परम् । विशेषोक्तिरथ व्याजस्तुतिर्व्याजोक्त्यलङ्कृतिः ॥
स्यात्तुल्ययोगितालेपः सहोक्तिश्च समासतः । अथ संसृष्टिभेदौ द्वावुपमारूपकं तथा ॥
उत्प्रेक्षावयवश्चेति विज्ञेयाऽलङ्कृतिक्रमः ॥ इति ॥

(प्र०) तुल्ययोगोपमायाः किं लक्षणं किञ्चोदाहरणम् ? [उ०] अस्य पृ० पं० १४

ङ्कारः । इत्थञ्च—'समानजातीयक्रियाकरणेन प्रस्तुताप्रस्तुतयोः साम्याभिधानं तुल्ययोगोपमा' इति फलितं लक्षणम् । 'यथा' इत्युदाहरति अग्रिमेण श्लोकेन ॥ ४८ ॥

[ तुल्ययोगोपमाया उदाहरणम् ]

**दिवो जागर्त्ति रक्षायै पुलोमारिर्भवान् भुवः ।**
**असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः ॥ ४९ ॥**

तुल्ययोगोपमामुदाहरति—'दिव' इति । दिवः=स्वर्लोकस्य रक्षायै=असुरादिभयाद्रक्षणार्थं पुलोमारिः=इन्द्रः जागर्ति=सावधानो भूत्वा वर्त्तते । भवान् भुवः=भूमेः रक्षायै जागर्ति तेन=पुलोमारिणा असुराः=दैतेयाः हन्यन्ते=नाश्यन्ते त्वया=भवता सावलेपाः=सगर्वा नृपाः= राजानो हन्यन्ते इति पूर्वेणान्वयः ।

अत्र प्रस्तुतो राजा हीनः, अप्रस्तुतेनाधिकगुणेन इन्द्रेण सह जागरणहननक्रियाभ्यां समीकृत इत्येकजातीयक्रियात्मकसमीकरणेन इयं 'तुल्ययोगोपमा' ज्ञेया ।

नव्यानां मते त्वियं 'तुल्ययोगितालङ्कार' एव । यथोक्तं जयदेवेन—

वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता । सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च ॥

अयमर्थः—प्रस्तुतानामप्रस्तुतानां वा गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता । अत्र प्रस्तुतचन्द्रोदयकार्यतया वर्णनीयानां सरोजानां प्रकाशभीरुस्वैरिणीवदनानाञ्च सङ्कोचरूपैकक्रियान्वयो दर्शितः । एवमेव मौलिकतुल्ययोगोपमाया उदाहरणेऽपि प्रस्तुताप्रस्तुतयोर्नरेन्द्रसुरेन्द्रयोरेकयैव जागरणक्रिययान्वयो निरूपितः । एवमेव—

नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात् कदलीविशेषाः ।
लब्ध्वाऽपि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥

इत्यादावपि वर्णनीयत्वेन प्रकृतयोस्तदूर्वोः अप्रकृतयोश्च नागेन्द्रहस्तकदलीविशेषयोर्बाह्यत्वरूपैकधर्मान्वयत्वात् तुल्ययोगिता ज्ञेया । लक्षणे 'धर्मैक्य' मिति धर्मपदेन जातिक्रियादीनां सर्वेशां ग्रहः, आलङ्कारिकाणां प्रायो वैयाकरणानुसारित्वादिति दिक् ।

[ हेतूपमाया लक्ष्यलक्षणे ]

**कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् ।**
**राजन्ननुकरोषीति सैषा 'हेतूपमा' मता ॥ ५० ॥**

हेतूपमां निरूपयति—'कान्त्या' इति । हे राजन् ! = प्रकृतिरञ्जक नरपते ! कान्त्या=शरीरप्रभया [ देहद्युत्या ] चन्द्रमसम्=शशिनम् धाम्ना=प्रतापेन [ तेजसा ] सूर्यम्= भास्करम् तथा धैर्येण=धृत्या [ गाम्भीर्येणेत्यत्र तात्पर्यम् ] अर्णवम् च=समुद्रम् अनुकरोषि= समीकरोषि इत्यन्वितार्थः । इति=अनया रीत्या सा एषा=प्राक्तनकविसमाजप्रसिद्धा हेतूपमा= हेतुत्था उपमा 'हेतूपमा' मता इति तन्नामोपमाभेदो ज्ञेय इत्याशयः ।

अत्र कान्त्यादिभिर्हेतुभिः सादृश्यप्रतीतिसत्त्वाद् हेतूपमा ॥ ५० ॥

[ उपमायां लिङ्गभेदादिदोषप्ररूपणम् ]

**न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।**
**उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ ५१ ॥**

(प्र०) उपमायां लिङ्गभेदादिदोषान् प्ररूपय ? (उ०) अस्य पृ० पं० ३३ ।

सप्रभेदा उपमा निरूपिता, सम्प्रति प्रसङ्गसङ्गत्या तद्दोषान् दिदर्शयिषुरादौ प्राचीनैरुक्तानां केषाञ्चिद्दोषाणां स्वमते अपवादमाह—'न' इति। यत्र=काव्यकरणे धीमताम्=सहृदयानाम् उद्वेगः=प्रतीतिप्रतीघातरूपा हृदयविकलता न=नैव 'जायते' इति शेषः। तत्र भिन्ने=पृथग्भूते लिङ्गवचने=लिङ्गम् पुँस्त्वादि, वचनम् एकत्वादि, लिङ्गञ्च वचनञ्च लिङ्गवचने, उपमादूषणाय= उपमायाः प्रतीतिविघाताय अलम् न=पर्याप्ते न भवत इत्यर्थः। वा=अथवा हीनाधिकता= हीनञ्च अधिकञ्च हीनाधिके तयोर्भावो हीनाधिकता हीनपदता अधिकपदता चेत्यर्थः, अपि= एतद्द्वयमपि उपमादूषणाय नालमिति पुनः सम्बन्धनीयम्।

इदमत्रावधेयम्—प्राचीनैरुपमादोषा उक्ताः। तद्यथा—

हीनाधिकत्वं वचनलिङ्गभेदो विपर्ययः।
असादृश्यासम्भवौ च दोषाः सप्तोपमागताः॥ इति॥

एतेषु षड् दोषा वामनेन प्रपञ्चिताः। तत्र 'जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम्'। जातिन्यूनत्वरूपं यथा—'चाण्डालैरिव युष्माभिः साहसं परमं कृतम्'। अत्र 'चाण्डालै'रिति साहसकारित्वं साधर्म्यम्। तच्च चाण्डालत्वजात्या न्यूनत्वे स्फुटम्। प्रमाणन्यूनत्वरूपं हीनत्वं यथा—'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति'। 'वह्निस्फुलिङ्ग' इत्यत्र परिमाणन्यूनत्वमतिस्फुटम्। उपमेयादुपमानस्य धर्मतो न्यूनत्वं यत् तत् धर्मन्यूनत्वं तद्रूपं हीनत्वं यथा—

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान्॥ इति॥

अत्र [1]मौञ्जीप्रतिवस्तु तडिन्नास्ति उपमान इति हीनत्वम्। 'तेनाधिकत्वं व्याख्यातम्' [२।११] तेन हीनत्वेन अधिकत्वमपि व्याख्यातम्—जातिप्रमाणधर्माधिक्यमधिकत्वमित्यर्थः। जात्याधिक्यरूपमधिकत्वं यथा—'विशन्तु विष्टयः शीघ्रं रुद्रा इव महौजस' इति विष्टयः कारवः भृत्या वा। 'विष्टिः कारौ कर्मकरे' इति वैजयन्ती। प्रमाणाधिक्यं यथा—

पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः॥ इति॥

धर्माधिक्यरूपं यथा—

सरश्मि चञ्चलं चक्रं दधद्देवो व्यराजत।
सवाडवाग्निः सावर्त्तः स्रोतसामिव नायकः॥ इति॥

'सवाडवाग्नि'रित्यस्य प्रतिवस्तुन उपमेयेऽभावाद्धर्माधिक्यमिति।

'उपमानोपमेययोर्लिङ्गव्यत्यासो लिङ्गभेदः' [२।१२] यथा—'सैन्यानि नद्य इव जग्मुरनर्गलानि' इत्यत्र 'सैन्यानि' इत्युपमेयं नपुंसकं 'नद्य' इत्युपमानं स्त्रीति स्फुटो लिङ्गभेदः। 'गङ्गाप्रवाह इव तस्य निरर्गला वाक्' इत्यत्रापि स्त्रीपुंसयोर्भेदे। 'तेन वचनभेदोऽपि व्याख्यातः' [२।१५] तेन=लिङ्गभेदेन। यथा—

'म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना॥

---

1 मौञ्ज्या समानं वस्तु प्रतिवस्तु तडित् सात्र नास्ति, उपमाविशेषणतया अनुपादानादित्यर्थः।

इत्यत्र वचनभेदः 'अप्रतीतगुणसादृश्यमसादृश्यम्' [ २ । १६ ] अप्रतीतैरेव गुणैर्यत् सादृश्यं तद् अप्रतीतगुणसादृश्यमसादृश्यमित्यर्थः । यथा—'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्' इत्यत्र काव्यस्य शशिना सह यत् सादृश्यं तदप्रतीतैरेवगुणैरिति । 'अनुपपत्तिरसम्भवः' [२।२०] उपमानस्य यदनुपपन्नत्वं तदसम्भवाख्यो दोष उपमागतः । यथा—

चकास्ति वदनस्यान्तः स्मितच्छायाविकाशिनः ।
उन्निद्रस्यारविन्दस्य मध्ये मुग्धेव चन्द्रिका ॥ इति ॥

अत्र चन्द्रिकायामुन्निद्रत्वमरबिन्दस्येत्यनुपपत्तिरेव उपमाया असम्भवो दोषः । एते षड् दोषा वामनमते । उपमेयधर्मस्य हीनत्वमधिकत्वञ्चेतिरूपो विपर्ययस्तु सप्तमो भवन्नपि न तेन पृथग्गणितः किन्तु लिङ्गभेद एवान्तर्भावितः ।

एतेषु सप्तसूपमादोषेषु दण्डी स्वमतं प्रकाशयति–यत् यदि सामाजिकानां कस्मिंश्चित् काव्ये उक्तदोषेष्वन्यतमे सत्यपि आस्वादविघातो न जायते तदैते प्राचीनैरुक्ता दोषा अदोषा एव । तदेतदग्रे उदाहरणेन स्फुटीकरोति ॥ ५१ ॥

[ लिङ्गवचनभेदस्यादूषकत्ववर्णनम् ]

**स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव ।**
**प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता ॥ ५२ ॥**

लिङ्गवचनभेदस्यादोषत्वं दर्शयति—'स्त्रीव' इति । अयम्=सम्मुखवर्त्ती षण्डः=क्लीबः स्त्री इव=योषेव गच्छति=याति 'एषा स्त्री पुमानिव वक्ति' । अत्रोभयत्र यथाक्रमं गमनवचनक्रियारूपस्य साधारणधर्मस्यान्वयात् उपमानोपमेययोर्लिङ्गभेदः सन्नपि न दोषः श्रोतॄणामनुद्वेगकरत्वात् । 'अयं जनः मे [मम] प्राणा इव प्रियः' । 'प्राणा' इति पदश्चात्र समूहत्वावच्छेदेन वाचकत्वात् नियतबहुवचनान्तः, तेन तत्सदृशपर्यायान्तरमप्रसिद्धमिति कृत्वा 'प्राणा यथा प्रियास्तथाऽयं प्रिय' इति वचनविपरिणामेनान्वये दोषाभावः । 'धन'पदमपि नियतनपुंसकलिङ्गमिति लिङ्गविपरिणामेनान्वयो विधेयः अर्थात् 'धनं यथाऽर्जितम् तथा विद्याऽर्जिता' इत्यन्वये दोषाभावः । अनया रीत्या धीमतामत्रोद्वेगो न भवतीति उपमानोपमेययोर्लिङ्गवचनादिभेदेऽपि दोषाभावोऽवसेयः । अन्यत्रापि यत्रोभयत्रान्वययोग्या क्रिया वर्त्तते तत्र दोषाभावो यथा—

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ इति ।

अत्र 'धादैध' धातुभ्यामेकवचने बहुवचने च निष्पन्नं 'दधते' इति पदम्, तस्यास्य वचनश्लिष्टस्य क्रियापदस्य उभयत्रोपमानोपमेयवाक्येऽन्वययोग्यत्वाद्दोषाभावः । पुन्नपुंसकयो-

१ प्रकाशकारास्तु—एतान् दोषान् पृथङ् नैव गणयन्ति, किन्तु 'उपमानस्य जातिप्रमाणगतन्यूनत्वम् अधिकता वा तादृशी अनुचितार्थत्वं दोषः' धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वञ्च न व्यभिचरत' इत्यादिना स्वाभिमतेषु दोषेष्वेवान्तर्भावयन्ति । मयाप्येतद्विषयकः प्रपञ्चः तट्टीकायामेव कृतः ।

२ 'डुधाञ्' धारणपोषणयोः । इति जुहोत्यादिपठितस्य 'धा' धातोर्लटि प्रथमपुरुषस्य बहुवचने रूपम् । तथा 'दध' धारणे इति भौवादिकस्यैकवचनान्तम् ।

रुपमानोपमेययोर्लिङ्गभेदस्तु प्रायेण दृष्ट इति न दोषः । उक्तञ्च वामनेन—'दृष्टः पुन्नपुंसकयोः प्रायेण' [काव्या० सू० अध्या० २ । सू० १३] अतः 'चन्द्र इव मुखम्' 'त्रैलोक्यमिव विष्णुना' इत्यादौ न दोषः । लौकिक्यामुपमायां समासाभिहितायामप्युपमायाम् उपमाप्रपञ्चे चेष्टो लिङ्गभेदः । उदाहृतमिदं वामनेनैव—लौकिक्यां यथा—'छायेव स तस्याः' 'पुरुष इव स्त्री' इति । समासाभिहितायां यथा—'भुजलता नीलोत्पलसदृशी' इति । तत्र लोकतः प्रसिद्धा उपमा लौकिकी । समासेनाभिहिता लुप्ता । उपमाप्रपञ्चः प्रतिवस्तुप्रभृतिः । उपमाप्रपञ्चे यथा—

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृता खलु गुणैरुद्यानलता वनलताभिः ॥ इति ।

'शुद्धान्तदुर्लभ' मित्यत्र प्रतिवस्तूपमा । एवमेव 'नेदं नभोमण्डलमम्बुराशिः' इत्याद्यपह्नुत्यादावपि उपमानोपमेययोर्लिङ्गभेदे दोषाभावः । एवमन्यदपि महाकविप्रयोगजातं द्रष्टव्यम् ॥ ५२ ॥

[ उपमानस्य हीनतायामधिकतायाञ्च दोषाभावकथनम् ]

**भवानिव महीपाल ! देवराजो विराजते ।**
**अलमंशुमतः कक्षामारोढुं तेजसा नृपः ॥ ५३ ॥**

उपमानस्य हीनतायामधिकतायाञ्च दोषाभावमुदाहरणेन दर्शयति—'भवान्' इति । हे ! महीपाल !=भवान् इव देवराजः=इन्द्रः विराजते=शोभते ।

अत्रोपमानो राजा, उपमेयो देवराजः । देवराजापेक्षया महीपतिर्न्यूनः मनुष्यत्वात् तथापि सकललोकपालांशभूतो राजा उपमानभूतोऽपि सहृदयहृदयेषु नात्यन्तं वैरस्यमासञ्जयतीति हीनत्वमुपमानस्य न दोषः । उक्तञ्च—'अष्टानां लोकपालानां वपुर्धारयते नृपः' इति ।

उपमानस्याधिकतायां दोषाभावस्थलमाह–'अलम्'इति । नृपः=राजा अंशुमतः=सूर्यस्य कक्षाम्=[व्यञ्जनया]सादृश्यम् आरोढुम्=प्राप्तुम् अलम्=समर्थ इति । अत्र नृपः उपमेयः, तस्योपमानमंशुमान् देवत्वादधिकः तथापि सहृदयप्रतीतेरविघातकत्वान्न दोषः । एवमन्यत्रापि ॥५३॥

**इत्येवमादौ सौभाग्यं न जहात्येव जातुचित् ।**
**अस्त्येव क्वचिदुद्वेगः प्रयोगे वाग्विदां यथा ॥ ५४ ॥**

उक्ते उदाहरणद्वये स्वयमुद्वेगाभावं स्पष्टयति—'इति' इति । इति=एवम् आदौ=दर्शितकाव्ये तत्सदृशे चान्यत्रापि यत्र कुत्रचित् जातुचित्=कदाचिदपि लिङ्गभेदो वचनभेदो हीनत्वमधिकत्वञ्चेति [कर्तृपदमूह्यम्] सौभाग्यम्=प्रस्तुतस्य वर्णनीयस्य उपमेयस्य उत्कर्षम् न जहाति=नैव निरुणद्धि इत्यर्थः । क्वचित् प्रयोगे=उपमानोपमेययोर्लिङ्गादिभेदप्रयोगे तु वाग्विदाम्=विपश्चिताम् उद्वेगः=प्रतीतिव्याघातः अस्ति एव=भवत्येव । यथा इत्युदाहरति अग्रिमश्लोकेन । आह च भोजराजः—

हीनं यत्रोपमानं स्यादुपमेयं गुणाधिकम् ।
हीनोपमं तदस्याहुः कवयः क्वाप्यदुष्टताम् ॥
यत्रोपमानमुत्कृष्टमुपमेयं निकृष्यते ।
ज्ञेयं तदधिकौपम्यमस्यापि क्वाप्यदोषता ॥ इति ॥ ५४ ॥

---

१ अत्राश्रमवासिजनवनलतयोर्लिङ्गभेदः वचनभेदश्च न दोषकरः ।

[ दोषस्थलप्रदर्शनम् ]

**हंसीव धवलश्चन्द्रः सरांसीवामलं नभः ।**
**भर्तृभक्तो भटः श्वेव खद्योतो भाति भानुवत् ॥ ५५ ॥**

'हंसीव' इति । चन्द्रः=शशी हंसी इव=हंसस्य योषित् वरटा इव धवलः=शुभ्रोऽस्ति । नभः=गगनम् सरांसि इव अमलम्=निर्मलं वर्त्तते इति शेषः । भटः=योधा सैनिकः श्वा इव= कुक्कुर इव भर्तृभक्तः=स्वामिसेवकः, खद्योतः=ज्योतिरिङ्गणः भानुवत्=सूर्य इव भाति=भ्राजते ।

अत्र यथाक्रममुपमानानां लिङ्गभेदवचनभेदन्यूनत्वाधिकत्वानि सहृदयहृदयेषु प्रतीति-विघातं जनयन्तीति वैरस्यापादकत्वाद् दूषणानि ॥ ५५ ॥

[ उपमागतदोषादोषविवेकोपसंहारः ]

**ईदृशं वर्ज्यते सद्भिः कारणं तत्र चिन्त्यताम् ।**
**गुणदोषविचाराय स्वयमेव मनीषिभिः ॥ ५६ ॥**

उक्तमर्थमुपसंहरति—'ईदृशम्' इति । सद्भिः=काव्यभावनाभावितमतिभिः परिण्डतैः ईदृशम्=हंसीवेत्यादि दर्शितं काव्यम् वर्ज्यते=परित्यज्यते अर्थात् कवयः एतादृशे काव्ये आदरं न प्रदर्शयन्ति । तत्र मनीषिभिः=सूरिभिः गुणदोषविचाराय=गुणदोषविवेकाय स्वयम् एव चिन्त्यताम्=गुणग्रहणाय दोषवर्जनाय च विवेकः क्रियतामित्यर्थः ॥ ५६ ॥

[ अथोपमाबोधकशब्दसंग्रहप्रदर्शनम् ]

**इववद्वायथाशब्दाः समाननिभसन्निभाः ।**
**तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः ॥ ५७ ॥**
**प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः ।**
**सदृक्सदृशसंवादिसजातीयानुवादिनः ॥ ५८ ॥**
**प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः ।**
**सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥ ५९ ॥**
**कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि ।**
**सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः ॥ ६० ॥**
**समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ।**
**स्पर्द्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ ६१ ॥**
**आक्रोशत्यवजानाति कदर्थयति निन्दति ।**
**विडम्बयति सन्धत्ते हसतीर्ष्यत्यसूयति ॥ ६२ ॥**
**तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।**
**तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥ ६३ ॥**
**तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ।**
**तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ ६४ ॥**
**तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।**
**उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥ ६५ ॥**

इत्युपमाचक्रम् ।

उपमाया लक्षणे 'प्रतीयते' इति पदं दत्तम् तत्र उपमाप्रतीतिः अभिधया लक्षणाया व्यञ्जनया च भवतीति सम्प्रति शिष्यबुद्धिसौकर्याय तद्वाचकादीन् शब्दान् संगृह्णाति 'इव' इत्यादिना। तत्र इव इत्यादयः शब्दा उपमाबोधकाः। एतेषु 'वत्' इति प्रत्ययः। सच क्वचित् 'तत्र तस्येव' [पा० ५।१।११६] इति सूत्रेण षष्ठ्यन्ताद् इवार्थे विहितः। क्वचित् 'तेन तुल्यं क्रिया चेद्वतिः' [पा० ५।१।११५] इति सूत्रेण तृतीयान्तात् तुल्यार्थे विहितः। 'वा' इति 'व' शब्दस्यापि[1] उपलक्षणम्। निभादयः केचित् समासमध्यगा एव औपम्यप्रकाशकाः। कल्पबाद्याः प्रत्ययाः 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः'। [६।३।६७] इति सूत्रेण विहिताः ततस्तदन्ताः शब्दा ग्राह्याः। अन्यूनार्थवादिनः=अहीनार्थवाचकाः। समासश्च बहुव्रीहिः, अयञ्च कर्मधारयस्याप्युपलक्षकः, यथा—पुरुषव्याघ्रः, शस्त्रीश्यामा इत्यादि। 'शशाङ्कवदनादिषु' इति। शशाङ्क इव वदनं [शशाङ्कसदृशं वदनं] यस्या इत्यत्र बहुव्रीहौ शाकपार्थिवादित्वान्मध्यमपदलोपः। इति **वाचकशब्दाः**। एवम् 'इव' इत्यारभ्य 'शशाङ्कवदनादिषु' इत्यन्ताः शब्दाः सादृश्यस्य [उपमायाः] वाचकाः। 'स्पर्धते' इत्यारभ्य 'असूयति' इत्यन्ताः शब्दाः उपमाया लक्षकाः। स्पर्धादिधातूनां सादृश्येऽर्थे व्याकरणसङ्केताभावात्। 'तस्य मुष्णाति सौभाग्यम्' इत्यारभ्य 'तन्निषेधति' इत्यन्ताः शब्दा उपमाया व्यञ्जकाः। तस्य 'शीलम्' स्वभावं प्रकृतिमिति यावत् 'अनुबध्नाति' अनुकरोति इत्यर्थः। 'तत्' इति शीलमाह। निषेधति=तद्वदाचरितुं वारयति। इमे सादृश्यसूचकाः शब्दाः कवीनाम्=ये काव्यं कर्त्तुं जानन्ति ये वा काव्यं चिकीर्षन्ति सर्वेषां तेषां बुद्धिसौख्यदाः=अनायासेनोपमास्फुरतिकरत्वात् बुद्धिसुखकारिणः। उपमायां प्रोक्ताः=निर्दिष्टाः। एपमादिषु शब्देषु उपमापरैः कविभिरवश्यमादरः करणीय इति भावः। इत्युपमाचक्रम्=उपमायाः प्रकरणं समाप्तमित्यर्थः।

इदन्तु बोध्यम्—वैयाकरणसिद्धान्ते इवाद्याः शब्दा उपमाया द्योतका एव सन्ति न वाचकाः निपातत्वादुपसर्गवत्। उक्तञ्च भूषणे—

द्योतकाः प्रादयो येन निपाताश्चादयस्तथा।
उपास्येते हरिहरौ लकारो दृश्यते यथा॥

तथाप्यालङ्कारिकाणां सिद्धान्ते इवादीनां वाचकत्वमेव। तद्बीजन्तु केषाञ्चिद्वैयाकरणानां मते क्वचिद् वाचकत्वमपि। तदुक्तं हरिणा—

निपाता द्योतकाः केचित्पृथगर्थाभिधायिनः।
आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः॥ इति॥

लघुमञ्जूषायां नागोजिभट्टैरप्युक्तम्—क्वचित्तु 'क्रियागतविशेषबोधकातिरिक्तनिपातानां वाचकत्वमपि' इत्यादि। इवादियोगे साधारणधर्मसम्बन्धरूपोपमा वाच्या, सादृश्यप्रतीतिस्त्वार्थी। सदृशादिप्रयोगे तु सादृश्यप्रतीतिः शाब्दी उपमा त्वार्थी' इत्यादि च। तस्मादत्र इवादीनां वाचकत्वकीर्त्तनं नामूलम्। एवम्—'इव' शब्दः सादृश्ये' शक्तः। सादृश्यञ्च—'तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वम्'। तथा च—'चन्द्र इव मुखम्' इत्यादौ 'चन्द्रवृत्तिसादृश्यधर्मवन्मु-

[1] उक्तञ्च वैयाकरणैः—'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यत्र इवार्थे 'वा' शब्दो 'व' शब्दो वा बोध्यः।

'कमलञ्च मुखञ्च तुल्यम्' इत्यादावुभयत्रापि विश्राम्यन्ति इति, अर्थानुसन्धानादेव साम्यं प्रतिपादयन्ति इति तत्सद्भावे **आर्थी**। एवम्—'तेन तुल्यं क्रिया चेद्वतिः' [पा० ५।१।११५] इति सूत्रेण तुल्यार्थे विहितस्य वतेरुपादाने। तत्र [पूर्णा] श्रौती आर्थी च प्रत्येकं त्रिविधा—तद्धितगता, समासगता, वाक्यगता चेति। उदाहरणं यथा—[विश्वनाथस्य]

सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले!॥

अत्र क्रमेण त्रिविधा श्रौती। तथा च—प्रथमवाक्ये सामान्यधर्मः सौरभम्, अम्भोरुहमुपमानम्, मुखमुपमेयम्, 'वति' प्रत्ययश्चौपम्यवाचीति पूर्णोपमायाः सामान्यलक्षणसङ्गतिः। परमियमत्र पूर्णोपमा 'तत्र तस्येव' [५।१।११६] इति सूत्रेण इवार्थे विहितस्य वतिप्रत्ययस्य सद्भावात् 'तद्धितगता श्रौती' [पूर्णा]। किञ्च—'गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत्' इति। गङ्गाभुजङ्ग उपमानम्, तस्येत्युपमेयम् गाम्भीर्यगरिमा इति साधारणो धर्मः। 'भुजङ्गवत्' इत्यत्र 'तत्र तस्येव' इति सूत्रेण पूर्ववत् षष्ठ्यन्तादिवार्थे वतिप्रत्ययः, इतीयमपि 'तद्धितगता श्रौती पूर्णा'। यथा वा मम—

सकलमनोहरणीया कान्तिर्यस्यास्ति कुमुदबान्धववत्।
द्विजराजपक्षपाती स जयति शिवराजभूपतिर्मान्यः॥

अत्र कुमुदबान्धव उपमानम्, यस्येत्युपमेयम्, सकलमनोहरत्वधर्मविशिष्टा कान्तिः साधारणो धर्मः 'कुमुदबान्धववत्' इत्यत्र 'तत्र तस्येव' इति सूत्रविहितो वतिप्रत्यय उपमावाचक इत्येवं तद्धितगता श्रौती पूर्णा। पण्डितराजेनापीयमुदाहृता। यथा—

'निखिलजगन्महनीया यस्याभा नवपयोधरवत्।
अम्बुजवद्विपुलतरे नयने तद्ब्रह्म संश्रये सगुणम्॥

अत्र पूर्वार्धे—पयोधर उपमानम्, अस्येत्युपमेयम्, उक्तविशेषणविशिष्टा आभा साधारणो धर्मः 'नवपयोधरवत्' इत्यत्रोक्तसूत्रविहितो वतिप्रत्यय उपमावाचक इतीयं तद्धितगता पूर्णा श्रौती ज्ञेया। एवमन्यदप्यूहनीयम्।

द्वितीयवाक्ये 'कुम्भाविव स्तनौ' इत्यत्र 'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्च' इति वार्त्तिकेन इवशब्दप्रयोगे नित्यसमासे सति 'समासगता श्रौती पूर्णोपमा'। अन्यदपि—

हरिचरणकमलनखगणकिरणश्रेणीव निर्मला नितराम्।
शिशिरयतु लोचनं मे देवव्रतपुत्रिणी देवी॥ [रसगङ्गाधरे]

अत्र—श्रेणी उपमानम्, देवी [गङ्गा] उपमेयम्, निर्मलत्वं साधारणो धर्मः, इवशब्दो वाचकः परन्तु उक्तवार्त्तिकेन नित्यसमासत्वात् 'समासगता श्रौती पूर्णा'। 'हृदय' मित्यादिद्वितीयार्धस्य वाक्यरूपत्वात् 'यथा' शब्दस्य श्रौतीघटकत्वाच्च 'वाक्यगता श्रौती पूर्णा'।

यद्यपि प्रथमद्वितीययोरपि अध्याहृतक्रियाद्वारा वाक्यत्वेन तत्रापि 'श्रौती वाक्यगा पूर्णे' ति शक्यते वक्तुम् तथा सति साङ्कर्यापत्तिश्च, तथापि कविसंरम्भवशाद् बाध्यबाधकभावाङ्गीकारे

१ तुल्यादिशब्दानां सादृश्यवति [साधारणधर्मवति] धर्मिणि शक्तत्वात् इत्यर्थः।

दोषाभावः। वाक्यत्वञ्च—'सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता' इति हरिलक्षणानुसारेण ज्ञेयम् । यथा वा—

[1]ग्रीष्मचण्डकरमण्डलभीष्म–ज्वालसंसरणतापितमूर्त्तेः ।
प्रावृषेण्य इव वारिधरो मे वेदनां हरतु वृष्णिवरेण्यः ॥ [रसगङ्गाधरे]

अत्र वारिधर उपमानम्, वृष्णिवरेण्यः [श्रीकृष्णः] उपमेयम्, वेदनाहरणं साधारणो धर्मः, 'इव' शब्द उपमावाचक इति चतुर्णामुपादानात् सुप्तिङन्तचयत्वेन वाक्यत्वाच्चेयमपि 'वाक्यगता श्रौती पूर्णा' । न चात्र इवशब्दस्य समासः, 'प्रावृषेण्य' इत्यस्य वारिधरविशेषणत्वेन निराकाङ्क्षतया सामर्थ्याभावात् । अतएवोक्तं नागेशभट्टैर्गुरुमर्मप्रकाशाख्यायां व्याख्यायाम्—'एवञ्च वैकल्पिकत्वात्तदभाव इति भाव' इति ।

अन्यापि वाक्यगता पूर्णा श्रौती, यथा अलङ्कारमणिहारे—

आनन्दनिलयनामनि विमानधामनि विभासमानं तत् ।
धाम चिरन्नं रत्नं श्यामलमिव हैमसम्पुटे जयति ॥

अत्र श्यामलं रत्नमुपमानम्, चिरन्नं धाम उपमेयम्, विभासमानत्वं साधारणो धर्मः,इवशब्द उपमाया वाचकः इति चतुर्णामुपादानात् उक्तरूपा पूर्णा । अथ त्रिविधा पूर्णा आर्थी । यथा—

मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः ।
चकितमृगलोचनाभ्यां सदृशी च चपले लोचने तस्याः ॥

अत्र प्रथमवाक्ये 'मधुरः सुधावद् अधरः' इत्यत्र सुधा उपमानम्, अधर उपमेयम्, मधुरत्वं साधारणो धर्मः, 'सुधावत्' इत्यत्र तृतीयान्तात् सुधाशब्दात् तुल्यार्थे 'तेन तुल्यं क्रिया चेद्वतिः' [५।१।११५] इति सूत्रेण विहितो वतिप्रत्यय उपमाबोधकः परमसौ न साक्षात् धर्मिबोधकत्वात् 'सुधातुल्य' इत्यर्थे उपस्थिते औपम्यमर्थबललभ्यमिति तद्धितगता आर्थी पूर्णा ।

एवञ्च पूर्णायाः षड् भेदाः—तद्धितगता, समासगता, वाक्यगता [ श्रौती पूर्णा ]। तद्धितगता, समासगता, वाक्यगता [ आर्थी पूर्णा ] । [ इति षड् । ]

अथ लुप्ता—साधारणधर्मादीनामेकस्य द्वयोः त्रयाणां वाऽनुपादाने भवति परन्तु सापि पूर्णावत् [भेदवती] स्यात्, किन्तु 'तत्र तस्येव' [५।१।११६] इति सूत्रेण षष्ठ्यन्तात् सप्तम्यन्ताच्च वतिप्रत्ययो विधीयते, सा पुनः सप्तमी षष्ठी च विभक्तिर्यं कमपि सामान्यधर्म-[साधारणधर्म]मपेक्ष्यैव सम्भवति । परन्तु—सामान्यधर्मानुपादाने तस्याः सप्तम्याः षष्ठ्याश्चासम्भवात् [तदन्त एव प्रसक्तस्य] वतिप्रत्ययस्याप्यसम्भव इति कृत्वा सामान्यधर्मलोपे श्रौत्या [तद्धितगताया] अप्यसम्भव एव । एवञ्च लुप्तायाः पञ्च प्रकारा आयाता भवन्ति । उदाहरणं यथा—

मुखमिन्दुर्यथा, पाणिः पल्लवेन समः प्रिये [2]।
वाचः सुधा इवोष्ठस्ते बिम्बतुल्यो मनोऽश्मवत् ॥

---

१ ग्रीष्मस्य यः चण्डकरः सूर्यः तस्य मण्डलम् बिम्बम् तस्य भीष्मा भयङ्करा ज्वाला यत्र तत्र देशे यत् संसरणं गमनं तेन तापिता सन्तप्ता मूर्त्तिः तनुर्यस्य तस्येत्यर्थः ।

२ 'पाणिः पल्लवेन सम' इत्यत्र समशब्दस्योपादानात् 'कोमल' इति गुणरूपस्य सामान्यधर्मस्य चानुपादानात् 'वाक्यगता आर्थी [साधारणधर्म] लुप्तोपमा' । यथा वा—[रसगङ्गाधरे]

हे ! प्रिये ! तव मुखम् इन्दुर्यथा चन्द्र इव । अत्र उपमावाचकस्य 'यथा' शब्दस्योपादानात् 'आनन्दयति' इति क्रियारूपस्य साधारणधर्मस्य अनुपादानात् 'वाक्यगता श्रौती [साधारणधर्म]लुप्तोपमा' । अस्या एवोदाहरणान्तरं यथा--[अलङ्कारमणिहारे]

शरदिन्दुसदृशवदनं स्फुरदिन्दिरमहिगिरीन्द्रकृतसदनम् ।
कुन्दसमोपमरदनं वृन्दं महसां धुनोतु भयकदनम् ॥

अत्राह्लादनादिसाधारणधर्मो नोपात्तः । यथा वा--[रसगङ्गाधरे]

कलाधरस्येव कलावशिष्टा विलूनमूला लवलीलतेव ।
अशोकमूलं परिपूर्णशोका सा रामयोषा चिरमध्युवास ॥

अत्र ह्रासपरिम्लानत्वादिः साधारणधर्मो नोपात्तः । यथा वा मम--

आदाय वीणां स्वशये विमुग्धा मुग्धेव कृष्णाङ्घ्रिसरोजलीना ।
प्रफुल्लचूते समये विविक्ते राधा स्थिता माधवमाननाय ॥

अत्र 'मुग्धेव' इत्युक्तावपि मुग्धाया नायिकाया नायकवशीकारानवबोधादिरूपः सामान्यधर्मोऽनुपात्तः ।

कोपेऽपि वदनं तन्वि ! तुल्यं कोकनदेन ते ।
उत्तमानां विकारेऽपि नापैति रमणीयता ॥ इति ॥

अत्राप्याह्लादकत्वं नोपात्तम् 'तुल्य' शब्दोपादानाच्चार्थी । 'वाचः सुधा इव' इत्यत्र 'इव' शब्दस्योपादानात् 'मधुरा' इति सामान्यधर्मस्य चानुपादानात् 'इव' शब्दस्य च प्रागुक्तरीत्या समासाश्रयणात् 'समासगता श्रौती धर्मलुप्तोपमा' ।

ते=तव ओष्ठौ 'बिम्बतुल्य' इत्यत्र तुल्यशब्दस्योपादानात् 'लोहितवर्णं' इति सामान्यधर्मस्य चानुपादानात् 'बिम्ब' शब्देन सह 'तुल्य' शब्दस्य समासाच्च 'आर्थी समासगता धर्मलुप्तोपमा' ।

'तथा मनः अश्मवत्=पाषाणवत्' इत्यत्र तृतीयान्तात् अश्मशब्दात् तुल्यार्थे 'वति' प्रत्ययविधानात् 'कठिनम्' इति सामान्यधर्मस्य चानुपादानात् 'तद्धितगता आर्थी धर्मलुप्तोपमा' । एवं सङ्कलनेन (११) एकादश भेदाः ।

पुनरपि लुप्तोपमा प्रकारान्तरेण ज्ञेया । उक्तञ्च दर्पणे--

आधारकर्मविहिते द्विविधे च क्यचि क्यङि ।
कर्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः ॥

अस्यायमाशयः--अधिकरणकारकाद् विहिते क्यचि एकविधा, कर्मकारकाद् विहिते क्यचि च एकविधा इत्येवं मिलित्वा एकस्मिन्नेव क्यचि द्वे लुप्तोपमे । 'क्यङि' प्रत्यये एकविधा । तथा कर्मणि णमुलि कर्त्तरि णमुलि च प्रत्येकमेकविधा इत्येवं द्विविधा । एवं सामान्यधर्मलोपे पुनर्लुप्तोपमा पञ्चधा । एते प्रत्ययाः कलापव्याकरणे यिन्--आयि--णमः, मुग्धबोधे तु 'क्य-ञ्य-त्रणम्' इति ज्ञेयम् । क्रमेणोदाहरणम्--

१ अत्र पञ्चानामेव स्थलानां वाक्यत्वेन सर्वत्रैव वाक्यगतोपमात्वप्रसक्तौ तद्धितगतायाः समासगतायाश्च विशेषरूपत्वेन तदपवादतया नैव दोषः, तद्भिन्नस्थल एव वाक्यगताया व्यवहार इति पूर्वोक्तं न विस्मरणीयम् ।

अन्तःपुरीयसि रणेषु सुतीयसि त्वं पौरं जनं तव सदा रमणीयते श्रीः।
दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्रसञ्चारमत्र भुवि सञ्चरसि क्षितीश!॥

हे! क्षितीश! त्वं रणेषु सङ्ग्रामेषु अन्तःपुरीससि अन्तःपुरेषु इव आचरसि। अत्र 'उपमानादाचारे' [३।१।१०] इति पाणिनिसूत्रस्थेन 'अधिकरणाच्चेति वक्तव्यम्' इति वार्त्तिकेन अन्तःपुरेषु इत्यधिकरणपदात् आचारेऽर्थे क्यच्प्रत्ययः। अत्र तुल्यत्वम् [स्वच्छन्दगमनादिरूप] आचारश्च क्यच्प्रत्ययार्थः, स एवात्र साधारणो धर्मः, स चायमाचारोऽधिकरणतान्वययोग्या क्रिया [स्वच्छन्दगमनादिरूपा]। परन्तु व्युत्पत्तिवैचित्रीवशात् तुल्यत्वस्य प्रकृत्यर्थे आचारस्य चाख्यातार्थेऽन्वयः। यथा च--'अन्तःपुरतुल्येषु रणेषु सञ्चारकर्त्ता [सञ्चारानुकूलकृतिमान्] त्वम् इति वाक्यार्थबोधः।

तथा 'पौरं जनं त्वं सुतीयसि=सुतमिवाचरसि। अत्र—'उपमानादाचारे' [३।१।१०] इति सूत्रेण 'सुतम्' इत्युपमानभूतात् कर्मपदात् आचारार्थे 'क्यच्'। आचारोऽत्र मननम् पौरजनं सुततुल्यं [स्नेहनिर्भरास्पदं] मन्यसे इत्यर्थः।

तव श्रीः=लक्ष्मीः सदा रमणीयते, रमणी इव आचरति। अत्र 'कर्त्तुः क्यङ् सलोपश्च' [३।१।११] इति सूत्रेण उपमानभूतात् 'रमणी' इति कर्तृपदात् आचारार्थे 'क्यङ्' [अत एवास्य ङित्त्वादात्मनेपदम्] अत्र आचारः वर्त्तनम् [सुखभोगसम्पादनम्] रमणीतुल्या [तव] श्रीर्वर्त्तत इत्यर्थः। अत्रोपभोगसाधनत्वस्य साधारणधर्मस्य लोपः।

प्रियाभिः=कान्ताभिः अमृतद्युतिदर्शम्=अमृतद्युतिः चन्द्रः अमृतद्युतेरिव दर्शनम् इत्यमृतद्युतिदर्शं [त्वं] दृष्टः आलोकितः। अत्र 'उपमाने कर्मणि च' [३।४।४५] इति सूत्रेण 'अमृतद्युतिम्' इति कर्मणि उपपदे सति 'दृश्' धातोः भावे 'णमुल्' 'तुमर्थे सेसेनसेअसेन०—[३।४।६] इति पाणिनिसूत्रमहाभाष्ये दृष्टेन 'अव्ययकृतो भावे' इत्यनेन अव्ययकृतां भाव एवानुशासनात्। अस्य च 'कृन्मेजन्तः' [१।१।३६] इति सूत्रेणाव्ययत्वम्। 'कषादिषु यथाविध्यनुप्रयोगः' [३।४।४५] इति 'दृश्' धातोरेव 'दृष्ट' इत्यस्य अनुप्रयोगः। मनोज्ञत्वादिश्चात्र साधारणो धर्मो नोपात्तः। अत्र अमृतद्युतिः उपमानम्, राजा उपमेयः।

तथा—अत्र=अस्यां भुवि इन्द्रसञ्चारम्=इन्द्र इव सञ्चरणम् इति तत् तथोक्तम्। 'इन्द्र इव सञ्चरसि' इत्यर्थः। अत्र 'उपमाने कर्मणि च' [३।४।४५] इति पाणिनिसूत्रेण चकाराऽनुकृष्ट उपमानवाचके 'इन्द्र' इति कर्त्तरि उपपदे सति सम्पूर्वकात् 'चर' धातोर्भावे 'णमुल्' प्रत्ययः। निर्भयत्वं साधारणधर्मो नोपात्तः।

अयमत्र पद्ये साधारणधर्मलोपविवेकः—प्रथमे 'अन्तःपुरीयसि' इत्यत्र सुखविहारास्पदत्वस्य, द्वितीये 'सुतीयसि' इत्यत्र स्नेहातिशयत्वस्य, तृतीये 'रमणीयते' इत्यत्र सन्तोषप्रदायित्वस्य, चतुर्थे 'दृष्ट' इत्यादिवाक्ये आह्लादकत्वस्य, पञ्चमे 'इन्द्रसञ्चार' मित्यत्र निर्भयत्वादेः साधारणधर्मस्य लोपः। तदेवं धर्मलोपे दश प्रकाराः।

'उपमानानुपादाने द्विधा वाक्यसमासयोः' ॥ इति।

उदाहरणं यथा—'तस्या मुखेन सदृशं रम्यं नास्ते नवा नयनतुल्यम्' ॥ अत्र मुख-नयनप्रतिनिधिवस्त्वन्तरयोः [कमलाद्योः] गम्यमानत्वाद् उपमानलोपः[1]।

औपम्यवाचिनो लोपे समासे क्विपि च द्विधा। क्रमेणोदाहरणम्। 'वेदनं मृगशावाक्ष्याः सुधाकरमनोहरम्' इति। अत्र 'सुधाकर इव मनोहरम्' इति वाक्ये [ विग्रहरूपे ] 'उपमानानि सामान्यवचनैः' [२।१।५५ ] इति सूत्रेण कर्मधारयसमासे 'इव' इत्यस्य औपम्यवाचकस्य लोपे 'समासगता वाचकलुप्ता'।[3] 'गर्दभति श्रुतिपरुषं व्यक्तं निनदन् महात्मनां पुरतः'। अत्र 'गर्दभति' इत्यत्र गर्दभ इवाचरति इति विग्रहे 'सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्य' इति वार्त्तिकेन 'गर्दभ' इत्युपमानपदात् आचारार्थे क्विप्, क्विपः सर्वापहारी लोपः। एवमत्रौपम्यवाचिनः क्विपो लोप इति 'क्विब्गता वाचकलुप्ता'। न चेह उपमेयस्यापि लोपः 'निनदन्' इत्यनेनैव निर्देशात्।

द्विधा समासे वाक्ये च लोपे धर्मोपमानयोः ॥

'तस्या मुखेन' इत्यादौ 'रम्यम्' इति स्थाने 'लोके' इति पाठे अनयोरुदाहरणम्। अर्थात् 'रम्यम्' इति सामान्यधर्मानुपादानात् उपमानानुपादानाच्च 'वाक्यगता द्विलोपे उपमा'। 'नवा नयनतुल्यम्' इत्यस्य यथावस्थितमेव पाठे 'रम्यम्' इत्यस्य सामान्यधर्मस्यासम्बन्धनात् 'समासगता द्विलोपे उपमा'।

क्विप्समासगता द्वेधा धर्मेवादिविलोपने ॥

धर्मः सामान्यधर्मः, इवादिः सादृश्यवाचकः, एतयोर्द्वयोर्लोपे=युगपदनुपादाने क्विप्-प्रत्ययगता समासगता चेति द्वेधा।

उदाहरणं यथा—'विधवति मुखाब्जमस्याः'। अत्र 'विधवति' इत्यत्र 'विधुरिवाचरति' इति विग्रहे 'सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्यः' इति वार्त्तिकेन विहितस्य सादृश्यवाचकस्य क्विप्प्रत्ययस्य सर्वापहारिलोपः, सादृश्यञ्चात्र मनोहरत्वम्। 'मुखाब्जम्' इत्यत्र 'मुखम् अब्जमिव' इति विग्रहे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' [२।१।५६] इति सूत्रेण समासे सति औपम्यवाचकस्य इवादेः तथा मनोहरत्वसौरभादेश्च सामान्यधर्मस्य लोपः। एवम् 'शशाङ्कवदना' इत्यादिबहुव्रीहिसमासेऽपि इयमेव धर्मवाचकलुप्तोपमा' ज्ञेया।

'उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि' ॥ उदाहरणं यथा—

अरातिविक्रमालोकविकस्वरविलोचनः।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥

अत्र 'सहस्रायुधमिवात्मानमाचरती' ति विग्रहे [वाक्ये] उपमेयस्यात्मनो लोपः अर्थात् 'उपमानादाचारे' [३।१।१०] इति सूत्रेण उपमानवाचकात् 'सहस्रायुधम्' इति कर्मपदात् आचारार्थे 'क्यच्' प्रत्ययः। आचारोऽत्र दुर्धर्षत्वादिः।

---

१ अत्रैव च 'मुखेन सदृशम्' इत्यत्र 'मुखं यथेदम्' इति, 'नयनतुल्यम्' इत्यत्र 'दृगिव' इति पाठे श्रौत्यपि सम्भवति, तेन चातुर्विध्यं स्यात्, परं प्राचीनमनुरुध्येदमुक्तम्।

२ 'कदलीसुन्दरावूरू मृणालसदृशौ भुजौ' इत्युत्तरार्धम्।

३ कुक्कुरति च परपदानि विलिहन् परदत्तमात्रार्थी इति परार्धम्।

'धर्मोपमेयलोपेऽन्या' ॥ धर्मः=सामान्यधर्मः उपमेयञ्च एतयोर्लोपे=युगपदनुपादाने अन्या=अपरा एकविधा लुप्तोपमा ।

'यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्वे' । अत्र 'क्षीरोदमिवात्मानमाचरन्ती'ति । अत्र उपमेय आत्मा, साधारणधर्मः शुक्लता च लुप्तौ [नोपात्तौ] ।

त्रिलोपे च समासगा=धर्मोपमानवादिलोपे समासगता एका धर्मोपमानवाचकलुप्ताऽन्या उपमेत्यर्थः । यथा—'राजते मृगलोचना' इत्यत्र 'मृगस्य लोचने इव लोचने यस्याः' इति विग्रहे 'अनेकमन्यपदार्थे' [२।२।२४] इति सूत्रस्थेन 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' इति वार्त्तिकेन 'मृगलोचने' त्युपमानभूतस्य पूर्वपदस्य 'लोचन' शब्देन सह बहुव्रीहिसमासे उपमानवाचिनि 'मृगलोचने' इति पूर्वपदे उत्तरपदभूतस्य लोचनशब्दस्य लोपे सति इदमुदाहरणम् । एवमत्र उपमानभूतस्य 'लोचने' इत्यस्य, औपम्यवाचकस्य 'इव' शब्दस्य 'चञ्चलत्व' रूपस्य च साधारणधर्मस्य लोपे (त्रिलोपे) समासगतेयं लुप्तोपमा ।

'तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः' । इति ॥ पूर्णा षड्विधा, लुप्ता चैकविंशतिविधा इति मिलित्वा सप्तविंशतिप्रकारोपमा । एतच्च निम्नन्यस्तचक्रेण सुखवेद्यम् । यथा—

| | | नामानि । | उदाहरणानि । |
|---|---|---|---|
| **पूर्णोपमा ६** | श्रौती ३— | तद्धितगता | १—सौरभमम्भोरुहवन्मुखस्य । |
| | | समासगता | १—कुम्भाविव स्तनौ पीनौ । |
| | | वाक्यगता | १—हृदयं मदयति वदनं तव । शरदिन्दुर्यथा बाले ! । |
| | आर्थी ३— | तद्धितगता | १—मधुरः सुधावदधरः । |
| | | समासगता | १—पल्लवतुल्योऽतिपेलवः पाणिः । |
| | | वाक्यगता | १—चकितमृगलोचनाभ्यां सदृशौ चपले च लोचने तस्याः । |
| **लुप्तोपमा २१** — सामान्यधर्मलोपे ५ | श्रौती २ | समासगता | १—वाचः सुधा इव । |
| | | वाक्यगता | १—मुखमिन्दुर्यथा । |
| | आर्थी ३— | तद्धितगता | १—मनोऽश्मवत् । |
| | | समासगता | १—ओष्ठस्ते बिम्बतुल्यः । |
| | | वाक्यगता | १—पाणिः पल्लवेन समः । |
| **प्रत्यये ५** | क्यचि २ | आधारात् क्यचि | १—अन्तःपुरीयसि रणेषु । |
| | | कर्म्मणः क्यचि | १—पौरं जनं सुतीयसि । |
| | क्यङि १ | कर्त्तुः क्यङि | १—श्रीस्तत्र रमणीयते । |
| | णमुलि २ | कर्म्मणि णमुलि | १—अमृतद्युतिदर्शं दृष्टः । |
| | | कर्तरि णमुलि | १—इन्द्रसञ्चारं सञ्चरसि । |

---

१ मृगेन्द्रगमना श्यामा कोमला कोकिलस्वना ।
हंसवाणी प्रिया सेयं 'राजते मृगलोचना' ॥ इति पूर्णम् ।

| | | |
|---|---|---|
| उपमानलोपे २ | वाक्यगता | १—तस्या मुखेन सदृशं रम्यं नास्ते । |
| | समासगता | १—नवा नयनतुल्यं रम्यमास्ते । |
| इवादिलोपे २ | समासगता | १—सुधाकरमनोहरं वदनम् । |
| | क्विप्प्रत्ययगता | १—गर्दभति श्रुतिपरुषं व्यक्तं निनदन् महात्मनां पुरतः । |
| सामान्यधर्म्म उपमानञ्च एतयोरुभयोर्लोपे २ | समासगता | १—लोके न वा नयनतुल्यमास्ते । |
| | वाक्यगता | १—तस्या मुखेन सदृशं रम्यं लोके नास्ते । |
| सामान्यधर्म्म इवादिश्च एतयोरुभयोर्लोपे २ | क्विप्प्रत्ययगता | १—विधवति मुखाब्जमस्याः । |
| | समासगता | १—मुखाब्जमस्याः । |
| उपमेयलोपे क्यचि १ | कर्म्मणः क्यचि | १—विकस्वरविलोचनः स सहस्रायुधीयति । |
| सामान्यधर्म्म उपमेयञ्च एतयोरुभयोर्लोपे १ | कर्म्मणः क्यचि | १—क्षीरोदीयन्ति सागराः । |
| उपमानम्, इवादिः, सामान्यधर्म्मश्च, एषां सर्वेषां लोपे | समासगता | १—राजते मृगलोचना । |

[ अथ रूपकस्य सामान्यलक्षणपूर्वकं निरूपणम् ]

**उपमैव तिरोभूतभेदा रूपकमुच्यते ।**
**यथा बाहुलता पाणिपद्मं चरणपल्लवः ॥ ६६ ॥**

सकलालङ्कारप्राणभूता उपमा निरूपिता, सम्प्रति रूपकं लक्ष्यलक्षणाभ्यां निरूपयति—'उपमा' इति । तिरोभूतभेदा=तिरोभूतः प्रच्छादितः अप्रकटित इति यावत् भेदः=उपमानोपमेययोः वैधर्म्यं यस्यां सा उपमा एव रूपकम्=रूपकालङ्कारः उच्यते=कथ्यते 'कविभि'रिति शेषः । एवञ्च 'उपमानोपमेययोर्यद् गुणसाम्यादभेदारोपणं अर्थात् उपमेये उपमानस्याहार्याभेदारोपः तद्रूपक'मिति फलितं रूपकलक्षणम् । वामनोप्याह—'उपमानोपमेयस्य गुणसाम्यात्तत्त्वारोपो रूपकम्' [ काव्या० सू० ३।६ ] इति । प्रकृतम् अप्रकृतेन रूपवत् क्रियत इति 'रूपक' निरुक्तिः । उदाहरति—'यथा बाहुलता' इत्यादिना । बाहुलता=बाहु[र्भुजा] एव लता [वल्ली] इति बाहुलता । पाणिपद्मम्=पाणिरेव पद्मम् पाणिपद्मम् । चरणपल्लवः=चरणः (अङ्घ्रिः) एव पल्लवः इति चरणपल्लवः ।

अत्र उपमेये बाहौ उपमानस्य लतायाः कोमलत्वादिगुणसादृश्येन [ऐच्छिकः] लतात्वधर्मारोपः । सच लताबाह्वोर्भेदज्ञाने सत्यपि ऐच्छिकत्वात् 'आहार्य' इति कथ्यते । एवं बाहौ लतात्वारोपेण 'बाहुर्लता इव' इत्युपमापेक्षया चमत्कारातिशयः सहृदयसाक्षिकः । एवैव दिक् 'पाणिपद्मम्' 'चरणपल्लव' इत्यादावपि ज्ञेया ।

परमिदं 'समस्तरूपकस्य' उदाहरणम् । उक्तञ्च वाग्भटेन—

१ 'वैधर्म्यं भेद' इति पक्षावलम्बिन आलङ्कारिकाः ।

(प्र०) रूपकस्य सामान्यलक्षणं तदुदाहरणञ्च स्पष्टीकुरु? (उ०) अस्य पृ० पं० १६

रूपकं यत्र साधर्म्यादर्थयोरभिदा भवेत्।
समस्तं वाऽसमस्तं वा खण्डं वाऽखण्डमेव वा।

क्रमश उदाहरणम्। तत्र समस्तं यथा—

कीर्णान्धकारालकशालमाना निबद्धतारास्थिमणिः कुतोऽपि।
निशापिशाची व्यचरद्दधाना महान्त्युलूकध्वनिफेत्कृतानि॥

अत्र निशैव पिशाची महान्त्युलूकध्वनिफेत्कृतानि दधाना कुतोपि व्यचरत् इति सम्बन्धः। उलूकध्वनय एव फेत्कृतानि। कीर्णो विक्षिप्तोऽन्धकार एव अलका कुटिलकेशाः तैः शालमाना शोभमाना। तथा निबद्धाः तारा एव अस्थिमणयो यया सा तथा। एवं दर्शितरीत्या 'निशा एव पिशाची' इति तयोस्तयोर्द्वयोरर्थयोरभेदात् रूपकम्। तच्च समासकरणात् समस्तम्।

असमस्तं तु पृथग् विभक्त्या ज्ञेयम्। यथा—

संसार एष कूपः सलिलानि विपत्तिजन्मदुःखानि।
इह धर्म एव रज्जुस्तस्मादुद्धरति निर्मग्नान्॥

अत्र पृथक् पृथक् विभक्तिभावाद् असमस्तो रूपकालङ्कारः। खण्डं यथा—

अधरं मुखेन नयनेन रुचिं सुरभित्वमाब्जमिव नासिकया।
नववर्णिनीवदनचन्द्रमसस्तरुणा रसेन युगपन्निपपुः॥

अत्र नववर्णिनी नवोढा, तस्या वदनमेव चन्द्रमा तस्येति रूपकम्। तरुणाः=युवानः नववर्णिनीवदनचन्द्रमसः मुखेनाधरम्, नयनेन रुचिम्, नासिकया आब्जमिव सुरभित्वम्, निपपुः=स्वदन्ते स्म। एवमत्र खण्डकरणात् खण्डरूपकम्। 'आब्ज' मिवेत्यत्र तूत्प्रेक्षा। अखण्डं यथा—

ज्योत्स्नया धवलीकुर्वन्नुर्वीं सकुलपर्वताम्। निशाविलासकमलमुदेति स्म निशाकरः॥

अत्र अखण्ड एव चन्द्रो निशाया विलासकमलं स्याद् अतोऽखण्डं रूपकमेतत्॥६६॥

[ व्यस्तरूपकस्योदाहरणम् ]

**अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः।**
**बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी॥ ६७॥**

व्यस्तं रूपकमुदाहरति—'अङ्गुल्य' इति। [हे! प्रिये!] त्वं नः=अस्माकम् प्रत्यक्षचारिणी=नयनगोचरा वसन्तश्रीः=मधुमासशोभा 'असि' इति शेषः। तथाहि—ते=तव अङ्गुल्यः=करशाखाः पल्लवानि=कोमलपत्राणि नखार्चिषः=नखानां करजानामर्चिषः किरणाः कुसुमानि=पुष्पाणि तथा बाहू=भुजे लते=वल्ल्यौ 'वर्त्तेते' इति शेषः।

अत्र अङ्गुलीपल्लवादीनां समासानाश्रयणाद् व्यस्तं रूपकम्। इदन्तु बोध्यम्—'अङ्गुल्यः पल्लवानि' इत्यादिरूपेण अत्र रूपकोदाहरणे लिङ्गभेदन्यसनेन रूपके लिङ्गभेदस्य दोषाभाव इति व्यक्तीकृतम्। 'शास्त्राणि चक्षुर्नवम्' इत्याद्यभियुक्तोक्तिः वचनभेदेऽपि दोषाभावं व्यनक्ति। एतद्भिन्नस्थले तु 'मुखं पद्मानि' इत्यादौ दोष एव॥ ६७॥

१ 'वसन्तश्रीत्व' भेवोपपादयति।

(प्र०) व्यस्तरूपकस्य किमुदाहरणम्? कथञ्च तत्र रूपकसामान्यलक्षणं घटते? इति स्पष्टं व्याख्याहि! (उ०) अस्य पृ० पं० २२।

[ समस्तव्यस्तरूपकोदाहरणम् ]

**इत्येतदसमस्ताख्यं समस्तं पूर्वरूपकम् ।**
**स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम् ॥ ६८ ॥**

उक्तरूपके स्वोक्तिं स्वयं सङ्गमयन् उत्तरार्धेन 'समस्तव्यस्तरूपक' मुदाहरति--'इति' इति। इति=उक्तम् एतत्='अङ्गुल्यः पल्लवानि' इत्यादि असमस्ताख्यम्=असमस्तसंज्ञकं रूपकम्। पूर्वरूपकम्=पूर्वश्लोकोक्तं 'बाहुलता' इत्यादि तु समस्तम्=समस्तरूपकं 'ज्ञेयम्' इति शेषः। बाहूलतादीनां समासकरणात् 'उपमानोपमेययोः समासस्थले समस्तम् असमासस्थले तु असमस्तम्' इत्यर्थः। असमस्तमेव 'व्यस्तम्' इत्युच्यते। 'स्मितम्' इति। मुखेन्दोः=मुखमेवेन्दुः तस्य स्मितम्=हास्यम् ज्योत्स्ना=चन्द्रिका 'अस्ति' इति शेषः, एतच्च समस्तव्यस्तरूपकम् इत्यर्थः। 'मुखेन्दो' रित्यत्र समासात् 'स्मितं ज्योत्स्ना' इत्यत्र समासाभावादिति भावः ॥ ६८ ॥

[ सकलरूपकोदाहरणम् ]

**ताम्राङ्गुलिदलश्रेणि नखदीधितिकेसरम् ।**
**ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥ ६९ ॥**

सकलरूपकं प्ररूपयति द्वाभ्याम्--'ताम्र' इति। ताम्राङ्गुलिदलश्रेणि=ताम्राः रक्ताः अङ्गुलयः करशाखा एव दलानि पल्लवाः तेषां श्रेणय राजयः यत्र तत्, नखदीधितिकेसरम्=नखानां करजानां दीधतयो मयूखा एव केसराः किञ्जल्का यत्र तत् तादृशम्, भवच्चरणपङ्कजम्=भवतः चरणौ (तव अङ्घ्री) एव पङ्कजं कमलम् तत् भूपालैः= राजाभिः मूर्ध्नि=[स्व-]उत्तमाङ्गे ध्रियते=उह्यते। 'धृञ्' धारणे कर्मणि लिट्।

अत्र चरणे पङ्कजत्वमारोपितम् यतः कमलं शिरसि ध्रियते, एवं चरणस्य पङ्कजत्वेन रूपणे कृते तदनुगुणीभावाय ताम्राङ्गुलीषु दलत्वम्, नखदीधितिषु केसरत्वञ्चारोपितमिति सकलानां पङ्कजावयवानामारोपणात् 'सकलरूपक' मिदं रूपकम् ॥ ६९ ॥

[ उक्तोदाहरणे रूपकलक्षणयोजनम् ]

**अङ्गुल्यादौ दलादित्वं पादे चारोप्य पद्मताम् ।**
**तद्योग्यस्थानविन्यासादेतत्सकलरूपकम् ॥ ७० ॥**

उक्तोदाहरणे सकलरूपकस्य लक्षणं स्वयं घटयित्वा दर्शयति—'अङ्गुल्यादौ' इति। अङ्गुल्यादौ=अङ्गुलिप्रभृतौ दलादित्वम्=दलश्रेणित्वादिकम् पादे च=चरणे च पद्मताम्= कमलभावम् आरोप्य=अध्यस्य तद्योग्यस्थानविन्यासात्=तस्य पङ्कजस्य योग्ये स्थाने शिरसि विन्यासात्=धारणात् एतत् सकलरूपकम्=सकलरूपकसञ्ज्ञकमिदं रूपकमित्यर्थः।

एतदेव विश्वनाथप्रभृतिभिः 'साङ्गं समस्तवस्तुविषयं' वा रूपकमुच्यते। लक्षयन्ति च—'अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्' इति। एवमुक्तोदाहरणे मूर्ध्नि धारणारूपं यत्साधारणो धर्मः, तस्य उपमानभूते पङ्कज एवान्वयौचित्यात् 'मयूरव्यंसकादयश्च' [२।१।७२]

१ प्रकाशकारास्तु—'समस्तवस्तुविषयं श्रौता आरोपिता यदा' इत्यललक्षन्।

(प्र०) सकलरूपकस्योदाहरणं लिखित्वा तत्र तस्य लक्षणं योजय ?

(उ०) अस्य पृ० पं० १२।

इति सूत्रेण 'चरणमेव पङ्कजम्' इति रूपकसमासः, नतु 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' [ २ । १ । ५६ ] इति सूत्रेण 'चरणं पङ्कजम् इव' इत्युपमितसमासः, उपमेयस्य (चरणस्य) मूर्ध्नि धारणायोग्यत्वात् । इत्थञ्च—

'यत्र अङ्गिनः तदङ्गानाञ्च रूपणं शब्दोपात्तं भवति तदेव 'सकलरूपक' मित्यलङ्कारशास्त्रविदामाशयः ।

अस्योदाहरणान्तरं यथा—

यात्राप्रावृषि वीररुद्रनृपतेर्निस्साणधाराधरे
वैरिक्ष्मापतिगर्वपर्वतभिदाभीमं मुहुर्गर्जति ।
शत्रुस्त्रीनयनाम्बुवृष्टिरसकृज्जाताऽनया सर्वतो
वर्धन्ते हरिदन्तरेषु जगदानन्दा यशःकन्दलाः ॥

अत्र 'यात्राप्रावृषि' इत्यादाववयवरूपणम्, 'यशःकन्दला' इत्यवयविरूपणम् ।

ननु—अत्र 'यशांसि कन्दला इव' इत्युपमितसमासः प्राप्नोति 'यशांसि एव कन्दला' इति रूपकसमासोऽपि उभयोः साधकबाधकाभावात् सन्देहसङ्कर एवायं नतु रूपकमेवेति निश्चय इति चेत् ? उच्यते—'जगदानन्दा' इति सामान्यप्रयोगसम्भवात् तदप्रयोग एव चोपमितसमासशासनान्नोपमितसमासः किन्तु मयूरव्यंसकादित्वाद्रूपकसमास एव तेन रूपकमेवेदं नोपमा । एवमन्यत्रापि साधकबाधकयोरुन्नयनं ज्ञेयम् ॥ ७० ॥

[ अवयवरूपकस्योदाहरणम् ]

**अकस्मादेव ते चण्डि ! स्फुरिताधरपल्लवम् ।**
**मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥ ७१ ॥**

[ अवयवरूपकस्य लक्षणयोजनम् ]

**मञ्जरीकृत्य घर्माम्भः पल्लवीकृत्य चाधरम् ।**
**नान्यथाकृतमत्रास्यमतोऽवयवरूपकम् ॥ ७२ ॥**

अवयवरूपकं प्ररूपयति—'अकस्माद्' इत्यादि द्वाभ्याम् । हे ! चण्डि !=समधिककोपने ! ते=तव मुखम्=आननम् अकस्मात् एव=निर्हेतुकमेव स्फुरिताधरपल्लवम्=स्फुरितः कम्पनायुतः अधरः निम्नोष्ठ एव पल्लवः पत्रं यस्मिन् तत्तादृशं सत् मुक्तारुचीः=मुक्तानां मौक्तिकानां रुचः इव रुचः कान्तयो यासां तास्तादृशाः घर्माम्भःकणमञ्जरीः=घर्माम्भसां स्वेदकणानां कणा बिन्दव एव मञ्जर्यः शिञ्जर्यः ता धत्ते=धारयति ।

अत्र काव्ये घर्माम्भः मञ्जरीकृत्य=मञ्जरीत्वेनारोप्य अधरञ्च पल्लवीकृत्य=पल्लवत्वेनारोप्य आस्यम्=मुखम् अन्यथा न कृतम्=पद्मत्वेन नैवारोपितम् अतः अवयवमात्ररूपणात् अवयवरूपकम्=उच्यते इति शेषः । अत्र प्रस्तुते मुखे पद्मत्वारोप अर्थवशादेव उन्नेतव्यो भवति । इदमेव परैः 'एकदेशविवर्त्तिरूपकम्' इत्युक्तम् । तथाहि—'यत्रावयवनिरूपणाद् अवयविनो रूपणं गम्यते तदेकदेशविवर्त्ति रूपकम्' इति प्रतापरुद्रीये । उदाहरणं यथा—

प्रसाधिताशावलयान्तरालः शौर्याकरः काकतिवीररुद्रः ।
विकस्वरैर्वासनया त्रिलोकी गुणप्रसूनैः सुरभीकरोति ॥

(प्र०) सकलरूपकस्य फलितं लक्षणं ब्रूहि ? (उ०) अस्य० पृ० पं० ४ ।

अत्र अवयवानां गुणानां प्रसूनत्वरूपणेन नृपतेः कल्पशाखित्वं निरूप्यते, परन्तु तद्गम्यम् न तु साक्षादङ्गितया शब्देन प्ररूपितम्। यथा वा—

'मथिताद्वैरिवाराशेर्भुजामन्दिरभूभृता। जाता प्रतापरुद्रस्य कीर्त्तिर्लोकान् धिनोत्यमून्' ॥

अत्र वैरिजनस्य वाराशित्वरूपणेन भुजस्य मन्दराद्रित्वरूपणेन च जातायाः कीर्त्तेः सुधात्वमर्थादापतति, लोकानाममरत्वञ्चेत्येकदेशविवर्त्ति रूपकम्। यथा वा—

माधुर्यं मधुभिः पूर्णं दशनद्युतिकेशरम्।
गोपीनेत्रालिनिष्पीतं पश्यालि ! वदनं हरेः ॥

अत्र माधुर्यादौ मधुत्वाद्यारोपः शाब्दः वदने पद्मत्वारोपस्त्वार्थः। यथा वा—

'संसारपञ्जरान्मुक्ताः क्रीडन्त्यानन्दकानने' इति।

अत्र मुक्ताख्योपमेये अवयवे आरोप्यमाणत्वेनेष्टस्य कीराख्योपमानस्य शब्दानुपात्तत्वम्, संसारे पञ्जरत्वारोपश्च शाब्द इत्येकदेशविवर्त्तनाल्लक्षणसङ्गतिः ॥ ७१, ७२ ॥

[ अवयविरूपकस्योदाहरणम् ]

**वल्गितभ्रु गलद्घर्मजलमालोहितेक्षणम्।**
**विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥ ७३ ॥**

[ अवयविरूपकस्य लक्षणयोजनम् ]

**अविकृत्य मुखाङ्गानि मुखमेवारविन्दताम्।**
**आसीद्गमितमत्रेदमतोऽवयविरूपकम् ॥ ७४ ॥**

अवयविरूपकं प्ररूपयति—'वल्गितभ्रु०' इत्यादिना द्वाभ्याम्। वल्गितभ्रु=वल्गिते चलिते भ्रुवौ यत्र तत् चलितभ्रूद्वन्द्वमित्यर्थः, गलद्घर्मजलम्=गलन्ति प्रच्यवन्ति घर्मजलानि स्वेदवारीणि यस्मात् तत्तादृशम्, तथा आलोहितेक्षणम्=आ समन्तात् लोहिते शोणिते रक्ते ईक्षणे दृष्टी यस्य तत् तादृशं तत् इदं वदनपङ्कजम्=वदनमेव [मुखमेव] पङ्कजम् कमलम् मदावस्थाम्=मदो मद्यं तस्यावस्थां शीधुपानजनितां विक्रियां विवृणोति=प्रकटीकरोति। 'वृञ्' वरणे। स्वादिः। विपूर्वः। लटि प्रथमपुरुषैकवचने रूपम्।

अत्र दर्शिते काव्ये मुखाङ्गानि=मुखस्याङ्गानि भ्रूप्रभृतीनि अविकृत्य=पङ्कजस्य अङ्गत्वेनाऽनारोप्य 'मुखम् एव' अरविन्दताम्=पङ्कजत्वम् गमितम् आसीत्=पङ्कजत्वेनारोपितमित्यर्थः। 'अतः' अवयविनो मुखस्यैव केवलं रूपणात् हेतोः इदम् अवयविरूपकम्='अवयविरूपकं' नाम रूपकं भवति। अत्र भ्रुवः उपमानं दलम्, घर्मजलस्य उपमानं मकरन्दः, लोहितेक्षणस्य उपमानं परागरागधूसरो भ्रमरो नोपात्त इति। एतदेवाधुनिकै'र्निरङ्गम्' इत्युच्यते। यदाह प्रकाशकारः—'निरङ्गं तु शुद्धम्' इति। उदाहरणं यथा पण्डितराजानाम्—

बुद्धिर्दीपकला लोके यया सर्वं प्रकाशते।
अबुद्धिस्तामसी रात्रिर्यया किञ्चिन्न भासते ॥

---

१ साहित्यसारे।

(प्र०) अवयविरूपकस्योदाहरणं लिखित्वा तस्य सङ्गमनप्रकारं स्पष्टीकुरु ?

(उ०) अस्य पृ० पं० १२

अत्र रूपकद्वयमपि सापेक्षरूपकसंघातात्मकत्वविरहात् निरवयवम्। मालात्मकत्वविरहाच्च केवलम्। यथा वा **मम**—

दुष्टो जनो महाहालाहलं लोके विलोक्यताम्।
यत्सङ्गादेव साधूनां प्राणा नश्यन्ति तत्क्षणात्॥

अत्र महाहालाहलविषस्य कृष्णश्वेतादिरूपावयवानामनपेक्षणात् निरवयवं रूपकम्।

[ एकाङ्गादिरूपकभेदानां प्ररूपणम् ]

**मदपाटलगण्डेन रक्तनेत्रोत्पलेन ते।**
**मुखेन मुग्धः सोऽप्येष जनो रागमयः कृतः॥ ७५॥**
**एकाङ्गरूपकं चैतदेवं द्विप्रभृतीन्यपि।**
**अङ्गानि रूपयन्त्यत्र योगायोगौ भिदाकरौ॥ ७६॥**

अवयवरूपकस्य भेदान् दर्शयितुकामः प्रथमं तस्य 'एकाङ्गरूपकं' नाम भेदमाचष्टे— 'मदपाटल०' इत्यादि द्वाभ्याम्। एष जनः=मल्लक्षणः, ते=तव मदपाटलगण्डेन=मदेन पाटलौ श्वेतरक्तौ गण्डौ कपोलौ यस्य तादृशेन रक्तनेत्रोत्पलेन=रक्ते लोहिते नेत्रे नयने एव उत्पले यस्य तथाभूतेन मुखेन=आननेन मुग्धः=मोहित. तथा रागमयः=रागो लौहित्यम् अनुरागश्च तन्मयः रागपूरितः इत्यर्थः कृतः=सम्पादितः।

एतद्=दर्शितप्रकारम् एकाङ्गरूपकम् नाम रूपकम् 'रक्तनेत्रोत्पलेन' इत्यत्र केवलमेकस्यैव नेत्ररूपस्याङ्गस्य उत्पलत्वेन रूपणात्। एवम्=इत्थम् द्विप्रभृतीनि अपि अङ्गानि रूपयन्ति कवय इति शेषः। तेन 'द्व्यङ्गरूपकम्' 'त्र्यङ्गरूपकम्' इत्यादीन्यन्यान्यपि रूपकस्य नामानि [विशेषाः] ज्ञेयानि। तेषु विशेषमाह—'योगायोगौ' इति। अत्र=अवयवरूपके योगायोगौ= आरोप्यमाणानां परस्परं सम्बन्धो योगः तदभाव अयोगः योगश्च अयोगश्च तौ भिदाकरौ= भेदकौ विशेषकौ ज्ञेयौ, अर्थात् द्विप्रभृत्यङ्गारोपणेषु आरोप्यमाणानां परस्परं सम्बन्धासम्बन्धाभ्यां कृत्वा युक्तरूपकमयुक्तरूपकमिति भेदद्वयमपि भवति। तदेवानुपदं दर्शयति॥७५, ७६॥

[ युक्तरूपकस्योदाहरणकथनम् ]

**स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम्।**
**इति पुष्पद्विरेफाणां सङ्गत्या युक्तरूपकम्॥ ७७॥**

युक्तरूपकमुदाहरति—'स्मित' इति। स्मितपुष्पोज्ज्वलम्=स्मितम् [ हास्यम् ] एव पुष्पम् [ कुसुमम् ] तेनोज्ज्वलम् निर्मलम्। लोलनेत्रभृङ्गम्=लोले [चपले] नेत्रे [नयने] एव भृङ्गौ [भ्रमरौ] यत्र तत् तथाविधम् 'इदं' [कान्तायाः] 'मुखम्' अस्ति इति=उक्तप्रकारेण पुष्पद्विरेफाणां सङ्गत्या=अर्थात् स्मिते पुष्पत्वस्यारोपणात् नेत्रे भ्रमरत्वस्य च आरोपणात् 'युक्तरूपक' मिदम्। भोजराजस्तु—पुष्पभृङ्गादीनामन्योन्यं योगोपपत्त्या 'युक्तरूपक' मिदमित्याशयं प्रकटीचकार। किञ्च—मुखस्य अवयवयोरेव स्मितनेत्रयोः यथाक्रमं पुष्पभृङ्गत्वारोपः कृतः इत्यवयवारोपणाद् 'अवयवरूपक' मपीदम्। ['न कस्य नन्दनं सुभ्रु! सुरभिश्वसितानिलम्' इति परार्धम् ]॥ ७७॥[1]

---

१ क्वचित् [सुगमस्थले] स्वयमप्यूह्या प्रश्नादियोजना।

(प्र०) एकाङ्गादिरूपकभेदे का युक्तिः? (उ०) अस्य पृ० पं० ६।

[अयुक्तरूपकस्योदाहरणम्]

**इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।**
**इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥ ७८ ॥**

अयुक्तरूपकमुदाहरति—'इदम्' इति । आर्द्रस्मितज्योत्स्नम्=आर्द्रं सरसं स्मितमेव ज्योत्स्ना चन्द्रिका यत्र तत् स्निग्धनेत्रोत्पलम्=स्निग्धे सस्नेहे नेत्रे एव उत्पले यत्र तत् तथाभूतम् 'इदम्' मुखम् अस्ति । इति=दर्शितप्रकारं ज्योत्स्नोत्पलायोगात्=ज्योत्स्नायाः चन्द्रिकाया उत्पलस्य च एतयोरारोप्यमाणयोः अयोगात् अर्थात् चन्द्रिकाकमलयोः एककालावच्छेदेन सम्बन्धानर्हत्वात् [उभयोरेव भिन्नकालिकत्वात्] 'अयुक्तं' नाम रूपकमेतत् । ['जगन्नेत्रेन्दुरस्माकं कथं तापाय कल्पते'] इति उत्तरार्धम् । अन्वयः स्पष्टः ॥७८॥

[ विषमरूपकस्य लक्षणम् ]

**रूपणादङ्गिनोऽङ्गानां रूपणारूपणाश्रयात् ।**
**रूपकं विषमं नाम ललितं जायते यथा ॥ ७९ ॥**

[ विषमरूपकस्योदाहरणम् ]

**मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।**
**नर्त्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥ ८० ॥**

विषमरूपकं लक्षणोदाहरणाभ्यां दर्शयति—'रूपणात्' इति द्वाभ्याम् । अङ्गिनः=अवयविनः प्रधानस्य रूपणात्=आरोपकरणात् अङ्गानाम्=अवयवानां विशेषणानां रूपणारूपणाश्रयात्=रूपणञ्च अरूपणञ्चानयोः समाहारः रूपणारूपणं तस्य आश्रयणं द्वारीकरणं तस्मात् अर्थात् कस्यचिद् अङ्गस्य आरोपात् कस्यचिच्च अनारोपात् इदं ललितम्=मनोहरम् विषमं नाम रूपकं जायते । 'यथा'—उदाह्रियते । मदरक्तकपोलेन=[इति] मदेन यौवनगर्भेण रक्तौ=लोहितौ कपोलौ गण्डौ यस्य तेन तथा नर्त्तितभ्रूलतेन=नर्त्तिते चापल्यं नीते भ्रुवौ एव लते व्रतत्यौ यस्मिन् तत् तथाविधेन त्वन्मुखेन्दुना=त्वन्मुखमेव इन्दुश्चन्द्रः तेन करणभूतेन मन्मथः=मदनः भुवनत्रयम्=त्रीनपि लोकान् मर्द्दितुम् उन्मथयितुम् अलम्=समर्थो भवति ।

अत्र 'त्वन्मुखेन' इत्यत्र अङ्गिनि मुखे इन्दुत्वारोपः तदङ्गीभूतयोः भ्रूकपोलयोर्मध्ये भ्रुवोर्लतात्वारोपः कृतः, कपोलयोस्तु न किमप्यारोपितम् इति वैषम्यात् 'विषमं' नाम रूपकम् । एवमन्यत्रापि ॥ ७९–८० ॥

[ सविशेषणरूपकस्योदाहरणम् ]

**हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।**
**जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥८१॥**

[ उक्तरूपकस्य लक्षणयोजनाप्रकारः]

**विशेषणसमग्रस्य रूपं केतोर्यदीदृशम् ।**
**पादे तदर्पणादेतत् सविशेषणरूपकम् ॥ ८२ ॥**

---

(प्र०) विषमरूपकस्य किं लक्षणम् ? किञ्चोदाहरणम् ? तत्र लक्षणसङ्गमनप्रकारश्च कीदृशः ? (उ०) अस्य पृ० पं० ११ ।

सविशेषणरूपकं निरूपयति—'हरिपाद' इति द्वाभ्याम् । शिरोलग्नजह्नुकन्याजलांशुकः=शिरसि अग्रभागे लग्नं सङ्गतं यत् जह्नुकन्यायाः गङ्गायाः जलमेव अंशुकं शुभ्रवस्त्राञ्चलं यस्य सः तथाविधः, असुरनिःशङ्कसुरानन्दोत्सवध्वजः=असुरेभ्यो दैतेयेभ्यो निःशङ्काः असुरराजबलिमर्दनात् निर्भया ये सुराः देवाः तेषां यः आनन्दोत्सवः हर्षजनको महः तस्य ध्वजः केतुः एवंविशेषणविशिष्टः, हरिपादः=हरेर्वामनावतारस्य विष्णोः पादः अङ्घ्रिः कर्तृपदम्] जयति=सर्वोत्कर्षेण वर्त्तते अतोऽसौ कल्याणेप्सुभिर्नम्य इति भावः । उक्तोदाहरणे 'सविशेषणरूपकस्य' सङ्गतिं स्पष्टीकरोति—'विशेषण'० इति । अत्र विशेषणसमग्रस्य=विशेषणोपेतस्य केतोः=ध्वजस्य यत् ईदृशम्=वर्णितं रूपम् 'अस्ति' इति शेषः । पादे=अङ्घ्रौ तदर्पणात् तस्यारोपात् 'सविशेषणरूपकम्' इति नाम्ना रूपकं ज्ञेयम् । अर्थात् उक्तविशेषणविशिष्टो यो हरिपादः यश्च हरिहतासुरेभ्यो शङ्कारहितानां देवानामानन्दोत्सवे ध्वजः तयोः सविशेषणयोः एव गम्यमानसादृश्ययोः परस्परमुपमानोपमेयभावः ।

एवञ्च—'विशेषणविशिष्टयोरप्रकृतयोः प्रकृतेऽभेदारोपः सविशेषणरूपक' मिति निष्कर्षः ॥ ८१—८२ ॥

[ विरुद्धरूपकस्योदाहरणम् ]

**न मीलयति पद्मानि न नभोऽप्यवगाहते ।**
**त्वन्मुखेन्दुर्ममासूनां हरणायैव कल्पते ॥ ८३ ॥**

[ उक्तोदाहरणे विरुद्धरूपकलक्षणयोजनम् ]

**अक्रिया चन्द्रकार्याणामन्यकार्यस्य च क्रिया ।**
**अत्र सन्दर्श्यते यस्माद्विरुद्धं नाम रूपकम् ॥ ८४ ॥**

विरुद्धरूपकं प्ररूपयति 'न' इति द्वाभ्याम् । मानवतीं नायिकां प्रति कस्यचिन्नायकस्योक्तिरियम् । [हे ! प्रिये ! ] त्वन्मुखेन्दुः=तव मुखमेव इन्दुः पद्मानि=कमलानि न मीलयति=न मुकुलयति प्रकाशरहितत्वादिति भावः । नभः=गगनञ्च न अवगाहते=न विलोडयति अर्थात् आकाशेऽपि न सञ्चरति ऊर्ध्वताभावात् । [केवलम्] मम असूनाम्=मदीयप्राणानाम् हरणाय एव=निश्चयेन हननाय कल्पते=समर्थो भवति । विप्रलम्भस्योद्दीपकत्वादिति भावः ।

अत्र=उक्ते काव्ये [पद्ये] चन्द्रकार्याणाम्=आरोप्यमाणस्य चन्द्रस्य शशिनः कार्याणां पद्ममुकुलीकरणादीनाम् आकाशे सञ्चरणादीनाञ्च या अक्रिया=अकरणम् अन्यकार्यस्य=आरोप्यमाणचन्द्रभिन्नस्य कृतान्तस्य यत् कार्यम्=प्रहरणाख्यम् तस्य क्रिया=करणम् यस्माद्=हेतोः सन्दर्श्यते=उपनिबध्यते तस्मात् 'विरुद्धम्--नाम रूपकम्' ज्ञातव्यमिति शेषः ।

अयं भावः—उपमेयभूतस्य मुखस्य उपमानाभेदेन उपमानगतकार्यकारित्वमेव युक्तं नत्वन्यत्, तदत्रान्यकार्यकरणोपनिबन्धनात् अनौचित्यस्य विरोधस्यैवावभासः, तस्मात् 'विरुद्ध'मिदमुच्यते । एवञ्च—आरोपविषये (उपमेये) आरोप्यमाणविरुद्धकार्यत्वरूपणं विरुद्धरूपकमिति फलितं लक्षणम् ॥ ८३-८४ ॥

---

(प्र०) सविशेषणरूपकस्य लक्ष्यलक्षणे प्ररूपय ? तस्य निष्कृष्टं लक्षणञ्च लिख ?
(उ०) अस्य पृ० पं० १२ ।
(प्र०) विरुद्धरूपकस्य लक्षणोदाहरणविवरणं विधीयताम् (उ०) अस्य पृ० पं० १५ ।

[ लक्ष्यलक्षणयोजनैः 'हेतुरूपक'निरूपणम् ]

**गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः ।**
**कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ॥ ८५ ॥**
**गाम्भीर्यप्रमुखैरत्र हेतुभिः सागरो गिरिः ।**
**कल्पद्रुमश्च क्रियते तदिदं हेतुरूपकम् ॥ ८६ ॥**

'हेतुरूपकं' प्ररूपयति--'गाम्भीर्येण' इति द्वाभ्याम्। [हे! राजन्] त्वं गाम्भीर्येण=गम्भीरस्य भावः गाम्भीर्यम् तेन अक्षोभ्यत्वेन दुरवगाहत्वेनेत्यर्थः, समुद्रोऽसि=सागरोऽसि, गौरवेण=गुरोर्भावः गौरवं सारवत्त्वं तेन, पर्वतः असि=महीधरोसि, लोकानाम्=अर्थिजनानाम् कामदत्वात्=वाञ्छाप्रपूरकत्वात् कल्पपादपः=देवतरुरसि । अत्र सर्वत्र **'हेतौ'** [२।३।२३] इति सूत्रेण हेतौ तृतीया ।

'गाम्भीर्यप्रमुखै'रिति । अत्र=उक्ते पद्ये [काव्ये] 'गाम्भीर्यप्रमुखैः हेतुभिः' प्रस्तुते उपमेये राजनि, सागरः गिरिः कल्पद्रुमश्च क्रियते=नाम आरोप्यते तत् तस्माद् इदं 'हेतुरूपकम्' इत्युच्यते। 'आरोपविषये आरोप्यमाणगतहेतुभावारोपणं हेतुरूपक'मिति लक्षणाकार इत्यर्थः।

'विश्वनाथ'प्रभृतयस्तु--एतादृशस्थले उल्लेखालङ्कारमाहुः । तल्लक्षणन्तु--

क्वचिद्भेदाद् ग्रहीतॄणां विषयाणां तथा क्वचित् ।
एकस्यानेकधोल्लेखो यः स 'उल्लेख' उच्यते ॥

उदाहरणं यथा--[ तस्यैव ]

प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः ।
नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः ॥

अत्रैकस्यापि भगवतः तत्तद्गुणयोगादनेकधोल्लेखे गोपवधूप्रभृतीनां रुच्यादयो यथायोगं प्रयोजकाः ।

'गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः' इत्यादौ चानेकधोल्लेखे गाम्भीर्यादिविषयभेदः प्रयोजकः । अर्थात् एकस्यैव पुंसो हेतुभेदेन समुद्राद्यनेकरूपणोल्लेखः । उल्लेखनं विषयीकरणं रूपणमिति यावत् ।

'चन्द्रालोके' तु—

बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ।
स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ॥

यथाऽत्र एक एव राजा कामत्वादिरूपेणोल्लिखितः एवमेव मूलदर्शितहेतुरूपकोदाहरणेऽपि एक एव राजा समुद्रत्वादिरूपेणोल्लिखितः। 'ऐक्षि' इति दर्शनार्थकात् 'ईक्ष' धातोः कर्मणि तङ्। एवमन्यत्राप्यूह्यम्। अपि च—

१ अत्रत्यः सम्भावितोऽपि शास्त्रार्थो ग्रन्थगौरवभयाद् बालबुद्धिव्याकुलताभयाच्चोपेक्षितः ।

(प्र०) हेतुरूपकस्य लक्षणादिकं स्पष्टीकुरु ? (उ०) अस्य पृ० पं० २ ।

यमः प्रतिमहीभृतां हुतवहोसि तन्नीवृतां
सतां खलु युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम् ।
गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्भितं
त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥ [ पण्डितराजः ]

इत्येवमादिस्थले उल्लेखो दण्डिमते 'हेतुरूपक'मेव ॥ ८५, ८६ ॥

[ श्लिष्टरूपकप्ररूपणम् ]

**राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।**
**सखि ! वक्त्राम्बुजमिदं तवेति श्लिष्टरूपकम् ॥ ८७ ॥**

'श्लिष्टरूपक'माचष्टे—'राजहंसो०' इति । हे ! सखि !=आलि ! तव इदम्=दृश्यमानम् वक्त्राम्बुजम्=वक्त्रमेव अम्बुजम् मुखकमलम्, राजहंसोपभोगार्हम्=राजहंसः पक्षिविशेषः राजश्रेष्ठश्च तस्य उपभोगार्हं भोगयोग्यम्, भ्रमरप्रार्थ्यसौरभम्=भ्रमरः कामुकः भृङ्गश्च तस्य प्रार्थ्यं कामनीयम् सौरभं सौगन्ध्यं यस्य तत् तथाविधम् 'अस्ति' इति शेषः । 'इति' उक्तरूपं श्लिष्टरूपकम्=श्लिष्टशब्दनिबन्धनं श्लेषालङ्कारानुप्राणितत्वाद् उक्तनामकं रूपकं भवतीत्यर्थः । अयमाशयः—अत्र राजहंसोपभोग्यत्वादिरूपः साधारणधर्मः सच श्लेषोत्थापित इति श्लेषमूलकत्वात् 'श्लिष्टरूपक'मेतत् ।

राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे' इति हैममेदिन्यौ । भ्रमरः 'कामुके भृङ्गे' इति मेदिनी ।

श्लिष्टरूपकस्योदाहरणान्तरं यथा—

कमलामोदरोलम्बो महत्पङ्कक्षयांशुमान् । योगिमानसहंसोऽयं भवताद्भवतापभित् ॥

अत्र कमलायाः [ श्रियः ] मोदः हर्षः [ विकासः ] एव कमलानाम् आमोदः, महतां सतां पङ्कं किल्विषमेव पङ्कं कर्दमः तस्य क्षये नाशे अंशुमान् रविः योगिनां चित्तवृत्तिनिरोधवतां मानसं चित्तमेव मानसं तदाख्यं सरः तत्र हंसः पक्षी कृष्णश्च 'अयं भवतापभित्=संसारदुःखध्वंसकः भवतात् एवमादिरूपेणारोपः भगवतो रोलम्बत्वाद्यारोपे हेतुः । अत्र वाचकं श्लिष्टम् । परमिदं मालारूपकम् श्लिष्टम् । यथा वा—

अहितापकरणभेषज ! नरनाथ ! भवान् करस्थितो यस्य ।
तस्य कुतोऽहिभयं स्यादखिलामपि मेदिनीं चरतः ॥

अत्र अहितानामपकरणमेव अहीनां [सर्पाणां] तापकरणमिति श्लेषमूलकेनारोपेण राजनि भेषजतादात्म्यमारोपितम् । कुतः 'अहिभयम्' स्वपक्षभीतिः । 'महीभुजामहिभयं स्वपक्षप्रभवं भयम्' इत्यमरः । 'कुतः' पृथ्वीतः 'हि' निश्चयेन भयं भीतिर्वा । एवमिदं श्लेषनिबन्धनं रूपकम् । यथा वा—

अलौकिकमहालोक प्रकाशितजगत्त्रयः ।
स्तूयते देव ! सद्वंशमुक्तारत्नं न कैर्भवान् ॥

अत्र अलौकिकः लोकोत्तरो यो महः उत्सवः तस्य आलोकः दर्शनमेव अलौकिको

(प्र०) श्लिष्टरूपकं सुव्याख्याहि ? (उ०) अस्य पृ० पं० ७ ।

महान् आलोको द्योतः तेन प्रकाशितं जगत्त्रयं येन स तादृशः। 'आलोकौ द्योतदर्शनौ' इत्यमरः। सद्वंशो महत्कुलम् तदेव सद्वंशः उत्तमवेणुः [मुक्तोत्पत्तिस्थानम्] तत्र मुक्तारत्नं मौक्तिकश्रेष्ठः भवान् कैर्न स्तूयते अपि तु सर्वैः स्तूयते इत्यर्थः।

अत्र आरोपविषयारोपणीययोः सत्कुलसद्वेणवोः श्लिष्टसद्वंशशब्देनाभिधानम्, राजनि मुक्तात्वारोपे कुलगतो वेणुत्वारोपो निमित्तमिति श्लिष्टं परम्परितं रूपकमुच्यते। अत्र तु श्लिष्टरूपकत्वांश एव उदाहरणं ज्ञेयम्। एवमादि स्वयमूह्यम्। 'वंशः संघेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च' इति हैमः। 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः॥ ८७॥

[ उपमारूपकव्यतिरेकरूपकयोर्लक्षणम् ]

**इष्टं साधर्म्यवैधर्म्यदर्शनाद् गौणमुख्ययोः।**
**उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा॥ ८८॥**

उपमारूपकव्यतिरेकरूपके लक्षयति—'इष्टम्' इति। गौणमुख्ययोः=गुणादागतः गौणः अर्थात् [आह्लादकत्वादि] गुणसम्बन्धाद् आरोप्यमाणश्चन्द्रप्रभृतिः 'गौणः'। मुखमिव प्रथमप्रतीतिविषयत्वात् आरोपविषयो मुखादिः 'मुख्यः' तयोः साधर्म्यवैधर्म्यदर्शनात्= अर्थात् साधर्म्यदर्शनात्=साधारणधर्मसम्बन्धात् वैधर्म्यदर्शनात्=विरुद्धधर्मसम्बन्धात् यथाक्रमं 'उपमाव्यतिरेकाख्यम् रूपकद्वितयम्' अस्ति इति शेषः। गौणमुख्ययोः साधारणधर्मसम्बन्धात् 'उपमारूपकम्'। तयोरेव विरुद्धधर्मसम्बन्धात् 'व्यतिरेकरूपकं' ज्ञेयमित्यर्थः। 'यथा' इति अनुपदमुदाहरति॥ ८८॥

[ उपमारूपकस्योदाहरणम् ]

**अयमालोहितच्छायो मदेन मुखचन्द्रमाः।**
**सन्नद्धोदयरागस्य चन्द्रस्य प्रतिगर्जति॥ ८९॥**

उपमारूपकमुदाहरति--'अयम्' इति। मदेन=मद्यपानजनितेन अवस्थाविशेषेण आलोहितच्छायः=आलोहिता ईषद्रक्ता छाया कान्तिर्यस्य स तादृशः मुखचन्द्रमाः=मुखमेव चन्द्रमाः सन्नद्धोदयरागस्य=सन्नद्धः सम्यक् स्फुरन् उदयरागः उदयकालिकलोहितिमा यस्य तस्य तथाविधस्य चन्द्रस्य=शशिनः प्रतिगर्जति=समानरागवन्तं तादृशं चन्द्रं प्रति स्पर्धते, अर्थात् तमनुकरोति ननु सदृशीभवति। चन्द्रस्येति सम्बन्धविवक्षया षष्ठी।

अत्रारोप्यमाणस्य चन्द्रस्य तदभिन्नतया आरोपविषयो मुखमुपमेयम्, तस्यौपम्यसूचनकरं प्रतिगर्जनं समानो धर्मः। तत्सम्बन्धादिदम् 'उपमारूपकम्' इत्युक्तं भवति। यथा वा **मम**—

गदोद्दण्डितदोर्दण्डो मदाघूर्णेक्षणः क्षणम्।
असह्यवैरिविक्रान्तिर्भीमोऽयं स्पर्धते बलम्॥

बलम्=बलभद्रं श्रीकृष्णभ्रातरमित्यर्थः, भीमः भीमसेनो मध्यमपाण्डवः। अत्रापि आरोप्यमाणस्य बलस्याभिन्नतया भीमसेन उपमेयम्, तस्यौपम्यसूचनकरं स्पर्धनं समानो

(प्र०) उपमाव्यतिरेकरूपकयोर्लक्षणं लिख? (उ०) अस्य पृ० पं० ६।
(प्र०) उपमारूपकोदाहरणे तल्लक्षणं स्पष्टं घटयतु भवान्? (उ०) अस्य पृ० पं० १६।

धर्मः । तत्सम्बन्धादुपमारूपकमिदम् । स्पर्धते=अभिभवपूर्वकमाह्वयते इत्यर्थः, अन्यथा अकर्मकत्वापत्तिर्दुर्वारा । बोपदेवस्तु कविकल्पद्रुमे 'स्पर्धते बलिनं बली' इति निर्भयं 'स्पर्ध' धातुं सकर्मकमाचचक्षे ॥ ८९ ॥

[ व्यतिरेकरूपकस्योदाहरणम् ]

**चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः ।**
**असमग्रोऽप्यसौ शश्वदयमापूर्णमण्डलः ॥ ९० ॥**

व्यतिरेकरूपकमुदाहरति—'चन्द्रमाः' इति । देवैः=सुरैः असमग्रः अपि=असम्पूर्णोऽपि चन्द्रमाः=शशी शश्वत्=निरन्तरम् पीयते=आस्वाद्यते, मया [तु] आपूर्णमण्डलः=सम्पूर्णबिम्बः त्वन्मुखचन्द्रमाः=त्वन्मुखमेव चन्द्रमाः पीयते=सादरमालोक्यते इत्यर्थः । एकस्यैव क्रियापदस्यावृत्त्याऽन्वयः ।

अत्र चन्द्रो मुख्यः, मुखं गौणमिति मुख्यगौणयोः मुखचन्द्रमसोः सम्पूर्णत्वासम्पूर्णत्वरूपवैधर्म्यसम्बन्धात् 'व्यतिरेकरूपक'मिदम् । 'व्यतिरेकानुप्राणितं रूपकं व्यतिरेकरूपकम्' इति तल्लक्षणात् । अर्थादत्र उपमानात् चन्द्राद् उपमेयस्य मुखस्यापूर्णमण्डलत्वरूपतयोत्कर्षः सच व्यङ्ग्यः, तन्मूलत्वादेवास्योक्ता संज्ञा । ननु—व्यतिरेक एवायमस्त्वलङ्कारः ? नेति ब्रूमः, सादृश्यप्रतीतिपूर्वकमुपमानोपमेययोर्भेदे पर्यवसानाभावात् । वक्ष्यति च स्वयमेव—

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।
तत्र यद्भेदकथनं व्यतिरेकः स उच्यते ॥ इति ॥

इदमेवं **भोजराजः** 'व्यतिरेकवन्नामरूपक' मित्याचष्टे । तथा च सरस्वतीकण्ठाभरणस्य चतुर्थे परिच्छेदे उदाहृतम्—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहैः
अनाविद्धं रत्नं मधुनवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

अत्र पुष्पकिसलयरत्नमधुपुण्यफलानाम् 'अनाघ्रात' मित्यादिविशेषणापादितव्यतिरेकाणां प्रतीयमानसादृश्येन शकुन्तलारूपेण रूपणात् अर्थतः शब्दतश्च प्राधान्यमवधार्येत इति 'व्यतिरेकवत्' नाम रूपकमिदम् ।

एतदेव **विश्वनाथेन** 'अधिकारूढवैशिष्ट्यम्' इत्युच्यते, उदाह्रियते च यथा—

इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः
सुधाधाराधारश्चिरपरिणतं बिम्बमधरः ।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥

अत्र मुखादीनां निष्कलङ्कत्वादिना शशधराद्यपेक्षया आधिक्येन वैशिष्ट्यम् । चन्द्रादेः अत्यन्तासम्भविनः कलङ्कराहित्यादिविशेषणस्य मुखादावारोपणात् ॥ ९० ॥

---

(प्र०) व्यतिरेकरूपकमुदाहर ? तत्र तल्लक्षणञ्च योजय ? (उ०) अस्य पृ० पं० ५ ।

[ आक्षेपरूपकनिरूपणम् ]

**मुखचन्द्रस्य चन्द्रत्वमित्थमन्योपतापिनः ।**
**न ते सुन्दरि ! संवादीत्येतदाक्षेपरूपकम् ॥ ९१ ॥**

आक्षेपरूपकं प्ररूपयति—'मुखचन्द्रस्य' इति। हे ! सुन्दरि ! इत्थम् अन्योपतापिनः= कमलानां संकोचकारित्वेनोपतापजनकस्य किंवा वियोगिजनानां पीडाजनकत्वेन सन्तापकारिणः चन्द्रस्य इति शेषः। चन्द्रत्वम्=चन्द्रभावः ते=तव मुखचन्द्रस्य=मुखमेव चन्द्रः तस्य आस्य-शशिनः संवादि=सदृशम् न=नास्तीत्यर्थः। चन्द्रः परानुपतापयति तव मुखन्तु सर्वान् आह्लादयति एवमुपमानभूतस्य परोपतापिनश्चन्द्रस्य आक्षेपः प्रतिषेधवचनम् [निन्दा] कृत 'इति' हेतोः एतत् आक्षेपरूपकम्=आक्षेपपूर्वकत्वाद् रूपणस्य 'आक्षेपरूपकम्' इत्यभिधीयते इत्यर्थः।

नायं व्यतिरेकः सादृश्यप्रतीत्यभावात्। नापि अपह्नुतिः प्रस्तुतस्य [मुखस्य] अनिषेधात् चन्द्रत्वस्य आरोप्यमाणत्वेन प्रस्तुतत्वाभावाच्च, अपह्नुतौ प्रकृतनिषिद्धत्वस्य अप्रकृत-स्थापनत्वस्य चावश्यकत्वादित्यलमतिविस्तरेण ॥ ९१ ॥

[ समाधानरूपकनिरूपणम् ]

**मुखेन्दुरपि ते चण्डि ! मां निर्दहति निर्दयम् ।**
**भाग्यदोषान्ममैवेति तत् समाधानरूपकम् ॥ ९२ ॥**

समाधानरूपकं निरूपयति—हे ! चण्डि !=कोपने ! मम एव भाग्यदोषात्=मदीयदिष्टदोषात् दुरदृष्टादिति यावत्, ते=तव मुखेन्दुः=मुखमेवेन्दुः 'अपि माम्' निर्दयम्=निष्कृपं यथा स्यात्तथा निर्दहति=नितान्तं तापयति इति=एवं रीत्या [उक्ते काव्ये] स्वयमेव तापकरत्वे हेतूपपादनात् अर्थात् अपेक्षितशंकायाः स्वयं समाधानात् 'सभाधानरूपकम्' इदमाख्यायते ॥९२॥

[ रूपकरूपकस्य निरूपणम् ]

**मुखपङ्कजरङ्गेऽस्मिन् भ्रूलतानर्त्तकी तव ।**
**लीलानृत्यं करोतीति रम्यं 'रूपकरूपकम्' ॥ ९३ ॥**

रूपकरूपकं निरूपयति—'मुखपङ्कजरङ्गे' इति। तव अस्मिन् मुखपङ्कजरङ्गे=मुखमेव पङ्कजम् मुखपङ्कजम् मुखपङ्कजमेव रङ्गं नर्त्तनशाला इति मुखपङ्कजरङ्गम् तत्र भ्रूलतानर्त्तकी= भ्रूरेव लता वल्लीति भ्रूलता, भ्रूलता एव नर्त्तकी लीलानृत्यम्=लीला विलासः तद्धेतुकं नृत्यं करोति=विधत्ते इति=एवमाकारम् एतत् रम्यम्=हृदयहारि रूपकरूपकम्=रूपितस्यापि पदार्थस्य पुना रूपणान्तरकरणात् 'रूपकरूपकं' नाम रूपकमुच्यते।

अत्र पूर्वं मुखे पङ्कजत्वारोपणं कृत्वा मुखपङ्कजे रङ्गत्वारोपः कृतः, तथैव भ्रुवि लतात्वारोपं कृत्वा भ्रूलतायां नर्त्तकीत्वारोपो दर्शित इति। परमिदं समासस्थले, असमासे तु एकस्मिन् बहूनामारोपे हेतुरूपकं यथा पूर्वमुक्तम्, हेत्वभावस्थले तु मालावयविरूपकमित्यपि बोध्यम्। उदाहरणं यथा—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मण कर्म नर्मरहसामुल्लासनावासभूः।

---

(प्र०) आक्षेपरूपकं सार्वात्म्येन स्पष्टीकुरु ? (उ०) अस्य पृ० पं० २।

विद्या वक्रगिरां विधेरनवधि प्रावीण्यसाक्षात्क्रिया
बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥

अत्र हेतोरनुपादानात् एकस्यामेवोपमेयभूतायां प्रियायां बहूनां तरङ्गिणीत्वादिधर्माणामारोपदर्शनात् मालावयविरूपकम् । यथा वा **मम**—

सौभाग्यस्य सरो नवा तनुलता या मार्दवस्याभितो
नीतेर्देवगुरू रहः सुवचसां क्रीडा रतेरद्भुतम् ।
सत्यस्यापि सती विलासभरतः कामस्य मुख्या क्रिया
सा सौभाग्यवती मदीयहृदये कीर्णा निखाता नु वा ॥

अत्रापि एकस्यामेव सौभाग्यवत्यां [नायिकायां] सरस्त्वाद्यनेकधर्माणामारोपदर्शनात् 'मालावयविरूपकं' बोध्यम् । अनयैव रीत्या एतादृशस्थले ऊहनीयम् ॥ ६३ ॥

[ तत्त्वापह्नवरूपकस्य लक्ष्यम् ]

**नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ ।**
**एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥ ६४ ॥**

[ तत्त्वापह्नवरूपकलक्षणस्य लक्ष्ये योजनम् ]

**मुखादित्वं निवर्त्यैव पद्मादित्वेन रूपणात् ।**
**उद्भावितगुणोत्कर्षं तत्त्वापह्नवरूपकम् ॥ ६५ ॥**

तत्त्वापह्नवरूपकं दर्शयति—'न' इति द्वाभ्याम् । एतत्=समीपतरवर्त्ति पुरोदृश्यमानमित्यर्थः, मुखम् न=आननं न किन्तु पद्मम्=कमलम् इमौ नेत्रे न किन्तु भ्रमरौ=भृङ्गौ, तव एताः दन्तार्चिषः न=दन्तमयूखा न किन्तु एतानि केसराणि एव=किञ्जल्का एव ।

अत्र काव्ये मुखादित्वम्=मुखत्वादिधर्मं निवर्त्य=प्रतिषिध्य यत् पद्मादित्वेन=पद्मत्वादिधर्मेण रूपणात्=[अन्यदीयरूपेण] रूपवतः करणात् अर्थात् मुखादिषु मुखत्वादिप्रतिषेधपूर्वकपद्मत्वादिधर्मस्थापनात् हेतोः उद्भावितगुणोत्कर्षम्=उद्भावितः प्राकट्यं नीतः द्योतित इति यावत् गुणस्य उपमेयनिष्ठधर्मस्य [मुखादौ आह्लादकत्वकोमलत्वादेः] उत्कर्षः विच्छित्त्यतिशयो यस्य तत् इदं तत्त्वापह्नवरूपकम्=तत्त्वस्य प्रस्तुतस्य मुखादौ मुखत्वादिधर्मस्य अपह्नवेन अप्रस्तुतस्वरूपारोपणात् हेतोः उक्तसञ्ज्ञं रूपकमित्यर्थः । रूपकान्तरेषु उपमेयस्योपमानाभिन्नतया प्रतिपादनाद् यावानुत्कर्षः ततोऽप्यत्र प्रतिषेधपूर्वकारोपेणोत्कर्षाधिक्यमिति सहृदयसाक्षिकम् । न चेयमपह्नुतिः अत्र रूपके प्रस्तुतस्य धर्म्मिणः प्रतिषेधेन धर्म्यन्तरस्यारोपकरणात्, अपह्नुतौ प्रस्तुतधर्मप्रतिषेधेन धर्मान्तरारोपसत्त्वात् । उभयोरुदाहरणे चैतत्स्पष्टं स्वयमूह्यम् । केचित्तु—सादृश्यप्रतीतिद्वारारोपो रूपकम्, नच तथाऽपह्नुतिरिति विशेष इत्याहुः ।

विश्वनाथप्रभृतयस्तु—'रूपकं रूपितारोपाद् विषये निरपह्नवे' इति विषये निरपह्नवविशेषणप्रदानात् तत्त्वापह्नवरूपकस्थलेऽपि अपह्नुतिमेव स्वीकुर्वन्ति ॥ ६४–६५ ॥

१ 'अत्' आश्चर्येऽर्थेऽव्ययम् । तस्य भवनम् । 'अदि भुवो डुतच्' [उ० ५।१]

(प्र०) तत्त्वापह्नवरूपकं लक्ष्यलक्षणाभ्यां समतभेदं विवेच्यम् ?

(उ०) अस्य पृ० पं० १२ ।

[ रूपकस्योपसंहारः ]

**न पर्यन्तो विकल्पानां रूपकोपमयोरतः ।**
**दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥ ९६ ॥**

रूपकमुपसंहरति—'न' इति । यतः रूपकोपमयोः=रूपकस्य उपमायाश्च विकल्पानाम्=विविधानां कल्पानां वैचित्र्यविशेषाणाम् पर्यन्तः न=परितोऽन्तः पर्यन्तः परा सीमा न 'अस्ति' इति शेषः । अतः=हेतोः मयाऽस्मिन् ग्रन्थे दिङ्मात्रम्=लेशमात्रं रीतिमात्रमिति यावत् दर्शितम्=निरूपितम् धीरैः=बुद्धिमद्भिः सप्रतिभैः तु अनुक्तम्=यदिहाकथितं तत् स्वयम् अनुमीयताम्=तद्दर्शितरीत्योहनीयमित्यर्थः । अयमाशयः—समस्तरूपकम्, व्यस्तरूपकम्, सकलरूपकम्, अवयवरूपकम्, अवयविरूपकम्, एकाङ्गरूपकम्, द्व्यङ्गादिरूपकम्, युक्तरूपकम्, अयुक्तरूपकम्, विषमरूपकम्, सविशेषणरूपकम्, विरुद्धरूपकम्, हेतुरूपकम्, श्लिष्टरूपकम्, उपमारूपकम्, व्यतिरेकरूपकम्, आक्षेपरूपकम्, समाधानरूपकम्, रूपकरूपकम्, तत्त्वापह्नवरूपकम्, [२०] इति विंशती रूपकभेदा इहोक्ताः, नत्वेत एव सन्ति किन्तु अपरेऽपि प्रकाराः स्वबुद्ध्या कल्पनीयाः, ग्रन्थान्तरेषु सूरिभिरुक्ता वा ततोऽवसेयाः ।

दर्पणे तु विश्वनाथेन—'तेनाष्टौ रूपके भिदाः' इति अष्टविधमेव रूपकमुक्तम्, तस्य संकलनाकारो निम्नरीत्या ज्ञातव्यः । तद्यथा—

| | | | |
|---|---|---|---|
| परम्परितम् ४ | श्लिष्टशब्दनिबन्धनम् | केवलम् | १—'आहवे जगदुद्दण्ड !' इत्यादि । |
| | | मालारूपकम् | १—'पद्मोदयदिनाधीशः' इत्यादि। |
| | अश्लिष्टशब्दनिबन्धनम् | केवलम् | १—'पान्तु वो जलदश्यामाः' इत्यादि। |
| | | मालारूपकम् | १—'मनोजराजस्य' इत्यादि । |
| साङ्गम् २ | समस्तवस्तुविषयम् | | १—"रावणावग्रहक्लान्तम्" इत्यादि । |
| | एकदेशविवर्ति | | १—"लावण्यमधुभिः पूर्णम्" इत्यादि । |
| निरङ्गम् २ | मालारूपम् | | १—"निर्म्माणकौशलं धातुः" इत्यादि । |
| | केवलरूपकम् | | १—"दासे कृतागसि" इत्यादि । |

इति रूपकचक्रम् ।

रूपकप्रकरणं समाप्तमित्यर्थः, चक्रं समुदायः ।

—*—

१ एते श्लोकाः पूर्णरूपाः—

"आहवे जगदुद्दण्ड ! राजमण्डलराहवे । श्रीनृसिंहमहीपाल ! स्वस्त्यस्तु तव बाहवे ॥"

"पद्मोदयदिनाधीशः सदागतिसमीरणः । भूभृदावलिदम्भोलिरेक एव भवान् भुवि ॥"

"पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः । त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः ॥"

"मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः ।
विराजते व्योमसरः सरोजं कर्पूरपूरप्रभमिन्दुबिम्बम् ॥"

"रावणावग्रहक्लान्तमिति वागमृतेन सः । अभिवृष्य मरुच्छस्यं कृष्णमेघस्तिरोदधे ॥"

"लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम् । लोकलोचन-रोलम्ब कदम्बैः कैर्न पीयते ? ॥"

कुवलयानन्दे अप्पय्यदीक्षितैः प्रकारान्तरेण रूपकं निरूपितम् तच्छिष्यबुद्धिवैशद्याय्येहोपन्यस्यते । तथाहि—

विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् ।
रूपकं तत्त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥
अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात् ।
अयमास्ते विना शम्भुस्तार्तीयीकं[1] विलोचनम् ॥
शम्भुर्विश्वमवत्यद्य स्वीकृत्य समदृष्टिताम् ।
अस्या मुखेन्दुना लब्धे नेत्रानन्दे किमिन्दुना ॥
साध्वीयमपरा लक्ष्मीरसुधासागरोदिता ।
अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यते ॥

विषय्युपमानभूतं पद्मादि, विषयस्तदुपमेयं वर्णनीयं मुखादि, विषयिणो रूपेण विषयस्य रञ्जनं रूपकम् । अन्यरूपेण रूपवतः करणात् । तच्च क्वचित्प्रसिद्धविषय्यभेदपर्यवसितं क्वचिद्भेदे प्रतीयमान एव तदीयधर्मारोपमात्रपर्यवसितम् । ततश्च रूपकं तावद् द्विविधम् । अभेदरूपकं ताद्रूप्यरूपकं चेति । द्विविधमपि प्रत्येकं त्रिविधम् । प्रसिद्धविषयाधिक्यवर्णनेन न्यूनत्ववर्णनेनानुभयोक्त्या चैवं रूपकं षड्विधम् । अयं हीत्यादिसार्धश्लोकेनाभेदरूपकाणि । अस्या मुखेन्दुनेत्यादिसार्धश्लोकेन ताद्रूप्यरूपकाणि । आधिक्यन्यूनत्वानुभयोक्त्युद्देशक्रमप्रातिलोम्येनोदाहृतानि । 'येन दग्धा' इति विशेषणेन वर्णनीये राज्ञि प्रसिद्धशिवाभेदानुरञ्जनाच्छिवस्य पूर्वावस्थातो वर्णनीयराजभावावस्थायां न्यूनत्वाधिक्ययोरवर्णनाच्चानुभयाभेदरूपकमाद्यम् [१] तृतीयलोचनप्रहाणोक्त्या पूर्वावस्थातो न्यूनताप्रदर्शनान्न्यूनाभेदरूपकं द्वितीयम् [२] । न्यूनत्ववर्णनमप्यभेददार्ढ्यापादकत्वाच्चमत्कारि विषमदृष्टित्वपरित्यागेन जगद्रक्षकत्वोक्त्या शिवस्य पूर्वावस्थातो वर्णनीयराजभावावस्थायामुत्कर्षविभावनादधिकाभेदरूपकं तृतीयम् [३] । एवमुत्तरेषु ताद्रूप्यरूपकोदाहरणेष्वपि क्रमेणानुभयन्यूनाधिकभावा उन्नेयाः । अनेनैव क्रमेणोदाहरणान्तराणि—

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिञ्छरय्वा
वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् ।
एको वक्ति प्रथमनिहतं कैटभं कंसमन्य-
स्तत्त्वं स त्वं कथय भगवन्! को हतस्तत्र पूर्वम् ॥

अत्र 'स त्व'मित्यनेन यः कंसकैटभयोर्हन्ता गरुडध्वजस्तत्तादात्म्यं वर्णनीयस्य राज्ञः

---

"निर्म्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम् ।
क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥"
"दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि! नात्र दूये ।
उद्यत्-कठोर-पुलकाङ्कुर-कण्टकाग्रैर्यद्भिद्यते मृदुपदं ननु सा व्यथा मे ॥"

१ 'तार्तीयीकम्' इति तृतीयमेव तार्तीयीकम् । 'तीयादिकक् स्वार्थे वा वाच्यः' इति वार्त्तिकात् ।

प्रतिपाद्य तं प्रति कंसकैटभवधयोः पौर्वापर्यप्रश्नव्याजेन तत्तादात्म्यदार्ढ्यकरणात्पूर्वावस्थात उत्कर्षापकर्षयोरविभावनाच्चानुभयाभेदरूपकम् ।

वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥

अत्र साक्षादिति विशेषणेन विरक्तस्य प्रसिद्धशिवतादात्म्यमुपदिश्य नराकृतिरिति दिव्यमूर्तिवैकल्यप्रतिपादनान्न्यूनाभेदरूपकम् ।

त्वय्यागते किमिति वेपत एष सिन्धुस्त्वं सेतुमन्थकृदतः किमसौ बिभेति ।

द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य त्वां राजपुंगव ! निषेवत एव लक्ष्मीः ॥

अत्र त्वं सेतुमन्थकृदिति सेतोर्मन्थनस्य च कर्त्रा पुरुषोत्तमेन सह वर्णनीयस्य तादात्म्यमुक्त्वा तथापि त्वदागमनं सेतुबन्धाय मन्थनाय वेति समुद्रेण न भेतव्यम् । द्वीपान्तराणामपि त्वद्वशंवदत्वेन पूर्ववद्द्वीपान्तरे जेतव्याभावात्, प्राप्तलक्ष्मीकत्वेन मन्थनप्रसक्त्यभावाच्चेति पूर्वावस्थात उत्कर्षविभावनादधिकाभेदरूपकम् ।

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥

अत्रापरः शीतांशुरित्यनेन वक्त्रेन्दोः प्रसिद्धचन्द्राद्भेदमाविष्कृत्य तस्य च प्रसिद्धचन्द्रकार्यकारित्वमात्रप्रतिपादनेनोत्कर्षापकर्षयोरप्रदर्शनादनुभयं ताद्रूप्यरूपकम् ।

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शंभुर्भगवान् बादरायणः ॥

अत्र हरावपर इति विशेषणात् त्रिष्वपि ताद्रूप्यरूपकम् । इदं विशेषोक्त्युदाहरणमिति वामनमतम् । यदाह—'एकगुणहानौ गुणसाम्यदार्ढ्यं विशेषोक्तिः' [काव्या० सू० अध्या० ३ सू० २३ ] इति ।

किमसुभिर्ग्लपितैर्जड मन्यसे मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः ॥

अत्र दमयन्तीकृतचन्द्रोपालम्भे प्रसिद्धचन्द्रो न निर्याणकालिकमनःप्रवेशश्रुतितात्पर्यविषयः, किन्तु नलमुखचन्द्र एवेति । ततोऽस्याधिक्यप्रतिपादनादधिकताद्रूप्यरूपकम् । रूपकस्य सावयवत्वनिरवयवत्वादिभेदप्रपञ्चनं तु चित्रमीमांसायां द्रष्टव्यम् ॥ ९६ ॥

[ दीपकलक्षणम् ]

**जातिक्रियागुणद्रव्यवाचिनैकत्रवर्तिना ।**
**सर्ववाक्योपकारश्चेत् तमाहुर्दीपकं यथा ॥ ९७ ॥**

———:*:———

(प्र०) दीपकस्य किं लक्षणम् ? (उ०) अस्य पृ० पं० २७ ।

१ अलङ्कारचन्द्रिकायामित्थमुक्तम्—

गुणजातिक्रियाद्रव्यवाचकेन पदेन तु । एकत्र वर्तिना सर्ववाक्यार्थो दीपकं भवेत् ॥ इति ।

तत्र गुणाः=असाधरणधर्माः। जातिः=सामान्यं विशेषव्यापिनी 'जातिर्जातञ्च सामान्यम्' इत्यमरोक्तेः । क्रिया=कर्तृनिष्ठो व्यापारः । द्रव्यम्=द्रव्यत्वधर्मेण व्यक्तीभूतो यदृच्छार्थः ।

प्रदीपं सर्वदीपानां स्वयम्प्रभमनाश्रयम् ।
श्रये शान्तं शिवं देवं मेधाध्वान्तनिवृत्तये ॥ १ ॥

क्रमप्राप्तं दीपकं लक्षयति—'जातिक्रिया०' इति । एकत्रवर्त्तिना=एकस्मिन् यस्मिन् कस्मिन्नपि प्रबन्धघटनकारिणि आदौ मध्येऽन्ते वा स्थितेन जातिक्रियागुणद्रव्यवाचिना=जातिवाचिना क्रियावाचिना गुणवाचिना द्रव्यवाचिना पदेन चेत्=यदि सर्ववाक्योपकारः=सर्वस्य वाक्यस्य य उपकारः अन्वययोग्यता अर्थात् स्वार्थद्वारा वाक्यान्तरार्थस्यान्वयोपपत्तिर्भवति तदा तमलङ्कारं दीपकं' नाम आहुः=कथयन्ति । यथा एकदेशस्थितो दीपो बहिरन्तः सर्वं वेश्माभिज्वलयति एवमेव एकवाक्यगतमपि जात्याद्यन्यतमवाचकं पदं काकाक्षिन्यायेन वाक्यान्तरे प्रविष्टं सत् स्वार्थं द्वारीकृत्य तदर्थान्वयं सम्पादयतीति दीपकसाम्यात् 'दीपकम्' इति बोध्यम् । अतएव 'अप्पय्यदीक्षितै'रुक्तम्—प्रस्तुतैकनिष्ठः समानो धर्मः प्रसङ्गादन्यत्रोपकरोति प्रासादार्थमारोपितो दीप इव रथ्यायामिति दीपसाम्याद्दीपकम् इति । 'सञ्ज्ञायाञ्च' [ ५।३।९७ ]इति पाणिनिसूत्रेण इवार्थे 'कन्' प्रत्ययः इति । 'यथा' इति जातिगतम्, क्रियागतम्, गुणगतम्, द्रव्यगतम्, इति चतुर्विधं वक्ष्यमाणग्रन्थेनोदाहरति ॥ ९७ ॥

[ आदिपादगत-जातिगतदीपकस्योदाहरणम् ]

**पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम् ।**
**स एवावनताङ्गीनां मानभङ्गाय कल्पते ॥ ९८ ॥**

आदौ जातिगतं दीपकं दर्शयति—'पवन' इति । दक्षिणः पवनः=दक्षिणानिलः वीरुधाम्=वल्लीनाम् जीर्णम्=पुरातनं शुष्कं पर्णम्=पत्रम् हरति=लाति । स एव=पवनः अवनताङ्गीनाम्=सुन्दरीणां मानवतीनां मानभङ्गाय=प्रणयकोपप्रशमनाय कल्पते=समर्थो भवति । दक्षिणानिलस्य कामोद्दीपकत्वादिति भावः । एतेन वसन्तकालो व्यज्यते ।

अत्र पूर्ववाक्ये 'पवन' इति जातिवाचकं पदं बहुव्यक्तिवाचकत्वात् । उत्तरार्धे च स एव पवनः तच्छब्दपरामृष्टो गम्यते, तेनैव तदर्थान्वयनिर्वाहश्च, अर्थात् एकेनैव 'पवन' पदेन पद्यगतसर्वपादैः सहान्वयनिर्वाहकरणात् 'जातिगतं दीपकम्' एतत् ॥ ९८ ॥

[ आदिपादगतक्रियागतस्य दीपकस्योदाहरणम् ]

**चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।**
**चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥ ९९ ॥**

क्रियागतं दीपकमुदाहरति—'चरन्ति' इति । दन्तिनः=दिग्गजाः ते=तव कुन्दभासः=माध्यदीप्तयः [शुक्लाः] गुणाः=यशांसि च चतुरम्भोधिवेलोद्यानेषु=चत्वारः अम्भोधयः सागराः तेषां वेला तीराणि तासाम् [तेषाम्] उद्यानेषु आरामेषु चतुःसागरतीरवर्त्त्यारामेषु तथा चक्रवालाद्रिकुञ्जेषु=लोकालोकाचलवर्तिलतापिहितद्वारेषु चरन्ति=भ्रमन्ति ।

अत्र पूर्वार्धवाक्ये 'चरन्ति' इति क्रिया निर्दिष्टा, उत्तरार्धवाक्ये च चकारेण सैव परामृष्टा 'गुणा' इति पदेनाप्यन्वेति इति उभयत्रैकक्रियान्वयप्रकाशनात् क्रिया[गतं] दीपकमिदम् । 'माध्यं कुन्दम्' 'लोकालोकश्चक्रवालः' इत्युभयत्रामरः । '**वेला**' काले च सीमायामब्धेः कूलविकारयोः । अक्लिष्टमरणे रोगे ईश्वरस्य च भोजने' इति मेदिनी ॥ ९९ ॥

[ गुणगतस्य आदिदीपकस्योदाहरणम् ]

**श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपंक्तिभिः ।**
**भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥ १०० ॥**

गुण[गतं] दीपकमुदाहरति—'श्यामला' इति । वर्षाकालवर्णनमिदम् । दिशः=आशाः ['दिशस्तु ककुभः काष्ठा आशाश्च हरितस्तु ताः' इत्यमरः ] प्रावृषेण्याभिः=वर्षकालभवाभिः जीमूतपङ्क्तिभिः=नवनीरदराजिभिः । भुवः च=भूमयश्च सुकुमाराभिः=कोमलाभिः नवशाद्वल-राजिभिः=हरिततृणहरितीकृतप्रदेशपङ्क्तिभिः श्यामलाः=श्यामवर्णाः 'सञ्जाता' इति शेषः ।

अत्र 'भुवश्च' इति चकारेण पूर्वार्धगतस्य 'श्यामला' इति गुणवाचकस्य पदस्यानु-कर्षणात् एकान्वय इति गुणदीपकमेतत् । तस्य च [गुणवाचकपदस्य] सर्वपादादिगतत्वेन 'गुणगतमादिदीपक'मिदमुच्यते ॥ १०० ॥

[ द्रव्यगतस्य आदिदीपकस्योदाहरणम् ]

**विष्णुना विक्रमस्थेन दानवानां विभूतयः ।**
**क्वापि नीताः कुतोप्यासन्नानीताः देवतर्धयः ॥ १०१ ॥**

द्रव्य[गतं] दीपकमुदाहरति—'विष्णुना' इति । विक्रमस्थेन=वामनावतारं धृत्वा त्रिभिः पद्भिः क्रममाणेन विष्णुना दानवानाम्=बल्यादीनाम् विभूतयः=राज्यश्रियः अनेकाः सम्पत्तय इत्यर्थः । क्व अपि=कुत्रापि अलक्षिते प्रदेशे नीताः=नाशं गमिताः देवतानाम्= इन्द्रप्रभृतीनां सुराणाम् ऋद्धयः=स्वर्गसम्पत्तयः कुतः अपि=अनिर्दिष्टात् स्थानात् आनीताः= उद्भाविताः आसन्=अभूवन् ।

अत्र 'विष्णुना' इति पदं द्रव्यवाचि विष्णोरेकत्वात् । एकव्यक्तिकः पदार्थो न जाति-रिति न्यायसिद्धान्तः । तस्य च पूर्ववाक्ये अन्वितस्य काकाक्षिन्यायेन उत्तरवाक्येऽप्यन्वय इति 'द्रव्यदीपकम्' । तच्च पदं सर्वपादादिगतम् इति द्रव्यगतमादिदीपकमिदं बोध्यम् ॥ १०१ ॥

[ दीपकान्तरनिरूपणप्रतिज्ञा ]

**इत्यादिदीपकान्युक्तान्येव मध्यान्तयोरपि ।**
**वाक्ययोर्दर्शयिष्यामः कानिचित्तानि तद्यथा ॥ १०२ ॥**

जात्यादिभेदेन चतुर्विधं दीपकमुक्त्वा तेषां जात्यादिवाचकपदानां मध्यान्तवाक्यगतत्वात् प्रकारान्तरेण दीपकभेदं वक्तुं प्रतिज्ञां करोति—'इति' इति । इति=उक्तया दिशा आदिदीपकानि= वाक्यादिपदगतानि दीपकानि उक्तानि=कथितानि दर्शितोदाहरणेष्वित्यर्थः । एवम्=आदि-पदगतदीपकवत् मध्यान्तयोः अपि वाक्ययोः=कानिचित् तानि दीपकानि दर्शयिष्यामः=निरू-पयिष्यामः इति प्रतिज्ञा । तद् यथा=इति वक्ष्यमाणोदाहरणाभिप्रायेणोक्तम् । कानिचित् इति कथनेन दिङ्मात्रं दर्शयामः ग्रन्थवृद्धिभिया सर्वाणि दर्शयितुं न शक्यन्त इति ध्वनितम् ॥१०२॥

[ जातिगतस्य मध्यदीपकस्योदाहरणम् ]

**नृत्यन्ति निचुलोत्सङ्गे गायन्ति च कलापिनः ।**
**बध्नन्ति च पयोदेषु दृशो हर्षाश्रुगर्भिणीः ॥ १०३ ॥**

जातिगतं मध्यदीपकमुदाहरति—'नृत्यन्ति'इति । वर्षाकालवर्णनमिदम् । कलापिनः= बर्हिणः मयूराः निचुलोत्सङ्गे=निचुलस्य हिज्जलस्य स्थलवेतसतरोः उत्सङ्गे तलप्रदेशे नृत्यन्ति=

नर्त्तनं तन्वते गायन्ति च=केकां च कुर्वन्ति । तथा पयोदेषु=मेघेषु हर्षाश्रुगर्भिणीः=आनन्दाश्रुभरिताः प्रमोदजनितबाष्पधाराप्रवाहिनीरिति यावत् दृशः च=दृष्टीः अपि चक्षूंषि इति यावत् बध्नन्ति=निरन्तरं धारयन्तीत्यर्थः ।

अत्र 'कलापिन' इति जातिपदं वाक्यमध्यगतम्, तस्य चकारबलेन वाक्यान्तरेऽपि परामर्शः, एवञ्च वाक्यमध्यगतत्वात् जातिगतं मध्यदीपकमेतत् । 'निचुलो हिज्जलोऽम्बुज' इत्यमरः ॥ १०३ ॥

[ क्रियागतस्य मध्यदीपकस्योदाहरणम् ]

**मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते ।**
**चर्चाचन्दनपातश्च शस्त्रपातः प्रवासिनाम् ॥ १०४ ॥**

क्रियागतं मध्यदीपकमुदाहरति—'मन्द' इति । प्रवासिनाम्=प्रोषितानां वियोगिनाम् मन्दः=मन्दगमनः कोमल इति यावत् गन्धवहः=समीरणः क्षारः=खरः क्लेशप्रदः असोढ इत्यर्थः । इन्दुः च=चन्द्रश्च वह्निः=अनलः तद्वत्तापकरत्वात्, चर्चाचन्दनपातः=आर्द्रसजलवस्तुप्रक्षेपः 'चर्चा' इति कथ्यते, चर्चारूपो यश्चन्दनपातः चन्दनप्रलेपः स च शस्त्रपातः= जायते=भवति ।

अत्र 'जायते' इति क्रियापदं मध्यवाक्यगतं गन्धवहादिसकलवाक्यान्वयि इति क्रियया सर्ववाक्यदीपनत्वात् क्रियागतं मध्यदीपकमिदम् । गुणगतं मध्यदीपकं यथा—

तडिद्भिर्वारिवाहाणां योगः स्त्रीभिः प्रवासिनाम् ।
लताभिः पादपानाञ्च समायाते घनागमे ॥ इति ।

अत्र योगः=संयोगः स च गुणो मध्यवाक्यगतः तेन च सर्ववाक्यस्यान्वयात् गुणगतं मध्यदीपकमिदम् । द्रव्यगतं मध्यदीपकं यथा—

मुहुर्विश्वं संसृजति बिभर्त्ति च मुहुर्हरिः ।
मुहुश्च नाशं नयति बालक्रीडनकौतुकी ॥ इति ।

अत्र 'हरि'रिति द्रव्यम्, तस्य मध्यवाक्यगतस्य सर्ववाक्येनान्वयात् द्रव्यगतं मध्यदीपकमिदम् ॥ १०४ ॥

[ अन्तगतस्य जातिदीपकस्योदाहरणम् ]

**जलं जलधरोद्गीर्णं कुलं गृहशिखण्डिनाम् ।**
**चलञ्च तडितां दाम बलं कुसुमधन्वनः ॥ १०५ ॥**

जातिगतमन्तदीपकमुदाहरति—'जलम्' इति । जलधरोद्गीर्णम्=जलधराः मेघाः तैः उद्गीर्णं सृष्टं जलम्=नीरम् गृहशिखण्डिनाम्=गृहपालितकलापिनाम् कुलम्=संघः चलम्=चपलञ्च तडिताम्=विद्युताम् दाम=माला सौदामिनीसन्ततिरित्यर्थः, एतत्सर्वं [त्रयम्] कुसुमधन्वनः=पञ्चबाणस्य बलम्=सैन्यम् 'अस्ति' इति शेषः । सर्वेषामेषां कामोद्दीपकत्वादित्याशयः ।

अत्र 'बलम्' इति जातिवाचकं पदमन्तगतम्, तेन च सर्ववाक्यस्यान्वयात् अन्तजातिगतदीपकमिदम् । 'कुसुमधन्वनः' कुसुमं धनुर्यस्येति बहुव्रीहिः । 'वा सञ्ज्ञायाम्' [५।४।११३] इत्यनङ् ॥ १०५ ॥

[ क्रियागतस्य अन्तदीपकस्योदाहरणम् ]

**त्वया नीलोत्पलं कर्णे स्मरेणास्त्रं शरासने ।**
**मयापि मरणे चेतस्त्रयमेतत्समं कृतम् ॥ १०६ ॥**

क्रियागतमन्तदीपकमुदाहरति—'त्वया' इति। [ हे ! प्रिये ! ] त्वया कर्णे=श्रोत्रे नीलोत्पलम्=नीलकमलम्, स्मरेण=मन्मथेन शरासने=धनुषि अस्त्रम्=सायकरूपम्, मया अपि=त्वत्प्रणयकोपशान्तिपरेणापि अकृतार्थेन मया मरणे=प्राणत्यागे चित्तम्=चेतः एतत् त्रयम् समम्=युगपदेव कृतम्=सम्पादितमित्यर्थः। मानिनीं प्रति कस्यचित् नायकस्योक्तिरियम् ।

अत्र 'कृतम्' इति अन्तवाक्यगतं क्रियापदम्, तेन सह सर्ववाक्यस्यान्वयदीपनात् 'क्रियागतमन्तदीपक' मिदम् । गुणगतमन्तदीपकं यथा—

इदमुज्जृम्भते बिम्बं भानोस्तापयितुं जगत् ।
ममैव हृदयं चण्डि ! मुखञ्च तव लोहितम् ॥ इति ।

अत्र 'लोहितम्' इति गुणवाचि पदम्, तच्चान्तवाक्यगतम्, तेन सह सर्ववाक्यान्वयदीपनात् गुणगतमन्तदीपकमिदम् । द्रव्यगतमन्तदीपकं यथा **मम**—

आह्लादयति संसारमोषधीन् तर्पयत्यपि ।
ग्रीष्मतापं निहन्त्येष ! शिशिरैः किरणैः शशी ॥ इति ॥

अत्र 'शशी' इति अन्तगतं द्रव्यवाचिपदम्, सर्ववाक्यान्वयं दीपयति, अत इदं 'द्रव्यगतमन्तदीपक' मुच्यते ॥ १०६ ॥

[ मालादीपकप्ररूपणम् ]

**शुक्लः श्वेतार्चिषो वृद्ध्यै पक्षः पञ्चशरस्य सः ।**
**स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः ॥ १०७ ॥**
**इत्यादि दीपकत्वेऽपि पूर्वपूर्वव्यपेक्षिणी ।**
**वाक्यमाला प्रयुक्तेति तन्मालादीपकं मतम् ॥ १०८ ॥**

जात्यादिभिरुपाधिभिर्द्वादश दीपकभेदान्निरूप्य सम्प्रति प्रकारान्तरेण तद्वैचित्र्यं दर्शयन् लक्षणघटनापूर्वकं मालागतं दीपकमुदाहरति द्वाभ्याम्—'शुक्ल' इति । शुक्लः=सितः पक्षः=मासार्धकम् श्वेतार्चिषः=सितमयूखस्य शशिनः वृद्ध्यै=पूर्णतायै 'भवति' इति शेषः । स च=चन्द्रः पञ्चशरस्य=कामस्य वृद्ध्यै, स च=कामः रागस्य=प्रीतेः वृद्ध्यै, सः रागः अपि=यूनाम्=तरुणानाम् रत्युत्सवश्रियः=रतिः भोगः तस्य उत्सवः उत्कण्ठाविशेषजनिता क्रीडा सैव श्रीः तस्या वृद्ध्यै भवति ।

अत्र सर्वस्मिन्नपि वाक्ये 'वृद्ध्यै' इति पदस्यानुषङ्गः । तस्य च आदिवाक्योपात्तस्यापि पूर्वपूर्ववाक्यापेक्षिणी उत्तरोत्तरानुषङ्गवती वाक्यसमूहात्मिका वाक्यमालाऽस्तीति विच्छित्तिविशेषशालि मालागतं दीपकमिदम् ।

एतत्स्वयं घटयति—'इत्यादि०' इति । इति=अमुना प्रकारेण आदिदीपकत्वे अपि=आदिवाक्यगतेन 'शुक्लः पक्षः' इति जातिगुणवाचकेन सह [ अपि ] सर्ववाक्यान्वये सत्यपि पूर्वपूर्वव्यपेक्षिणी=पूर्वपूर्ववाक्यापेक्षां कुर्वती वाक्यमाला=वाक्यसमुदायः मालेव प्रयुक्ता

योजिता तत्=अतो हेतोः अर्थात् उक्तेभ्यो दीपकेभ्यो विलक्षणशोभातिशयवत्त्वात् मालादीपकम् इति=एतन्नामको दीपकालङ्कारः मतम्=कविसम्मतमित्यर्थः। 'पूर्वपूर्ववाक्यापेक्ष्युत्तरोत्तरवाक्यगतं दीपकं 'मालादीपक'मिति मालादीपकस्वरूपसारः।

पण्डितराजैरपि प्राचां मतानुरोधेन 'मालादीपक' मुदाहृतम्। यथा—

आस्वादेन रसो रसेन कविता काव्येन वाणी तया
लोकान्तःकरणानुरागरसिकः सभ्यः सभा चामुना।
दारिद्र्यानलदह्यमानजगतीपीयूषधाराधर-
क्षोणीनाथ! तया भवांश्च भवता भूमण्डलं भासते॥

अत्र सर्वस्मिन्नपि वाक्ये 'भासते' इति क्रियापदस्य अनुषङ्गः, तस्य च अन्तवाक्ययोगात्तस्यापि पूर्वपूर्ववाक्यापेक्षिणी उत्तरोत्तरानुषङ्गवती वाक्यसमूहात्मिका वाक्यमाला पूर्ववद् विच्छित्तिविशेषतां भजते। 'विद्याभूषणो'ऽपि साहित्यकौमुद्याम् – 'मालादीपकमाद्यञ्चेद् यथोत्तरगुणावहम्' इति लक्षणमुक्त्वा एतदुदाजहार। तथा—

भाग्यैर्भूम्या भवान्प्राप्तो भवता महिता मतिः।
मत्या मुमुक्षुशरणं चरणं मुरवैरिणः॥ इति।

अत्र सर्ववाक्ये प्राप्तिक्रियान्वयः। यथा वा—[भारवेः]

शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः॥

अत्रोत्तरोत्तरस्य पूर्वपूर्वानुषङ्गित्वात् एकयैव च 'भूषयति' इत्येवमाद्यप्रकारेण भूषणक्रियया सहान्वयात्सर्ववाक्यानामिदमपि मालादीपकम्।

केचित्तु—मालादीपकस्थले स्वतन्त्रम् 'एकावली' नामकमलङ्कारं मन्यन्ते, लक्षयन्ति च—

यत्र विशेषणभावं पूर्वं पूर्वं प्रति क्रमेणैव।
भजति परं परमेषाऽलङ्कृतिरेकावली कथिता॥ १०७, १०८॥

[विरुद्धार्थदीपकप्ररूपणम्]

**अवलेपमनङ्गस्य वर्धयन्ति बलाहकाः।**
**कर्षयन्ति तु घर्मस्य मारुतोद्धूतशीकराः॥ १०९॥**
**अवलेपपदेनात्र बलाहकपदेन च।**
**क्रिये विरुद्धे संयुक्ते तद्विरुद्धार्थदीपकम्॥ ११०॥**

---

१ किरातार्जुनीयस्य द्वितीयसर्गे भीमम्प्रति युधिष्ठिरवाक्यमिदम्।

२ अलङ्कारचन्द्रिकायां मालादीपकम् [एकावली] यथा—

शाखिनि शाखिनि विटपा विटपे विटपे च पुष्पितास्तवकाः।
स्तवके स्तवके मधुपा मधुपे मधुपे च मञ्जुलं ध्वनितम्॥
गेहे गेहे मधुरिममयी काञ्चनी कापि वल्ली वल्लेर्वल्लेरुपरि उपरि प्रस्थितिः काञ्चनाद्रेः।
अद्रावद्रौ लसति कमलं तत्र तत्रैव भृङ्गा भृङ्गे भृङ्गे विषमविशिखाः पुष्पकेतोः स्फुरन्ति॥ इति॥

विरुद्धार्थदीपकं लक्षणयोजनापूर्वकमुदाहरति द्वाभ्याम्—'अवलेपम्' इति । बलाहकाः=वारीणां वाहकाः मेघाः अनङ्गस्य=मदनस्य अवलेपम्=गर्वं वर्धयन्ति=समेधयन्ति । मारुतोद्धूतशीकराः=मारुतेन पवनेन उद्धूताः उत्कम्पिताः स्ववेगेनेतस्ततः सञ्चालिताः शीकराः अम्बुकणाः येषाम् एवम्भूताः ते एव बलाहकाः घर्मस्य=ग्रीष्मतापस्य [अवलेपम्] कर्षयन्ति=कृशीकुर्वन्ति क्षपयन्तीत्यर्थः ।

उक्तोदाहरणे विरुद्धार्थदीपकस्वरूपं योजयति —'अवलेपपदेन' इति । अत्र=दर्शिते वाक्ये [काव्ये] अवलेपपदेन=कर्मभूतेन बलाहकपदेन=कर्तृभूतेन च सह विरुद्धे क्रिये=वर्धन-कर्शनाख्ये संयुक्ते=सान्वये वर्त्तेते। य एवैकत्र यं वर्धयति स एवान्यत्र तं कर्शयतीति विरोधः, तदेवं विरोधरूपार्थस्य दीपनकरणात् 'विरुद्धार्थदीपक'मिदम् । परमिदमादिगतजातिदीपकगुण-दीपकयोः सङ्करो बोध्यः। 'अवलेप'मित्यादिवाक्यगतं गुणवाचि, तेन सह सर्ववाक्यान्वयात् । 'बलाहका' इति जातिवाचि पदं तेनापि सर्ववाक्यान्वयादित्यधिकमपि ज्ञेयम् ॥१०९, ११०॥

[ लक्ष्यलक्षणाभ्यामेकार्थदीपकप्ररूपणम् ]

**हरत्याभोगमाशानां गृह्णाति ज्योतिषां गणम् ।**
**आदत्ते चाद्य मे प्राणानसौ जलधरावली ॥ १११ ॥**
**अनेकशब्दोपादानात् क्रियैकैवात्र दीप्यते ।**
**यतो जलधरावल्या तस्मादेकार्थदीपकम् ॥ ११२ ॥**

एकार्थदीपकं निरूपयति द्वाभ्याम्—'हरति' इत्यादि । वर्षाकालवर्णनम् । असौ जलधरावली=जलधराणां मेघानां आवली पङ्क्तिः मेघमाला आशानाम्=ककुभां दिशामिति यावत्, आभोगम्=विस्तारं हरति=प्रावृणोति सर्वदिक्षु व्याप्ता भवतीत्यर्थः । ज्योतिषाम्=ग्रहाणां तारादीनाम् गणम्=समूहम् गृह्णाति=आवृत्य तिष्ठतीत्यर्थः, अद्य मे=मम प्राणान् आदत्ते=हरति विरहित्वादिति भावः । वियोगिन उक्तिरियम् ।

उक्ते काव्ये एकार्थदीपकलक्षणं घटयति—'अनेकशब्दोपादानात्' इति । अत्र=उक्ते वाक्ये अनेकशब्दोपादानात्=अनेकेषां शब्दानां हरति, गृह्णाति, आदत्ते इति क्रियावाचकानां पदानाम् उपादानात् ग्रहणात् यतः=यस्मात् कारणात् जलधरावल्या='जलधरावली' इत्या-कारकेण कर्त्तृपदेन 'एका एव क्रिया' अर्थतोऽभिन्नरूपैव क्रिया दीप्यते=प्रकाश्यते अर्थात् अन्वयीक्रियते तस्मात्=हेतोः 'एकार्थदीपक'मिदम् ॥ १११, ११२ ॥

[ श्लिष्टार्थदीपकनिरूपणम् ]

**हृद्यगन्धवहास्तुङ्गास्तमालश्यामलत्विषः ।**
**दिवि भ्रमन्ति जीमूता भुवि चैते मतङ्गजाः ॥ ११३ ॥**
**अत्र धर्मैरभिन्नानामभ्राणां दन्तिनां तथा ।**
**भ्रमणेनैव सम्बन्ध इति श्लिष्टार्थदीपकम् ॥ ११४ ॥**

श्लिष्टार्थदीपकं निरूपयति—'हृद्यगन्धवहा' इति द्वाभ्याम्। हृद्यगन्धवहाः=हृद्यः मनो-हरः मन्दसुगन्धशीतलत्वात् गन्धवहः समीरणो येषु ते तादृशा इति जीमूतपक्षे । वहन्तीति 'वहाः' पचाद्यच् । हृद्यश्चासौ गन्धश्च इति हृद्यगन्धः तस्य वहाः प्रस्रवद्दाना इत्यर्थः । [हृद्यं गन्धं वहन्तीति कुव्याख्यानम् तथा सत्यणि वृद्ध्यापत्तेः] इति मतङ्गजपक्षे । तुङ्गाः=उन्नताः

स्वस्थत्वात् इति जीमूतपक्षे । तुङ्गाः=उन्नतारोहाः विशालाकृतेः इति मतङ्गजपक्षे । तमालश्यामलत्विषः=तमालवत् श्यामलाः कृष्णवर्णाः त्विषः कान्तयो दीप्तयो येषामित्युभयपक्षेऽपि समानोऽर्थः अभङ्गत्वात्, एवम्भूताः जीमूताः=मेघाः दिवि=गगने एते=पुरतो दृश्यमानाः मतङ्गजाः=मत्तदन्तिनश्च भुवि=भूमण्डले भ्रमन्ति=सञ्चरन्ति ।

एतत्स्वरूपदर्शनेन घटयति—'अत्र' इति । अत्र=उक्ते वाक्ये धर्मैः=हृद्यत्वगन्धवहत्वश्यामलत्विट्त्वरूपैः साधारणधर्मैः अभिन्नानाम्=वस्तुतो भिन्नानामप्यभिन्नत्वेन प्रतीयमानानाम् अभ्राणाम्=मेघानां तथा दन्तिनाम्=गजानाञ्च भ्रमणेन एव सम्बन्धः=एकयैव भ्रमणक्रियया वाक्यद्वयेऽपि अन्वयः अतः=अतो हेतोः श्लेषमूलकत्वात् 'श्लिष्टार्थदीपकम्' इदम् । अत्र जीमूतदन्तिनोरुपमानोपमेयभावो व्यङ्ग्यः ॥ ११३, ११४ ॥

[ दीपकचक्रस्योपसंहारः ]

**अनेनैव प्रकारेण शेषाणामपि दीपके ।**
**विकल्पानामवगतिर्विधातव्या विचक्षणैः ॥ ११५ ॥**

इति दीपकचक्रम् ।

---

दीपकमुपसंहरति—'अनेन' इति । अनेन एव प्रकारेण=दर्शितवैचित्रीमार्गेण दीपके=दीपकाख्येऽलङ्कारे शेषाणाम् अपि=मदुक्तावशिष्टानामपि विकल्पानाम्=भेदानाम् अवगतिः=बोधः विचक्षणैः=कुशलैः अलङ्कारशास्त्रप्रवणचेतोभिरित्यर्थः, विधातव्या=सम्पाद्या । मदुक्तरीतिमनुरुध्य मदनुक्ता अपि भेदाः स्वयमूहनीयाः । कविप्रतिभानामनन्तत्वात् सकलदीपकदीपनं कर्त्तुमसुगमिति भावः ।

एते दीपकभेदाः—आदिजातिदीपकम्, आदिक्रियादीपकम्, आदिगुणदीपकम्, आदिद्रव्यदीपकम्, मध्यजातिदीपकम्, मध्यक्रियादीपकम्, अन्तजातिदीपकम्, अन्तक्रियादीपकम्, मालादीपकम् विरुद्धार्थदीपकम्, एकार्थदीपकम्, श्लिष्टार्थदीपकम् । [ १२ ] द्वादश इहोक्ताः । **मम्मटाचार्यास्तु**—दीपकमेवं लक्षयन्ति । तथाहि—

सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥

अस्यायमाशयः—प्रकृतं प्राकरणिकम् उपमेयम् । अप्रकृतम् अप्राकरणिकम् उपमानम्, तदात्मनां तद्रूपाणां धर्मिणां धर्मस्य [गुण] क्रियादिरूपस्य सकृद्वृत्तिः=एकवारमेवोपादानं यत् तदेकं दीपकम् क्रियादिदीपकमित्यर्थः । बह्वीषु क्रियासु सतीसु कारकस्य कर्त्रादिभेदेन षड्विधस्य मध्ये यस्य कस्यापि कारकस्य सा एव सकृद्वृत्तिरेव याऽस्ति तद् द्वितीयं दीपकम् कारकदीपकमित्यर्थः । एवञ्च सामान्यतः क्रियादिदीपकं कारकदीपकमिति द्विप्रकारं दीपकम् । एतेनैवाभिप्रायेण आचार्यैः—'प्राकरणिकाऽप्राकरणिकानाम् अर्थात्

---

(प्र०) कतिविधं दीपकम् ? किञ्च तस्य सामान्यलक्षणम्? विशेषलक्षणानि च कानि ? कानि च तेषामुदाहरणानि ? तत्र २ तेषां योजनप्रकारश्च कीदृशः ? इति सर्वं सुविविच्य लेख्यम् ? । (उ०) दर्शितप्रश्नानामुत्तरज्ञानं सटीकमूलग्रन्थपरामर्शेण स्वयं सम्पाद्यम् ।

उपमानोपमेयानां धर्मः क्रियादिः एकवारमेव यदुपादीयते तत् एकस्थस्यैव समस्तवाक्यदीपनात् दीपकम्' इति स्वयं विवृतम्। एवञ्च दीप इव 'दीपकम्'। 'सञ्ज्ञायां च' [५।३।८७] इति पाणिनिसूत्रेण प्रकृतिप्रत्ययसमुदायेन सञ्ज्ञायां ज्ञायमानायामिवार्थे 'कन्' प्रत्ययः इति पूर्वमप्यवोचाम। प्रस्तुताप्रस्तुतप्रकाशकत्वेन च सादृश्यं बोध्यम्। अपरे तु-प्रकृतार्थमुपात्तो धर्मः प्रसङ्गादप्रकृतमपि दीपयति प्रकाशयति सुन्दरीकरोति इति 'दीपकम्'। 'दीपी' दीप्तौ इति दैवादिकात् 'दीप्' धातोर्णिजन्तात् 'ण्वुल्तृचौ' [३।१।१३३] इति सूत्रेण कर्त्तरि 'ण्वुल्' प्रत्ययः। तस्य 'युवोरनाकौ' [७।१।१] इति सूत्रेण अकादेश इत्याहुः। सर्वथापितु—'सकलवाक्योपकारकत्वं' दीपकसामान्यलक्षणमिति फलितम्।

यद्यपि दीपक इव तुल्ययोगितायामपि साधारणधर्मस्य सकृदुपादानम् तथापि 'प्रकृताप्रकृतयोः साधारणधर्मस्य सकृदुपादाने 'दीपकम्'। प्रकृतानामेव अप्रकृतानामेव वा साधारणधर्मस्योपादाने 'तुल्ययोगिता' इत्यस्त्यनयोर्विशेषः।

अयमपरश्चानयोर्विशेषः—उभयोरनयोरुपमालङ्कारस्य गम्यत्वाऽविशेषेऽपि अत्र [दीपके] अप्रस्तुतमुपमानम् प्रस्तुतमुपमेयम् इति व्यवस्थित उपमानोपमेयभावः, तत्र [तुल्ययोगितायां] तु विशेषाग्रहणादैच्छिकः स इति दीक्षितानामुक्तिः।

तत्र प्रथमदीपकं [क्रियादिदीपकम्] द्विविधम्। क्रियादीपकम् गुणदीपकञ्चेति। तत्राद्यं यथा—

किविणाणँ धणं णाआणं फणमणी केशराइँ सीहाणं।
कुलवालिआणँ त्थणआ कुत्तो छिप्पन्ति अमुआणं॥

अत्र वर्णनीयत्वेन प्रकृतानां कुलवधूस्तनानां [उपमेयानाम्] तदुपमानत्वेन प्रकृतानां कृपणधनादीनाञ्च स्पर्शनक्रियारूपसाधारणधर्मस्य सकृदुपादानमिति 'क्रियादीपक' मिदम्। [गुणदीपकं] द्वितीयं यथा—'श्यामलाः प्रावृषेण्याभि' रित्यादि मूलोक्तम्। कारकदीपकं यथा—

स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक्।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणाया वधूः शयने॥

अत्रानेकासु क्रियासु एकस्य 'वधू' रिति कर्तृकारकस्य 'शयने' इत्यधिकरणकारकस्य वा सकृदुपादानात् 'कारकदीपक' मिदम्। अत्र सर्वाः क्रियाः प्रकृताः।

यथा वा—

तावज्जल्पति सर्पति तिष्ठति माद्यति विलासति विभाति।
यावन्नरो न जठरं देहभृतां जायते रिक्तम्॥

अत्रानेकासु जल्पनादिक्रियासु एकस्य 'नर' इति कर्तृकारकस्य सकृदुपादानात् कारकदीपकम्। अत्रापि सर्वाः क्रियाः प्रकृताः। यथा वा—

---

१ 'नहि दीपस्य रथ्याप्रासादयोर्युगपदुपकारकत्वेन जामात्रर्थं श्रपितस्य सूपस्य अतिथिभ्यः प्रथमपरिवेषणेन च प्रासङ्गिकत्वं हीयते' इत्यप्पय्यदीक्षिताः।

२ कृपणानां धनं नागानां फणमणिः केसराः सिंहानाम्।
कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्॥ इति संस्कृतम्॥

गायति नृत्यति वल्गति धावति पुरतो नृपस्य वेगेन ।
किं किं न करोति पुमानुदरग्रहपवनवशीभूतः ॥

अत्रापि गायनाद्याः सर्वाः क्रियाः प्रकृताः । तासु एकस्यैव 'पुमान्' इति कर्तृकारकस्य सकृदुपादानात् इदमपि कारकदीपकम् । एवमस्य भूयान् समादरो दृश्यते 'सुभाषितरत्नसन्दोहयशस्तिलक' प्रभृतिषु महाकाव्येषु । अप्रकृतानामेव दीपकं यथा—

दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरन्तनमघं चुलकीकरोति ।
भूतेषु किञ्च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥

अत्र सर्वक्रियाणामप्रकृतत्वम् । तासु च सकृदेवोपात्तस्य 'सङ्ग' इति कर्तृकारकस्यान्वयो दीपितः । प्रकृताप्रकृतानां यथा—

वसु दातुं यशो धातुं विधातुमरिमर्दनम् ।
त्रातुं च मादृशान् राजन् ! अतीवनिपुणो भवान् ॥

अत्र वसुदानस्वत्राणे प्रकृते, अरिमर्दनयशोधाने चाप्रकृते, तत्र सकृदुपात्तस्यैकस्य 'नृप' कारकस्यान्वयः । अत्र 'दातुम्' इत्यादौ तुमुन्प्रत्ययेन असत्त्वभूत एव भावोऽभिधीयते 'अव्ययकृतो भावे' इत्युक्तेः । एतच्च मञ्जूषादौ कृदर्थविचारे स्पष्टम् । यथा वा **मम—**

चिनोति पापं कुरुते विगर्हणां तनोति दुःखं किल हन्ति सञ्चयम् ।
विपत्तिमातत्य सतां प्रहृष्यति क्रमो विचित्रो ह्यसतां सनातनः ॥

अत्राप्यनेकासु चयनादिक्रियासु एकस्य 'असतां क्रम' इति सकृदुपात्तस्य कर्तृकारकस्यान्वयः । एवमादिरीत्या सर्वत्रोह्यम् ॥ ११५ ॥

[ अथ सभेदा आवृत्तिः ]

**अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च ।**
**दीपकस्थान एवेष्टमलङ्कारत्रयं यथा ॥ ११६ ॥**

—*—

आवर्त्तन्ते यदज्ञानाद् घटीयन्त्रमिवातुराः ।
प्राणिनः सोऽहमेवास्मि चिदानन्दमयोऽद्वयः ॥ १ ॥

—*—

दीपकं निरूप्य क्रमप्राप्तं तत्सजातीयम् 'आवृत्ति' नामानमलङ्कारं प्ररूपयति—'अर्थावृत्तिः' इति । दीपकस्थाने=दीपकसम्भवे यत्र दीपकं तत्रैवेत्यर्थः, अर्थावृत्तिः पदावृत्तिः, उभयावृत्तिः एव च=एतदुक्तनामकम् 'अलङ्कारत्रयम् इष्टम्' कविभिरिति शेषः ।

तत्र वाक्यान्तर्गतपदप्रतिपाद्यस्य अर्थस्य वाक्यान्तरे तत्समानार्थकपदान्तरश्रवणात्मिका पुनः प्रतीतिः 'अर्थावृत्तिः' । अर्थस्य=एकवाक्यार्थस्य वाक्यान्तरे पुनरुपस्थितिरित्यर्थः । पदस्य वाक्यान्तर्गतस्य आवृत्तिः वाक्यान्तरे पुनरुच्चारणं नाम 'पदावृत्तिः' । एवमेकत्रोभयोरर्थपदयोः [ अर्थस्य पदस्य च ] आवृत्तिः 'उभयावृत्तिः' । एतदलङ्कारत्रयं दीपकस्य विषये एव भवति इति बोध्यम् । एवञ्चात्रापि योगार्थौ लक्षणम् ।

---

**(प्र०)** कति विधा आवृत्तेः ? कानि च तस्या उदाहरणानि ? तस्याः तस्या आवृत्तेरुदाहरणं दत्वा सामान्यविशेषलक्षणं योजय ? **(उ०)** अस्य पृ० पं० २०,२७ ।

परन्तु—दीपके वाक्यान्तरे तत्पदस्य अग्रहणेऽपि वाक्यान्तरसम्बन्धिनः पदस्य अनुषङ्गादिनाऽन्वयः क्रियते, आवृत्तौ तु तत्समानार्थकान्यपदस्य तत्पदस्यैव वा पुनरुपादानं भवतीत्युभयोर्विशेषः ॥ ११६ ॥

[ अर्थावृत्तेरुदाहरणम् ]

**विकसन्ति कदम्बानि स्फुटन्ति कुटजद्रुमाः ।**
**उन्मीलन्ति च कन्दल्यो दलन्ति ककुभानि च ॥ ११७ ॥**

तत्र 'अर्थावृत्ति'मुदाहरति—'विकसन्ति' इति । कदम्बानि=नीपाः विकसन्ति=प्रफुल्लन्ति । कुटजद्रुमाः=गिरिमल्लिकाः 'स्फुटन्ति'। कन्दल्यः=गुल्मविशेषाः उन्मीलन्ति । ककुभानि च=अर्जुनतरवः [तत्पुष्पाणीत्यर्थः] दलन्ति=स्फुटन्ति । अत्र 'विकसन्ति' इत्यादीनि पदानि भिन्नभिन्नधातुप्रकृतिकान्यपि समानार्थानीति पुनःपुनस्तस्यैवार्थस्यावर्त्तनात् 'अर्थावृत्ति'रिति नाम अलङ्कारः । वर्षाकालवर्णनमिदम् ।

'नीपप्रियककदम्बास्तु हलिप्रिये' 'अथ कुटजः शक्रो वत्सको गिरिमल्लिका' 'नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः' इति सर्वत्रामरः । 'कालधनौ कन्दली तु मृगगुल्मप्रभेदयो'रिति मेदिनी ॥ ११७ ॥

[ पदावृत्तेरुदाहरणम् ]

**उत्कण्ठयति मेघानां माला वृन्दं कलापिनाम् ।**
**यूनाञ्चोत्कण्ठयत्येष मानसं मकरध्वजः ॥ ११८ ॥**

पदावृत्तिमुदाहरति—'उत्कण्ठयति' इति । मेघानाम्=जीमूतानां माला=घटा कलापिनाम्=मयूराणां वृन्दम्=समूहम् उत्कण्ठयति=उद्ग्रीवयति । एषः मकरध्वजः=मीनकेतनः कामः यूनाम्=तरुणानाम् मानसम्=हृदयम् उत्कण्ठयति=उत्सुकयति । मेघाः कामोद्दीपका इति भावः ।

अत्र प्रथमवाक्यस्थितस्य 'उत्कण्ठयति' इति पदस्य हर्षवशाद् ऊर्ध्वग्रीवाकरणरूपोऽर्थः तस्यैव द्वितीयवाक्यान्तर्गतस्य भोगेच्छावशाद् वशीकरणरूपोऽर्थ इत्यर्थभेदेऽपि केवलं तस्यैव पदस्याऽवर्त्तनरूपेयं 'पदावृत्तिः' । नतु—अत्र पूर्ववद् अर्थस्यावृत्तिरिति भावः ॥११८॥

[ उभयावृत्तेरुदाहरणम् ]

**जित्वा विश्वं भवानत्र विहरत्यवरोधनैः ।**
**विहरत्यप्सरोभिस्ते रिपुवर्गो दिवङ्गतः ॥ ११९ ॥**

इत्यावृत्तिगणः ।

---

उभयावृत्तिमुदाहरति—'जित्वा' इति । अत्र=भूलोके भवान् विश्वं जित्वा=राजकं वशीकृत्येत्यर्थः अवरोधनैः=अन्तःपुरवर्गैः विहरति=रमते । ते=तव रिपुवर्गः=शत्रुगणः दिवम्=स्वर्गं गतः=प्राप्तः सन् अप्सरोभिः=देवाङ्गनाभिः 'विहरति' ।

---

१ त्रिविधाया आवृत्तेः निदर्शनानि अलङ्कारमणिहारेऽप्युक्तानि ततो द्रष्टव्यानि, ग्रन्थवृद्धिभिया नेहोद्धृतानि ।

अत्र त्वया शत्रवो हता इति व्यङ्ग्यम्, युद्धे मृतौ सत्यां स्वर्गप्राप्तिरिति सिद्धान्तात् शत्रूणामप्सरोविहारश्चोक्तः । पूर्ववाक्यस्थितस्य एकस्यैव 'विहरति' इति पदस्य पुनरुत्तर-वाक्येऽपि आवर्त्तनाकरणाद् अर्थस्य च समानत्वात् इयं पदतदर्थयोरावर्त्तनरूपा आवृत्तिः 'उभयावृत्ति'रित्युच्यते ।

इत्यावृत्तिगणः ।

---

इति दर्शितप्रकारः 'आवृत्ति'नामकालङ्कारस्य । गणः भेदः समाप्त इत्यर्थः ॥

'जयदेव'प्रभृतिभिस्तु—दीपकस्यैवायं विशेषः स्वीकृतः । तथाहि—

त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ।
वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी ॥
उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।
माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः ॥

दण्ड्यभिप्रायमनुसरद्भिः 'अप्पय्यदीक्षितै'स्तु— 'एवञ्चावृत्तीनां प्रस्तुताप्रस्तुतोभयविषयत्वाभावेऽपि दीपकच्छायापत्तिमात्रेण दीपकव्यपदेश' इत्यस्याः स्वातन्त्र्यमेव व्यक्तीकृतम् ॥ ११९ ॥

[ अथ सभेदस्य आक्षेपालङ्कारस्य लक्ष्यलक्षणद्वारा निरूपणम् ]

**प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा ।**
**अथास्य पुनराक्षेप्यभेदानन्त्यादनन्तता ॥ १२० ॥**

—*—

अनिषेध्यं निषेध्येषु निषेध्यावधिसाक्षिकम् ।
कालातीतं महामायं चिन्तये चिन्मयं महः ॥ १ ॥

—*—

क्रमप्राप्तमाक्षेपालङ्कारं निरूपयति—'प्रतिषेधोक्तिः' इति । प्रतिषेधोक्तिः=प्रतिषेधस्य निषेधस्य उक्तिः उक्तिमात्रम् केवलं कथनमेव नतु वस्तुतः प्रतिषेधः स आक्षेपः= आक्षेपनामालङ्कार इति लक्षणम् । वस्तुतः प्रतिषेधे वैचित्र्याभावान्नालङ्कारतेति भावः । 'प्रतिषेधाभास आक्षेप' इति तु परमार्थः । सच त्रैकाल्यापेक्षया=वर्त्तमानादित्रिविधकालवर्त्तिवस्तु-सम्बन्धापेक्षया त्रिधा=त्रिप्रकारो भवति अर्थात् वर्त्तमानाक्षेपः अतीताक्षेपः, भविष्यदाक्षेप इति सामान्यतः त्रिप्रकार आक्षेपः । अथ अस्य=प्रतिषेधस्य आक्षेप्यभेदानन्त्यात्=आक्षेप्याणां प्रतिषेध्यानां वस्तूनां ये भेदा विशेषाः तेषामनन्तत्वात् अनेकत्वात् अनन्तता=संख्यातीतता ज्ञेया इति शेषः । आक्षेपभेदगणनन्तु कर्तुं न शक्यत इत्यनन्तप्रभेदोऽयमाक्षेपः । उक्तञ्च रुद्रटेन—

वस्तु प्रसिद्धमिति यद् विरुद्धमिति वास्य वचनमाक्षिप्य ।
अन्यत्तथात्वसिद्ध्यै यत्र ब्रूयात् स 'आक्षेपः' ॥

---

(प्र०) आक्षेपस्य किं लक्षणम्? सामान्यतस्तस्य दण्डिसम्मताः कति भेदाः? तस्य आक्षेपस्योदाहरणानि च ब्रूत? (उ०) अस्य पृ० पं० १६ ।

अस्यायमर्थः—यत्र वक्ता [ यत् किमपि लोके प्रसिद्धमिति विरुद्धमिति वा कारणाद् वस्तु भूतं वर्त्तते ] अथास्य वचनमाक्षिप्य ततश्चान्यद्वस्त्वन्तरं तथात्वसिद्धयै=तस्य स्वरूपस्य सिद्ध्यर्थं ब्रूयात् स आक्षेपो नामालङ्कारः। एवञ्च प्रसिद्धाक्षेपः विरुद्धाक्षेप इत्याक्षेपस्य द्वौ प्रकाराविति रुद्रटमतम्। आद्यस्योदाहरणं यथा—

जनयति सन्तापमसौ चन्द्रकलाकोमलापि मे चित्रम्।
अथवा किमत्र चित्रं दहति हिमानी हि भूमिरुहः॥

अत्र चन्द्रकलायाः कोमलत्वेनापि सन्तापकत्वे सति विस्मयः परन्तु विरहे तथैव विरहिणां प्रतीतिर्भवतीति तस्याः तथावस्तुत्वं प्रसिद्धम्, ततश्च 'किमत्र चित्रम्' इत्येतेनाक्षिप्य तथात्वसिद्धौ हिमानीलक्षणमुपमानमुक्तम्। विरुद्धोदाहरणं यथा—

तव गणयामि गुणानहमलमथवाऽसत्प्रलापिनीं धिङ् माम्।
कः खलु कुम्भैरम्भो मातुमलं जलनिधेरखिलम्॥

अत्र समस्तानां गुणानां गणनाशक्यत्वाद्विरुद्धम्, अथवेत्यादिनाक्षिप्य तद्विरुद्धत्वसिद्ध्यर्थमन्यदुपमानमुक्तं 'क' इत्यादिना॥ १२०॥

[ वृत्ताक्षेपस्योदाहरणम् ]

**अनङ्गः पञ्चभिः पुष्पैर्विश्वं व्यजयतेषुभिः।**
**इत्यसम्भाव्यमथवा विचित्रा वस्तुशक्तयः॥ १२१॥**

तत्र अतीताक्षेपम् उदाहरति—'अनङ्ग' इति द्वाभ्याम्। अनङ्गः=मदनः इषुभिः=सायकरूपैः पञ्चभिः पुष्पैः=अरविन्दप्रभृतिभिः[1] विश्वम्=सकलं [ब्रह्माण्डं] जगत् व्यजयत=पराजितवान् इति=एतत् तस्य विश्वविजयिनः असम्भाव्यम्=सम्भावयितुमशक्यं विश्वासानर्हमित्यर्थः। अथवा वस्तुशक्तयः=सामर्थ्यविशेषाः विचित्राः=अनिर्वचनीयाः सन्तीति शेषः। अर्थात् यदसभाव्यं तदपि अलौकिकवस्तुशक्तिभिः सम्भाव्यमिव प्रदर्श्यते।

अयं भावः—अत्र विजेता अनङ्गः। विजेतुरेवानङ्गत्वं तावदसम्भाव्यं नहि कश्चिदङ्गरहितोपि जयी स्यात्, तत्रापि बाणानां पञ्चत्वं पुष्पमयत्वं सर्वथाऽसम्भवि, जेतव्यश्च विश्वोपि संसार इत्यहोऽसम्भाव्यपरम्परा, तथापि वस्तुशक्तिरूपविशेषाभिधानेच्छयोपनिबद्धत्वादस्य प्रतिषेधस्य आक्षेपालङ्कारता ज्ञेया। इत्थञ्च 'विशेषाभिधित्सयेष्टस्य यः प्रतिषेधः स आक्षेप' इत्याक्षेपलक्षणं निष्कृष्टम्भवति। 'व्यजयत' इति 'विपराभ्यां जेः' [ १।३।१९ ] इति पाणिनिसूत्रेण व्युपसृष्टात् 'जि' धातोरात्मनेपदम्। लङि प्रथमपुरुषैकवचने रूपम्॥१२१॥

[ उक्तोदाहरणे वृत्ताक्षेपस्वरूपसङ्गमनम् ]

**इत्यनङ्गजयायोगबुद्धिर्हेतुबलादिह।**
**प्रवृत्तैव यदाक्षिप्ता 'वृत्ताक्षेपः' स ईदृशः॥ १२२॥**

उक्तोदाहरणे वृत्ताक्षेपस्य लक्षणं घटयित्वा दर्शयति—'इति' इति। इति=उक्तेन प्रकारेण प्रवृत्ता=जाता अनङ्गजयायोगबुद्धिः=अनङ्गजयस्य कामजेतृत्वस्य अयोगः सम्बन्धाभावः

---

१ अरविन्दमशोकञ्च चूतञ्च नवमल्लिका।
नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकाः॥ इति।

तस्य बुद्धिः असम्भाव्यताज्ञानम् हेतुबलात्=वस्तुशक्तिरूपोपपत्तिबलात् यत् आक्षिप्ता=प्रतिषिद्धा अतः स ईदृशः=प्रसिद्धः वृत्ताक्षेपः='वृत्ताक्षेप' इति नाम आक्षेपभेद इत्यर्थः ॥१२२॥

[वर्त्तमानाक्षेपस्योदाहरणम्]

**कुतः कुवलयं कर्णे करोषि कलभाषिणि ! ।**
**किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे ॥ १२३ ॥**

वर्त्तमानाक्षेपमुदाहरति—'कुत' इति। हे ! कलभाषिणि !=मधुरालापिनि ! [प्रिये !] कुतः=कस्मात् हेतोः कर्णे=श्रोत्रे कुवलयम्=इन्दीवरं करोषि=धत्से । अस्मिन् कर्मणि=कर्णशोभारूपे व्यापारे अपाङ्गम्=कटाक्षं नेत्रप्रान्तभागम् किम् अपर्याप्तम्=असमर्थम् मन्यसे=भावयसे अर्थात् अपाङ्गेनैव कर्णशोभायाः सम्पन्नत्वात् व्यर्थस्ते कुवलयधारणप्रयासः ॥१२३॥

[ उक्ते लक्ष्ये वर्त्तमानाक्षेपसङ्गमनप्रकारः ]

**स वर्त्तमानाक्षेपोऽयं कुर्वत्येवासितोत्पलम् ।**
**कर्णे काचित् प्रियेणैवं चाटुकारेण रुध्यते ॥ १२४ ॥**

वर्त्तमानाक्षेपं घटयित्वा दर्शयति 'स' इति । असितोत्पलम् कर्णे कुर्वती एव [ नतु कृतवती न वा करिष्यन्ती ] काचित्=नायिका प्रियेण=कान्तेन चाटुकारेण=नर्मालापेन एवम्=दर्शितरीत्या, रुध्यते=प्रतिषिध्यते, अतो हेतोः वर्त्तमानस्य कुवलयधारणस्याक्षेपात् प्रतिषेधात् स अयम्=सुप्रसिद्धः 'वर्त्तमानाक्षेप' इत्युच्यते इति शेषः ॥ १२४ ॥

[ भविष्यदाक्षेपनिरूपणम् ]

**सत्यं ब्रवीमि न त्वं मां द्रष्टुं वल्लभ ! लप्स्यसे ।**
**अन्यचुम्बनसंक्रान्तलाक्षारक्तेन चक्षुषा ॥ १२५ ॥**
**सोऽयं 'भविष्यदाक्षेपः' प्रागेवातिमनस्विनी ।**
**कदाचिदपराधोऽस्य भावीत्येवमरुन्धयत् ॥ १२६ ॥**

भविष्यदाक्षेपं निरूपयति—'सत्यम्' इति द्वाभ्याम् । हे ! वल्लभ !=प्राणप्रिय ! [अहम्] सत्यं ब्रवीमि यत् त्वम् अन्यचुम्बनसंक्रान्तलाक्षारक्तेन=अन्या मद्भिन्ना या नायिका तस्याः चुम्बनेन संक्रान्ता या लाक्षा यावकरसः तया रक्तेन शोणितेन अथ च अनुरक्तेन चक्षुषा=दृष्ट्या माम् द्रष्टुम् न लप्स्यसे=मामालोकयितुं न पारयिष्यसे ।

उक्तमाक्षेपं घटयति—'सोऽयम्' इति । सोऽयम्=उक्ते काव्ये गुम्फितभविष्यदाक्षेपः यत्=यस्माद् हेतोः अतिमनस्विनी=अत्यन्तं मानवती व्यङ्ग्योक्तिचतुरधुरीणा काचित् नायिका कदाचित्=कालान्तरे अस्य=वल्लभस्य अपराधः=नायिकान्तरानुरक्तिरूपः भावी=भविष्यन्=इति एवम् अरुन्ध=दर्शितरीत्या प्रत्यषैत्सीत् अतोऽयं 'भविष्यदाक्षेप' उच्यते इति शेषः । 'अरुन्ध' । 'रुधिर्' आवरणे । रुधादिः । 'रुधादिभ्यः श्नम्' [ ३।१।७८ ] लङि प्रथमपुरुषैकवचने आत्मनेपदे रूपम् । अयमेव 'जयदेवेन' प्रकारान्तरेणोक्तः । यथा—

आक्षेपोन्यो विधौ व्यक्ते निषेधे च तिरोहिते ।
गच्छ गच्छसि चेत् कान्त ! तत्रैव स्याज्जनिर्मम ॥

यथा वा—

न चिरं मम तापाय तव यात्रा भविष्यति ।
यदि यास्यसि यातव्यमलमाशङ्कयापि ते ॥ इति ॥ १२५,१२६ ॥

[ धर्माक्षेपस्य उदाहरणसङ्गमने ]

**तव तन्वङ्गि ! मिथ्यैव रूढमङ्गेषु मार्दवम् ।**
**यदि सत्यं मृदून्येव किमकाण्डे रुजन्ति माम् ॥ १२७ ॥**
**धर्माक्षेपोयमाक्षिप्तमङ्गनागात्रमार्दवम् ।**
**कामुकेन यदत्रैवं कर्मणा तद्विरोधिना ॥ १२८ ॥**

आक्षेपस्य स्थूलं भेदत्रयमुक्त्वा तद्भेदानामनन्तत्वादपि शिष्यबुद्धिवैशद्याय कतिपयानपरानपि भेदान् निरूपयितुकामः प्रथमं 'धर्माक्षेपं' दर्शयति—'तव' इति द्वाभ्याम् । हे ! तन्वङ्गि !=कोमलशरीरे ! तव अङ्गेषु=अवयवेषु मार्दवम्=मृदोर्भावः कोमलता रूढम्=स्थितम् इति मिथ्या एव=मृषैव । यदि सत्यम्=अथैतत् सत्यम् अर्थात् तव अङ्गानि मृदूनि एव=कोमलानि एव [सन्ति] तदा अकाण्डे=अनवसरे निष्कारणम् मां किं रुजन्ति=किमर्थं सन्तापयन्ति । 'मां रुजन्ति' इति । 'रुजो' भङ्गे । तौदादिकः । नात्र भाववचनत्वम्, तथासति 'चोरस्य रुजति रोगः' इतिवत् 'रुजार्थानां भाववचनानामज्वरे' [ २ । ३ । ५४ ] इति धात्वर्थस्य भावकर्तृकत्वे कर्मणि शेषे षष्ठी स्यात् । ततश्च अशेषविवक्षायां कर्मणि नित्यं द्वितीयैव 'चोरं रुजति, नदी कुलानि रुजति' इत्यादिवद् इदमुक्तसूत्रस्य प्रत्युदाहरणं बोध्यम् । 'मार्दवम्' इति । 'पृथ्वादिभ्य इमनिज्वा' [ ५।१।१२२ ] अत्र सूत्रे वावचनमणादिसमावेशार्थमित्युक्तम् । अतः पक्षे भावेऽण् । पक्षान्तरे 'म्रदिमा' इति ज्ञेयम् ।

लक्षणमभिनीय दर्शयति—'धर्माक्षेप' इति । अत्र=उक्ते काव्ये कामुकेन=नायकेन अङ्गनागात्रमार्दवम्=नायिकावयवसौकुमार्यम् तद्विरोधिना कर्मणा=मार्दवप्रतिद्वन्द्विभूतया तापदानक्रियया आक्षिप्तम्=प्रतिषिद्धम् अतोऽयं मार्दवरूपस्य धर्मस्याक्षेपात् 'धर्माक्षेप' इति नाम आक्षेपभेद इति निर्गलितोऽर्थः ॥ १२७, १२८ ॥

[ धर्म्याक्षेपोदाहरणम् ]

**सुन्दरी सा न वेत्येष विवेकः केन जायते ।**
**प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः ॥ १२९ ॥**

धर्म्याक्षेपम् उदाहरति—'सुन्दरी' इति । सा=प्रसिद्धा नायिका 'सुन्दरी नवा, इति एष विवेकः=उक्ताकारो निर्णयः केन=कथं जायते=सम्भवति कथमपि न जायत इत्यर्थः । अत्रोपपत्तिमाह—'हि' इति । हि=यतः तरलम्=चपलं समन्तात् प्रसरत् प्रभामात्रम्=दीप्तिमात्रम् दृश्यते=आलोक्यते, न तदाश्रयः=तस्याः प्रभाया आश्रयः अधिकरणं नायिकाख्यं नैव [ दृश्यते ] दृग्गोचरीक्रियते इत्यर्थः ॥ १२९ ॥

[ धर्म्याक्षेपसङ्गमनम् ]

**धर्म्याक्षेपोऽयमाक्षिप्तो धर्मी धर्मं प्रभाह्वयम् ।**
**अनुज्ञायैव यद्रूपमत्याश्चर्यं विवक्षता ॥ १३० ॥**

धर्म्याक्षेपस्वरूपमुक्ते काव्ये घटयितुमाह—'धर्म्याक्षेप' इति । [ उक्ते पद्ये ] अत्याश्चर्यम्=अद्भुततमम् रूपम्=स्वरूपं नायिकायाः सौन्दर्यम् विवक्षता=वक्तुमिच्छता नायकेन प्रभाह्वयम्=प्रभाख्यम् धर्मम्=आधेयम् अनुज्ञाय एव=स्थापयित्वैव यद्=धर्मी=नायिकारूपः

आक्षिप्तः=प्रतिषिद्धः तस्मात्=धर्मिभूतनायिकाप्रतिषेधाद् अयं धर्म्याक्षेप इति नामालङ्कार उक्तो भवति । यथा वा ममापि अपह्नुतिमूलोत्प्रेक्षास्थले धर्म्याक्षेपध्वनिः ।

सुन्दरीति मुधा लोका वदन्ति मतिविह्वलाः ।
तरलेयं प्रभा नूनं पुञ्जीभूता विभाति मे ॥ इति ।

[ **मदीय**काव्यलतिकायाम् ]

अत्रापह्नुतिमूलोत्प्रेक्षया धर्म्याक्षेपालङ्कारध्वनिः ॥ १३० ॥

[ कारणाक्षेपोदाहरणम् ]

**चक्षुषी तव रज्येते स्फुरत्यधरपल्लवः ।**
**भ्रुवौ च भुग्नौ न तथाप्यदुष्टस्यास्ति मे भयम् ॥ १३१ ॥**

'कारणाक्षेपम्' उदाहरति— 'चक्षुषी' इति । तव चक्षुषी=नेत्रे रज्येते=रक्ते भवतः, अधरपल्लवः=अधर एव पल्लवः [ रूपकम् ] स्फुरति=चपलीभवति भ्रुवौ च=नेत्रोपरिभागस्थ-रोमराजी च भुग्नौ=कुटिले 'जाते' इति शेषः । तथापि=भयहेतौ विद्यमानेऽपि अदुष्टस्य=नायिकान्तरासक्तिरूपापराधशून्यस्य मे=मम भयम्=भीतिः न अस्ति=नैव भवतीत्यर्थः ।

यथा वा **मम**—

यमस्य दण्डो वरुणस्य पाशो वज्रं सुरेशितुः ।
प्राणिभीतिकरं[1] सर्वं धार्मिकस्य न भीतिदम् ॥

अत्र भयहेतूनां यमदण्डादीनां विच्छित्तिविशेषाविष्टः प्रतिषेधः कारणाक्षेपः ॥१३१॥

[ लक्ष्ये कारणाक्षेपसङ्गमनम् ]

**स एष कारणाक्षेपः प्रधानं कारणं भियः ।**
**स्वापराधो निषिद्धोऽत्र यत् प्रियेण पटीयसा ॥ १३२ ॥**

उक्ते पद्ये कारणाक्षेपं सङ्गमयति—'स' इति । अत्र=उक्ते काव्ये पटीयसा=अतिशयेन पटुरिति पटीयान् तेन निपुणतरेण प्रियेण=वल्लभेन भियः=भयस्य प्रधानम् मुख्यम् कारणम्=हेतुभूतः स्वापराधः [ नैजो दोषः ] यत्=यस्मात् हेतोः निषिद्धः=प्रतिषिद्धः तस्मात् स एषः=कविषु प्रसिद्धः 'कारणाक्षेप' इति नामाक्षेप इत्यर्थः ।

अपि चात्र 'न भयमस्ति' इत्येवंरूपेण भयात्मकस्य कार्यस्यापि प्रतिषेधः, तेनात्र कार्याक्षेपोपि इत्युभयोः सङ्करः । अत्र विभावनां वदन् कश्चिदलङ्कारप्रक्रियानभिज्ञः, नह्यत्र कारणं विना कार्यजन्म विवक्षितम् प्रत्युत भयकारणसद्भावेऽपि फलाभावः प्रतिपादितः तस्मात् 'कारणाभावेन कार्योत्पत्तिलक्षणा विभावनाप्यत्र सम्भवती'त्यभिधानमसत् इति सूक्ष्मं निरीक्ष्यम् ॥ १३२ ॥

[ कार्याक्षेपोदाहरणम् ]

**दूरे प्रियतमः सोऽयमागतो जलदागमः ।**
**दृष्टाश्च फुल्ला निचुला न मृता चास्मि किं न्विदम् ॥ १३३ ॥**

'कार्याक्षेपम्' उदाहरति—'दूरे' इति । प्रियतमः=प्रेयान् 'दूरे' वर्त्तत इति शेषः ।

---

१ 'प्राणि'पदं प्रकृते निषिद्धाचारवति लाक्षणिकम् ।

सः अयम्=ग्रैष्मसन्तापहारकत्वेन प्रसिद्धः जलदागमः=प्रावृट्कालः आगतः=समुपस्थितः फुल्लाः=विकसिताः निचुलाः च=स्थलवेतसाः [अपि] दृष्टाः=मया दृग्गोचरतां नीताः तथापि अहं न मृता अस्मि=एतादृशवर्षाकालस्य कामोद्दीपकत्वात् मम तन्व्याः सहसैव दशम्या दशया भाव्यम् [अत आह] किं नु इदम्=नितान्तमसम्भाव्यमेतदापतितमित्यर्थः ॥१३३॥

[लक्ष्ये कार्याक्षेपसङ्गमनम्]

**कार्याक्षेपः स कार्यस्य मरणस्य निवर्त्तनात् ।**
**तत्कारणमुपन्यस्य दारुणं जलदागमम् ॥ १३४ ॥**

उक्ते वाक्ये कार्याक्षेपस्वरूपं घटयति—'कार्याक्षेप' इति । [अत्रोक्ते काव्ये] दारुणम्=भयंकरम् तत्कारणम्=मरणकारणं जलदागमरूपम् उपन्यस्य=प्रतिपाद्य मरणस्य कार्यस्य=मृतिरूपस्य कार्यस्य निवर्त्तनात्=निषेधात् सः=प्रसिद्धः कार्याक्षेपः=कार्यप्रतिषेधहेतुक आक्षेपः कार्याक्षेपनामालङ्कारो ज्ञेयः । अत्र विशेषोक्तिरपि । तथाहि—

कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे ।
हृदि स्नेहक्षयो नाभूत् स्मरदीपे ज्वलत्यपि ॥ [जयदेवः]

नचोभयोर्लक्षणसाङ्कर्यमिति वाच्यम् उपधेयसङ्करेऽपि उपाधेरसाङ्कर्यात् । इदमुक्तं भवति—यत्र प्रसिद्धकारणसत्त्वे कार्याभाववर्णनं तत्र कार्याक्षेपः अप्रसिद्धकारणसत्त्वे फलाभाववर्णनं 'विशेषोक्ति' रित्यनयोरस्तु विशेषः, परमयमैच्छिक एवेति विवक्षैवोभयसंज्ञाभेदे बीजमिति ममाभाति ।

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः । अहो दैवगतिश्चित्रा तथापि न समागमः ॥
इत्यादावपि तथादर्शनादिति दिक् ॥ १३४ ॥

[अनुज्ञाक्षेपोदाहरणम्]

**न चिरं मम तापाय तव यात्रा भविष्यति ।**
**यदि यास्यसि यातव्यमलमाशङ्कयात्र मे ॥ १३५ ॥**

'अनुज्ञाक्षेपम्' उदाहरति—'न' इति । यात्रा=प्रवासः विदेशगमनम् मम=मत्कृते चिरम्=चिरकालपर्यन्तं तापाय=क्लेशाय न भविष्यति, तव वियोगेन मम प्राणानां शीघ्रमेव निर्गमनादिति व्यङ्ग्यम्। [हे ! स्वामिन् !] यदि यास्यसि=प्रवासं करिष्यसि तदा यातव्यम्=त्वं याहीत्यर्थः । अत्र अस्मिन् मद्विषये आशङ्कया अलम्=मयि प्रोषिते कथमियं स्थास्यतीति आशङ्का न कार्या । अत्र 'न चिरं मम तापाय' इत्युक्त्या स्वमरणसंसूचनेन गमननिषेधो गर्भीकृतः । अतोऽस्मद्भावनया त्वयम् 'अनुज्ञाभासाक्षेप' इति वक्तव्यं स्यात् । एवञ्च—भविष्यदाक्षेपसाङ्कर्यं न भविष्यति । यद्वा फले न विशेष इति यथान्यासमेवास्तु ॥ १३५ ॥

[अनुज्ञाक्षेपसङ्गमनम्]

**इत्यनुज्ञामुखेनैव कान्तस्याक्षिप्यते गतिः ।**
**मरणं सूचयन्त्यैव सोऽनुज्ञाक्षेप उच्यते ॥ १३६ ॥**

१ मात्रयापि विरहसहनाक्षमायाः ।

२ आभासस्वरूपानुज्ञाद्वारकाक्षेप अनुज्ञाभासाक्षेपः ।

अनुज्ञाक्षेपं सङ्गमयति—'इति' इति । इति=उक्तरीत्या दर्शितकाव्ये अनुज्ञामुखेन=प्रदेशयात्रानुमतिप्रकाशनद्वारा मरणम्=मृतिम् सूचयन्त्या=व्यञ्जयन्त्या 'एव' कयाचिन्नायिकया कान्तस्य गतिः=प्राणेश्वरस्य प्रवासगमनं यत् आक्षिप्यते=प्रतिषिध्यते अतो हेतोः सः अनुज्ञायाः प्रतिषेधाज्जायमान आक्षेप इति 'अनुज्ञाक्षेपः' इति 'कथ्यते' इति शेषः ॥ १३६ ॥

[ प्रभुत्वाक्षेपस्योदाहरणम् ]

**धनञ्च वहुलभ्यं ते सुखं क्षेमं च वर्त्मनि ।**
**नच मे प्राणसन्देहस्तथापि प्रिय ! मा स्म गाः ॥ १३७ ॥**

'प्रभुत्वाक्षेपम्' उदाहरति—'धनं च' इति । 'चः' भिन्नक्रमः 'सुखम्' इत्यस्यानन्तरं योज्यः । हे ! प्रिय !=कान्त ! ते=तव धनम्=वसु सुखम् च बहु=प्रचुरम् लभ्यम्=प्राप्यं [स्यात्] 'विदेशे' इति अध्याहार्यम् । तथा वर्त्मनि=मार्गे क्षेमं च=कल्याणमपि 'लभ्य' मिति पूर्वेणान्वयः । अर्थात् तव विदेशगमनस्य पन्था अपि उपद्रवरहितो भवेत् । [ अत्र विषये ] मे=मम नच प्राणसन्देहः=प्राणानां सन्देहः मरणसंशयोऽपि नास्त्येवेत्यर्थः । बहुधनं लब्ध्वा शीघ्रमेव तव प्रत्यावर्त्तनादिति भावः । तथापि=प्रचुरधनलाभादिसत्त्वेऽपि मा स्म गाः=[विदेशम्प्रति] मा याहि ।

'लभ्यम्' इत्यत्र 'पोरदुपधात्' [३।१।९७] इति सूत्रेण 'लभ्' धातोः 'यत्' प्रत्ययः । ण्यतोऽपवादः । 'मा स्म गाः' इति । 'इण्' गतौ । लुङि मध्यमपुरुषैकवचने रूपम् । 'इणो गा लुङि' [२।४।४५] इति गादेशः । 'गातिस्थाघुपाभूभ्यः परस्मैपदेषु' [२।४।७७] इति सिचो लुक् । 'न माङ्योगे' [६।४।७४] इति अडभावः ॥ १३७ ॥

[ लक्ष्ये प्रभुत्वाक्षेपसङ्गमनम् ]

**इत्याचक्षाणया हेतून् प्रिययात्रानुबन्धिनः ।**
**प्रभुत्वेनैव रुद्धस्तत् प्रभुत्वाक्षेप उच्यते ॥ १३८ ॥**

एतद् घटयति—'इति' इति । इति=एवमुक्तप्रकारे पद्ये प्रिययात्रानुबन्धिनः=प्रियस्य वल्लभस्य यात्रा विदेशगमनम् तदनुबन्धिनः तदनुकूलान् हेतून्=कारणानि आचक्षाणया=कथयन्त्या [ कयाचित् स्वाधीनभर्तृकया[1] ] यत् प्रभुत्वेन एव=स्वायत्ततयैव प्रियः=वल्लभः रुद्धः=यात्रातो निवारितः तत्=तस्माद् हेतोः [एषः] प्रभुतानिमित्तकत्वाद् आक्षेपस्य प्रभुत्वाक्षेपः=इतिनाम आक्षेपः 'उच्यते' सूरिभिरिति शेषः ।

[ अनादराक्षेपस्योदाहरणम् ]

**जीविताशा बलवती धनाशा दुर्बला मम ।**
**गच्छ वा तिष्ठ वा कान्त ! स्वावस्था तु निवेदिता ॥१३९॥**

'अनादराक्षेपम्' उदाहरति—'जीविताशा' इति । हे ! कान्त !=प्रिय ! मम जीविताताशा=जीवनकामना बलवती=प्रबला बहुकालं जीवितुं कामये धनाशा=धनकामना तु दुर्बला=क्षीणैव 'त्वयि प्रोषिते धनलाभो भवेत् इत्याकाङ्क्षा मम नास्ति' इति भावः । [अतः

१ सुरतातिरसैर्बद्धो यस्याः पार्श्वगतः प्रियः ।
सा मोदगुणसंयुक्ता भवेत्स्वाधीनभर्तृका ॥

कारणात्] गच्छ वा तिष्ठ वा=यथेच्छसि तथा कुर्वित्यर्थः, स्वावस्था तु निवेदिता=स्वाभिप्रायो मयाऽऽविष्कृत एव। विदेशं गते त्वयि मरिष्यामीति वस्तुध्वनिः ॥ १३६ ॥

[ लक्ष्ये अनादराक्षेपस्य सङ्गमनम् ]

**असावनादराक्षेपो यदनादरवद्वचः ।**
**प्रियप्रयाणं रुन्धत्या प्रयुक्तमिह रक्तया ॥ १४० ॥**

अत्र अनादराक्षेपं घटयति—'असौ' इति । इह=उक्ते काव्ये प्रियप्रयाणं=स्ववल्लभविदेशगमनं रुन्धत्या=प्रतिषेधन्त्या रक्तया=अनुरागवत्या कयाचिन्नायिकया यत् अनादरवत्='गच्छ वा तिष्ठ वा' इत्यनास्थासूचकं वचः=वाक्यम् प्रयुक्तम्=उक्तम् तत् असौ अनादरनिमित्तकत्वादाक्षेपस्य 'अनादराक्षेपः' इति भण्यते कविभिः इति शेषः ॥ १४० ॥

[ आशीर्वचनाक्षेपस्योदाहरणम् ]

**गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।**
**ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥ १४१ ॥**

'आशीर्वचनाक्षेपम्' उदाहरति—'गच्छ' इति । हे ! कान्त ! चेत्=यदि गच्छसि=यासि विदेशम् [तर्हि] गच्छ=याहि ते=तव पन्थानः=मार्गाः शिवाः=कल्याणकारिणः निष्प्रत्यूहाः सन्तु=भवन्तु । 'यत्र भवान् गतः ममापि जन्म तत्रैव भूयात्' [इत्याशासे] इत्याशीः । तव गमनोत्तरमेव मृता भविष्यामीति व्यङ्ग्यम् ॥ १४१ ॥

[ लक्ष्ये आशीर्वचनाक्षेपस्वरूपयोजनम् ]

**इत्याशीर्वचनाक्षेपो यदाशीर्वादवर्त्मना ।**
**स्वावस्थां सूचयन्त्यैव कान्तयात्रा निषिध्यते ॥ १४२ ॥**

उक्ते पद्ये आशीर्वचनाक्षेपलक्षणं योजयति—'इति' इति । इति=उक्तप्रकारे पद्ये आशीर्वादवर्त्मना=आशीर्वादप्रकाशनमार्गेण अर्थात् 'तव पन्थानः शिवाः सन्तु' इत्यालपनद्वारा, किंवा प्रियार्थस्य प्राप्तीच्छारूपा आशंसा आशीः तस्य वादः ममापीत्याद्युत्तरवाक्येन यत् कथनम् तद्द्वारा स्वावस्थाम्=भविष्यमरणात्मिकां दशां सूचयन्त्या=प्रकाशयन्त्या कयाचित् कान्तया कान्तयात्रा=कान्तस्य यात्रा प्रवासगमनं यत् निषिध्यते सोऽयम् 'आशीर्वचनाक्षेपः' ज्ञेय इति शेषः । स्वाभीष्टाशंसनपूर्वक आक्षेपः 'आशीर्वचनाक्षेप' इत्यर्थः । यद्यप्यत्र विधिवाक्यं तथापि निषेधो व्यङ्ग्यः ॥ १४२ ॥

[ परुषाक्षेपस्योदाहरणम् ]

**यदि सत्यैव यात्रा ते काप्यन्या मृग्यतां त्वया ।**
**अहमद्यैव रुद्धास्मि रन्ध्रापेक्षेण मृत्युना ॥ १४३ ॥**

'परुषाक्षेपम्' उदाहरति—'यदि'इति । यदि ते यात्रा=प्रदेशगमनं प्रयाणमिति यावत् सत्या एव [तदा] त्वया कापि अन्या=कान्ता मृग्यताम्=गवेष्यताम् । अहम्–[पुनः] अद्य एव रन्ध्रापेक्षेण=छिद्रान्वेषणशीलिना मृत्युना रुद्धा=आक्रान्ता अस्मि=भवामि । अद्यैव मे मृत्युर्भावीति व्यङ्ग्यम् ॥ १४३ ॥

[ परुषाक्षेपस्य लक्ष्ये योजनम् ]

**इत्येष परुषाक्षेपः परुषाक्षरपूर्वकम् ।**
**कान्तस्याक्षिप्यते यस्मात् प्रस्थानं प्रेमनिघ्नया ॥ १४४ ॥**

परुषाक्षेपं लक्ष्ये योजयति—'इति' इति । इति=दर्शितप्रकारवति काव्ये प्रेमनिघ्नया=प्रीतिपरवशया कयाचित् कान्तया परुषाक्षरपूर्वकम्=कठोरवर्णवचनपूर्वकं यस्मात् कान्तस्य प्रस्थानम्=विदेशगमनं आक्षिप्यते=निषिध्यते अतो हेतोः एषः परुषाक्षेपः=परुषवचनपूर्वकत्वादाक्षेपस्य उक्तसंज्ञक आक्षेपो ज्ञातव्य इत्यर्थः ॥ १४४ ॥

[ साचिव्याक्षेपस्योदाहरणम् ]

**गन्ता चेत् गच्छ तूर्णं ते कर्णौ यान्ति पुरा रवाः ।**
**आर्त्तबन्धुमुखोद्गीर्णाः प्रयाणपरिपन्थिनः ॥ १४५ ॥**

'साचिव्याक्षेपम्' उदाहरति—'गन्ता' इति । [ हे ! कान्त ! ] चेत्=यदि गन्ता=त्वं भाविगमनवानसि तदा तूर्णम्=क्षिप्रं गच्छ=याहि आर्त्तबन्धुमुखोद्गीर्णाः=आर्त्तानां मन्मृत्युना शोकपीडितानां बन्धूनां सम्बन्धिनां भ्रातृपुत्रादीनां मुखेन उद्गीर्णाः उच्चारिताः प्रयाणपरिपन्थिनः=प्रस्थानप्रतिकूलाः रवाः=मदीयमरणद्योतनाः वर्णाः मरणोत्तरमवश्यम्भावीनि रोदनवचांसीत्यर्थः, ते=तव कर्णौ=श्रुती पुरा यान्ति=यास्यन्ति निश्चयेन तव कर्णविषया भविष्यन्ति । 'यावत्पुरानिपातयोर्लट्' [३।३।४] इति सूत्रेण 'पुरा' योगे भविष्यति लट् । निपातश्चायं निश्चयं द्योतयति ॥ १४५ ॥

[ साचिव्याक्षेपस्य लक्ष्ये योजनम् ]

**साचिव्याक्षेप एवैष यदत्र प्रतिषिध्यते ।**
**प्रियप्रयाणं साचिव्यं कुर्वत्येवानुरक्तया ॥ १४६ ॥**

उक्तोदाहरणे साचिव्याक्षेपं योजयति—'साचिव्याक्षेप' इति । 'अत्र' उक्तपद्ये अनुरक्तया=प्रियानुरागवत्या कयापि नायिकया साचिव्यम्=तूर्णं गच्छ इति साहाय्यम् कुर्वत्या एव=व्यञ्जयन्त्या एव यत् प्रियप्रयाणम्=वल्लभविदेशगमनम् प्रतिषिध्यते=आक्षिप्यते स्वमरणद्योतनेन निवार्यते इति यावत् स एषः साचिव्याक्षेपः=साहाय्यसूचननिमित्तकत्वादाक्षेपस्य तथासंज्ञक आक्षेपः सुप्रसिद्ध इत्यर्थः ॥ १४६ ॥

[ यत्नाक्षेपस्योदाहरणम् ]

**गच्छेति वक्तुमिच्छामि त्वत्प्रियं मत्प्रियैषिणी ।**
**निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम् ॥ १४७ ॥**

'यत्नाक्षेपम्' उदाहरति—'गच्छ' इति । त्वत्प्रियम्=त्वदिष्टम् गच्छ इति=वाक्यं 'वक्तुमिच्छामि' [किन्तु] मुखात्=ममास्यात् मा गा इति=मा याहीत्येवमाकारा मत्प्रियैषिणी वाणी निर्गच्छति=मदीयहितकारिणी वाक् निःसरति इत्यहम् किं करोमि=किं कुर्याम् । गृहे तवावस्थानमेव ममेष्टमिति सर्वथा 'मा गा' इति व्यङ्ग्यम् ॥ १४७ ॥

[ यत्नाक्षेपस्य लक्ष्ये सङ्गमनम् ]

**यत्नाक्षेपः स यत्नस्य कृतस्यानिष्टवस्तुनि ।**
**विपरीतफलोत्पत्तेरानर्थक्योपदर्शनात् ॥ १४८ ॥**

यत्नाक्षेपस्वरूपमुक्ते लक्ष्ये योजयति 'यत्नाक्षेप' इति । अनिष्टवस्तुनि=गच्छेतिगमनविधिरूपे स्वानभिलषितेऽर्थे कृतस्य यत्नस्य=वचनोद्यमरूपस्य विपरीतफलोत्पत्तेः=विपरीतम् अनिष्टं यत् फलं 'मा गा' इति वाणीनिःसरणरूपं तस्योत्पत्तेः हेतोः आनर्थक्योपदर्शनात्=अनर्थसम्भावनाव्यञ्जनात् यत् प्रवासगमनमाक्षिप्तम्, सोयं यत्नमूलक आक्षेपः 'यत्नाक्षेपः' इत्युच्यते इति शेषः ॥ १४८ ॥

[ परवशाक्षेपस्योदाहरणम् ]

**क्षणं दर्शनविघ्नाय पक्ष्मस्पन्दाय कुप्यतः ।**
**प्रेम्णः प्रयाणं त्वं ब्रूहि मया तस्येष्टमिष्यते ॥ १४९ ॥**

'परवशाक्षेपम्' उदाहरति--'क्षणम्' इति । प्रस्थानेऽनुज्ञां प्रार्थयमानं नायिकम्प्रति कस्याश्चिदुक्तिरियम् । [हे ! प्रिय !] क्षणं दर्शनविघ्नाय=क्षणमभिव्याप्य दर्शनस्य विघ्नाय प्रतिबन्धकारिणे पक्ष्मस्पन्दाय=पक्ष्मणां चक्षुर्लोम्नां स्पन्दः किञ्चिच्चलनं तस्मै कुप्यतः=कोपं कुर्वाणस्य अर्थात् नेत्रलोम्नां स्पन्दनमप्यसहमानस्य प्रेम्णः=प्रियतायाः प्रणयादित्यर्थः, प्रयाणम्=प्रस्थानसम्मतिं ब्रूहि=प्रार्थयेथाः मया तस्य=प्रेम्णः इष्टम्=अनुकूलम् इष्यते=काम्यते। त्वं यात्रार्थमनुज्ञां प्रार्थयसे अहञ्च प्रेमपरवशा, यदि तस्यानुज्ञा [ प्रेम्ण आज्ञा ] स्यात् कामं त्वं याहीति भावः ॥ १४९ ॥

[ परवशाक्षेपसङ्गमनम् ]

**सोयं परवशाक्षेपो यत्प्रेमपरतन्त्रया ।**
**तया निषिध्यते यात्रेत्यन्यार्थस्योपदर्शनात् ॥ १५० ॥**

उक्तोदाहरणे परवशाक्षेपस्वरूपं योजयति---'सोऽयम्' इति । अत्र अन्यार्थस्योपदर्शनात्=प्रेमानुज्ञारूपस्यार्थस्य कथनात् यात्रा=प्रियस्य प्रवासगमनम् प्रेमपरतन्त्रया=अनुरागपरवशया कयाचित् नायिकया यत् निषिध्यते=आक्षिप्यते सः अयम्=अलङ्कारविदां प्रसिद्धः परवशतापूर्वकत्वादाक्षेपस्य 'परवशाक्षेपः' ज्ञेय इति शेषः ॥ १५० ॥

[ उपायाक्षेपस्योदाहरणम् ]

**सहिष्ये विरहं नाथ ! देह्यदृश्याञ्जनं मम ।**
**यदक्तनेत्रां कन्दर्पः प्रहर्तुं मां न पश्यति ॥ १५१ ॥**

'उपायाक्षेपम्' उदाहरति—'सहिष्ये' इति । हे ! नाथ !=अहं तव विरहम्=वियोगं सहिष्ये=मर्षिष्ये मम=मह्यम अदृश्याञ्जनम्=अदर्शनकारि सिद्धकज्जलं देहि=अर्पय यदक्तनेत्राम्=येन [अदृश्याञ्जनेन] अक्ते [अञ्चिते लिप्ते इति यावत्] नेत्रे [नयने] यस्याः तां तथाभूतां माम् कन्दर्पः=कामः प्रहर्त्तुम्=आहन्तुं मयि प्रहारं कर्त्तुम् न पश्यति=नैव पश्येदित्यर्थः । त्वद्वियोगे मम कन्दर्पजनितपीडाशङ्का वर्त्तते यदि सा निवर्त्तेत तदा सुखं तव प्रवसनम्, न काचिद्धानिरिति व्यङ्ग्यम् ॥ १५१ ॥

[ उपायाक्षेपसङ्गमनम् ]

**दुष्करं जीवनोपायमुपन्यस्योपरुध्यते ।**
**पत्युः प्रस्थानमित्याहुरुपायाक्षेपमीदृशम् ॥ १५२ ॥**

उपायाक्षेपं लक्ष्ये योजयति—'दुष्करम्' इति । [ उक्तोदाहरणे ] दुष्करम्=कर्त्तुम-

शक्यम् जीवनोपायम्=कामस्यादर्शनकारिसिद्धाञ्जनदानात्मकं प्राणनहेतुम् उपन्यस्य=उपनिबध्य कयाचित् गूढाभिप्रायवत्या नायिकया पत्युः=स्वामिनः प्रस्थानम्=प्रदेशगमनम् उपरुध्यते=निषिध्यते इति ईदृशम्=एवमाकारम् असम्भाव्योपायोपरोधद्वारकत्वाद् आक्षेपस्य उपायाक्षेपम् आहुः=कथयन्ति साहित्यविद इति शेषः ॥ १५२ ॥

[ रोषाक्षेपस्योदाहरणम् ]

**प्रवृत्तैव प्रयामीति वाणी वल्लभ ! ते मुखात् ।**
**अयतापि त्वयेदानीं मन्दप्रेम्णा ममास्ति किम् ॥ १५३ ॥**

'रोषाक्षेपम्' उदाहरति—'प्रवृत्ता' इति । [हे !] वल्लभ !=ते=तव मुखात्=वक्त्रात् प्रयामि=प्रतिष्ठे अहं प्रस्थानं करोमि इति=एवमाकारा वाणी=वाक् प्रवृत्ता एव=निर्गता एव। [एवंविधे प्रेम्णि एतादृशाया वाण्या निर्गमनं ते मन्दप्रेमाणं द्योतयति अर्थात् भवान् शिथिलानुरागः सम्पन्न इति व्यङ्ग्यम् । ] इदानीम्=सम्प्रति त्वया मन्दप्रेम्णा=मन्दानुरागेन अयता अपि=अगच्छता अपि मम किम् अस्ति=न किञ्चित् प्रयोजनमस्तीति भावः ।

'अयता' इति 'कटी' गतौ इत्यत्र प्रश्लिष्टात् भौवादिकात् 'इ' धातौ शतृप्रत्यये रूपम् ॥ १५३ ॥

[ रोषाक्षेपस्य लक्ष्ये योजनम् ]

**रोषाक्षेपोऽयमुद्रिक्तस्नेहनिर्यन्त्रितात्मना ।**
**संरब्धया प्रियारब्धं प्रयाणं यन्निषिध्यते ॥ १५४ ॥**

उक्तमाक्षेपं लक्ष्ये योजयति—'रोषाक्षेप' इति । उद्रिक्तस्नेहनिर्यन्त्रितात्मना=उद्रिक्तः समेधमानः अतिशयितो यः स्नेहः प्रेमा तेन निर्यन्त्रितः निगडितः बद्धः आत्मा हृदयं यस्याः सा तया तथाभूतया संरब्धया=[प्रणय]कोपवत्या कयाचित् व्यञ्जनचतुरधुरीणया नायिकया प्रियारब्धम्=वल्लभोपक्रान्तम् प्रयाणम्=प्रस्थानं यत् निषिध्यते=आक्षिप्यते अर्थात् गमनोद्यमभङ्गः क्रियते सः अयम्=कविसमाजप्रसिद्धः रोषाक्षेपः=रोषनिमित्तकत्वादाक्षेपस्य उक्तसंज्ञ आक्षेपालङ्कारो ज्ञेयः ॥ १५४ ॥

[ मूर्च्छाक्षेपस्योदाहरणम् ]

**मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्च्छिता ।**
**बुद्धा वक्ति प्रियं दृष्ट्वा किञ्चिरेणागतो भवान् ॥ १५५ ॥**

'मूर्च्छाक्षेपम्' उदाहरति—'मुग्धा' इति । मुग्धा=ऋजुप्रकृतिः कान्तस्य यात्रोक्तिश्रवणात् एव=प्रियस्य प्रस्थानवचनाकर्णनात् एव मूर्च्छिता=मोहं गता। बुद्धा=पुनः प्राप्तसंज्ञा सती [चैतन्यमागता] प्रियम्=कान्तम् दृष्ट्वा=विलोक्य किम् भवान् चिरेण आगतः=एतादृशविलम्बं विधाय आयातोसि इति वक्ति=लपति । मदीयकाव्यलतिकायान्तु—

यामीति वचः श्रुत्वा प्रियस्य प्रेमविह्वला ।
मूर्च्छामाप पुनः सञ्ज्ञां लब्ध्वा नोवाच किञ्चन ॥

इत्यत्र आक्षेपध्वनिः ॥ १५५ ॥

---

१ मुग्धालक्षणमुक्तं दर्पणे 'विश्वनाथेन'—

प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥ इति ।

[ मूर्च्छाक्षेपस्य सङ्गमनम् ]

**इति तत्कालसम्भूतमूर्च्छयाऽऽक्षिप्यते गतिः ।**
**कान्तस्य कातराक्ष्या यन्मूर्च्छाक्षेपः स उच्यते ॥ १५६ ॥**

उक्तमाक्षेपं लक्ष्ये घटयति—'इति' इति । इति=उक्तप्रकारवति काव्ये तत्कालसम्भूतमूर्च्छया=तत्काले तस्मिन् कान्तगमनाकर्णनसमये सम्भूता सम्यक् जाता मूर्च्छा विचैतन्यं यस्याः सा तया कातराक्ष्या=कातरे भाविविरहखेदविह्वले अक्षिणी यस्याः तया मुग्धया नायिकया यत् कान्तस्य=स्वप्रियस्य गतिः=प्रयाणम् आक्षिप्यते=निषिध्यते सः=ईदृशः प्रसिद्धः कविषु उक्तकाव्योपनिबद्धः मूर्च्छाक्षेपः=मूर्च्छानिमित्तक आक्षेपः मूर्च्छाक्षेपालङ्कार इति वर्त्तुलोर्थः ॥ १५६ ॥

[ अनुक्रोशाक्षेपस्योदाहरणम् ]

**नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम् ।**
**त्वद्द्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम् ॥ १५७ ॥**

अनुक्रोशाक्षेपम् उदाहरति—'न' इति । [हे ! राजन् !] त्वद्द्विषाम्=तव वैरिणाम् स्त्रीभिः=नायिकाभिः नीलम् उत्पलम्=इन्दीवरम् न आघ्रातम्=न सुगन्धितम्, न कर्णे कृतम्=श्रवणेऽपि नावतंसीकृतम्, मधुनि=मद्येऽपि च न अर्पितम्=सौरभसम्पादनाय नैव क्षिप्तम् किन्तु केवलं तत् दीर्घिकासु एव=वापीषु एव विशीर्णम्=शोषङ्गतम् ।

त्वत्तः प्राप्तपराजयानां तव शत्रूणां पलायनकरणात् तेन [नीलोत्पलेन] व्यवहाराभावात् तस्य शोष एव जातः । अत्र राजविषयको रतिभावो व्यङ्ग्यः ॥ १५७ ॥

[ अनुक्रोशाक्षेपस्य लक्ष्ये सङ्गमनम् ]

**असावनुक्रोशाक्षेपः सानुक्रोशमिवोत्पले ।**
**व्यावर्त्त्य कर्म तद्योग्यं शोच्यावस्थोपदर्शनात् ॥ १५८ ॥**

उक्तमाक्षेपं लक्ष्ये सङ्गमयति—'असौ' इति । [ उक्तोदाहरणे ] उत्पले=नीलेन्दीवरे सानुक्रोशम् इव=सदयमिव तद्योग्यम्=उत्पलयोग्यतोपेतं कर्म=स्त्रीकर्तृकघ्राणनप्रभृति व्यावर्त्त्य=प्रतिषिध्य शोच्यावस्थोपदर्शनात्=शोच्याया घृणितायाः अवस्थायाः भोगाभावेन दीर्घिकास्वेव शोषरूपाया वर्णनात् [अनुक्रोशनिमित्तकत्वादाक्षेपस्य] 'असौ अनुक्रोशाक्षेपः' उच्यते । 'आक्षेपस्यानुक्रोशजनकत्वादिति भाव' इति तु व्याख्यातुः कुभाव एव, अलङ्कारमर्मानभिज्ञानात् ॥ १५८ ॥

[ श्लिष्टाक्षेपस्योदाहरणम् ]

**अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके ।**
**मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना ॥ १५९ ॥**

श्लिष्टाक्षेपम् उदाहरति—'अमृतात्मनि' इति । [ हे ! प्रिये ! ] अमृतात्मनि=अमृतस्य [पीयूषस्य] इव आत्मा [स्वरूपं स्वभावो] वा यस्य पराह्लादकारिणि इत्येकोर्थः । अपरत्र—अमृतं जलम् आत्मा यस्य स तस्मिन् जलमये इत्यर्थः । पद्मानां द्वेष्टरि=कोमलतासुन्दरतादिगुणातिरेकात्पराजयकर्त्तरि, अन्यत्र सङ्कोचकारित्वात् - द्वेषिणि, स्निग्धतारके=स्निग्धे

सस्नेहे तारके अक्षिकनीनिके यस्य तथाभूते, अपरत्र स्निग्धाः प्रेमविषयाः तारकाः अश्विनी-भरणीप्रभृतयो यस्य तस्मिन् एवंविधविशेषणविशिष्टे तव मुखेन्दौ=मुखमेवेन्दुः तस्मिन् सति अपरेण=गगनस्थेन इन्दुना=शशिना किम्? न किञ्चित्प्रयोजनमस्तीति भावः ॥ १५६ ॥

[ श्लिष्टाक्षेपस्य सङ्गमनम् ]

**इति मुख्येन्दुराक्षिप्तो गुणान् गौणेन्दुवर्त्तिनः ।**
**तत्समान् दर्शयित्वेह श्लिष्टाक्षेपस्तथाविधः ॥ १६० ॥**

उक्तमाक्षेपं लक्ष्ये योजयति—'इति' इति । इति=अमुना दर्शितप्रकारेण [उक्त-काव्ये] गौणेन्दुवर्त्तिनः=गौणश्चासाविन्दुश्च अर्थात् गौणलक्षणाया आरोपित इन्दुभावो यस्मिन् तादृशे मुखे विद्यमानान् तत्समान्=मुख्येन्दुसदृशान् अमृतात्मत्वादीन् गुणान् दर्शयित्वा=स्पष्टयित्वा इह यत् मुख्येन्दुः=चन्द्रः आक्षिप्तः=प्रयोजनशून्यत्वेन प्रतिषिद्धः सोयम् तथाविधः=तादृशः श्लिष्टाक्षेपः=श्लेषहेतुकत्वात् श्लिष्टपदप्रतिपाद्यधर्मनिरूपणपूर्वकत्वात् उक्त-नामा आक्षेपालङ्कार इत्यर्थः ॥ १६० ॥

[ अनुशयाक्षेपस्योदाहरणम् ]

**अर्थो न सम्भृतः कश्चिन्न विद्या काचिदर्जिता ।**
**न तपः सञ्चितं किञ्चित् गतञ्च सकलं वयः ॥ १६१ ॥**

अनुशयाक्षेपं उदाहरति—'अर्थ' इति । कश्चित् अर्थः=सुवर्णरजतादिरूपं किञ्चित् धनम् न सम्भृतः=नैव सञ्चितः, काचित् विद्या=कला अर्थकरी न अर्जिता=नैव शिक्षिता, किञ्चित् तपः=चान्द्रायणादि ज्ञानमयं वा न सञ्चितम्=नैवानुष्ठितम्, वयः च=आयुश्च सक-लम्=समग्रम् [एव] गतम्=नष्टम्, मुधैव यापितं मयेति भावः । यथा वा **मम**—

नैव शास्त्रं न शस्त्रञ्च न हरिर्न शिवस्तथा ।
शिक्षितं पूजितश्चापि जीवनं निष्फलं गतम् ॥

अत्र 'यथासंख्य'मपि ॥ १६१ ॥

[ अनुशयाक्षेपस्य सङ्गमनम् ]

**असावनुशयाक्षेपो यस्मादनुशयोत्तरम् ।**
**अर्थार्जनादेर्व्यावृत्तिर्दर्शितेह गतायुषा ॥ १६२ ॥**

उक्तमाक्षेपं लक्ष्ये घटयति—'असौ' इति । इह=अत्र दर्शिते काव्ये यस्मात्=हेतोः अनुशयोत्तरम्=पश्चात्तापप्रचुरम् यथा स्यात्तथा अर्थार्जनादेः=धनसञ्चयादेः व्यावृत्तिः=प्रति-षेधः दर्शितः=व्यक्तीकृतः तस्मात् असौ अनुशयपूर्वकत्वात् प्रतिषेधस्य 'अनुशयाक्षेप' इति भण्यते ॥ १६२ ॥

[ संशयाक्षेपस्योदाहरणम् ]

**किमयं शरदम्भोदः किं वा हंसकदम्बकम् ।**
**रुतं नूपुरसंवादि श्रूयते तन्न तोयदः ॥ १६३ ॥**

'संशयाक्षेपम्' उदाहरति—'किम्' इति । अयम्=पुरोवर्त्ती किम् शरदम्भोदः=शर-त्कालिकः नीररहितः नीरदः किम्? वा=अथवा हंसकदम्बकम् किम्=हंसानां कदम्बकम् शर-

त्कालत्वात् मानसाख्यसरोवरादायतां हंसानां श्रेणिः किम्? परन्तु नूपुरसंवादि=मञ्जीरशिञ्जितसमम् रुतम्=रवः श्रूयते=आकर्ण्यते तत्=तस्माद्धेतोः तोयदः=मेघः न=नैवास्ति ॥१६३॥

[ संशयाक्षेपस्य सङ्गमनम् ]

**इत्ययं संशयाक्षेपः संशयो यन्निवर्त्यते।**
**धर्मेण हंससुलभेनास्पृष्टघनजातिना ॥ १६४ ॥**

संशयाक्षेपमुक्तोदाहरणे योजयति—'इति' इति । इति=उक्ते काव्ये वर्णितप्रकारेण अस्पृष्टघनजातिना=न स्पृष्टा घनजातिर्येन तादृशेन हंससुलभेन=हंसमात्रगामिना धर्मेण=रुताख्येन यत्=यतो हेतोः संशयः=संदेहः निवर्त्यते=अपाक्रियते तस्माद् अयं 'संशयाक्षेपः' ज्ञेयः। अर्थात् पूर्वं संशय्य पश्चात् प्रतिक्षेप्यतादर्शनात् तथा व्यपदेशः अस्मद्भावनया तु निश्चयान्तसन्देहान्नातिरिच्यते ॥ १६४ ॥

[ अर्थान्तराक्षेपस्योदाहरणम् ]

**चित्रमाक्रान्तविश्वोऽपि विक्रमस्ते न शाम्यति ।**
**कदा वा दृश्यते तृप्तिरुदीर्णस्य हविर्भुजः ॥ १६५ ॥**

'अर्थान्तराक्षेपम्' उदाहरति—'चित्रम्' इति । [हे! राजन्!] ते=तव विक्रमः=पराक्रमः प्रतापः आक्रान्तविश्वः=आक्रान्तं व्याप्तं विश्वं सकलं राष्ट्रं येन स तथाविधोऽपि न शाम्यति=शमं नोपैति, अन्यराजन्यविषयपराक्रमणकामनाया विरामं न भजते इति चित्रम्=महदाश्चर्यम्। अर्थान्तरमुपन्यस्यन् चित्रतां निषेधति—'कदा' इति । वा=अथवा उदीर्णस्य=प्रज्वलितस्य हविर्भुजः=वह्नेः तृप्तिः=दाहविषयेलम्बुद्धिः कदा दृश्यते=न कदाप्यालोक्यते इत्यर्थः। 'उदीर्णम्' इति उत्पूर्वकात् 'ॠ' धातोः 'क्त' प्रत्ययः। 'ॠत इद्धातोः' [७।१।१००] इति ॠकारस्य 'इत्' स च रपरः। ततः 'रदाभ्याम्०' [८।२।४२] इत्यनेन निष्ठातकारस्य नः 'र्वोरुपधायाः०' [८।२।७६] इति दीर्घे णत्वे च रूपम् ॥ १६५ ॥

[ अर्थान्तराक्षेपस्य सङ्गमनम् ]

**अयमर्थान्तराक्षेपः प्रक्रान्तो यन्निवार्यते ।**
**विस्मयोऽर्थान्तरस्येह दर्शनात् तत्सधर्मणः ॥ १६६ ॥**

उक्ते उदाहरणे अर्थान्तराक्षेपं घटयति—'अयम्' इति । इह=उक्ते पद्ये तत्सधर्मणः=तस्य विक्रमस्य सधर्मणः सदृशस्य अर्थान्तरस्य=हविर्भुजस्तृप्त्यभावरूपस्य अप्रकृतस्य दर्शनात्=निबन्धनात् यत्=चित्रमित्यादिना प्रक्रान्तः=प्रस्तुतः विस्मयः निवार्यते=अपोह्यते सोऽयम् 'अर्थान्तराक्षेप' इत्युच्यते। अर्थान्तरनिबन्धनपूर्वक आक्षेपः अर्थान्तराक्षेप इति निर्गलितोर्थः। अत्र राजविषयको रतिभावो व्यङ्ग्यः ॥ १६६ ॥

[ हेत्वाक्षेपस्योदाहरणम् ]

**न स्तूयसे नरेन्द्र ! त्वं ददासीति कदाचन ।**
**स्वमेव मत्वा गृह्णन्ति यतस्त्वद्धनमर्थिनः ॥ १६७ ॥**

'हेत्वाक्षेपम्' उदाहरति—'न' इति । हे ! नरेन्द्र !=नरपते ! त्वं ददासि इति=अर्थिकामान् प्रपूरयसि इति कृत्वा कदाचन=कदापि न स्तूयसे=न श्लाघ्यसे । यतः=हेतोः अर्थिनः=

याचकाः त्वद्धनम्=तव वसु स्वम् एव मत्वा=स्वकीयमिति ज्ञात्वा गृह्णन्ति=आददते । अनेन दातू राज्ञो दानशूरत्वं व्यज्यते ॥ १६७ ॥

[ हेत्वाक्षेपस्य सङ्गमनपूर्वकः प्रकरणोपसंहारः ]

**इत्येवमादिराक्षेपो हेत्वाक्षेप इति स्मृतः ।**
**अनयैव दिशान्योऽपि विकल्पः शक्य ऊहितुम् ॥ १६८ ॥**

—:*:—

[ इत्याक्षेपचक्रम् ]

—:*:—

हेत्वाक्षेपं लक्ष्ये योजयन् आक्षेपप्रकरणमुपसंहरति—'इति' इति । इति एवम् आदिः आक्षेपः उक्तकाव्ये प्रस्तुताया राजस्तुतेः 'स्वमेव गृह्णन्ति' इति हेतूपन्यासात् यो हेत्वाक्षेपः=हेतोराक्षेपः निषेधः सोऽयम् 'हेत्वाक्षेप' इति नामाक्षेपः स्मृतः=बुधैः कथित इति शेषः । अनया एव दिशा=मदीयनिरूपितमार्गेण अन्यः अपि=परोपि विकल्पः=आक्षेपभेदः स्वयम् ऊहितुम् शक्यः=विपश्चिद्भिरिति शेषः । पूर्वोक्तः कारणस्याक्षेपः अयन्तु कारणेनाक्षेप इत्यनयोर्भेदः ।

एवञ्च—वृत्ताक्षेपः, वर्त्तमानाक्षेपः, भविष्यदाक्षेपः, धर्माक्षेपः धर्म्याक्षेपः कारणाक्षेपः, कार्याक्षेपः, अनुज्ञाक्षेपः, प्रभुत्वाक्षेपः, अनादराक्षेपः, आशीर्वचनाक्षेपः, परुषाक्षेपः, साचिव्याक्षेपः, यत्नाक्षेपः, परवशाक्षेपः, उपायाक्षेपः, रोषाक्षेपः, मूर्च्छाक्षेपः, अनुक्रोशाक्षेपः, श्लिष्टाक्षेपः, अनुशयाक्षेपः, संशयाक्षेपः, अर्थान्तराक्षेपः, हेत्वाक्षेपः इति दण्डिना आक्षेपाणां [ २४ ] चतुर्विंशतिः संख्या मूले दर्शिता । इतरे भेदाः स्वयं गम्याः । अत्र बहुवक्तव्यमासीत् ग्रन्थवृद्धिभयात् कालातिपाताच्च नोक्तम् ॥ १६८ ॥

इति आक्षेपाणां चक्रं समुदायः ।

[ अथ—अर्थान्तरन्यासलक्षणम् ]

**ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन ।**
**तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥ १६९ ॥**

—:*:—

अर्थमर्थम्प्रति न्यासो यस्यास्ति नान्तरं क्वचित् ।
अबाह्यानन्तरं यत्तत्-ज्योतिरेकमुपास्महे ॥ १ ॥

——:——

क्रमप्राप्तमर्थान्तरन्यासं निरूपयन्नादौ तस्य लक्षणमाह—'ज्ञेय' इति । किञ्चन वस्तु प्रस्तुत्य=किमपि [ वस्तु ] वाक्यार्थरूपं प्रकृतरूपेणोपन्यस्य तत्साधनसमर्थस्य=[अप्रामाण्यशङ्कानिवारणाय सयुक्तिकत्वसम्पादने इति यावत् ] तस्य प्रकृतस्य साधने यथार्थतासम्पादने योग्यस्य, अन्यस्य वस्तुनः=अप्रकृतस्य वस्तुनः विषयस्य उपमानादेः यः न्यासः=कीर्त्तनं

---

१ अत्र [प्रकरणे] प्रश्ना उत्तराणि स्वबुद्ध्या स्वयं कल्पनीयानि ।

(प्र०) अर्थान्तरन्यासस्य किं लक्षणम् ? दृष्टान्तादिभ्यः तस्य को विशेषः ?

(उ०) अस्य पृ० पं० २० ।

कथनमिति यावत् सः अर्थान्तरन्यासः ज्ञेयः=ज्ञातव्यः अनुपद्यमानतया सम्भाव्यमानस्य अर्थस्योपपादनार्थं यद् अर्थान्तरं न्यस्यते सोऽर्थान्तरन्यास इति फलितम्।

इदन्तु बोध्यम्—दृष्टान्तालङ्कारे सामान्यं सामान्येन विशेषो विशेषेण समर्थ्यते, अत्र तु वैपरीत्यमिति ततो विशेषः। कारणेन कार्यस्य कार्येण वा कारणस्य समर्थनन्तु काव्यलिङ्गस्य विषयः, समर्थ्यसमर्थकयोः सामान्यविशेषभावसम्बन्धेऽर्थान्तरन्यासः तदितरसम्बन्धे काव्यलिङ्गमिति स्वीकारात् एतयोरपि विशेषः। प्रतिवस्तूपमायान्तु उपमानोपमेयभावो विवक्षितः, अत्र तु समर्थ्यसमर्थकत्वं विवक्षितमिति ततोऽस्य भेदः।

किञ्च—'प्रस्तुत्य' इति पूर्वकालिक'क्त्वा'प्रत्ययान्तपदोपन्यासेन पूर्वं समर्थनीयस्य प्रस्तुतस्योपन्यासः ततोऽप्रस्तुतस्य समर्थकस्येत्युक्तं भवति। परमिदं प्रायिकमेव।भाति विपर्ययस्यापि दर्शनात्। तथा च 'शिशुपालवधे' महाकाव्ये—

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि॥

अत्र प्रस्तुतायाः सन्ध्याया उत्तरार्धवाक्यार्थः समर्थनीयः, पूर्वार्धवाक्यार्थस्तु समर्थक इति वैपरीत्यं स्पष्टमेव।

अस्यैव सरस्वतीकण्ठाभरणकारमते 'विपरीतार्थान्तरन्यास' इति सञ्ज्ञा। एतावता प्रस्तुतवाक्यार्थस्य अप्रस्तुतवाक्यार्थेन समर्थनमर्थान्तरन्यास इति लक्षणसारो बोध्यः। अत एवाह वामनः—'उक्तसिद्धयै वस्तुनोऽर्थान्तरस्यैव न्यसनमर्थान्तरन्यासः' इति। [काव्या० सू० अध्या० ३। सू० २१] अस्यायमर्थः—उक्तसिद्धयै उक्तस्यार्थस्य सिद्धयै सिद्ध्यर्थं वस्तुनो वाक्यार्थान्तरस्यैव न्यसनमर्थान्तरन्यासः। 'वस्तु' ग्रहणात् पदार्थस्य हेतोर्न्यसनं नार्थान्तरन्यासः। तस्मात्समर्थ्यसमर्थकवाक्यार्थयोर्नैकान्तिकः पूर्वापरीभावो वर्त्तत इति ध्येयम्।

केचित्तु—न केवलं सामान्यविशेषयोरेव समर्थ्यसमर्थकत्वेऽर्थान्तरन्यासः यावत् कार्यकारणयोरप्यसौ समर्थकत्वे दृश्यते। अत एव अलङ्कारसर्वस्वकारेण उक्तम्—'सामान्यविशेष-

---

१ अर्थात् साधारणधर्मयोर्भिन्नत्वे [ भिन्नवाक्यप्रतिपाद्यत्वे सति ] बिम्बप्रतिबिम्बभावत्वे दृष्टान्तः। यथा—

अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला॥

अत्र कर्णे मधुधारावमनस्य नेत्रहरणस्य चेति द्वयोरेव उपमानोपमेयवाक्यगतयोर्भिन्नयोः परस्परं बिम्बप्रतिबिम्बभावः अर्थादेतयोः साम्यस्यैकरूप्यं नास्ति।

२ अर्थात् साधारणधर्मयोरभिन्नत्वे प्रतिवस्तूपमा, नह्यत्र वाक्यार्थयोः सामान्यविशेषभावः, नापि कार्यकारणभावः। यथा—

धन्यासि वैदर्भि! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकायाः यदब्धिमप्युत्तरलीकरोति॥

अत्र समाकर्षणम् उत्तरलीकरणञ्चैक एव धर्मः उपमानोपमेयवाक्ययोः पृथक् भिन्नपदाभ्यां निर्दिष्टः, तस्य स्वरूपभेदो नास्ति। कृतं विस्तरेण।

भावकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः' इति। कार्यकारणयोर्यथा—

पृथ्वि! स्थिरा भव भुजङ्गम! धारयैनां त्वं कूर्मराज! तदिदं द्वितयं दधीथाः।
दिक्कुञ्जराः! कुरुत तत्त्रितये दिधीर्षां देवः करोति हरकार्मुकमाततज्यम्॥

अत्र हरकार्मुकस्य आततज्यीकरणं पृथ्वीस्थैर्यादिप्रवर्त्तकत्वे कारणं समर्थकत्वेनोक्तम्[1]। यत्र कार्यं कारणस्य समर्थकं तद् यथा—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥

अत्र सहसाविधानाभावः विमृश्यकारित्वरूपञ्च कारणम् [ पूर्वार्धवाक्यार्थभूतम् ]। सम्पदां वरणञ्च तस्य कार्यम् [ उत्तरार्धवाक्यार्थभूतम् ]। तदेतत् कार्यम् उक्तकारणस्य समर्थकम्। अपरे तु-'वक्ष्यमाणो हेत्वलङ्कार एवायम्' इत्याचक्षते॥ १६९॥

[ अर्थान्तरन्यासस्य भेदाः ]

**विश्वव्यापी विशेषस्थः श्लेषाविद्धो विरोधवान्।**
**अयुक्तकारी युक्तात्मा युक्तायुक्तो विपर्ययः॥ १७०॥**
**इत्येवमादयो भेदाः प्रयोगेष्वस्य लक्षिताः।**
**उदाहरणमालैषां रूपव्यक्तौ निदर्श्यते॥ १७१॥**

अर्थान्तरन्यासस्य सामान्यलक्षणमुक्त्वा अथास्य भेदानाचष्टे—'विश्वव्यापी' इत्यादि द्वाभ्याम्। १. विश्वव्यापी=सर्वत्रसम्भवस्वभावः। २. विशेषस्थः=विशेषे तिष्ठतीति नतु सर्वत्र असर्वविषय इत्यर्थः। ३. श्लेषाविद्धः=श्लिष्टविशेषणसम्पन्नः। ४. विरोधवान्=प्रकृतार्थविरोधी विरुद्धधर्मद्वयवानिति यावत्। ५. अयुक्तकारी=स्वभावतोऽयुक्तकर्मकर्त्ता। ६. युक्तात्मा= युक्तः आत्मा स्वरूपं यस्य सः औचितीविशिष्टः औचित्येन प्रयुज्यमानस्वरूप इत्यर्थः। ७. युक्तायुक्तः=युक्तोऽप्ययुक्तकारी कियतांशेन युक्तः कियतांशेन चायुक्त इत्यर्थः। ८. विपर्ययः= विपरीतगुणोपपन्नः अस्य=अर्थान्तरन्यासस्य प्रयोगेषु=काव्येषु इति एवमादयः भेदाः=उक्तप्रकाराः विश्वव्यापिप्रभृतयो विशेषाः लक्षिताः=उदाहरणत्वेन निरूपिताः, एषाम्=उक्तभेदानाम् उदाहरणमाला=लक्ष्याणि रूपव्यक्तौ=रूपस्य भेदस्य व्यक्तौ स्पष्टीकरणे निदर्श्यते=निरूप्यते अर्थात् एषां लक्षणानि अकृत्वैव उदाहरणानि वर्ण्यन्ते किन्तु दर्शितयोगबलादेव लक्षणसिद्धिर्ज्ञातव्येति भावः। आदिपदेन भोजराजाद्युक्तानाकादिभेदसङ्ग्रहः॥ १७०, १७१॥

[ विश्वव्यापिन उदाहरणम् ]

**भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि।**
**पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते॥ १७२॥**

तत्र तावत् विश्वव्यापिनमर्थान्तरन्यासमुदाहरति—'भगवन्तौ' इति। भगवन्तौ= ऐश्वर्यशालिनौ जगन्नेत्रे=जगतां नयने जगन्नेत्रभूतौ जगत्प्रकाशकावित्यर्थः। एवम्भूतौ सूर्याचन्द्रमसौ अपि अस्तं गच्छत एव इति त्वं पश्य=आलोचय। उक्तं [पदत्रयगतविशेषमर्थं] सामान्येन समर्थयति—'नियतिः' इति। नियतिः=दिष्टम् केन लङ्घ्यते=अतिक्रम्यते न केनापीति भावः।

---

१ कार्यस्य पृथ्वीस्थैर्यादेः समर्थकमित्यर्थः।

अत्र समर्थकः चतुर्थः पादः विश्वव्यापी । ब्रह्मादिकीटपर्यन्तानां विश्वेषामेव नियतिपरवशत्वात् तेन च सर्वस्य विश्वस्य नियतिपरवशत्वेन चतुर्थपादगतत्वेन सामान्येन पूर्वपादत्रयगतो विशेषरूपोऽर्थः सयुक्ति समर्थितः तदयं 'विश्वव्यापी' अर्थान्तरन्यास उच्यते। 'सूर्याचन्द्रमसौ' इत्यत्र [द्वन्द्वे] उत्तरपदे 'देवताद्वन्द्वे च' [६।३।२६] इति सूत्रेण आनङ् ॥ १७२॥

[ विशेषावस्थस्योदाहरणम् ]

**पयोमुचः परीतापं हरन्त्येव शरीरिणाम् ।**
**नन्वात्मलाभो महतां परदुःखोपशान्तये ॥ १७३ ॥**

'विशेषस्थम्' उदाहरति—'पयोमुचः' इति । पयोमुचः=नीरदाः शरीरिणाम्=तनुभृताम् परीतापम्=घर्मजनितं सन्तापम् हरन्ति एव=दूरीकुर्वन्त्येव । उक्तमर्थं समर्थयति—'ननु' इति। परदुःखोपशान्तये=परेषां दुःखस्य कष्टस्य उपशान्तये निवारणाय महताम्=महापुरुषाणाम् आत्मलाभः=जन्म शरीरधारणमिति यावत् 'ननु' निश्चितमित्यर्थः ।

अत्र पूर्वपादद्वयगतेन तापहरणरूपेण सामान्येन अर्थेन उत्तरवाक्यगतः 'महता'मित्यादिप्राणिरूपो विशेषार्थः समर्थित इति सामान्येन विशेषसमर्थनात् 'विशेषस्थ' संज्ञोऽयमर्थान्तरन्यासः । महतामेवेयं प्रकृतिर्न सर्वसाधारणस्येति विशेषस्थता ॥ १७३ ॥

[ श्लेषाविद्धस्योदाहरणम् ]

**उत्पादयति लोकस्य प्रीतिं मलयमारुतः ।**
**ननु दाक्षिण्यसम्पन्नः सर्वस्य भवति प्रियः ॥ १७४ ॥**

'श्लेषाविद्धम्' उदाहरति—'उत्पादयति' इति। मलयमारुतः=दक्षिणानिलः लोकस्य=जनस्य प्रीतिम्=मुदम् उत्पादयति=जनयति । उक्तं समर्थयति—'ननु' इति । दाक्षिण्यसम्पन्नः=दाक्षिण्येन सारल्यादिगुणेन सम्पन्नः सम्बद्धः, अथ च [दाक्षिण्यसम्पन्नः] दक्षिणादिगागतः ननु=निश्चयेन सर्वस्य प्रियः=विश्वस्यापि हर्षकारी 'भवति' ।

अत्र सामान्येन श्लेषमूलकतया उत्तरार्धः पूर्वार्धगतविशेषार्थसमर्थकः इति 'दाक्षिण्य' पदस्य श्लिष्टत्वेन श्लेषाविद्धोऽयमर्थान्तरन्यासः ॥ १७४ ॥

[ विरोधवत उदाहरणम् ]

**जगदानन्दयत्येष मलिनोऽपि निशाकरः ।**
**अनुगृह्णाति हि परान् सदोषोऽपि द्विजेश्वरः ॥ १७५ ॥**

विरोधवन्तम् उदाहरति—'जगत्' इति। एषः=पुरतो दृश्यमानः निशाकरः=दोषाकरश्चन्द्रः मलिनः=कलङ्कवान् अपि जगत्=विश्वम् आनन्दयति=आह्लादयति । उक्तमर्थं समर्थयति—'अनुगृह्णाति' इति। हि=तथाहि द्विजेश्वरः=द्विजानां ब्राह्मणानामीश्वरः ब्राह्मणोत्तमः सदोषः=कोपादिदोषयुक्तोऽपि परान्=अन्यान् अनुगृह्णाति=शास्त्रोपदेशादिद्वारा अनुकम्पयति।

अत्र द्विजराजत्वं धर्मः समानः निशाकरे ब्राह्मणे च विद्यमानत्वात्, एवं द्विजराजत्वेन सामान्येन धर्मेण उत्तरार्धगतो ब्राह्मणानुग्रहरूपो विशेषोऽर्थः समर्थितः, स च दोषवत्त्वानुग्रहवत्त्वयोर्द्वयो परस्परं विरुद्धयोर्धर्मयोरुक्तौ 'विरोधवान्' इतिनामाऽर्थान्तरन्यासः ।

अत्र सदोषद्विजेश्वरपदे श्लिष्टे तथापि तदर्थप्रयुक्तः समर्थ्यसमर्थकभावो नात्राभिप्रेतः अपितु मलिनत्वसदूषणत्वयोरेव समर्थ्यसमर्थकत्वं साधर्म्यादिति प्रेक्ष्यम् ॥ १७५ ॥

[ अयुक्तकारिण उदाहरणम् ]

**मधुपानकलात् कण्ठान्निर्गतोऽप्यलिनां ध्वनिः ।**
**कटुर्भवति कर्णस्य कामिनां पापमीदृशम् ॥ १७६ ॥**

अयुक्तकारिणम् उदाहरति--'मधुपानकलात्'इति । मधुपानकलात्=मधुपानेन पुष्परसपानेन कलात् मधुरात् अलिनाम्=भ्रमराणाम् कण्ठात्=गलात् निर्गतः=निर्यातोऽपि ध्वनिः=गुञ्जारवः कामिनाम्=मदनावेशवतां विरहिणाम् कर्णस्य=श्रोत्रस्य कटुः=पीडाकरः भवति इति शेषः । एतत्समर्थयति--'पापम्' इति । तथाहि ईदृशम्=वर्णितप्रकारं पापम्=दुःखप्रदमित्यर्थः ।

अत्र पापरूपार्थसमर्थकेन मधुरभ्रमरध्वनिरूपेणार्थेन पापरूपो विशेषोऽर्थः समर्थितः, स चायुक्तकारितयोपनिबद्ध इति 'अयुक्तकारो' अयमर्थान्तरन्यासः ॥ १७६ ॥

[ युक्तात्मन उदाहरणम् ]

**अयं मम दहत्यङ्गमम्भोजदलसंस्तरः ।**
**हुताशनप्रतिनिधिर्दाहात्मा ननु युज्यते ॥ १७७ ॥**

युक्तात्मानम् उदाहरति--'अयम्' इति । अयम्=सेव्यमानः अम्भोजदलसंस्तरः=अम्भोजानां कमलानां यानि दलानि तेषां संस्तरः आस्तरणम् कमलदलकल्पिता शय्येत्यर्थः, मम अङ्गम्=गात्रम् जातावेकवचनम्, दहति=तापयति । उक्तमर्थं समर्थयति—'हुताशन' इति । हुताशनप्रतिनिधिः=हुताशनो वह्निः तस्य प्रतिनिधिः प्रतिभूः वह्नितुल्य इत्यर्थः, एवम्भूतो यः सः दाहात्मा=दाहः दाहजनकः आत्मा स्वभावो यस्य सः तथाभूतः युज्यते=सम्भाव्यते ननु=निश्चितमेतत् । यो हि यस्य प्रतिनिधिर्भवति स तत्स्वभावो भवतीति युक्तता ।

अत्र अम्भोजदलरूपायाः शय्याया हुताशनप्रतिनिधित्वेन अङ्गानां दाहकारित्वं युक्तमिति सामान्येन पद्मसंस्तरकर्तृकदाहकत्वरूपो विशेषः समर्थित इति 'युक्तात्मा' नामायमर्थान्तरन्यासः ॥ १७७ ॥

[ युक्तायुक्तस्योदाहरणम् ]

**क्षिणोतु कामं शीतांशुः किं वसन्तो दुनोति माम् ।**
**मलिनाचरितं कर्म सुरभेर्नन्वसाम्प्रतम् ॥ १७८ ॥**

'युक्तायुक्तम्' उदाहरति—'क्षिणोतु' इति । शीतांशुः=चन्द्रः कामम्=यथेष्टं मां क्षिणोतु=हिनस्तु व्यथयतु इति यावत् कलङ्किनस्तस्य परपीडाकरत्वं युक्तमेवेति भावः । वसन्तः=मधुमासः किम्=कथं मां दुनोति=किमर्थं पीडयतीत्यर्थः । एतदुक्तं समर्थयति 'मलिनाचरितम्' इति । सुरभेः=प्रसिद्धस्य अथ च वसन्तस्य मलिनाचरितम्=मलिनेन पापिना अथच कलङ्किना आचरितं कृतं परपीडात्मकं कर्म असाम्प्रतम्=अयुक्तमेव । ननु=निश्चितमेतत् ।

अत्र उत्कृष्टस्य सुरभेरपकृष्टकर्मकरणमित्ययुक्तम्, अपकृष्टस्य मलिनस्य चन्द्रस्यापकृष्टकर्मकरणमिति युक्तम् । तदुत्तरार्धेन 'मलिनाचरित' मित्यादिना सामान्येन युक्तरूपेण अर्थेन पूर्वार्धगतः कलङ्किचन्द्रकर्तृकपरपीडारूपो विशेषोऽर्थः समार्थितः । तदयं 'युक्तायुक्त' इति नामाऽर्थान्तरन्यासः ॥ १७८ ॥

[ विपर्ययस्योदाहरणम् ]

**कुमुदान्यपि दाहाय किमयं कमलाकरः ।**
**नहीन्दुगृह्येषूग्रेषु सूर्यगृह्यो मृदुर्भवेत् ॥ १७६ ॥**

---

इत्यर्थान्तरन्यासचक्रम्

---

'विपर्ययम्' उदाहरति—'कुमुदानि' इति । कुमुदानि=कैरवाणि रात्रिविकाशीनि नीलोत्पलानीत्यर्थः, अपि=अतिशीतलान्यपि दाहाय=तापाय 'सन्ति' इति शेषः । अयं कमलाकरः=पद्मसंहतिः किम्=कुतो न दाहकरः स्यात् अर्थात् सूर्यपक्षपातिनां पद्मानां दाहकत्वं स्यात् इति किमु वक्तव्यम् । उक्तमर्थं समर्थयति—'नहि' इति । इन्दुगृह्येषु=इन्दुपक्षाश्रितेषु [ इन्दुः चन्द्रः ] शीतलस्यापि चन्द्रस्य पक्षपातिषु उग्रेषु=दाहकेषु सत्सु सूर्यगृह्यः=सूर्यपक्षाश्रितः नहि=नैव मृदुः=कोमलः भवेत्=स्यात् । यत्र इन्दुपक्षोऽपि क्लेशकरः तत्र सूर्यपक्षस्य क्लेशकरत्वमिति किमु वक्तव्यमिति भावः ।

अत्र इन्दुगृह्यसूर्यगृह्योक्तिरूपेण सामान्येनार्थेन पूर्वार्धगतः कुमुदकर्तृकदाहकत्वरूपो विशेषः समर्थितः । सच दाहकरणानर्हस्यापि कुमुदस्य दाहकरणरूपविपरीतार्थकारित्वात् 'विपर्यय' नामाऽर्थान्तरन्यासः । 'इन्दुगृह्येषु' 'सूर्यगृह्यः' इत्युभयत्रापि 'पदास्वैरिबाह्यापक्ष्येषु च' [३।१।११९] इति पाणिनिसूत्रेण 'पक्ष्ये'ऽर्थे ग्रहेर्धातोः 'क्यप्' । ग्रन्थान्तरेषु प्रकारान्तरेणाप्ययमुदाहृतः । तत्र साधर्म्यात् सामान्यं विशेषेण यथा—

बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा ॥

अत्र नगापगानां क्षुद्राणामपि महानद्या सह मिलित्वा समुद्रप्राप्तिरूपेण परार्धगतेन विशेषेण पूर्वार्धगतः अतिक्षुद्रस्यापि बृहत्सहायत्वे कार्यान्तगमनरूपः सामान्यमर्थः समर्थितः । सच 'गच्छति अभ्येति' क्रियाभ्यां साधर्म्येणोक्तः ।

विशेषेण सामान्यस्य समर्थनं वैधर्म्येण यथा—

गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ।

अत्र 'धुर्य' इत्यादिना पूर्वार्धगतः सामान्यरूपोऽर्थः 'गौर्गलि' रित्युत्तरार्धगतेन विशेषेण समर्थितः । गुणाभावात् गलिर्गौर्न धुरि नियुज्यते इति वैधर्म्यम् । 'गलिः[3]' दुष्टो वृषभः । सामान्येन विशेषस्य समर्थनं साधर्म्येण यथा—

---

१ नगापगा पर्वतजा क्षुद्रा नदी । जातावेकवचनम् ।

२ धुरं कार्यभारं वहतीति धुर्यः=धूर्वहनक्षमः । 'धुरो यड्ढकौ' [४।४।७७] इति पाणिनिसूत्रेण 'यत्' प्रत्ययः ।

३ 'अथ गलिर्दुष्टवृषः शक्तोऽप्यधूर्वहः' इति हेमचन्द्रः ।

निर्वेदमाप नच न भ्रमणे मुरारिर्नाचिन्तयद्व्यसनमृक्षबिलप्रवेशे ।
आहृत्य हन्त ! मणिमेव पुरं प्रपेदे स्यादुद्यमः कृतधियां हि फलोदयान्तः ॥

अत्र पादत्रयगतः मुरारिनिष्ठो निर्वेदाभावादिरूपो विशेषार्थः चतुर्थपादगतेन फलप्राप्तिपर्यन्तेन महासत्त्वनिष्ठोद्यमरूपेण सामान्येनार्थेन सोपपत्ति समर्थितः । निर्वेदाभावादेः फलावसाप्त्युद्यमस्य च परस्परं साधर्म्यम् ।

सामान्येन विशेषस्य समर्थनं वैधर्म्येण यथा--

प्राणाः प्रयान्तु मे सद्यस्त्यक्ताया नन्दसूनुना ।
सत्यं ता एव जीवन्तु यासां फलवती कृतिः ॥

अत्र पूर्वार्धगतो कृष्णविरहिण्याः प्राणप्रयाणव्याहरणरूपो विशेषार्थः परार्धगतेन नन्दसूनुसमागमानुकूलव्यापारवतीनां जीवनरूपेण सामान्येन सोपपत्ति समर्थितः । 'अहं न जीवामि ता जीवन्तु' इति वैधर्म्यम् । अनया रीत्याऽन्यत्राप्यूह्यम् ॥ १७६ ॥ [1]

[ व्यतिरेकस्य लक्षणम् ]

**शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।**
**तत्र यद्भेदकथनं व्यतिरेकः स कथ्यते ॥ १८० ॥**

———*———

(प्र०) कतिविधोऽर्थान्तरन्यासो दण्डिनाऽवतारितः ? कानि च तेषामुदाहरणानि ? तत्सङ्गमनप्रकारश्च कीदृशः (उत्तरम्--सटीकमूलग्रन्थानुपूर्व्या ज्ञेयम्)

१ यथा वा—

तथापि विघ्नं नृप ! तावकीनैः प्रह्वीकृतं मे हृदयं गुणौघैः ।
वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः ॥ [भारविः]

अत्र पूर्वार्धगतः नृपतियुधिष्ठिरनिष्ठगुणावर्जनकारित्वरूपः व्यासमुनिगतो विशेषार्थः परार्धगतेन भव्येषु वीतरागकर्तृकेन पक्षपातरूपेण सामान्येन अर्थेन समर्थितः । तत्र गुणैरावर्जनभव्यपक्षपातभवनयोः परस्परं साधर्म्यमित्ययं सामान्येन विशेषसमर्थनरूपः साधर्म्यादर्थान्तरन्यासः । वाग्भटस्तु अर्थान्तरन्यासं द्विधाचष्टे—

उक्तसिद्ध्यर्थमन्यार्थन्यासो व्याप्तिपुरःसरः ।
कथ्यतेऽर्थान्तरन्यासः श्लिष्टोऽश्लिष्टश्च स द्विधा ॥

(प्र०) व्यतिरेकं लक्ष्यलक्षणतत्सङ्गमनप्रकारेण प्रपञ्चय? (उ०) अस्य पृ० पं० १३। अग्रे व्यतिरेकप्रकरणान्तञ्च । तत्र श्लेषसहितो यथा—

शोणत्वमक्ष्णामसिताब्जभासां गिरां प्रचारस्त्वपरप्रकारः ।
बभूव पानान्मधुनो वधूनामचिन्तनीयो हि सुरानुभावः ॥

अत्र मद्यपानान्नेत्राणां रक्तत्वमुक्तम् तस्योक्तस्य सिद्ध्यर्थं चतुर्थः पादोऽर्थान्तरत्वेनोपन्यस्तः । अत्र सुरा देवाः मदिरा वा । अयञ्च सामान्येन विशेषसमर्थनरूपः श्लिष्टशब्दनिबन्धनः । श्लेषरहितो यथा—

यस्य सर्वास्ववस्थासु व्यतिरेको न दृश्यते ।
प्रत्यग्रूपं तमात्मानं केपि जानन्ति सूरयः ॥ १ ॥

—*—

क्रमप्राप्तं व्यतिरेकं लक्षयति—'शब्दोपात्ते' इति । द्वयोः वस्तुनोः=उपमानोपमेययोः सादृश्ये=औपम्ये शब्दोपात्ते=साधारणधर्मवाचकेवादिशब्दप्रयोगेण झटिति बोधिते वा= अथवा साधारणधर्मवाचकशब्दानुपादानात् व्यञ्जिते [ अर्थबललभ्ये ] सति तत्र=तयोः यद् भेदकथनम्=वैधर्म्यप्रतिपादनम् सः व्यतिरेकः=व्यतिरेकनामालङ्कारः कथ्यते=भण्यते । तथा च—'उपमानादुपमेयस्याधिक्यवर्णनं व्यतिरेक' इति व्यतिरेकस्वरूपसारः। आह च वामनः— 'उपमेयस्य गुणातिरेकित्वं व्यतिरेकः' [काव्या०सू० अध्या० ३।२२] उदाहृतश्च तेनैव यथा—

---

शुण्डादण्डैः कम्पिताः कुञ्जराणां पुष्पोत्सर्गं पादपाश्चारु चक्रुः ।
स्तब्धाकाराः किं प्रयच्छन्ति किञ्चित् कान्ता यावन्नोद्धतैर्वीतशङ्कम् ॥

अत्र पूर्वार्धोक्तस्यार्थस्य परार्धोक्तेनार्थेन [सामान्येन] समर्थनम् । नात्र किमपि श्लिष्टं पदम् । यथा वा—

कृतानतिर्व्याहृतसान्त्ववादे जातस्पृहः पुण्यजनः स जिष्णौ ।
इयाय सख्याविव सम्प्रसादं विश्वासयत्याशु सतां हि योगः ॥ [भारविः]

अत्र पादत्रयगतो जिष्णौ पुण्यजनोपस्थितिरूपो वाक्यार्थो विशेषरूपः सत्सङ्गति-कर्तृकविश्वासनरूपेण सामान्येन समर्थितः । एवमाद्यूह्यम् । यथा वा —

अमानवं जातमजं कुले मनोः प्रभाविनं भाविनमन्तमात्मनः ।
मुमोच जानन्नपि जानकीं न यः सदाभिमानैकधना हि मानिनः ॥ [माघः]

अत्र जानक्या अमोचने कारणं चतुर्थपादोक्तमिति कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः । यथा वा —

मा गाश्चिरायैकचरः प्रमादं वसन्नसम्बाधशिवेऽपि देशे ।
मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुष्वपि मानसानि ॥ [भारविः]

अत्र प्रमादनिषेधलब्धेनाऽप्रमादरूपकारणेन अर्थाप्राप्तिरूपस्य कार्यस्य व्यतिरेक-कारणसमर्थात् वैधर्म्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः ।

**उद्भटभट्टेन**—[भट्टोद्भटेन] अर्थान्तरन्यासस्य कृतं लक्षणं [तस्यापि प्राचीनत्वात्] परिचयार्थं प्रदर्श्यते—

समर्थकस्य पूर्वं यद्वचोऽन्यस्य च पृष्ठतः ।
विपर्ययेण वा यत्स्याद् हिशब्दोक्त्याऽन्यथापि वा ॥
ज्ञेयः सोऽर्थान्तरन्यासः ॥ [ काव्यालङ्कारसारे ]

१ अत्रेदं बोध्यम् – सूत्रे 'गुण' शब्दो धर्ममात्रपरः । स च वाच्यो गम्यश्चेति द्विविधः । तादृशोपि यदा उपमानगतः तदपकर्षहेतुः । उपमेयगतश्चेत् तदुत्कर्षहेतुश्च । उपमानगतत्वे उपमेयस्य गुणातिरेकित्वमार्थिकम् । उपमेयगतत्वे तस्य गुणातिरेकित्वं शाब्दमिति अत्रत्य 'कामधेनु' व्याख्यासारः ।

सत्यं हरिणशावाक्ष्याः प्रसन्नसुभगं मुखम् ।
समानं शशिनः किन्तु स कलङ्कविडम्बितः ॥

अत्र शब्दोपात्तं साम्यम्, तद्वाचकसमानशब्दप्रयोगात् । गम्यमानगुणो व्यतिरेको यथा–

कुवलयवनं प्रत्याख्यातं नवं मधु निन्दितं
हसितममृतं भग्नं स्वादोः पदं रससम्पदः ।
विषमुपहितं चिन्ताव्याजान्मनस्यपि कामिनां
चतुरललितैर्लीलातन्त्रैस्तवार्धविलोकितैः ॥

नायिकां प्रति नायकोक्तिरियम् । अत्र कान्ताया अर्धविलोकितैः कुवलयवनादीनां प्रत्याख्यानादिभिरुपमेयस्याधिक्यमार्थिकम् । अर्थान्तरन्यासे व्यतिरेको विपक्षव्यावृत्तिः अत्र तु गुणाधिक्यमिति भेद इति कामधेनुव्याख्या ।

[ शब्दोपात्तसादृश्ये एकव्यतिरेकस्योदाहरणतद्योजने ]

**धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वतः ।**
**गुणैस्तुल्योसि भेदस्तु वपुषैवेदृशेन ते ॥ १८१ ॥**
**इत्येकव्यतिरेकोऽयं धर्मेणैकत्रवर्त्तिना ।**
**प्रतीतिविषयप्राप्तेर्भेदस्योभयवर्त्तिनः ॥ १८२ ॥**

अनेकभेदभिन्ने व्यतिरेके आदौ एकव्यतिरेकं निरूपयति—'धैर्य०' इत्यादि द्वाभ्याम् । [ हे ! राजन् ] त्वम् धैर्य०=धैर्यम्=धृतिः औद्धत्याभावः अपरित्यक्त-[ अनतिक्रान्त ]-मर्यादत्वञ्च । लावण्यम्=सौन्दर्यं लवणोपेतजलमयत्वञ्च । गाम्भीर्यम्=दुरवगाहप्रकृतित्वं अतलस्पर्शित्वञ्च । एतत्प्रमुखैः धैर्यप्रभृतिभिः गुणैः=धर्मैः उदन्वतः=समुद्रस्य तुल्यः=सदृशः 'असि' । तेषु ते=तव भेदः तु=उदन्वतो वैधर्म्यम् ईदृशेन वपुषा=अतिसुन्दरकरचरणादि-मता शरीरेणैव 'वर्त्तते' इति शेषः ।

अत्र प्रस्तुतो राजा उपमेयः, अप्रस्तुतः समुद्र उपमानम् । धैर्यादिसाधारणधर्मयो-गात्मकं तयोः सादृश्यञ्च धैर्यादिशब्दोपात्तम् । परमीदृशपदबोध्यं समुद्रविलक्षणं सुन्दरक-रचरणादिमत्त्वोपेतं वपुष्मत्त्वमेवोपमानाद् वैधर्म्यरूपं भेदः । सच अप्रस्तुतात् समुद्रात् प्रस्तुतस्य राज्ञ उत्कर्षपर्यवसायीति एकमात्रगतत्वात् भेदकधर्मस्य 'एकव्यतिरेको'यमुच्यते इत्याशयं हृदि कृत्वा द्वितीयश्लोकेन तस्य स्वरूपं सङ्गमयन्नाह—'इति' इति । इति=उक्ते काव्ये एकत्र=उपमेये एव वर्त्तिना=वर्त्तमानेन धर्मेण=सुन्दरवपुष्मत्त्वरूपेण उभयवर्त्तिनः= उपमानोपमेयनिष्ठस्य भेदस्य=उत्कर्षापकर्षरूपवैधर्म्यस्य प्रतीतिविषयप्राप्तेः=प्रतीतिगोचरत्वात् हेतोः 'अयम् एकव्यतिरेकः' इत्यन्वितार्थः, एकमात्रगतधर्मेण उभयोः परस्परं व्यतिरिच्य-मानत्वात् 'एकव्यतिरेक' इति पिण्डीभूतोऽर्थः ॥ १८१,१८२ ॥

[ उभयव्यतिरेकस्योदाहरणतत्सङ्गमने ]

**अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि ।**
**असावञ्जनसङ्काशस्त्वन्तु चामीकरद्युतिः ॥ १८३ ॥**

---

। उपमेयोत्कर्षस्य उपमानापकर्षस्य चेत्यर्थः ।

**उभयव्यतिरेकोऽयमुभयोर्भेदकौ गुणौ ।**
**कार्ष्ण्यं पिशङ्गता चोभौ यत्पृथग्दर्शिताविह ॥ १८४ ॥**

'उभयव्यतिरेकं' निरूपयति—'अभिन्नवेलौ' इति द्वाभ्याम्। अम्बुराशिः=पयोनिधिः [सागरः] भवान् अपि=एतौ उभौ अपि अभिन्नवेलौ=न भिन्ना अतिक्रान्ता वेला मर्यादा याभ्यां तौ तादृशौ, गम्भीरौ=दुरवगाहौ एकः स्वभावतः द्वितीयः अगाधतश्च । तु=किन्तु असौ=अम्बुराशिः अञ्जनसङ्काशः=श्यामलः सागरजलस्य श्यामवर्णत्वादिति भावः । त्वम् तु चामीकरद्युतिः=चामीकरं सुवर्णं तस्य द्युतिरिव द्युतिर्यस्य काञ्चनकान्तिः अतिमनोहर इत्यर्थः । उक्तोदाहरणे उभयव्यतिरेकलक्षणं घटयति—'उभयव्यतिरेक' इति । इह=उक्तपद्ये यत्=यस्मात् हेतोः कार्ष्ण्यम्=कृष्णवर्णता श्यामलत्वम् पिशङ्गता च=गौरवर्णत्वञ्च इति उभयोः=उपमानोपमेययोः भेदकौ=विशेषकौ उभौ=उक्तौ द्वौ धर्मौ पृथग्दर्शितौ=विभज्य उक्तौ अतः अयम् 'उभयव्यतिरेक' इत्युच्यते इति शेषः ।

अत्र उपमानं समुद्रः । उपमेयो राजा । तयोरुपमानोपमेययोर्वर्त्तमानौ एव उत्कर्षापकर्षबोधकौ अञ्जनसङ्काशत्वचामीकरद्युतित्वरूपभेदकौ धर्मौ शब्दोपात्तौ इत्युभयव्यतिरेकोऽयम् ॥ १८३, १८४ ॥

[ सश्लेषव्यतिरेकस्योदाहरणतत्सङ्गमने ]

**त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।**
**अयन्तु युवयोर्भेदः स जडात्मा पटुर्भवान् ॥ १८५ ॥**
**स एष श्लेषरूपत्वात् सश्लेष इति गृह्यताम् ।**
**साक्षेपश्च सहेतुश्च दर्श्यते तदपि द्वयम् ॥ १८६ ॥**

सश्लेषव्यतिरेकं निरूपयति—'त्वम्' इति द्वाभ्याम् । [हे ! राजन् ! ] त्वम् समुद्रश्च इति द्वावपि दुर्वारौ=अवार्यवीर्यौ एकः असह्यप्रतापत्वात् दुर्धर्षः परः अनिवार्यमहावीचित्वादसुगश्च, तथा महासत्वौ=महत् सत्त्वं गुणो यस्य इति राजपक्षे । महान्ति सत्वानि नक्रादयो जलचरा यस्मिन् इति समुद्रपक्षे । सतेजसौ=तेजसा सह वर्त्तमानौ । राजपक्षे तेजः प्रतापः, समुद्रपक्षे तेजो बडवानलः । एवं सत्यपि साम्ये अयन्तु युवयोर्भेदः=प्रसिद्धो विशेषः यत् सः=समुद्रः जडात्मा=जलात्मा प्रचुरजलस्वरूपः डलयोरैक्यात् शीतलस्वभावो मूर्खश्चेत्यर्थः, भवान् पटुः=तीक्ष्णस्वभावः चतुरश्च ।

उक्तोदाहरणे 'उक्तव्यतिरेकं' सङ्गमयति—'स' इति अर्धश्लोकेन । स एषः=प्रसिद्धः श्लेषरूपत्वात् भेदकयोः जडात्मत्वपटुत्वधर्मयोः श्लिष्टत्वात् सश्लेषः=सश्लेषव्यतिरेकः इति नाम्ना गृह्यताम्=ज्ञायताम् ।

नन्वत्र दुर्वारत्वादिश्लिष्टसाधारणधर्मविशेषणद्वारैव सश्लेष इति व्यवहारः स्यादिति चेत् ? न, तथासति सर्वत्रैव क्वचित् शब्दश्लेषस्य क्वचिद् अर्थश्लेषस्य च सम्भावना दुर्वारा यतः । एवञ्च भेदकविशेषणानां श्लिष्टत्वे एव सश्लेषव्यतिरेक इति व्यवहार इति सिद्धान्तः ।

अन्यदपि व्यतिरेकस्य भेदद्वयं वक्तुं प्रतिजानीते-'साक्षेप' इति । स्पष्टम् । अनयोरुदाहरणमनुपदं यथाक्रमं वक्ष्यति ॥ १८५, १८६ ॥

[ साक्षेपव्यतिरेकस्योदाहरणम् ]

**स्थितिमानपि धीरोऽपि रत्नानामाकरोऽपि सन् ।**
**तव कक्षां न यात्येव मलिनो मकरालयः ॥ १८७ ॥**

'साक्षेपव्यतिरेकम्' उदाहरति—'स्थितिमान्' इति । स्थितिमान् अपि=अनतिक्रान्तवेलोपि, धीरः अपि=गम्भीरोपि, रत्नानाम्=माणिक्यादीनाम् आकरः=उत्पत्तिस्थानमपि मकरालयः=समुद्रः तव कक्षाम्=तुलां न एव याति=नैव प्राप्नोति तव सादृश्यं न भजत इत्यर्थः । यतः मलिनः=मलीनः कृष्णवर्णत्वात् । राजपक्षे—स्थितिमान् अनुल्लङ्घितधर्ममर्यादः । धीरः=धैर्यशाली गभीरः=दुरवगाह्यप्रकृतिः । तथा रत्नपदोपलक्षितशौर्यादिगुणानामाकरः आश्रयः इति बोध्यम् ।

अत्रोपमाननिष्ठो मलिनत्वं धर्मः, तेन सहोपमेये साम्यस्याक्षेपात् साक्षेपव्यतिरेकः । साम्याक्षेपप्रयुक्तो व्यतिरेकः 'साक्षेपव्यतिरेक' इत्यस्य स्वरूपनिष्कर्षः ॥ १८७ ॥

[ सहेतुकव्यतिरेकस्योदाहरणम् ]

**वहन्नपि महीं कृत्स्नां सशैलद्वीपसागराम् ।**
**भर्तृभावाद् भुजङ्गानां शेषस्त्वत्तो निकृष्यते ॥ १८८ ॥**

सहेतुकव्यतिरेकम् उदाहरति—'वहन्' इति । सशैलद्वीपसागराम्=शैलाः पर्वताः, द्वीपानि जम्ब्वादीनि, सागराः समुद्राः, तैः सहिताम् कृत्स्नाम्=सम्पूर्णाम् महीम्=पृथ्वीम् वहन् अपि=धारयन्नपि शेषः=अनन्तः भुजङ्गानाम्=सर्पाणाम्=पक्षान्तरे विटानाम् भर्तृभावात्=स्वामित्वात् त्वत्तः=त्वया [भवत्सकाशात्] निकृष्यते=निहीनीक्रियते । अत्रोपमानं शेषः, तस्य चोपमेयापेक्षया न्यूनत्वे भुजङ्गपतित्वं हेतुरिति 'सहेतुकव्यतिरेकः' । 'त्वत्तः' इति 'सार्थात् हीयते' इत्यादिवत् अपादानसंज्ञकस्यापि कर्तृत्वविवक्षया 'निकृष्यते' इति कर्मणि तङ् ॥ १८८ ॥

[ अथ प्रतीयमानसादृश्यनिरूपणप्रतिज्ञा ]

**शब्दोपादानसादृश्यव्यतिरेकोऽयमीदृशः ।**
**प्रतीयमानसादृश्योऽप्यस्ति सोऽप्यभिधीयते ॥ १८९ ॥**

शब्दोपात्तसादृश्यनिमित्तकं व्यतिरेकं निरूपयित्वा प्रतीयमानसादृश्यनिमित्तकं व्यतिरेकं प्रतिजानीते—'शब्दोपादान०' इति । शब्दः=साधारणधर्मवाचकं पदम् तस्य सादृश्यं=तदुपादानेन यत् सादृश्यम् तस्य व्यतिरेकः तन्निमित्तकः अयं व्यतिरेकः । ईदृशः=दर्शितभेदः उक्तः=निरूपित इत्यर्थः । प्रतीयमानसादृश्यः अपि अस्ति=प्रतीयमानं गम्यं सादृश्यं यत्र स तथाविधोपि व्यतिरेकोऽस्ति सः अपि अभिधीयते=अनन्तरमेव निरूप्यते ॥ १८९ ॥

[ प्रतीयमानसादृश्यव्यतिरेकस्योदाहरणम् ]

**त्वन्मुखं कमलश्चेति द्वयोरप्यनयोर्भिदा ।**
**कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम् ॥ १९० ॥**

'प्रतीयमानसादृश्यव्यतिरेकम्' उदाहरति—'त्वन्मुखम्' इति । त्वन्मुखम्=तवाननम् कमलं च=पद्मञ्च इति अनयोः द्वयोः अपि भिदा=वैधर्म्यम् 'अस्ति' इति शेषः । तथाहि—कमलम्=पद्मम् जलसंरोहि=जले जातं जलजमिति यावत्, त्वन्मुखम्=तवाननं त्वदुपाश्रयम्=

त्वदेकमात्राश्रितम्। अत्र मुखकमलयोः सौरभविकाशादिसाधारणधर्मो नोपात्तः, केवलमसौ प्रसिद्धिवशात्प्रतीयत इति 'प्रतीयमानव्यतिरेकः' ॥ १६० ॥

**अभ्रूविलासमस्पृष्टमदरागं मृगेक्षणम्।**
**इदन्तु नयनद्वन्द्वं तव तद्गुणभूषितम् ॥ १६१ ॥**

अन्यदुदाहरति—'अभ्रूविलासम्' इति। मृगेक्षणम्=हरिणनयनम् अभ्रूविलासम्=नास्ति भ्रुवोर्विलासः कटाक्षपातो यस्य तत् तथाविधम्, तथा अस्पृष्टमदरागम्=न स्पृष्टः प्राप्तः मदरागः मदपानजनितं लौहित्यं येन तत् तथाविधम् 'अस्ति' इति शेषः। नयनद्वन्द्वम्=अक्षियुगलम् तद्गुणभूषितम्=भ्रूविलासि स्पृष्टमदरागञ्च वर्त्तत इत्यर्थः।

अत्र मृगेक्षणमुपमानम्, [कान्ता]नयनद्वन्द्वमुपमेयम्। तयोः परस्परं विरुद्ध एव धर्मो दर्शितः। तेन सादृश्यं व्यङ्ग्यमिति अयमपि 'प्रतीयमानव्यतिरेकः' ॥ १६१ ॥

**पूर्वस्मिन् भेदमात्रोक्तिरस्मिन्नाधिक्यदर्शनम्।**
**सदृशव्यतिरेकश्च पुनरन्यः प्रदर्श्यते ॥ १६२ ॥**

उक्तयोरुदाहरणयोः प्रयोजनं दर्शयन् 'सदृशव्यतिरेकं' प्रतिजानीते—'पूर्वस्मिन्' इति। पूर्वस्मिन्=त्वन्मुखमित्याद्युदाहरणे भेदमात्रोक्तिः=उपमानोपमेययोर्द्वयोः भेदको यो धर्मः आश्रयभेदरूपः केवलं तस्यैव कथनं नतु सौरभवत्त्वादिसादृश्योक्तिः [नतु प्रस्तुतस्योत्कर्षोक्तिरित्यर्थः]। तत्तु गम्यमेव। अस्मिन्=अभ्रूविलासमित्यादिद्वितीयोदाहरणे आधिक्यदर्शनम्=उपमानोपमेययोरुत्कर्षापकर्षप्रतिपादकैर्विशेषणैः उपमेयभूतनयनसम्बन्धिन उत्कर्षमात्रस्य व्यञ्जनतेति द्वयोर्व्यतिरेकयोर्विशेषः। पुनः अन्यः=आभ्यां विलक्षणप्रकारः सदृशव्यतिरेकः=सादृश्यनिमित्तको व्यतिरेकः सदृशधर्ममात्रप्रयोगेण व्यतिरेकः 'सदृशव्यतिरेकः' प्रदर्श्यते ॥ १६२ ॥

[ शाब्दसादृश्यस्य सदृशव्यतिरेकस्योदाहरणम् ]

**त्वन्मुखं पुण्डरीकञ्च फुल्ले सुरभिगन्धिनी।**
**भ्रमद्भ्रमरमम्भोजं लोलनेत्रं मुखन्तु ते ॥ १६३ ॥**

सदृशव्यतिरेकमुदाहरति—'त्वन्मुखम्' इति। त्वन्मुखम्=तवास्यम् पुण्डरीकञ्च=कमलञ्च इति द्वे अपि फुल्ले=विकसिते [तत्र कमले पत्रविश्लेषात्मको विकासः मुखे च स्मितमयः स इति विशेषः] तथा सुरभिगन्धिनी=सौरभगन्धोपेते आद्यस्य मधुगन्धः प्रकृतिसिद्धः मुखस्यापि सः पद्मिनीनायिकासम्बन्धित्वात्स्वभावसिद्धः। अथ व्यतिरेकं दर्शयति—अम्भोजम्=कमलम् भ्रमद्भ्रमरम्=भ्रमन्तः मधुलोभित्वेन सञ्चरन्तः भ्रमराः द्विरेफा यत्र तत्तादृशम् ते=तव मुखम् तु लोलनेत्रम्=लोले चञ्चले नेत्रे नयने यस्मिन् तत् तथाविधम् 'अस्ति' इति शेषः।

अत्र फुल्लत्वं सुरभिगन्धित्वञ्चेति द्वयोः साधारण्यात् सादृश्यं शब्दोपात्तम्। 'भ्रमद्भ्रमरत्वं लोचनेत्रत्वञ्च' इति यद्यपि द्वयोरसाधारणो धर्मः तथापि तद्द्वयं बिम्बप्रतिबिम्बभावेन सदृशमेव नतु विरुद्धम्। अत्र भ्रमरापेक्षया नेत्रस्योत्कर्षः तेन मुखस्याधिक्यमिति सदृशव्यतिरेकोऽयं शब्दः, सादृश्यस्य शब्दोपात्तत्वात् ॥ १६३ ॥

---

१ भेदश्चात्र कारणभेदरूपः। उक्तञ्च—'अयमेव भेदो भेदहेतुर्यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति। भेदश्चात्र द्वयोर्विरुद्धधर्मवत्तया प्रतीयते नतु स्फुटशब्देनाभिधीयते।

[ प्रतीयमानसादृश्यस्य सदृशव्यतिरेकस्योदाहरणम् ]

**चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणम् ।**
**नभो नक्षत्रमालीदमुत्फुल्लकुमुदं पयः ॥ १६४ ॥**

प्रतीयमानसादृश्यं सदृशव्यतिरेकमुदाहरति--'चन्द्र' इति। अयम्=पुरोवर्त्ती चन्द्रः= शशी अम्बरोत्तंसः=अम्बरस्य गगनस्य उत्तंसः भूषणम् । अयं हंसः तोयभूषणम्=जलमण्डनम् । इदं नभः नक्षत्रमालि=नक्षत्राणां तारकाणां माला राजिर्यत्र तत्तादृशम् । पयः= जलम् अर्थात् कासारस्य उत्फुल्लकुमुदम्=विकसितनीलेन्दीवरम् 'वर्त्तत' इति अध्याहृत्य सर्वत्र योजनीयम् । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' इत्यमरः ।

अत्र उपमानोपमेयभूतयोश्चन्द्रहंसयोः आकाशपयसोश्च सादृश्यमर्थबललभ्यं शब्दानुपात्तत्वात् तेनायम् 'आर्थः सदृशव्यतिरेकः' ॥ १६४ ॥

[ उक्तार्थस्पष्टीकरणम् ]

**प्रतीयमानशौक्ल्यादिसाम्ययोश्चन्द्रहंसयोः ।**
**कृतः प्रतीतशुद्धयोश्च भेदोऽस्मिन् वियदम्भसोः ॥ १६५ ॥**
**पूर्वत्र शब्दवत्साम्यमुभयत्रापि भेदकम् ।**
**भृङ्गनेत्रादितुल्यं तत् सदृशव्यतिरेकिता ॥ १६६ ॥**

उक्तयोर्द्वयोरुदाहरणयोर्गतिं स्वयं स्पष्टीकरोति—'प्रतीयमान०' इत्यादिद्वाभ्याम् । अस्मिन्='चन्द्रोऽयम्' इत्यादिप्रथमोदाहरणे प्रतीयमानशौक्ल्यादिसाम्ययोः=प्रतीयमानं वाचकशब्दाप्रयोगात् गम्यमानम् आर्थमिति यावत् तादृशं यत् शौक्ल्यादि शुक्लगुणवत्तादि साम्यं सादृश्यं ययोः तयोस्तथाभूतयोः 'चन्द्रहंसयोः' तथा प्रतीतशुद्धयोः च=प्रतीता लोकप्रसिद्धा शुद्धिः नैर्मल्यं ययोः तयोः वियदम्भसोः=आकाशपयसोश्च भेदः=वैधर्म्यम् कृतः=दर्शितः । एवञ्चात्र सादृश्यं शब्देन [ साक्षात् ] नोपात्तमित्यार्थः 'सदृशव्यतिरेकः' ।

पूर्वत्र=पूर्वस्मिन् त्वन्मुखमित्यादिद्वितीयोदाहरणे उभयत्र अपि=उपमानोपमेययोर्द्वयोरपि शब्दवत्=शब्दगृहीतं शब्दोपात्तमित्यर्थः, साम्यम्=भृङ्गनेत्रादितुल्यम् भ्रमद्भ्रमरवत्त्वं लोलनेत्रत्वञ्च सादृश्यं भेदकम्=विशेषकम् 'अस्ति' इति शेषः । तच्च बिम्बप्रतिबिम्बभावतया सादृश्यप्रतिपादकम् 'तत्' तस्माद्धेतोः सदृशव्यतिरेकिता=शाब्दः सदृशव्यतिरेक इत्यर्थः ॥ १६५–१६६ ॥

[ सजातिव्यतिरेकस्योदाहरणम् ]

**अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः ।**
**दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥ १६७ ॥**

'सजातिव्यतिरेकम्' उदाहरति—'अरत्नालोकसंहार्यम्' इति । यूनाम्=तरुणानां यौवनप्रभवम्=यौवनं प्रभवः उत्पत्तिस्थानं यस्य तत् तादृशं=तारुण्यसमुत्थमित्यर्थः, तमः= मोहः अन्धकारश्च 'अस्ति' इति शेषः । कीदृशं तत् इत्याकाङ्क्षायां विशेषणान्याह—'अरत्न०' इत्यादिना । रत्नानां=माणिक्यादीनां आलोकेन=प्रकाशेन यत् संहार्यं=निवार्यं न भवति तत् सूर्यरश्मिभिः=भास्करगभस्तिभिः अवार्यम्=वारयितुमशक्यम् । तथा दृष्टिरोधकरम्= दृष्टिश्चक्षुः ज्ञानञ्च तयोः रोधकरं प्रतिबन्धकम् आवरकमिति यावत् ॥ १६७ ॥

[ सजातिव्यतिरेकस्य लक्ष्ये सङ्गमनम् ]

**सजातिव्यतिरेकोऽयं तमोजातेरिदं तमः ।**
**दृष्टिरोधितया तुल्यं भिन्नमन्यैरदर्शि यत् ॥ १९८ ॥**

---

इति व्यतिरेकचक्रम्

—*—

उक्तोदाहरणे सजातिव्यतिरेकं स्वयं घटयति—'सजातिव्यतिरेक' इति । यत्=यस्माद्धेतोः इदम् तमः=मोहरूपम् दृष्टिरोधितया=दृष्टेरावरणकर्त्तृत्वेन तुल्यम्=समानम् अन्यैः=साधारणधर्मैः रत्नालोकहार्यत्वादिभिः तमोजातेः=अन्धकारजातितः भिन्नम्=वैधर्म्यवत् अदर्शि=उपनिबद्धम् 'कविने'ति शेषः, अतो हेतोः 'अयं सजातिव्यतिरेक' उच्यते इति शेषः ।

प्रसिद्धं तमस्तु रत्नालोकादिभिर्निवार्यं भवति, यौवनप्रभवं मोहात्मकं तमस्तु न तादृशम्, तमस्त्वं जातिस्तु एकैव उभयत्रानुगतप्रत्ययकारणात् । अत्र च श्लेषेणैव तमःपदेन उपमानोपमेयभूतयोर्मोहान्धकारयोरुभयोरुपादानं कृतमिति सामान्यलक्षणं सङ्गतमेव । मोहात्मकं तमः उपमेयम् । प्रसिद्धमन्धकारात्मकं तमस्तूपमानम् । केचित्तु—तम एव तम इति 'श्लिष्टं रूपक' मित्याहुः ।

इत्थञ्च—एकव्यतिरेकः, उभयव्यतिरेकः, सश्लेषव्यतिरेकः, साक्षेपव्यतिरेकः, सहेतुकव्यतिरेकः, प्रतीयमानसादृश्यव्यतिरेकः, शाब्दसादृश्यसदृशव्यतिरेकः, प्रतीयमानसादृश्यसदृशव्यतिरेकः, सजातिव्यतिरेकः इति [ ९ ] नवसंख्यो व्यतिरेको दर्शितः । सन्ति ग्रन्थान्तरेषु अन्यान्यप्युदाहरणानि व्यतिरेकस्य, तत्र कानिचित् प्रपञ्च्यन्ते—

दिनकृति कुमुदैर्धृतो न रागः[1] शशिनि पराञ्चि[2] परं सरोरुहाणि ।
कुवलयकमलादृतप्रकाशः[3] प्रभवति विश्वसुहृत् प्रतापरुद्रः ॥

अत्र रविशशिनोरसम्भवेन सर्वप्रियङ्करत्वेन उपमेयभूतस्य प्रतापरुद्रस्य 'कुवलयकमलादृतप्रकाश' इति श्लेषसमुत्थापितो व्यतिरेकः । अस्यैव दण्डिमते 'सश्लेषव्यतिरेक' इति सञ्ज्ञा । यथा वा—

सकलङ्केन जडेन च साम्यं दोषाकरेण कीदृक्ते ।
अभुजङ्गः समनयनः कथमुपमेयो हरेणासि ॥

अत्रोपमानभूते चन्द्रे सकलङ्कत्वम्, राज्ञि चोपमेये कलङ्काभावेनाधिक्यम् । उत्तरार्धेऽपि उपमानस्य हरस्य विषमनेत्रवत्त्वं भुजङ्गवत्त्वञ्च, उपमेये राज्ञि अभुजङ्गत्वसमदृष्टित्वाभ्यामाधिक्यम् । भुजङ्गः=विटः सर्पश्च 'भुजङ्गो विटसर्पयो'रिति कोषात् । यथा वा—

'शैला इवोन्नताः सन्तः किन्तु प्रकृतिकोमलाः' इति । अत्रोपमेयभूतानां सतां प्रकृतिकोमलत्वं विशेषः । अयमुपमेयाधिक्यपर्यवसायी व्यतिरेकः । यथा वा—

---

१ रागः=अनुरागः । २ पराञ्चि प्रतिकूलानि । ३ कुवलयम्=कुमुदम् भूमण्डलञ्च । कमलम्=पङ्कजं दिवाविकाशि, कमला लक्ष्मीः च । एतैरभेदाध्यवसितैः कुवलयकमलैरादृतप्रकाशः इत्युपमानादुपमेयस्याधिक्यकथनं श्लेषमूलम् ।

हरवन्न विषमदृष्टिर्हरिवन्न विभो ! विधूतविततवृषः ।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि ॥

अत्र राजा उपमेयः, हरादिरुपमानम्, विषमादयः शब्दाः श्लिष्टाः उपमानगतं विषमदृष्टित्वादिकमपकर्षहेतुरुपात्तः । समदृष्टित्वादिना राज्ञ आधिक्यम् । यथा वा—

महेन्द्रतुल्यं कवयो भवन्तं वदन्तु किं तानिह वारयामः ।
भवान् सहस्रैः समुपास्यमानः कथं समानस्त्रिदशाधिपेन ॥

अत्र त्रिदशाधिपत्वापेक्षया सहस्राधिपत्वं राज्ञ उत्कर्षः । परन्तु श्लेषोत्थापितत्रिदशत्वसंख्यामादायायं व्यतिरेकः उपात्तोभयनिमित्तकः । विश्वनाथादिभिः प्रकारान्तरेणोक्ता अस्य भेदाः तत एवावगन्तव्याः ॥ १६८ ॥

[ विभावनाया लक्षणम् ]

**प्रसिद्धहेतुव्यावृत्त्या यत् किञ्चित् कारणान्तरम् ।**
**यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥ १६९ ॥**

— * —

विभावितो यो मृतिमेव यच्छति प्रभावितो योऽमृतिमेव यच्छति ।
भवं तमुग्रं शिवमद्वयं विभुं सम्भावये सर्वरसं निरञ्जनम् ॥ १ ॥

— * —

क्रमप्राप्तां विभावनां निरूपयन्नादौ तस्या लक्षणमाचष्टे—'प्रसिद्धहेतु०'इति । यत्र=यस्यां वैचित्र्यां सत्याम् प्रसिद्धहेतुव्यावृत्त्या=प्रसिद्धस्य लोके ख्यातस्य हेतोः कारणस्य व्यावृत्त्या अभावेन यत् किञ्चित् कारणान्तरम्=यत्किमपि हेत्वन्तरं वा=अथवा स्वाभाविकत्वम्=स्वतःसिद्धभावो [वा] विभाव्यम्=विशेषेण आग्रहावेशेन भाव्यं चिन्तनीयं [स्यात्], सा=प्रसिद्धा विभावना 'उच्यते' इति शेषः । इत्थञ्च—प्रसिद्धहेतुं विना समुत्पन्नस्य कार्यस्य गूढकारणान्तरविभावनजन्यम्, कारणान्तरानुपलब्ध्या वा स्वाभाविकत्वनिश्चयजन्यं वैचित्र्यं 'विभावना' इति लक्षणं निष्कृष्यते । कारणान्तरं स्वाभाविकत्वं वा विभाव्यतेऽस्याम् इति अधिकरणप्रत्ययान्तो योगरूढोऽयं 'विभावना'शब्दः, प्रायेणालङ्काराणां योगरूढा संज्ञा । वामनश्चेत्थमाह—'क्रियाप्रतिषेधे प्रसिद्धतत्फलव्यक्तिर्विभावना' [ काव्या० सू० अध्या० सू० १३ ] अस्यायमर्थः—क्रियायाः=कारणरूपायाः प्रतिषेधे प्रसिद्धस्य तस्याः क्रियायाः फलस्य=कार्यभूतस्य व्यक्तिः=प्रकाशनं यत् सा विभावना । यथा—

अप्यसज्जनसाङ्गत्ये न वसत्येव वैकृतम् ।
अक्षालितविशुद्धेषु हृदयेषु मनीषिणाम् ॥

अत्र विकृतमेव वैकृतम् । 'प्रज्ञादिभ्यश्च' [५।४।३८] इति स्वार्थेऽण् । 'अक्षालितविशुद्धेषु'इत्यत्र कारणरूपक्षालनक्रियाप्रतिषेधेऽपि तत्फलभूताया विशुद्धेः प्रकाशनात् विभावना ।

नव्यास्तु—कारणाभावे कार्योत्पत्तिवर्णनं विभावनेत्याहुः । तथा च **जयदेवः**—

---

(प्र०) विभावनां लक्ष्यलक्षणादिभिः सविस्तरं स्फुटीकुरु ?

(उ०) अस्य पृ० पं० ११ तः पृ० १६६ स्य ११श पं० ।

'विभावना विनापि स्यात् कारणं कार्यजन्म चेत्' ।
पश्य लाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥

अत्र लाक्षारससेकरूपकारणं विनैव रक्तत्वरूपकार्यकथनं विभावना । प्रकारान्तरेणापीयं 'कुवलयानन्दे' प्रपञ्चिता । तथाहि--

अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् । अप्रसादितसूक्ष्माम्बु जगदासीन्मनोरमम् ॥

अत्र पानादिप्रसिद्धहेत्वभावेऽपि क्षीबत्वादिनिबद्धम् । विभाव्यमानशरत्समयहेतुकत्वेन विरोधपरिहारः । यथा वा—

वरतनुकबरीविधायिना सुरभिनखेन नरेन्द्रपाणिना ।
अवचितकुसुमापि वल्लरी समजनि वृन्तनिलीनषट्पदा ॥

अत्र वल्लर्यां पुष्पाभावेऽपि भृङ्गालिङ्गनं निबद्धं तत्र वरतनुकबरीसंक्रान्तसौरभनरपतिनखसंसर्गरूपं हेत्वन्तरं विशेषणमुखेन दर्शितमिति विरोधपरिहारः ।

'हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता' । अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः ॥

अत्र जगज्जये साध्ये हेतूनामस्त्राणामसमग्रत्वतीक्ष्णत्वादिगुणवैकल्यम् । यथा वा—

उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः । उदस्रयन्ति पान्थानामस्पृशन्तो विलोचने ॥

अत्र वाष्पोद्गमनहेतूनामसमग्रत्वं स्पर्शनक्रियावैकल्यम् । इमां 'विशेषोक्ति'रिति दण्डी व्याजहार । यतस्तत्र प्रथमोदाहरणे मन्मथस्य महिमातिशयरूपो द्वितीयोदाहरणे चम्पकरेणूनामुद्दीपकतातिशयरूपश्च विशेषः ख्याप्यत इति । अस्माभिस्तु तीक्ष्णत्वादिवैकल्यमपि कारणविशेषाभावरूपमिति विभावना प्रदर्शिता ॥ ७८ ॥

'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके' । नरेन्द्रानेव ते राजन्! दशत्यसिभुजङ्गमः ॥

अत्र नरेन्द्रा विषवैद्याः सर्पदंशप्रतिबन्धकमन्त्रौषधिशालिनः श्लेषेण गृहीता इति सत्येव प्रतिबन्धके कार्योत्पत्तिः । यथा वा—

चित्रं तपति राजेन्द्र! प्रतापतपनस्तव । अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम् ॥

प्रताप एव तपनः सूर्यः । आतपत्रं छत्रं तद्रहितमनातपत्रम् । आतपत्रेण सहितं सातपत्रम् । परमत्रेयं रूपकानुप्राणिता ।

'अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना' । शंखाद्वीणानिनादोऽयमुदेति महदद्भुतम् ॥

अत्र शंखशब्देन कमनीयः कामिनीकण्ठस्तन्त्रीनिनादत्वेन तद्गीतं चाध्यवसीयत इत्यकारणात् कार्यजन्म । यथा वा—

तिलपुष्पात् समायाति वायुश्चन्दनसौरभः ।
इन्दीवरयुगाच्चित्रं निःसरन्ति शिलीमुखाः ॥

—*—

'विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना' ।
शीतांशुकिरणास्तन्वीं हन्त! संतापयन्ति ताम् ॥

अत्र तापनिवर्तकतया तापविरुद्धैरिन्दुकिरणैस्तापजनिरुक्ता । यथा वा—

१ 'नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि कथ्यते' इति विश्वः ।

उदिते कुमारसूर्ये कुवलयमुल्लसति भाति नक्षत्रम् ।
मुकुलीभवन्ति चित्रं परराजकुमारपाणिपद्मानि ॥

यथा वा—

अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्त्रयम् । श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥

पूर्वोदाहरणयोः कारणस्य कार्यविरोधित्वं स्वाभाविकम् । इह तु श्रुतिप्रणयित्वरूपागन्तुकगुणप्रयुक्तमिति भेदः ।

'कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना' । यशःपयोराशिरभूत्करकल्पतरोस्तव ॥

यथा वा—

जाता लता हि शैले जातु लतायां न जायते शैलः ।
संप्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम् ॥

परन्तु मूलकृल्लक्षणे यत् 'कारणान्तरम्' इत्युक्तं तत् क्वचित् शाब्दं क्वचिद् आर्थम् । शाब्दं यथा—

अनायासकृशं मध्यमशङ्कातरले दृशौ । अभूषणमनोहारि वपुर्वयसि सुभ्रुवः ॥

अत्र हि वयोरूपं कारणान्तरमुक्तम्, तस्य च कारणतयाऽनिर्देशाद् विभाव्यत्वम् । आर्थन्तु अनुपदमुदाहरिष्यते 'अपीतक्षीबकादम्ब'मित्यादिना ।

यत्र तु कारणविरुद्धसद्भावेन कारणाभावप्रतिपादनं तत्रापीयं भवति परन्तु सा न स्फुटतरा । यथा—

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुज्जृम्भते ॥

अत्र हि उत्कण्ठारूपकार्यस्य प्रसिद्धहेतूनां पत्यभावादीनामभावो विरुद्धेन पत्यादिसद्भावेन प्रतिपादित इति नात्र स्फुटत्वमस्याः । अतएव आचार्या[1] आहुः—'अत्र स्फुटो न कश्चिदलङ्कार' इति । एवमेव स्वाभाविकत्वमपि क्वचिच्छाब्दं क्वचिदार्थञ्चोहनीयम् ॥१९९॥

[कारणान्तरविभावनायाः उदाहरणम्]

**अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् ।**
**अप्रसादितशुद्धाम्बु जगदासीन् मनोहरम् ॥ २०० ॥**

तत्रादौ कारणान्तरविभावनामुदाहरति—'अपीतक्षीब०' इति । जगत् मनोहरम्=सुन्दरम् आसीत्=अभूत् । कथंभूतं जगत् । अपीतक्षीबकादम्बम्=न पीताः अकृतमधुपानाः [तथापि] क्षीबा मत्ताः कादम्बाः हंसा यस्मिन् तत् । पुनः कीदृशम् । असंमृष्टामलाम्बरम्=असंमृष्टं मार्जन्या असंशोधितं [तथापि] अमलं निर्मलं अम्बरं गगनं यस्मिन् तत्, पुनः कीदृशम् । अप्रसादितशुद्धाम्बु=अप्रसादितम् कतकादिना अपरिष्कृतं [तथापि] शुद्धं स्वच्छं अम्बु जलं यस्मिन् तत् तादृशमित्यर्थः ।

---

१ प्रकाशकारा मम्मटाचार्याः ।

अत्र क्षीबतायाः कारणं मधुपानं प्रसिद्धम् तथा अमलत्वकारणं मार्जनम्, शुद्धेश्च कारणं कतकादिना प्रसादनमिति तत्तत्कारणस्यासद्भावेऽपि तत्तत्फलोत्पत्तिदर्शनात् शरत्काल-रूपं कारणान्तरं विभाव्यत इति 'कारणान्तरविभावना' इयमुच्यते । तच्च [शरद्रूपं] कारणा-न्तरमर्थबललभ्यम् । 'पीताः' इत्यत्र वर्तमाने क्तः । पिबन्तीति पीताः । 'मतिबुद्धिपूजार्थे-भ्यश्च' [ ३ । २ । १८७ ] इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् । न पीता अपीताः ॥२००॥

[ स्वाभाविकत्वविभावनाया उदाहरणम् ]

**अनञ्जिताऽसिता दृष्टिर्भ्रूरनावर्जिता नता ।**
**अरञ्जितोऽरुणश्चायमधरस्तव सुन्दरि ! ॥ २०१ ॥**

'स्वाभाविकत्वविभावनाम्' उदाहरति—'अनञ्जिता' इति । हे ! सुन्दरि !=सुभ्रु ! तव दृष्टिः=दृक् अनञ्जिता=अञ्जनेन रहिता अपि असिता=श्यामा भ्रूः अनावर्जिता=न आवर्जिता आकृष्टा अर्थात् अनाकृष्टा अपि नता=नम्रीभूता वक्रा इत्यर्थः, अयम् अधरः=अरञ्जितः=याव-करागेण ताम्बूलादिना वा अनाक्तोऽपि अरुणः=रक्तः सर्वत्र 'अस्ति' इति क्रियाया अध्याहारः ।

अत्र असितत्वस्य कारणमञ्जनम्, वक्रतायाः कारणमावर्जनम्, अरुणतायाः कारणं रञ्जनं लोके प्रसिद्धम्, परन्तु तदभावेऽपि तत्तत्फलवचनात् 'स्वाभाविकत्वविभावना'[1] इयम् । इयांस्तु विशेषः—उक्तं स्वाभाविकत्वं गम्यम्, प्रसिद्धकारणाभावश्च शब्दोपात्तः ॥ २११ ॥

[ विभावनालक्षणसङ्गतिः ]

**यदपीतादिजन्यं स्यात् क्षीवत्वाद्यन्यहेतुजम् ।**
**अहेतुकञ्च तस्येह विवक्षेत्यविरुद्धता ॥ २०२ ॥**

उक्तयोरुदाहरणयोः विभावनालक्षणं सङ्गमयन् कारणाभावे कथं कार्याभाव इति विरोधं परिहरति 'यद्' इति । पूर्वस्मिन्नुदाहरणे अपीतादिजन्यम्=पानादिना अजनितं यत् क्षीबत्वादि तत् अन्यहेतुजम्=शरदा कारणान्तरेण जन्यमस्ति । द्वितीये तु—अञ्जितत्वा-दिना अजन्यं यद् असितत्वादि तद् अहेतुकम्=स्वाभाविकमस्ति। इह=विभावनालङ्कारवति दर्शितकाव्ये तस्य=अन्यहेतुजत्वस्य अहेतुकस्य च विवक्षा=वक्तुः कवेरिच्छा [ एव नियामिका ] इत्यतो हेतोः अविरुद्धता=विरोधस्याभावः ज्ञेयः । इदन्त्वं विचारान्तरं सुकुमारमत्यनु-पयुक्तं मत्वा नावतारितम् । इयञ्चान्यत्र उक्तनिमित्ता अनुक्तनिमित्ता चेति द्विधा उक्ता । तत्राद्या यथा—

असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥

अत्र द्वितीये पादे मदस्य प्रसिद्धं यदासवाख्यं कारणं तदभावेऽपि यौवनहेतुकत्वेनोप-निबन्धः कृतः, अत इयं वयोरूपनिमित्तस्योक्तत्वात् 'उक्तनिमित्ता' । परा यथा—

अङ्गलेखामकाश्मीरसमालम्भनपिञ्जराम् ।
अनलक्तकताम्राभामोष्ठलेखां च बिभ्रतीम् ॥

अत्र सहजत्वं गम्यमानमित्यनुक्तनिमित्तेयम् ॥ २०२ ॥

---

१ कान्तादृष्ट्यादेरसितत्वादीनां नैसर्गिकत्वादिति भावः ।

[ शब्दस्वाभाविकत्वनिबन्धनायाः उदाहरणम् ]

**वक्त्रं निसर्गसुरभि वपुरव्याजसुन्दरम् ।**
**अकारणरिपुश्चन्द्रो निर्निमित्तासुहृत् स्मरः ॥ २०३ ॥**

'शब्दस्वाभाविकत्वविभावनां' दर्शयति—'वक्त्रम्' इति । वक्त्रम्=आस्यम् निसर्गसुरभि=निसर्गेण प्रकृत्यैव सुरभि शोभनगन्धम् वपुः=शरीरम् अव्याजसुन्दरम्=स्वाभाविकमधुरम्, चन्द्रः=शशी अकारणरिपुः=निर्निमित्तवैरी तथा स्मरः=कामः निर्निमित्तासुहृद्=अकारणशत्रुः, असुहृत् विरहिणां सन्तापकरत्वादित्यर्थः ।

सुरभित्वादीनां स्वाभाविकत्वं निसर्गादिपदबोध्यमिति शब्दोपात्तमेव स्वाभाविकत्वमितीयं शब्दनिष्ठस्वाभाविकत्वनिबन्धना विभावना ॥ २०३ ॥

[ उक्तलक्ष्ये स्वोक्तिसङ्गमनम् ]

**निसर्गादिपदैरत्र हेतुः साक्षान्निवर्त्तितः ।**
**उक्तश्च सुरभित्वादि फलं तत् सा विभावना ॥ २०४ ॥**

—:—

इति विभावनाचक्रम्

—:—

एतत्स्वयं घटयित्वा दर्शयति--'निसर्गादिः०' इति । अत्र=उक्तोदाहरणे निसर्गादिपदैः साक्षात्=प्रत्यक्षीकृतः सन् हेतुः=लोकप्रसिद्धं कारणम्, निवर्त्तितः=वाधित अपवारित इति यावत्, सुरभित्वादि फलं च उक्तम्=निरूपितम्, तत्=तस्मात् कारणाभावेऽपि फलस्य [कार्यस्य] उदयाद्धेतोः तस्य स्वाभाविकत्वबोधाच्च सा=उक्तरूपा शब्दगतस्वाभाविकत्वस्वरूपा 'विभावना' ज्ञेयेति शेषः ॥ २०४ ॥

[ अथ समासोक्तिलक्षणम् ]

**वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः ।**
**उक्तिः सङ्क्षेपरूपत्वात् सा समासोक्तिरिष्यते ॥ २०५ ॥**

—*—

चिदाकाशस्वरूपां तां नित्यं ध्याये सरस्वतीम् ।
समासव्यासरूपेण या शास्त्रे समवस्थिता ॥

———

क्रमप्राप्तां 'समासोक्तिं' निरूपयन्नादौ तस्या लक्षणमाह—'वस्तु' इति । [ यत्र ] किञ्चित्=किमपि वस्तु=प्रस्तुतम् अभिप्रेत्य=चमत्कारित्वेन रूपेण व्यञ्जनया प्रतिपादयितुमभिलष्य तत्तुल्यस्य=तत्सदृशस्य तदुपमानभूतस्य अन्यस्य वस्तुनः=अप्रस्तुतस्य उक्तिः=कथनम्, सा=प्रसिद्धा समासोक्तिः=सङ्क्षेपरूपत्वात् [समासेन] सङ्क्षेपेणार्थद्वयकथनात् 'समासोक्तिः' इति नाम अलङ्कार इष्यते=मन्यते इत्यर्थार्थः सङ्क्षेपस्यैव प्रकृते समासरूपत्वात् ।

यत्र प्रस्तुताप्रस्तुतयोर्द्वयोर्मध्ये एकस्य अप्रस्तुतस्य प्रयोगेण अपरस्य प्रस्तुतस्य व्यञ्जनया बोधः तत्र 'समासोक्ति' रिति दण्डिलक्षणसारः । अभिधया प्रतिपादनापेक्षया

---

**(प्र०)** समासोक्तेः किं सामान्यलक्षणम् ? किञ्चोदाहरणम् ? लक्ष्ये तल्लक्षणसङ्गमनप्रकारश्च कीदृशः ? **(उ०)** अस्य० पृ० पं० २० [अग्रे च]

व्यञ्जनया वस्तुप्रतिपादनं हि समधिकं चमत्कारमावहति । उक्तञ्च ध्वनिकृता – वाच्योऽर्थो न तथा स्वदते प्रतीयमानः स एव यथेति । 'सङ्क्षेपरूपत्वात्' इति सञ्ज्ञायां बीजमुक्तम् । एतद्विषये 'सरस्वतीकण्ठाभरणकार' इत्थमाह—

यत्रोपमानादेवैतदुपमेयं प्रतीयते ।
अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः ।
सङ्क्षेपेणोच्यते यस्मात् समासोक्तिरियं ततः ॥ इति ॥

एवञ्च-शब्दोपात्तादुपमानाद् अत्यन्तं प्रसिद्धस्योपमेयस्य प्रतीतिः समासोक्तिरित्यायातं भवति । आह च वामनः—**'अनुक्तौ समासोक्तिः'** [काव्या० सू० अध्या० ३ सू० ३] अस्यायमर्थः—उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिः—संक्षेपवचनात् समासोक्तिरित्याख्या । यथा—

श्लाघ्या ध्वस्ताध्वगग्लानेः करीरस्य[1] मरौ स्थितिः ।
धिङ् मेरौ कल्पवृक्षाणामव्युत्पन्नार्थिनां[2] श्रियः ॥

अत्र करीरस्य मरुस्थितिश्लाघनेन कल्पवृक्षाणां मेरुस्थितिनिन्दनेन च तदुपमेययोः परोपकारप्रवणतद्विमुखयोः श्लाघानिन्दे समस्योक्ते इतीयं समासोक्तिः ।

[ कार्यघटितायाः समासोक्तेरुदाहरणम् ]

**पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे ।**
**अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥ २०६ ॥**

तत्र कार्यलिङ्गविशेषणघटितां समासोक्तिमुदाहरति 'पिबन्' इति । भ्रमरः=द्विरेफः फुल्लपङ्कजे=विकसितकमले यथाकामम्=यथाभिलाषम् मधु=मकरन्दम् पिबन्=आस्वादयन् असन्नद्धसौरभ्यम्=न सन्नद्धं स्फुटीभूतं सौरभ्यं मधुगन्धो यत्र तत् तादृशमपि कुड्मलम्=कोरकम्, चुम्बति=वक्त्रेण संयोजयति रसयतीति यावत्, इति त्वं पश्य=आलोकेथाः । अत्र[3] 'पश्य मृगो धावतीतिवद्' वाक्यार्थस्य कर्मता ॥ २०६ ॥

[ लक्ष्ये लक्षणयोजनप्रकारः ]

**इति प्रौढाङ्गनाबद्धरतिलीलस्य रागिणः ।**
**कस्याञ्चिदिह बालायामिच्छावृत्तिर्विभाव्यते ॥ २०७ ॥**

एतद् [उक्तलक्ष्ये] घटयति—'इति' इति । इति=अमुना प्रकारेण दर्शितोदाहरणे प्रौढाङ्गना०=प्रौढा युवतिः चासौ [या] अङ्गना=कामिनी तस्याम् आबद्धा समन्ताद् योजिता

१ करीरोऽस्त्री दन्तिदन्तमूले चक्रकरे घटे ।
सल्लक्यामपि बर्बूरे काचे वंशे तदङ्कुरे ॥ इत्यमरशेषः ।

२ अव्युत्पन्नार्थिनाम्=अर्थिपदार्थव्युत्पत्तिरहितानाम् ॥

३ अन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्मकं प्रेरणाविषयीभूतं यद्दर्शनम्, तदनुकूलकृतिमांस्त्वम्, इति तार्किकमते शाब्दबोधः । वैयाकरणनये तु 'मृगकर्तृकधावनकर्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शन' मिति वाक्यार्थः ।

(प्र०) कार्यघटितायाः समासोक्तेरुदाहरणं लिखित्वा व्याख्याहि ? तत्स्वरूपञ्च तत्र योजयतु भवान् ? (उ०) अस्य पृ० पं० १६ ।

रतिलीला=कामक्रीडा येन तस्य तादृशस्य रागिणः=कस्यचित् कामुकस्य कस्याश्चिद् बालायाम्=असञ्जातरजस्कायामपि इच्छावृत्तिः=कामोदयः विभाव्यते=व्यज्यते ।

एवमत्र अप्रस्तुतस्य भ्रमरस्य यत् कार्यम्, अर्थात् फुल्लपङ्कजमधुपानपूर्वकं पङ्कजकोरकमधुपानेच्छारूपम्, प्रस्तुतस्य कामुकस्य प्रौढाङ्गनासक्तिरतिलीलापूर्वकबालासम्भोगेच्छा च तयोर्द्वयोः परस्परं बिम्बप्रतिबिम्बभावेन सादृश्यम् [ साम्यम् ] अस्ति, तेन चाप्रस्तुतभ्रमरवृत्तान्तात् प्रस्तुतकामुकवृत्तान्तप्रतीतिरिति 'कार्यलिङ्गविशेषणघटिता' समासोक्तिः ॥१०७॥

[अन्यप्रकारायाः समासोक्तेः कथनम् ]

**विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा ।**
**अस्त्यसावपराप्यस्ति भिन्नाभिन्नविशेषणा ॥ २०८ ॥**

अन्यविधां समासोक्तिमाचष्टे—'विशेष्यमात्र०'इति । विशेष्यमात्रभिन्ना=विशेष्यमात्रं केवलं विशेष्यपदं भिन्नं श्लेषाभावात् एकार्थस्यैव बोधकं यत्र सा तादृशी अपि तुल्याकारविशेषणा=तुल्याकारं समानाकारं श्लेषभङ्गिकारणात् वाच्यव्यङ्ग्योभयार्थबोधनक्षमं विशेषणं यत्र सा इति एका विधा 'अस्ति' । भिन्नाभिन्नविशेषणा=भिन्नम् एकार्थबोधकम् अभिन्नम् उभयार्थबोधकं विशेषणं यत्र सा असौ=तादृशी अपरा=द्वितीया अपि विधा 'अस्ति' । एवञ्च 'श्लिष्टविशेषणा श्लिष्टाश्लिष्टविशेषणा' चेति अन्या अपि द्विविधा 'समासोक्ति'रित्युक्तं भवति ॥२०८॥

[ श्लिष्टविशेषणायाः समासोक्तेरुदाहरणम् ]

**रूढमूलः फलभरैः पुष्णन्ननिशमर्थिनः ।**
**सान्द्रच्छायो महावृक्षः सोऽयमासादितो मया ॥ २०९ ॥**

तत्र श्लिष्टविशेषणां समासोक्तिमुदाहरति—'रूढमूलः' इति । रूढमूलः=रूढं वृद्धिं गतं मूलं शिफा, मूलधनं नीवी इत्याख्यं च यस्य सः, अनिशम्=अहोरात्रं यथा स्यात्तथा फलभरैः=फलानां शस्यानां भरैः अतिशयैः, अन्यत्र फलरूपैर्धनैर्धनलाभैरित्यर्थः, अर्थिनः=याचकान् पुष्णन्=पोषयन् सान्द्रच्छायः=सान्द्रा निबिडा छाया आतपाभावः, अन्यत्र कान्तिर्यस्य सोऽयम् प्रसिद्धः उक्तविशेषणोपेतः महावृक्षः=तरुराट् मया आसादितः=प्राप्तः । अत्र मूलादिशब्दा अनेकार्था इत्यभिन्नानि [श्लिष्टानि] विशेषणानि तत एवेयं 'श्लिष्टविशेषणा' समासोक्तिः।

'मूलमाद्ये शिफाभयोः' इत्यमरः । 'मूलं शिफाद्ययोः मूलवित्तेऽन्तिके ना भे' इति, 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः'इति च मेदनी ॥ २०९ ॥

[ श्लिष्टाश्लिष्टविशेषणाया उदाहरणम् ]

**[1]अनल्पविटपाभोगः फलपुष्पसमृद्धिमान् ।**
**सुच्छायः स्थैर्यवान् दैवादेष लब्धो मया द्रुमः ॥ २१० ॥**

'श्लिष्टाश्लिष्टविशेषणा' मुदाहरति—'अनल्प०' इति । अनल्पविटपाभोगः=अनल्पः प्रचुरः विटपानां शाखानाम् आभोगः विस्तारो यस्य सः, फलपुष्पसमृद्धिमान्=फलानां

१ अत्र स्वयं प्रश्नं रचयित्वा उत्तरं कल्पय ?

(प्र०) का चान्यप्रकारा समासोक्तिः ? (उ०) अस्य पृ० पं० ८ ।

(प्र०) श्लिष्टविशेषणां समासोक्तिं लक्षणसङ्गमनपूर्वकमुदाहरणव्याख्यानद्वारा स्पष्टीकुरु ? (उ०) अस्य पृ० पं० १७ ।

शस्यानां पुष्पाणां सुमानां समृद्धिः सम्पत्तिः यस्य सः, सुच्छायः=शोभना मनोहारिणी छाया आतपाभावः अन्यत्र कान्तिर्यस्य सः, स्थैर्यवान्=स्थिरस्य भावः स्थैर्य सारवत्ता तद्वान् अन्यत्र विघ्ने सत्यपि स्ववाक्यादविचलनं स्थैर्य तद्वान् सत्यसन्ध इत्यर्थः। एवंविधः एष द्रुमः=तरुः मया दैवात्=भाग्यवशात् लब्धः=आसादितः।

अत्र अनल्पेत्यादीनि विशेषणानि अश्लिष्टानि सुच्छाय इत्यादीनि कानिचित् श्लिष्टानि सन्ति तस्मादियं श्लिष्टाश्लिष्टविशेषणा समासोक्तिः ॥ २१० ॥

[ उक्तोदाहरणद्वये लक्षणसङ्गमनप्रकारः ]

**उभयत्र पुमान् कश्चित् वृक्षत्वेनोपवर्णितः।**
**सर्वे साधारणा धर्माः पूर्वत्रान्यत्र तु द्वयम् ॥ २११ ॥**

उक्ते उदाहरणद्वये स्वयं द्विविधसमासोक्तिलक्षणं संगमयति--'उभयत्र' इति। उभयत्र=उक्ते पद्यद्वये कश्चित्=प्रस्तुतः पुमान् वृक्षत्वेन=अप्रस्तुतवृक्षत्वधर्मेण अर्थात् उपमानभावेन उपवर्णितः=निरूपितः अध्यवसात इति तु हृदयम्। पूर्वत्र='रूढमूल' इतिपद्ये सर्वे धर्माः=रूढमूलत्वाद्याः साधारणाः=श्लेषमहिम्ना उपमानोपमेयगामिनः 'सन्ति' इति शेषः। केवलं महावृक्ष इपि विशेष्यपदं भिन्नम् अर्थात् असाधारणमस्ति नात्र कश्चित् शिलष्टोऽर्थ इति भावः। अन्यत्र तु=द्वितीयस्मिन् अनल्पेत्यादि पद्ये तु द्वयम्=भिन्नमभिन्नञ्च विशेषणमस्ति। अर्थात् आद्यद्वितीये विशेषणे श्लेशो नास्तीति अतस्ते भिन्ने, तृतीयचतुर्थे तु श्लेषो विद्यत इति तेऽभिन्ने विशेष्यपदे 'द्रुम' इति तु [अत्रापि] श्लेषाभावादभिन्नमेव। समासोक्तौ विशेष्यस्याश्लिष्टत्वनियमादिति भावः ॥ २११ ॥

[ अपूर्वसमासोक्तेरुदाहरणम् ]

**निवृत्तव्यालसंसर्गो निसर्गमधुराशयः।**
**अयमम्भोनिधिः कष्टं कालेन परिशुष्यति ॥ २१२ ॥**

अपूर्वसमासोक्तिम् उदाहरति—'निवृत्त०' इति। निवृत्तव्यालसंसर्गः=निवृत्तः दूरीभूतः व्यालानां सर्पाणाम् अन्यत्र खलानां संसर्गः सम्बन्धो यस्मात् सः, निसर्गमधुराशयः= निसर्गेण प्रकृत्या मधुराणां सुस्वादुजलानामाशयः आधारः अन्यत्र मधुरः हृद्यः क्रूरत्वादिमालिन्यरहितत्वेन निर्मलः आशयो हृदयम् अभिप्रायो यस्य सः। एवंभूतः अयम् अम्भोनिधिः=समुद्रः कालेन=कालकृतेन परिणामेन परिशुष्यति=शोषम्प्रति नीयते अन्यत्र नष्टसम्पत्तिः क्रियते। 'व्यालो दुष्टगजे सर्पे शठे श्वापदसिंहयोः' इति हैमः। 'अभिप्रायश्छन्द आशयः' इत्यमरः ॥ २१२ ॥

[ लक्ष्येऽपूर्वसमासोक्तिलक्षणयोजनम् ]

**इत्यपूर्वसमासोक्तिः पूर्वधर्मनिवर्त्तनात्।**
**समुद्रेण समानस्य पुंसो व्यापत्तिसूचनात् ॥ २१३ ॥**

इति समासोक्तिचक्रम्

---:o:---

---

(प्र०) अपूर्वसमासोक्तेर्लक्ष्यलक्षणसङ्गमनानि निरूप्यन्ताम् ?
(उ०) अस्य पृ० पं० २०

उक्तोदाहरणे उक्तां समासोक्तिं सङ्गमयति--'इति' इति । इति=उक्तोदाहरणे गुम्फिताकारा 'इयम् अपूर्वसमासोक्तिः' अस्ति । कुतः पूर्वधर्मनिवर्त्तनात्=पूर्वयोर्धर्मयोः व्यालसंसर्गित्वलवणजलत्वयोः निवर्तनात् अर्थात् तयोरुपादानमकृत्वैव तद्विपरीतयोः कीर्त्तनात् समुद्रेण समानस्य=सागरेण तुल्यस्य कस्यचित् प्रकृतस्य पुंसः व्यापत्तिसूचनात्=त्राणसम्पत्त्वादिरूपा या विशिष्टा आपत्तिः सा व्यापत्तिः तस्याः सूचनात् व्यञ्जनात् 'अपूर्वसमासोक्तिः' दर्शिताभ्यः पूर्वाभ्यः कार्यविशेषणादिभ्यः समासोक्तिभ्यो विपरीतस्वभावत्त्वादियं तथा व्यपदिश्यत इत्यर्थः ।

**इदमत्र चिन्तयामः**। इह प्रस्तुतमप्रस्तुतञ्च क्वचिद् वाच्यं क्वचिद् गम्यमिति वस्तुस्थितिः [ द्वैविध्यम् ] । अर्थात् प्रस्तुताप्रस्तुतयोः प्रस्तुतयोरप्रस्तुतयोर्वा द्वयोरपि वाच्यत्वं सम्भवति, गम्यत्वन्तु पुनः प्रस्तुते वाच्ये क्वचिदप्रस्तुतस्य, अप्रस्तुते वाच्ये क्वचित् प्रस्तुतस्य, प्रस्तुताप्रस्तुतयोर्द्वयोस्तु [ युगपत् ] नैव गम्यत्वं भवितुमर्हति, ताद्रूप्येण वस्तुसद्भावाभावात् । वाच्यत्वेऽपि प्रस्तुतयोरप्रस्तुतयोश्च क्वचित् श्लेषनिर्देशविशेषात्, क्वचिच्च तयोः पृथगुपादानेनेति प्रकारद्वयम् । [इदञ्च प्रकारद्वयं श्लेषेऽपि] । परन्तु—यत्र प्रस्तुतस्य गम्यत्वं तत्राप्रस्तुतप्रशंसाविषयः । अप्रस्तुतस्य गम्यत्वे तु समासोक्तिरिति । '**नवीनाः**' अप्रस्तुतस्य गम्यत्वे हेतुस्तु विशेषणसाम्यम्, विशेष्यस्यापि साम्ये श्लेषापत्तेः । अतएव —

असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
राजा हरति सर्वस्य हृदयं मृदुलैः करैः ॥[4]

इत्यादौ चन्द्रवर्णनप्रस्तावे 'राजा' इति विशेष्यपदेऽपि प्रकृतस्य प्रत्यग्रोदितचन्द्रस्य अप्रकृतस्य नवाभिषिक्तस्य नृपतेः श्लेषः ।

विशेषणसाम्यात् प्रतीयमानमप्यप्रस्तुतं स्वावच्छेदकव्यवहार[त्व]समारोपेणैव चारुताहेतुः नत्वत्र रूपक इव रूपमात्रसमारोपोऽपि, तथा सति उभयोर्विशेषानवगमात् । ततश्च—

विशेषणानां साम्येन यत्र प्रस्तुतवर्त्तिनाम् ।
अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥[5]

इत्यादि लक्षणे 'विशेषणानाम्' इति बहुत्वमविवक्षितं विशेषणबहुत्वाभावेऽपि

---

१ विलक्षणविच्छित्तिशालित्वादित्यर्थः ।

२ अस्याः [समासोक्तेः] अलङ्कारान्तरेभ्यो विभागं दर्शयितु [स्वातन्त्र्येण] विचारान्तरमुत्थापयति 'इह' इत्यादिना । इह=समासोक्तौ ।

३ प्रस्तुतयोरप्रस्तुतयोः प्रस्तुताप्रस्तुतयोश्चेत्यर्थः ।

४ उदयम्=शैलम् अभिवृद्धिञ्च । रक्तम्=रक्तवर्णम् अनुरक्तञ्च । मण्डलम्=बिम्बम् देशश्च । राजा=चन्द्रो नृपश्च । मृदुलैः=अभिनवैः अल्पैश्च । करैः=किरणैः प्राह्यधनैश्च ।

५ प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः ।
अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता ॥ इति तु **उद्भटभट्टः** ॥

समासोक्तिदर्शनात् । एवं 'विशेषणसाम्यादप्रस्तुतावच्छेदः समासोक्ति'रित्युक्तं भवति । यथाश्रुते तु—'अप्रस्तुतेन प्रस्तुतस्य रूपरूपितत्वाद्रूपसमारोपः स्यान्न व्यवहार[मात्र]-समारोपः' इति । विशेषणसाम्यञ्च क्वचित् (१) श्लेषवशात् (२) साधारण्येन (३) औपम्य-गर्भत्वेन चेति त्रिधा भवति । तत्र श्लिष्टतया यथा—

'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' । इति । इन्द्रस्य इयम् ऐन्द्री=प्राची । मुखम्=आदिभागः वदनञ्च । रक्तः=रक्तवर्णोऽनुरक्तश्च । चुम्बनम्=सम्बन्धः वक्त्रसंयोगविशेषश्च। अत्र चन्द्रस्य प्राचीप्रारम्भलक्षणमुखसम्बन्धलक्षणे उदये वर्ण्यमाने 'मुख' शब्दस्य प्रारम्भ-वदनसाधारण्याद्[२] 'रक्त' शब्दस्य अरुणकामुकसाधारण्याच्[३] चुम्बतीत्यस्य प्रस्तुतार्थसम्बन्ध-मात्रपरस्य शक्यार्थान्तरसाधारण्याच्च चन्द्रमःशब्दगतेन पुंलिङ्गेन ऐन्द्रीशब्दगतस्त्रीलिङ्गेन[४] तत्प्रतिपाद्येन्द्रसम्बन्धित्वेन च[५] उपस्कृतात् अप्रस्तुतपरवनितासक्तपुरुषवृत्तान्तः[६] प्रतीयते । यथा वा—

[७]उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥

अत्र निशाशशिनोः श्लिष्टविशेषणसामर्थ्यात् नायकनायिकयोर्व्यवहारव्यक्तिः, अप-रित्यक्तस्वरूपयोर्निशाशशिनोः नायकनायिकाख्यधर्मविशिष्टयोरेव प्रतीतेः । यथा वा—

१ श्वसनविषमा रात्रिर्ज्योत्स्ना तरङ्गितविभ्रमा
शशिमणिभुवो वाष्पायन्ते निमीलति पद्मिनी ।
उपचिततमोमोहा भूमिर्व्यनक्ति विवर्णतां
तादिति गहने दर्शे दर्शे कथं सखि ! जीव्यते ॥

इत्यत्र विशेषणबहुत्वाभावेपि समासोक्तेः सद्भावात् इति **जयरथः** ।

२ श्लिष्टत्वादित्यर्थः ।

३ यद्यपि 'चुम्बति' इत्यस्य न श्लेषः तथाप्यर्थद्वयबोधकत्वमात्रेण तस्य साधा-रण्योक्तिः ।

४ ऐन्द्रीशब्दप्रतिपाद्येन इन्द्रसम्बन्धित्वेन च परकीयत्वाभिव्यक्त्या इति बोध्यम् ।

५ इदं 'साधारण्यात्' इत्यस्य विशेषणम् ।

६ वृत्तान्तो व्यवहारो मुखचुम्बनरूपः ।

७ उपोढः वृद्धिं गतः रागः=रक्तिमा अनुरागश्च यस्य तेन । विलोलानि चकमकन्ति तारकाणि नक्षत्राणि यत्र, पक्षान्तरे विलोला चपला तारका कनीनिका यत्र । 'नक्षत्रे चाक्षिमध्ये च तारकं तारकापि च' इति **शाश्वतः** । 'तारको दैत्यभित् कर्णधारयोर्न द्वयोर्दृशि । कनीनिकायामृक्षे च न पुमांस्त्रातरि त्रिषु' इति च **कोषान्तरम्** । निशामुखम्=निशाया मुखं प्रारम्भः निशाशब्दगतस्त्रीलिङ्गेन चोपस्कृता नायिका तस्या मुखं लपनम् । 'मुखं निःकरणे वक्त्रे प्रारम्भोपाययोरपि । सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम्' इति **मेदिनी** । तिमिरांशुकम्=तिमिरमंशुकमिव ।

विकसितमुखीं रागासङ्गाद् गलत्तिमिरावृतिं
दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः ।
जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः
श्रयति हरितं हन्त ! प्राचेतसीं तुहिनद्युतिः ॥ [विश्वनाथः]

अत्र मुखरागादिशब्दाः श्लिष्टाः । प्राच्यां बन्धकीव्यवहारसमारोपः, चन्द्रे नायकव्यवहारारोपश्च प्रतीयते । यथा वा—

पद्मिनीं लालयन् प्रातः स्ववियोगान्मुनिव्रताम् ।
रागी करपरामर्शैः स्मेरयन् भाति भास्करः ॥ [ साहित्यसारे ]

अत्र प्रकृते सूर्योदये वर्ण्यमाने श्लिष्टविशेषणसामर्थ्यात् 'भास्कर' इति विशेष्यपदस्य चाश्लिष्टत्वात् अप्रकृतनायकविशेषनिष्ठनायिकाविशेषपरितोषणव्यवहारः प्रतीयते, सेयमपि श्लिष्टविशेषणनिबन्धना समासोक्तिः । साधारण्येन यथा—

तन्वी मनोरमा बाला लोलाक्षी पुष्पहासिनी ।
विकासमेति सुभग ! भवद्दर्शनमात्रतः ॥

अत्र तनुत्वादिविशेषणसाम्यात् लोलाक्ष्या लताव्यवहारप्रतीतिः । तत्र च लतैकगामि 'विकासाख्य' धर्मसमारोपः कारणम् । अन्यथा विशेषणसाम्यमात्रेण नियतलताव्यवहारस्य प्रतीतिरेव न स्यात् विकासश्च प्रकृते औपचारिकः ।

यत्त्वत्र परपक्षक्षोदक्षैः **पण्डितराजैः** 'नात्र विशेषणसाम्यमात्रेण लताव्यवहारप्रतीतिः अपि तु लतारूपाप्रकृतासाधारणविकासारोपमहिम्नेति भवतैवोक्तम् । तथा च विशेषणसाम्यादप्रस्तुतस्य गम्यत्वमिति त्वदुक्तसमासोक्तिलक्षणस्य कथमत्र प्रवृत्तिरित्याद्युक्तं तद्दु-

१ पुरः=अग्रतः । रागस्य=लौहित्यस्य अनुरागस्य च आसङ्गात्=आवेशात् । विकसितमुखीम्=प्रकाशितैकदेशां प्रसन्नमुखीं च । तथा गलन्ती नश्यन्ती तिमिरावृतिः अन्धकारावरणं यस्यास्ताम्, अन्यत्र गलन्ती निर्यान्ती तिमिरमिव आवृतिः आवरणं [वसनमिति यावत्] यस्याः तां तादृशीम् । दिनकरस्य सूर्यस्य करैः किरणैः स्पृष्टां व्याप्ताम्, अन्यत्र दिनकरपदगतपुंलिङ्गेन ध्वनितस्योपनायकस्य कराभ्यां पाणिभ्यां स्पृष्टां [रतिकाले चुम्बनाद्यर्थमित्यर्थः] ऐन्द्रीम्=पूर्वां हरितम्=दिशम् [ऐन्द्रीपदनिष्ठस्त्रीलिङ्गध्वनितां कामिनीञ्च] । जरठा=परिणता या लवली वृक्षविशेषः अर्थात् तत्फलं तद्वत् पाण्डुः छाया कान्तिर्यस्य सः, अन्योऽपि स्वनायिकां परासक्तामालोक्य मलिनमुखो भवतीति वस्तुव्यङ्ग्यम् ।

२ भास्करः सूर्यः यतः रागी औदयिकरक्तिमशाली, पक्षेऽनुरागवानित्यर्थः । अतः प्रातः । स्वेति । स्वकिरणसंपर्काभावान्मुकुलिताम्, पक्षे निजविरहात् कृतमौनव्रतामिति यावत् । एतेन निरतिशयितपातिव्रत्यं द्योत्यते । एतादृशीं पद्मिनीं कमलिनीम्, पक्षे एतज्जातीयकत्वेन कामशास्त्रप्रसिद्धां नायिकाम् । एतेन निरतिशयसौन्दर्यम् सूच्यते । करेति । किरणसंचारैरित्यर्थः । पक्षे हस्तकरणकतत्कपोलादिसमास्फालनैरित्येतत् । लालयन् तन्निष्ठतमःसंहरणेन समुज्ज्वलयन्सन्नित्यर्थः, पक्षे मृदुतरस्पर्शसंजातसुखतः सन्तोषयन्सन्नित्येतत् । अतएव स्मेरयन्विकासयन्, पक्षे हर्षयन्निति यावत्, भाति शोभत इत्यन्वयः ।

रुक्तम्, ग्रन्थकाराशयानवबोधनात्। तथाहि किमत्र विशेषणान्येव न साधारणानि? आहोस्वित् अप्रकृतासाधारणविकासारोपमहिममात्रतैव चारुताहेतुः? अथवा रूपकस्यात्र व्यङ्ग्यत्वमात्रमिति? न तावदाद्यः—'तन्वी मनोरमा' इत्यादिविशेषणानां प्रस्तुतनायिकायामिव अप्रस्तुतलतायामपि स्फुटं योजयितुं शक्यत्वात् [निष्पक्षसहृदयानां तथा प्रतीतेश्च]। नापि द्वितीयः—आरोपस्य सर्वथाऽसमतायां स्वरूपसत्तानुपपत्तेः, औपचारिकस्यापि तस्य सम्भवाच्च। अत एव विशेषणसाम्यमात्रेण नियतलताव्यवहारस्याप्रतीतेरिति मूलकृतैवोक्तम्। नापि तृतीयः—रूपकस्य व्यङ्ग्यतामात्रावबोधे कविसंरम्भाप्रतीतेः अलङ्कारकृतचारुतायामेवात्र कविसंरम्भगोचरतायाः [सहृदयसाक्षिकायाः] स्फुटं प्रतीयमानत्वात् अन्ततः सर्वत्रैव यत्किञ्चिद्व्यङ्ग्यताविश्रान्तेर्दूषणाभावाच्च। नच विकासस्याप्यधिकस्य गमकतायां [समासोक्तेः] श्लेषेऽतिव्याप्तिसम्भावनापि, प्रकृते विशेष्यस्य श्लिष्टताया अस्वीकारात् तस्मादत्रासाधारणविशेषमहिम्ना विकासोपचारसहकृतेन समासोक्तिरेवेति भवदुक्तविषयव्यवस्थापनमत्रापि घटयितुं शक्यते इत्युपरमामो बहुबालव्यामोहकरविस्तृतसूक्ष्मसमीक्षणाकरणात्। औपम्यगर्भत्वेन यथा—

दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी। केशपाशालिवृन्देन सुवेषा हरिणेक्षणा॥

अत्र 'दन्तप्रभा पुष्पाणीव' इति सुवेषत्ववशात् पूर्वमुपमितसमासाश्रयणे पश्चात् 'दन्तप्रभासदृशैः पुष्पैश्चिता' इति प्रकारान्तरेण उपमासमासाश्रयणेन समानविशेषणमाहात्म्यात् प्रस्तुतायां नायिकायामप्रस्तुताया लताया व्यवहारः प्रतीयते। व्यवहारश्चात्र पेलवत्वादिरूपो ज्ञेयः। 'हरिणेक्षणा' इति विशेष्यपदमश्लिष्टं स्फुटं [प्रकारान्तरेणापि] समासोक्तिं प्रयोजयति।

[प्रकारान्तरेण समासोक्तिनिरूपणम्]

सर्वत्र चात्र व्यवहारसमारोप एव जीवितम्। सच लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः। शास्त्रीये वस्तुनि च शास्त्रीयवस्तुव्यवहारसमारोपः। लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः। शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्धा भवति। तत्रोदाहरणानि क्रमशो यथा—

सप्ताङ्गस्फुरदुद्दामदानलक्ष्मीविराजितः।
प्रतापरुद्रो भद्रात्मा तनुते सार्वभौमताम्॥

अत्र लौकिके प्रकृतवस्तुनि लौकिकस्य सार्वभौमनामधेयस्य दिग्गजस्य व्यवहारप्रतीतिः। यथा—

गुरुप्रमाणेन निजेन सद्यस्तिरस्कृतोद्यत्प्रतिपक्षहेतौ।
प्रतापरुद्रस्य समित्युदग्रे खड्गे महत्खण्डनपण्डितत्वम्॥

अत्र लौकिके खड्गे तर्कशास्त्रप्रसिद्धवस्तुव्यवहारसमारोपः। तथा—

अपूर्वार्थश्लाघागुरुभणितसारस्यपदवी श्रुतिग्राह्यं तत्त्वं किमपि कलयन्ती प्रतिपदम्।
प्रबन्धश्रीर्वीरक्षितिभुजि कवीनां विजयते बुधश्रेणी यस्यां निपुणमधिकर्तुं प्रभवति॥

अत्रालङ्कारशास्त्रीये वस्तुनि तन्त्रशास्त्रप्रसिद्धवस्तुव्यवहारसमारोपः। तथा—

१ आहार्यस्यापीत्यत्र तात्पर्यम्।

सालंकारा लसद्वर्णा सगुणा रसनिर्भरा ।
भावानुबन्धिनी भाति भारती काकतीश्वरे ॥

अत्रालंकारशास्त्रीये वस्तुनि भारत्याख्ये लौकिकनायिकाव्यवहारसमारोपः । समासोक्तौ विशेषणविशेष्ययोर्द्वयोरुपादानाभावाच्छ्लेषाद्विशेषः ।

सारूप्यात् [सादृश्यात्] अपि समासोक्तिर्दृश्यते । तथाहि—

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥

उत्तरामचरिते सीतात्यागानन्तरं कदाचिद् वनम्प्रति गतस्य भगवतो रामचन्द्रस्येयमुक्तिः । अत्र वनवर्णने प्रस्तुते तत्सारूप्यात् कुटुम्बिषु धनसन्तानादिसमृद्धयसमृद्धिविपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयते । तथा चात्र समृद्धयसमृद्धिविपर्यासवदाश्रयत्वं सादृश्यमिति भावः ।

ननु—अत्र सादृश्यस्य किं मूलमिति चेत्? घनविरलेति विपर्यासमिति च, ताभ्यामुक्तसादृश्यगर्भीकरणात् इति ब्रूमः । एतेन सादृश्यगर्भविशेषणोपस्थापितसादृश्यमूला समासोक्तिरिति मूलग्रन्थानवबोधस्तद्विरोधश्चेत्येवमर्थतया सगर्वमास्फालनं पण्डितराजानां व्युदस्तं वेदितव्यम् । नच—अप्रस्तुतवृत्तान्तविशेषणसाम्यगम्यत्वाभावादुक्तलक्षणाव्याप्तिरिति वाच्यम्, विशेषणसाम्यगम्यसादृश्यगम्यत्वेऽपि विशेषणसाम्यगम्यत्वस्यानपायात्, प्राधान्यात्तु परं साम्यस्य गमकत्वोपप्रदर्शनं सारूप्यादिति ग्रन्थेनोक्तम् ।[1]

एतान्युदाहरणानि मया नवीनमतानुरोधेन प्रपञ्चितानि । दण्डिकृतसमासोक्तिलक्षणेन तु समासोक्तौ 'अप्रस्तुतेन प्रस्तुतस्य गम्यत्वं' स्थापितम् । तदेतत् 'अप्रस्तुतप्रशंसा' लक्षणव्याख्याने प्रपञ्चयिष्यामः । यत्तु—**जीवेन** अर्थद्वयस्य उक्तिः प्रत्यायनं समासोक्तिरित्युक्तं तदज्ञानात् अर्थद्वयस्य गम्यत्वास्वीकारात् ॥ २१३ ॥

[ अथातिशयोक्तेर्लक्षणम् ]

**विवक्षा या विशेषस्य लोकसीमातिवर्त्तिनी ।**
**असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा ॥ २१४ ॥**

—*—

निरस्तसाम्यातिशयं महात्मनामवाप्यरूपं वचसामतीतम् ।
गुहाहितं सर्वमनःप्रवृत्तेः साक्ष्ये स्थितं माधवमानमामि ॥ १ ॥

—*—

क्रमप्राप्तामतिशयोक्तिं लक्षयति—'विवक्षा' इति । विशेषस्य=प्रस्तुतविषयगतस्य उत्कर्षस्य लोकसीमातिवर्त्तिनी=लोकस्य सीमा मर्यादा तस्याः अतिवर्त्तिनी अतिक्रमणका-

१ विशेषतः पण्डितराजानामुक्तेः परासः अस्मत्काव्यप्रकाशप्रभायां तत्र तत्र द्रष्टव्यः ।
(प्र०) अतिशयोक्तिलक्षणं सम्यग् विवेचय ? (उ०) अस्य पृ० पं० २५ ।

रिणी अर्थात् अतिमात्रमलौकिकचमत्कारविशेषजनिका इति यावत्, एवम्भूता या विवक्षा=वक्तुमिच्छा अर्थात् उक्तिरेव [अत्र स्वार्थे सन् प्रत्ययः इच्छायाश्चमत्कृतिहेतुत्वाभावात्] असौ=अलङ्कारोत्तमा=अलङ्कारेषु उत्तमा सर्वालङ्कारातिशायिनी अतिशयोक्तिः=अतिशयस्योत्कर्षस्योक्तिरतिशयोक्तिरित्यन्वर्थसञ्ज्ञोऽयमलङ्कारः स्यात्=भवतीत्यर्थः । उक्तञ्च वामनेन—**'सम्भाव्यधर्मतदुत्कर्षकल्पनातिशयोक्तिः'** [काव्य० सू० अध्या० ३।१०] अस्यायमर्थः—सम्भाव्यस्य=उत्प्रेक्ष्यस्य धर्मस्य यद्यर्थानुबन्धेन कल्पना, तदुत्कर्षस्य=तस्य सम्भाव्यधर्मस्य य उत्कर्षः अत्युक्तिपर्यवसायी तस्य च कल्पना अतिशयोक्तिः । इत्थञ्च—'प्रकृतस्य लोकोत्तरातिशयताप्रतिपत्तये [उपमेयवाचिशब्दमनुपादायैव] यदुपमेये उपमानस्याहार्याभेदनिश्चयः सातिशयोक्ति' रिति पर्यवसन्नं लक्षणम् । उक्तञ्चाग्निपुराणे—

लोकसीमातिवृत्तस्य वस्तुधर्मस्य कीर्त्तनम् ।
भवेदतिशयो नाम सम्भवोऽसम्भवो द्विधा ॥ इति ॥ २१४ ॥

[ अतिशयोक्तेरुदाहरणम् ]

**मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।**
**क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥ २१५ ॥**

अतिशयोक्तिमुदाहरति—'मल्लिका' इति । मल्लिकामालभारिण्यः=मल्लिकानां जातिकुसुमानां मालां [पुनः पुन] बिभ्रतीति ताः, सर्वाङ्गीणार्द्रचन्दनाः=सर्वाङ्गाणि व्याप्नोति सर्वाङ्गीणं सर्वाङ्गव्यापीत्यर्थः, तादृशम् आर्द्रम् अशुष्कचन्दनं मलयजरसो यासां ताः क्षौमवत्यः=क्षौमं श्वेतपट्टवस्त्रं तदासामस्तीति तथाभूताः अभिसारिकाः=कान्तेन सह कृतरातिसंकेताः नायिकाः ज्योत्स्नायाम्=चन्द्रिकायां न लक्ष्यन्ते=नैव प्रतीयन्ते अन्यैर्जनैरिति शेषः ।

अत्र ज्योत्स्नावर्णनं प्रस्तुतम्, तस्याः श्वेतिमा मल्लिकामालादिकृतनायिकाश्वेतिमाभिन्नतया वर्णितः, अतः स्वाभाविकज्योत्स्नाश्वेतिम्न आधिक्येन प्रतीतिः । अथवा ज्योत्स्नायां रात्रौ तादृशाभिसारिकाणामलक्ष्यत्वासम्बन्धेऽपि तत्सम्बन्धकल्पनात् प्रकृतायाः ज्योत्स्नायाः श्वेतिमोत्कर्षप्रतीतिरिति लोकसीमोल्लङ्घिनी विशेषस्य [प्रस्तुतविषयगतोत्कर्षस्य] विवक्षारूपा अतिशयोक्तिः ।

'मल्लिकामालभारिण्यः' इत्यत्र 'बहुलमाभीक्ष्ण्ये' [३ । २ । ८१] इति पाणिनिसूत्रेण 'मल्लिकामाला' इति सुप्युपपदे [ पौनःपुन्ये द्योत्ये ] णिनिः । 'इष्टकेषीकामालानां चिततूलभारिषु' [ पा० ६ । ३ । ६५ ] इति सूत्रेण 'माला' शब्दस्य ह्रस्वत्वम् । केचित्तु—मल्लिकानां या मालाः तासां भारः [ अतिशयः गुच्छग्रामः ] आसामस्तीति ताः तादृश्य इति विगृह्णन्ति । 'सर्वाङ्गीण' इत्यत्र 'तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति' [पा० ५।२।७] इति सूत्रेण व्याप्तावर्थे 'खः' प्रत्ययः । अभिसारिकालक्षणन्तु—'कान्तार्थिनी तु या याति सङ्केतं साभिसारिका' इति ज्ञेयम् ॥ २१५ ॥

---

(प्र०) अतिशयोक्तिमुदाहर ? (उ०) अस्य पृ० पं० १३ ।

१ 'सर्वादेः पथाङ्गकर्मपत्रपात्रशरावाद्व्यापिनि' [३।३।५३] इति **शाकटायनसूत्रम्** ।

२ अप्पय्यदीक्षितैस्तु कुवलयानन्दे इदं पद्यं मीलितालङ्कारोदाहरणे धृतम् । चन्द्रिका-

[ अतिशयोक्तिलक्षणयोजनम् ]

**चन्द्रातपस्य बाहुल्यमुक्तमुत्कर्षवत्तया ।**
**संशयातिशयादीनां व्यक्तौ किञ्चिन्निदर्श्यते ॥ २१६ ॥**

उक्तोदाहरणे स्वयमतिशयोक्तिलक्षणं सङ्गमयति—'चन्द्रातपस्य' इति । अत्र चन्द्रातपस्य=प्रस्तुताया ज्योत्स्नायाः [चन्द्रिकायाः] उत्कर्षवत्तया=उत्कृष्टताप्रतिपादनत्वेन बाहुल्यम्=प्रगाढता उक्तम्=अभिहितम् । अर्थात् 'मल्लिकामालभारिण्यः' इत्यादिविशेषणवतीनामभिसारिकाणां चन्द्रिकायां लक्ष्यत्वसम्बन्धेऽपि तदलक्ष्यत्ववर्णनेन प्रस्तुतायाः ज्योत्स्नायाः श्वैत्यस्योत्कर्षातिशयः प्रत्यायित इत्युक्तलक्षणसङ्गतिः स्पष्टा । अधुना संशयातिशयादीनाम्=संशयोत्कर्षप्रभृतीनां व्यक्तौ=स्फुटीकरणे किञ्चित्=दिङ्मात्रं निदर्श्यते=उदाह्रियते अस्माभिरिति शेषः । अर्थात् संशयातिशयोक्तिप्रभृतयोऽप्यतिशयोक्तेर्विशेषाः प्रदर्श्यन्ते ॥ २१६ ॥

[ संशयातिशयोक्तेरुदाहरणम् ]

**स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये ! तव ।**
**अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्त्तते ॥ २१७ ॥**

संशयातिशयोक्तिमुदाहरति—'स्तनयोः' इति । हे ! प्रिये !=प्राणेश्वरि ! तव मध्यम्=कटिः स्तनयोः=कुचयोः जघनस्य=कटिपुरोभागस्य मध्ये=मध्यभागे, अस्ति नास्ति [वा] इति=एवमाकारः सन्देहः=संशयः अद्य अपि=इदानीमपि न निवर्त्तते=नैव दूरीभवतीत्यर्थः । अत्र स्तनयोर्जघनस्य चातिस्थूलत्वं कट्याश्चातिकृशत्वं व्यङ्ग्यम् ।

अत्र तादृशसन्देहस्यासम्बन्धेऽपि तत्सम्बन्धकल्पनात् 'संशयातिशयोक्ति'रिति फलितम् ॥ २१७ ॥

[ निर्णयातिशयोक्तेरुदाहरणम् ]

**निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ! ।**
**अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥ २१८ ॥**

निर्णयातिशयोक्तिमुदाहरति—'निर्णेतुम्' इति । हे ! नितम्बिनि !=ललने ! तव मध्यम्=कटिः निर्णेतुम्=निश्चेतुं शक्यम् अस्ति=तस्य निश्चयः शक्यते कर्त्तुमित्यर्थः। अन्यथा=यदि मध्यं न स्यात् तदा पयोधरभरस्थितिः=पयोधरयोः वक्षोजयोः भरस्य भारस्य स्थितिः अवस्थानम् न उपपद्येत=नैव घटेत निराधारस्य पयोधरभरस्य स्थातुमशक्यत्वादिति भावः ।

अत्र मध्यदेशस्य अस्तित्वनिर्णयासम्बन्धेऽपि तत्सम्बन्धकल्पनात् कटिभागस्य चातिकृशत्वव्यञ्जनान्निर्णयातिशयोक्तिर्ज्ञेया । निर्णयसमुत्थातिशयोक्तिर्निर्णयातिशयोक्तिरित्यर्थः ।

---

भिसारिकाणां धवलिमगुणसाम्याद् भेदानध्यवसायः । 'मीलित' लक्षणं 'जयदेवेन' इत्थमुक्तम्—

'मीलितं' यदि सादृश्याद्भेद एव न लक्ष्यते ।
रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ॥

अत्र चरणालक्तकरसयोररुणिमगुणसाम्याद् भेदानध्यवसायः । एवंविधा वैचित्री आलङ्कारिकाणां प्रपानकरसन्यायमनुरुन्धे इति सहृदयसाक्षिकमेतत् ।

(प्र०) अतिशयोक्तिभेदान् विवृणु ? (उ०) अस्य पृ० पं० ३ ।

'नितम्बिनि !' इत्यत्र 'अत इनिठनौ' [५।२।११५] इति सूत्रेण 'इनि'प्रत्ययः। अतिशयितो नितम्बोऽस्या इति नितम्बिनी। 'ललना च नितम्बिनी' इत्यमरः॥ २१८॥

[ आश्रयाधिक्यातिशयोक्तेरुदाहरणम् ]

**अहो ! विशालं भूपाल ! भुवनत्रितयोदरम्।**
**माति मातुमशक्योऽपि यशोराशिर्यदत्र ते॥ २१९॥**

आश्रयाधिक्यातिशयोक्तिमुदाहरति—'अहो' इति। हे ! भूपाल ! भुवनत्रितयोदरम्=भुवनानां त्रितयम् भुवनत्रितयम् तस्योदरं मध्यभागः त्रिलोक्या आभोगः इत्यर्थः, विशालम्=विपुलम् इति अहो=आश्चर्यम्। यत्=यस्माद् हेतोः मातुम्=अवस्थातुम् अशक्यः=अनर्होऽपि ते=तव यशोराशिः=कीर्त्तिपुञ्जः माति=सम्मितो भवति पर्याप्तितां प्राप्नोतीत्यर्थः।

अत्र आश्रयभूतं भुवनत्रितयम्, तस्याधिक्यप्रतिपादनेन आश्रितस्य यशोराशेराधिक्यवचनात् आश्रयाधिक्यातिशयोक्तिरियम्। जयदेवादिमते अधिकालङ्कारोऽयम्। तदुक्तम्—

'अधिकं पृथुलाधारादाधेयाधिक्यवर्णनम्'।
ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः॥

अत्र यत्र महाजलौघेऽनन्तानि ब्रह्माण्डानि बुद्बुदकल्पानि इत्याधारस्यातिविशालत्वं प्रदर्श्य तत्र न मान्तीत्याधेयानां गुणाधिक्यं वर्णितम्। इत्युक्त्वा—

'पृथ्वाधेयाद्यदाधाराधिक्यं तदपि तन्मतम्'।
कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव॥

अत्र 'एते' इति प्रत्यक्षदृष्टमहावैभवत्वेनोक्तानां गुणानां विश्राम्यन्तीति असम्बाधावस्थानोक्त्या आधारस्य वाग्ब्रह्मण आधिक्यं वर्णितम्। एवं दीक्षितैर्निरूप्य 'अहो विशाल' मिति पद्यमपि द्वितीयलक्षणलक्षिते 'अधिके' उदाहृतम्॥ २१९॥

[ अतिशयोक्तेः सर्वालङ्कारोत्तमत्वकथनपूर्वकमुपसंहारः ]

**अलङ्कारान्तराणामप्येकमाहुः परायणम्।**
**वागीशमहितामुक्तिमिमामतिशयाह्वयाम्॥ २२०॥**

—:०:—

इत्यतिशयोक्तिचक्रम्।

—:*:—

अतिशयोक्तिमुपसंहरन् तस्याः प्रतिज्ञातं सर्वालङ्कारोत्तमत्वं निगमयति—'अलङ्कारान्तराणाम्' इति। वागीशमहिताम्=वागीशो बृहस्पतिः वाल्मीकादिमहाकविवृन्दो वा तैरपि महितां आदृताम् इमाम् अतिशयाह्वयाम्=अतिशयाख्यामुक्तिम् अर्थात् अतिशयोक्तिम् अलङ्कारान्तराणाम्=इतरेषामप्यलङ्काराणाम् एकम्=मुख्यम् परायणम्=उत्कृष्टमवलम्बनम् आहुः=प्राचीनाः निबन्धार इति शेषः।

अयं भावः—इयं हि प्रस्तुतस्य वस्तुन उत्कर्षातिशयस्वरूपत्वेन वैचित्रीस्वरूपा, वैचित्र्यञ्चालङ्कारः, तत्सर्वेष्वलङ्कारेषु वैचित्र्यस्याव्यभिचारित्वात् सर्वालङ्कारोत्तमत्वमस्याः सिद्धम्। एतस्या अभावे वैचित्र्याभावेनालङ्कारत्वमेव न सिद्ध्येत्, नहि 'गौरिव गवय' इत्युक्तौ सत्यामपि उपमायां काचन वैचित्री। अत एवोक्तम्—

सैव सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥ इति ॥

इत्थञ्च—'मल्लिकामालभारिण्य' इत्यादिस्थले मीलितम्, 'स्तनयोर्जघनस्यापि' इत्यादौ सन्देहः, 'निर्णेतुम्' इत्यादौ निश्चयः, 'अहो विशालम्' इत्यादौ अधिकम् इति परैरुक्तानामलङ्काराणां वैचित्री अतिशयोक्तिसम्बन्धेनैवेति दण्डिनामाशयः ।

'अलङ्कारसर्वस्वे' तु अस्याः प्रकारान्तरेण भेदा उक्ताः । तद्यथा—भेदेऽभेदः । अभेदे भेदः । संबन्धेऽसंबन्धः । असंबन्धे संबन्धः । कार्यकारणपौर्वापर्यविध्वंसश्च । तत्र भेदेऽभेदो यथा—

'कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥'

अत्र मुखादीनां कमलाद्यैर्भेदेऽप्यभेदः । अभेदे भेदो यथा—

'अण्णं लडहत्तणअं अण्णा विहि कावि वत्तणच्छाआ ।
सामा सामण्णपआवइणो रेह च्चि अ ण होई ॥'[1]

अत्र लटभत्वादीनामभेदेऽप्यन्यत्वेन भेदः । संबन्धेऽसंबन्धो यथा—

'लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्तानलो दीपितः ।
एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥

अत्र लावण्यद्रविणस्य व्ययसम्बन्धेऽप्यसम्बन्धस्तन्वीलावण्यप्रकर्षप्रतिपादनार्थं निबद्धः । यथा वा—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो विधिः ॥

अत्र पुराणप्रजापतिनिर्माणसंबन्धेऽप्यसंबन्ध उक्तः । असंबन्धे सम्बन्धो यथा—

'पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥'

अत्र संभावनया संबन्धः । यथा वा—

दाहोऽम्भः प्रसृतिंपचः प्रचयवान्बाष्पः प्रणालोचितः
श्वासाः प्रेङ्खितदीप्रदीपकलिकाः पाण्डिम्नि मग्नं वपुः ।
किं चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥

---

१ 'अन्यत्सौकुमार्यम् अन्यैव च कापि वर्त्तनच्छाया ।
श्यामा सामान्यप्रजापतेः रेखैव च न भवति' ॥ [इति संस्कृतम्]

अत्र दाहादीनामम्भःप्रसृत्याद्यैरसंबन्धेऽपि सबन्धः सिद्धत्वेनोक्तः। कार्यकारणपौर्वापर्यविध्वंसः पौर्वापर्यविपर्ययात्तुल्यकालत्वाद्वा। विपर्ययो यथा--

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन।
चरमं रमणीवल्लभ! लोचनविषयं त्वया भजता॥

तुल्यकालत्वं यथा--

अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः।
अयमायातः कालो हन्त! मृताः पथिकगेहिन्यः॥

एषु पञ्चसु भेदेषु भेदेऽभेदादिवचनं लोकातिक्रान्तगोचरमित्यन्यदेतत्॥ २२०॥

इत्यतिशयोक्तिचक्रम्।

[ उत्प्रेक्षायाः लक्षणम् ]

**अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा।**
**अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा॥ २२१॥**

यद्विरहसतततापैस्तप्ताङ्ग्यो मूर्च्छितस्वान्ताः।
उत्प्रेक्ष्य मेघरूपं गोप्यो लीनास्तमाश्रये कृष्णम्॥

क्रमप्राप्तामुत्प्रेक्षां लक्षयति—'अन्यथा' इति। चेतनस्य=प्राणिनः [जीवतः] इतरस्य=अचेतनस्य वा अन्यथा=अन्येनैव स्वभावसिद्धेन प्रकारेण स्थिता=विद्यमाना वृत्तिः=गुणक्रियादिरूपो व्यवहारः स्वासाधारणं रूपञ्च यत्र=[वाक्ये] वैचित्र्याम् अन्यथा=प्रकारान्तरेण अर्थात् अप्रस्तुतत्वेन रूपेण उत्प्रेक्ष्यते=सम्भाव्यते ताम्=विचित्रतारूपां सम्भावनाम् 'उत्प्रेक्षां' विदुः=जानन्ति [मन्यन्ते सूरय इत्यर्थः।] 'विदु' रिति दैवादिकस्य 'विद' ज्ञाने इत्यस्य धातोर्लटि प्रथमपुरुषस्य बहुवचने रूपम्। 'विदो लटो वा' [३।४।८३] इति सूत्रेण वेत्तेः परस्मैपदानां णलादयो वा।

अयं भावः—उत्=उत्कटा प्र=प्रकृष्टस्य उपमानस्य ईक्षा ज्ञानमिति उत्प्रेक्षापदार्थः। सम्भावनञ्च—उत्कटकोटिकः संशयः। इत्थञ्च—प्रकृतस्य=उपमेयस्य समेन=उपमानेन सह एकरूपतया [तादात्म्येन] यत् सम्भावनम् [सा] 'उत्प्रेक्षा' नामालङ्कारः इत्यभिप्रायेणैव आचार्याः 'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति सूत्रयाम्बभूवुः। दण्डिकृतलक्षणस्यापि 'प्रकारान्तरेण स्थितस्य वस्तुनः अन्यप्रकारेणोत्प्रेक्षणमुत्प्रेक्षे' त्युक्त एवार्थः फलति 'अन्यथोत्प्रेक्ष्यते' इति वचनात्। 'अन्यधर्मसम्बन्धनिमित्तेनान्यस्यान्यतादात्म्यसम्भावनमुत्प्रेक्षा' इति सर्वसारः। न चायं संशयः तत्र विषयद्वयस्य समकक्षत्वम्, इह तु – उपमेय उत्कटोपमानकोटिकः संशयः, नतु द्वयोः कोट्योः समबलत्वम्। तस्मात्संशयादस्याः विविक्तो विषयः। अपिच—उपमायामुपमानोपमेयभावः तात्त्विको लोकप्रसिद्धः, इह तु कविप्रतिभोत्थापितमेवोपमानत्वम् तदवच्छिन्नमुपमानमप्रसिद्धमेवेति उपमातोऽप्यस्याः महदन्तरम्। अत एव **चक्रवर्त्तिभट्टाचार्यै**रुक्तम्—

(प्र०) उत्प्रेक्षाया लक्षणं विशदय? (उ०) अस्य पृ० पं० ११।

यदायमुपमानांशो लोकतः सिद्धिमृच्छति । तदोपमैव येनेवशब्दः साधर्म्यवाचकः ॥

यदा पुनरयं लोकादसिद्धः कविकल्पितः । तदोत्प्रेक्षैव येनेवशब्दः सम्भावनापरः ॥ इति ।

परमिदमिवशब्दसमभिव्याहारस्थल एव, अन्यत्र तु लोकसिद्धेनापि तेन 'मुखं चन्द्रं मन्ये' इत्यादेः संग्रहः । 'चन्द्र इव मुखम्' इत्यादौ तु स्पष्टमुपमा । ततश्च—यत्र आहार्यसम्भावनं तत्रैवोत्प्रेक्षा । यत्र तु अनाहार्या सम्भावना तत्र नोत्प्रेक्षा । यथा--

रामं स्निग्धघनश्यामं विलोक्य वनमण्डले ।
प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः ॥

अत्र केकिनां नृत्यप्रवृत्त्या सम्भावनायाः अनाहार्यत्वम्, तस्मादत्र विपर्यये [भ्रान्त्यलङ्कारे] नातिव्याप्तिः । नचेयं रूपकमेव, तत्र तत्त्वेनावधारणात् अत्रावधारणाभावात् । रूपके तत्त्वावधारणम् सन्देहे समकोटिकः संशयः, इह तूत्कटकोटिकः स इति स्फुटः सर्वविशेषः ।

अपिच—उत्प्रेक्षणीया अर्थाः जातिगुणक्रियाद्रव्यस्वरूपेण चतुर्धा, ते च भावाभावाभिमानितयोत्प्रेक्ष्यमाणा उत्प्रेक्षामष्टधा सम्पादयन्ति । तत्रापि जातिस्वरूपोत्प्रेक्षा, इत्येवमादिप्रकरणे जात्यादित्रयं स्वरूपफलहेतुरूपत्वेनाप्युत्प्रेक्ष्यते, द्रव्यञ्च स्वरूपमात्रत्वेन इत्येवमनेके उत्प्रेक्षाया भेदाः सन्ति, ते च दण्ड्याचार्यदर्शितरीत्या ग्रन्थान्तराणाञ्चावमर्शनात् ज्ञाता भविष्यन्ति, अस्माभिरपि यथोचितं दर्शयिष्यन्ते ॥ २२१ ॥

[ चेतनवृत्त्युत्प्रेक्षाया उदाहरणम् ]

**मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः ।**
**मन्ये मार्त्तण्डगृह्याणि पद्मान्युद्धर्त्तुमुद्यतः ॥ २२२ ॥**

चेतनवृत्त्युत्प्रेक्षामुदाहरति--'मध्यन्दिनार्कसन्तप्त' इति । मध्यन्दिनार्कः मध्याह्नभास्करः तेन सन्तप्तः=तापमुपगतः गजः=हस्ती सरसीम्=कासारम् गाहते=विलोडते अर्थात् स्नातुमवतरति । अत्रोत्प्रेक्षते--'मन्य' इति । किं कुर्वन् सन् मार्त्तण्डगृह्याणि पद्मानि=सूर्यपक्षान् कमलानि उद्धर्त्तुम्=उत्खातुम् उन्मूलयितुमिति यावत् उद्यतः=प्रवृत्तः सन् इत्यहं मन्ये=सम्भावये ।

अत्र हि सन्तप्तः गजः स्नानपानादिप्रयोजनसाधनाय सरसीमवतीर्ण इति वस्तुस्थितिः, तदेतस्य सरोऽवगाहनमन्यथैव स्थितं सत् कविना शत्रुपक्षोद्धरणत्वेन रूपेण सम्भावितमिति, अर्थात् उपमेयभूतस्य गजस्नानस्य पद्मोद्धरणत्वविशिष्टं पद्मोद्धरणं स्वप्रतिभयैवोपमानत्वेन सम्भावितमित्यन्यस्य [गजस्नानस्य] अन्यधर्मसम्बन्धेन निमित्तेन [पद्मोद्धरणधर्मसम्बन्धेन हेतुना] पद्मोद्धरणतादात्म्यसम्भावनं कृतमिति सैवेयमुत्प्रेक्षा तादृशधर्मस्य चेतनवृत्तित्वात् 'चेतनवृत्त्युत्प्रेक्षा' इत्युच्यते । मतान्तरे त्वियं क्रियास्वरूपोत्प्रेक्षा, गजस्नाने पद्मोद्धरणक्रियास्वरूपस्यैव सम्भावितत्वात् । अनयैव दिशा तत्र तत्रोदाहरणेषु लक्षणं योजनीयम् । दर्शयिष्यति त्वाचार्यः स्वयमप्यग्रे स्वकृतस्य लक्षणस्य योजनां 'स्नातुं पातु' मित्यादिना । 'मार्त्तण्डगृह्याणि' मार्त्तण्डेन गृह्यन्ते इति । 'पदास्वैरिबाह्यापक्ष्येषु च' [३।१।११६] इति सूत्रेण सिद्धम् । अत्र 'मन्ये' इति पदमुत्प्रेक्षाद्योतकम् उत्प्रेक्षाविषयश्चात्र सरोऽवगाहनमुपात्तः । चेतनवृत्त्युत्प्रेक्षेयम् ॥ २२२ ॥

[ उक्तोदाहरणे लक्षणयोजनम् ]

**स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम् ।**
**तद्वैरनिष्क्रयायेति कविनोत्प्रेक्ष्य दर्श्यते ॥ २२३ ॥**

उक्तोदाहरणे स्वयमेव लक्षणं घटयित्वा दर्शयति—'स्नातुम्' इति । वैरनिष्क्रयाय=सन्तापप्रदस्य सूर्यस्य वैरिणोऽपकारं विधातुमित्यर्थः । स्पष्टमन्यत् फलतः कृतव्याख्यानञ्चाधस्तात् ।

केचित्तु—पूर्वस्मिन् श्लोके 'प्रत्यनीकालङ्कार' मप्याचक्षते—तदुक्तं **जयदेवेन**—

प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः । जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधः कृतौ ॥

अत्र पूर्वार्धं लक्षणमुत्तरार्धं लक्ष्यम् । तद्वदत्रापि सन्तापप्रतीकारे साक्षात्सूर्यं प्रत्यसमर्थेन गजेन तत्पक्षस्योद्धरणं कृतमतोऽत्र दर्शितलक्षणः 'प्रत्यनीकालङ्कारः' ॥ २२३ ॥

[ अचेतनवृत्त्युत्प्रेक्षाया उदाहरणम् ]

**कर्णस्य भूषणमिदं ममायतिविरोधिनः ।**
**इति कर्णोत्पलं प्रायस्तव दृष्ट्या विलङ्घ्यते ॥ २२४ ॥**

अचेतनवृत्त्युत्प्रेक्षामुदाहरति—'कर्णस्य' इति । मम आयतिविरोधिनः=आयतिः विशालता दीर्घता तस्याः विरोधिनः निवारकस्य बाधकस्य कर्णस्य इदम्=उत्पलम् भूषणम्=मण्डनम् ' अस्ति' इति शेषः । इति=हेतोः तव दृष्ट्या=चक्षुषा कर्णोत्पलम्=कर्णेऽवतंसीकृतं कमलदलं प्रायः विलङ्घ्यते=स्वकिरणसम्पर्केण आहन्यत इवेत्यर्थः ।

अत्र दृष्टिरचेतना, तस्याः किरणानां सामीप्येन कर्णोत्पले स्पर्शाख्यो गुणः कर्णोत्पलस्याहननत्वेन सम्भावित इतीयम् 'अचेतनवृत्त्युत्प्रेक्षा' स्पर्शगुणस्याचेतनत्वात् । स च गुणः [उत्प्रेक्षाविषयः] अत्र नोपात्त इत्यनुपात्तविषया गुणस्वरूपोत्प्रेक्षा ॥ २२४ ॥

[ उक्ते लक्ष्ये लक्षणयोजनम् ]

**अपाङ्गभागपातिन्या दृष्टेरंशुभिरुत्पलम् ।**
**स्पृश्यते वा नवेत्येवं कविनोत्प्रेक्ष्य वर्ण्यते ॥ २२५ ॥**

उक्ते उदाहरणे उत्प्रेक्षालक्षणं सङ्गमयति—'अपाङ्गभाग०' इति । अपाङ्गभागपातिन्या=नेत्रप्रान्तभागगामिन्या आकर्णान्तविश्रान्ताया इति यावत् दृष्टेः=चक्षुषः अंशुभिः=किरणैः उत्पलम्=कर्णेऽवतंसीकृतं कमलदलम् स्पृश्यते=सम्बध्यते वा नवा=अथवा न स्पृश्यते=इति अविद्यमानोऽपि विषयः चमत्कारविशेषजनकत्वेन कविना=काव्यमर्मविदा उत्प्रेक्ष्य=सम्भाव्य उत्कटकोटिकसंशयतामापाद्य इति यावत् वर्ण्यते=सन्दर्भ्यते । अत्र 'प्रायः' शब्द उत्प्रेक्षाव्यञ्जकः ।

इयञ्चोत्प्रेक्षा सामान्यतो द्विविधा वाच्या प्रतीयमाना चेति। इवादिशब्दप्रयोगे वाच्या यथा मूले उदाहृता। इवादिशब्दाप्रयोगे तु प्रतीयमाना। प्रतीयमानैव'गम्या'इत्युच्यते। सा यथा

निमीलनभ्रंशजुषा दृशा भृशं निपीय तं यस्त्रिदशीभिरार्जितः ।
अमूस्तमभ्यासभरं विवृण्वते निमेषनिःस्वैरधुनापि लोचनैः ॥ [श्रीहर्षः]

---

(प्र०) उत्प्रेक्षालक्षणमुदाहरणे योजय ? (उ०) अस्य पृ० पं० २ ।

अत्र यत्त्रिदशीनां [ देवाङ्गनानाम् ] निमेषाभावः स्वाभाविको धर्मः, सोऽयं तादृशनल-निरीक्षणाभ्यासवासनाहेतुत्वेनोत्प्रेक्षितः, इवादिप्रयोगाभावाच्च गम्येयमुत्प्रेक्षा । यथा वा—

नन्वङ्गयाः स्तनयुग्मेन मुखं न प्रकटीकृतम् । हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥

अत्राचेतनयोः स्तनयोर्लज्जाया असम्भवः तस्याः चेतनधर्मत्वात्, अतो 'लज्जया इव' इति योज्यम्, अत इयं स्वव्यञ्जकशब्दानुपादानात् प्रतीयमानोत्प्रेक्षैव ॥ २२५ ॥

[ उत्प्रेक्षोपमयोः परमतनिरासपूर्वकं भेदस्पष्टीकरणम् ]

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम् ॥ २२६ ॥**

केचित्—इवादिशब्दप्रयोगे उपमा 'मन्ये' इत्यादिशब्दप्रयोगे तु उत्प्रेक्षा इति मन्यन्ते, तेषां मतं खण्डयन् उदाहरणान्तरमाह—'लिम्पति' इति । मृच्छकटिकप्रकरणे वर्षाया वर्णनेऽन्धकारवर्णनमिदम् । तमः=अन्धकारः अङ्गानि=गात्राणि लिम्पति इव, नभः= आकाशम् 'अञ्जनम् वर्षति इव' । इति इदम् अपि=इत्येवमाकारं पद्यार्थमपि भूयिष्ठम्= उत्प्रेक्षालक्षणान्वितम्=उत्प्रेक्षाया लक्षणेन अन्यधर्मस्य अन्यतादात्म्यसम्भावनरूपेण लक्षणेन अन्वितम्=युक्तम् अस्ति इति शेषः ।

अत्र अचेतनं तमः, तस्य व्यापनरूपो धर्मः लेपनत्वेन, तथा तादृशस्यैव तस्य तमसः सम्पातरूपो धर्मः नभःकर्तृकाञ्जनवर्षणत्वेन रूपेण सम्भावितः । सेयमुभयत्र विषयभूतस्य [उपमानभूतस्य] तमोव्यापनस्यानुपादानात् अनुक्तविषया स्वरूपोत्प्रेक्षा ज्ञेया ।

एतस्य [पद्यस्य] उत्तरार्धन्तु—'असत्पुरुषसेवेव दृष्टिर्विफलतां गता' इत्यस्ति । तत्रोत्तरार्धे उपमा स्फुटा निर्विवादा च । पूर्वार्धेऽपि 'इव' शब्दप्रयोगाद् उत्तरार्धवद् उपमैवेति केषाञ्चिद् भ्रान्तिरस्ति तामुन्मथयितुमेवेदमुदाहरणं धृतम्, तदेतदनुपदं स्वयमेव विशदयति 'केषाञ्चित्' इत्यादिना ॥ २२६ ॥

[ परमतनिरासे उपपत्तिप्रारम्भः ]

**केषाञ्चिदुपमाभ्रान्तिरिव श्रुत्येह जायते ।**
**नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥ २२७ ॥**

'केषाञ्चित्' इति । इह=लिम्पति इति श्लोके इव श्रुत्या=इवपदप्रयोगेण तिङन्तेन उपमानं न=तिङन्तपदप्रतिपाद्येन कृत्वा कस्यचित् प्रस्तुतस्य उपमितिर्न भवति इति=एवमाकारम् आप्तभाषितम्=आप्तानां भाष्यकारादीनां भाषितम् उक्तिम् अतिक्रम्य=उल्लङ्घ्य उपमाभ्रान्तिः=उपमालङ्कार एवायमिति भ्रमः जायते । 'केषाञ्चित्' इति कथनेन अपरिणतमतीनामेवायं भ्रमो न सर्वेषां परिनिष्ठिताधियामिति सूचितम् ।

**इदमत्राकूतकम्**—यत्रोपमानं सिद्धं तत्रोपमा, यत्र तु तत्साध्यं तत्रोत्प्रेक्षा इति स्थितोऽयं राजमार्गः । एवमुपमानस्य सिद्धत्वसाध्यत्वे उपमोत्प्रेक्षयोः प्रयोजके [भेदके] वर्तेते । सिद्धत्वञ्च—लिङ्गसङ्ख्याकारकान्वितत्वम्, तदनन्वितत्वं साध्यत्वम् । क्रियान्तरा-

---

(प्र०) कस्मिन्नुदाहरणे उत्प्रेक्षोपमयोर्विवादः ? कथञ्च तत्र वादिनां मतभेदः ? तत्खण्डने चाचार्यस्य का युक्तिः ? सिद्धान्तश्च कीदृशः ? (उ०) अस्य पृ० पं० ७ ।

काङ्क्षोत्थापकतावच्छेदकरूपधर्मवत्त्वं साध्यत्वम्, तद्भिन्नत्वं सिद्धत्वमिति यावत्। प्रकृते च उपमानभूतस्य तिङन्तपदप्रतिपाद्यस्य लेपनस्य वर्षणस्य च साध्यत्वमेव क्रियारूपत्वात्। उक्तञ्च वाक्यपदीये—

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥

क्रिया साध्यमिति, सिद्धं सत्त्वमिति चानर्थान्तरम्। तस्मादुक्तस्थले उपमावादिनां भ्रम एव। स्पष्टञ्चेदम्—'धातोः कर्मणः समानकर्त्तृकादिच्छायां वा' [३।१।७] इति पाणिनिसूत्रे महाभाष्ये 'न वै तिङन्तेनोपमानमस्ति' इति। तिङन्तेन=तिङन्तार्थेन इत्यर्थः। क्रियायाः साध्यैकस्वभावत्वात् अनिष्पन्नरूपत्वात् 'इदं तत्' इति परामर्शविषयवस्तुगोचरत्वात् उपमानोपमेयभावस्य 'इदं तत्' इति परामर्शाभावादिति भाव इति च व्याख्यातं कैयटेन। उक्तञ्चाभियुक्तैः—

सिद्धमेव समानार्थमुपमानं विधीयते।
तिङन्तार्थस्तु साध्यत्वादुपमानं न जायते ॥ इति।

तस्माद् उक्तपद्यपूर्वभागे प्रस्तुतमपि व्यापनं न शब्दोपात्तम्, तमस एव चोपमेयत्वस्य वक्तव्यत्वे तस्य लिम्पतीति तिङन्तार्थस्योपमानत्वमयुक्तम्। अपि च क्रियाया उपमेयभावोऽप्ययुक्तः क्रियान्तरापेक्षया न्यूनत्वविरहाविशिष्टत्वात्तस्याः, उपमानापेक्षया उपमेयस्य न्यूनगुणतायाः अङ्गीकारात्। हरिरप्याह—

येनैव हेतुना हंसः पततीत्यभिधीयते। आर्तौ तस्य समाप्तत्वादुपमार्थो न विद्यते ॥

इत्थञ्च परमाप्तमहाभाष्यकाराद्युक्तिविरोधात् तिङन्तस्योपमानोपमेयभावं वदतां साहसमात्रमिदं नितान्तमुपेक्षणीयं विचक्षणैरित्याचार्यदण्डिनामाशयः ॥ २२७ ॥

[ उक्तस्थले उपमायाः स्वीकारे युक्तिविरोधः ]

**उपमानोपमेयत्वं तुल्यधर्मव्यपेक्षया।**
**लिम्पतेस्तमसश्चासौ धर्मः कोऽत्र समीक्ष्यते ॥ २२८ ॥**

इहोपमास्वीकारे प्रामाणिकवचनविरोधं दर्शयित्वा युक्तिविरोधमप्याह—'उपमानोपमेयत्वम्' इति। तुल्यधर्मव्यपेक्षया=तुल्यो धर्मः प्रस्तुताप्रस्तुतयोः समानगुणक्रियादिरूपः साधारणो धर्मः तस्य व्यपेक्षया अनुरोधेन उपमानोपमेयत्वम्=उपमानोपमेयभावः अर्थात् उपमा 'भवति' इति शेषः। प्रकृते च तन्नास्तीति दर्शयति—'लिम्पतेः' इति। लिम्पतेः= लिम्पतीति क्रियावाचकस्य पदस्य तिङन्तार्थस्येत्यर्थः, तमसः च=असौ धर्मः=साधारणो धर्मः, कः अत्र समीक्ष्यते=न कोऽपि प्रतीयते इत्यर्थः। 'लिम्पते' रित्यनुकरणत्वे षष्ठी। अर्थात् लिम्पत्यर्थस्य [ लेपनस्य] तमसश्च साधर्म्याभावात् नैवोपमा युक्ता ॥ २२८ ॥

[ युक्त्यन्तरम् ]

**यदि लेपनमेवेष्टं लिम्पतिर्नाम कोऽपरः।**
**स एव धर्मो धर्मी चेदुन्मत्तोऽपि न भाषते ॥ २२९ ॥**

ननु तमोलिम्पत्यर्थयोर्लेपनमेव साधारणो धर्मोऽस्तु तमो हि वस्तुमात्रमावृणोति लेपनेनापि आवरणं जायते तेनात्र गौणलेपनवत्त्वात् धर्मयोर्बिम्बप्रतिबिम्बभावः स्यादित्या-

शङ्कामुपमर्दयति—'यदि' इति। 'यदि' इह [पदे] लेपनम् एव इष्टम्=साधारणधर्मत्वेन रूपेण लेपनमेव [धर्मः] वाञ्छितं स्यात् तदा लिम्पतिः नाम कः अपरः=साधारणधर्मवान्, उपमानरूपो धर्मी कः स्यात् न कोपीत्यर्थः।

अयमाशयः—वैयाकरणानां मते धात्वर्थरूपो व्यापारः प्रधानं [विशेष्यम्] भवति विशेष्य एव च धर्मी नतु धर्मः। उक्तञ्च—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृतः।
फले प्रधानं व्यापारः तिङर्थस्तु विशेषणम्॥ इति।

एवञ्चात्रान्यः लेपनमन्तरा कश्चन धर्मी न प्रतीयते, लेपनमेव धात्वर्थः प्रधानतया धर्मी न तु धर्मः तत्कथमत्र लेपनस्य साधारणधर्मत्वं स्यात्। लिम्पतिरित्यनुकरणे प्रथमः।

नन्वेकस्यैव लेपनस्य धर्मधर्मिभावः स्यात्? इत्याशङ्कायामाह—'स एव' इति। स एव धर्मः=लिम्पतिरेव धर्मः 'धर्मी [उपमानं] च' इति उन्मत्तः=वातदोषजुष्टः अपि न भाषते=नैव वक्ति।

**अयं भावः**—यद्यपि भेदाभेदवादिनां मते भेदाभावेऽपि औपचारिको धर्मधर्मिभावाङ्गीकारः 'राहोः शिरः, पुरुषस्य चैतन्यम्' इत्यादौ तद्दर्शनात् अन्यथा तादृशव्यवहारानुपपत्तेः तथाप्यसौ भिन्नप्रकारोपस्थितिविषय एव। यथा 'नीलो घट' इत्यादि स्थले, तत्र पुनरुक्तिभिया अभेदमादाय सामानाधिकरण्यसिद्धान्तात्। कार्यकारणस्थलेऽपि प्रकारान्तरेणैव भेदाभ्युपगमात् नतु स एव प्रकारो धर्मितावच्छेदकः स एव धर्मतावच्छेदक इति कस्याप्यभिमतं स्यात् अत एव भेदाभेदवादमुत्थाप्य सर्वतन्त्रस्वतन्त्रै**र्वाचस्पतिमिश्रै**रपि समन्वयसूत्रभाष्यव्याख्यानावसर उक्तम्।

कार्यरूपेण नानात्वमभेदः कारणात्मना।
हाटकाद्यात्मनाऽभेदः कुण्डलाद्यात्मना भिदा॥ इति।

'राहोः शिरः' इत्यादिस्थले त्वगतिकगत्या वैकल्पिको व्यवहारः। तथाचोक्तम्परमर्षिणा

---

१ भेदाभावेऽपि धर्मधर्मिभावाङ्गीकारः।

२ 'नीलो घटः' इत्यत्र यो हि नीलभेदत्वावच्छिन्नाभावः प्रतीयते तत्र नीलभेदस्य तदभावस्य च यो नीलभेदत्वावच्छिन्नप्रतियोगिताकत्वरूपः सम्बन्धः तस्य कथं भानं स्यात्। नचाकाङ्क्षया संभवति पदार्थद्वयसंसर्गस्यैवाकाङ्क्षाभास्यत्वात् नचोक्तसम्बन्धे विभक्तेः शक्तिग्रहोस्ति येनोक्तसम्बन्धस्य शक्त्योपस्थितिः स्यादित्याद्याशयेनाक्षिप्य 'मैवम्—भेदोऽभावश्च विशेषणविभक्तेरर्थो विशिष्टलाभस्त्वाकाङ्क्षादिवशात्। एतेन भेदे नीलादिपदार्थान्वये एकदेशान्वयप्रसङ्ग इति निरस्तम्' इत्यादि बहु सुगूढमुक्तं 'व्युत्पत्तिवादे'। तद्धि परिनिष्ठितमतीनां सूपासितगुरूणां केषाञ्चिदेव वेद्यम्। अस्माभिस्तु प्रसङ्गवशाद् योजनामात्रमुद्दिश्य लघुतरमुक्तम्।

३ परमतमिदमुक्तं न सिद्धान्ताध्वना, सिद्धान्ते तु वास्तवभेदपक्षं परास्य 'अभेदोपादानैवाऽनिर्वचनीयभेदकल्पना' इति स्थापितम्। अस्माभिस्तु यथाश्रुतग्रन्थलापनानुरोधेन उद्धृतं योजितञ्च अनिर्वचनीयपक्षेऽपि व्यवहारकाले उपमानोपमेयभावादिव्यवहारस्य तथैवोपादानादिति दिक्।

'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' [या०पा०१सू०६] इति। एवम् अनन्वयोपमायान्तु एकस्योपमानोपमेयत्वमनन्यसदृशत्वप्रतिपत्तये वैवक्षिकमेव, नचात्र तथा काचिदप्युपपत्तिः, तस्मात् प्रकृते एकस्यैव लेपनस्य धर्मधर्मिभावो सर्वथाऽसङ्गत इति सम्प्रदायविदः॥२२९॥

**कर्त्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे।**
**स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम्॥ २३०॥**

ननु—लेपनव्यापार एवात्र धर्मः स्यात् तस्याश्रयः कर्त्ता, स च तिङा बोधित एव तेनैव चात्र औपम्यं निर्वक्ष्यामः अर्थात् कर्त्तारं धर्मित्वेन लेपनञ्च धर्मत्वेन परिकल्प्य उपमानोपमेयभावो भविष्यति इत्याक्षेपं प्रतिक्षिपति 'कर्त्ता' इति। यदि कर्त्ता=तिङा लेपनव्यापारस्य आश्रयभूतः उपमानं स्यात्=तमसः उपमानत्वेन धर्मित्वेन निर्दिश्येत तदपि न युक्तमिति शेषः। कुत इत्याह—'न्यग्भूत' इति। यतः असौ=कर्त्ता क्रियापदे='लिम्पति' इत्याख्यातपदे न्यग्भूतः= उपसर्जनीभूतः विशेषणीभूत इति यावत् 'तिङर्थस्तु विशेषण' मित्युक्तम्, नहि विशेषणं धर्मी भवितुमर्हति सिद्धस्यैवोपमानत्वं सर्वसम्मतमित्यत्र तात्पर्यम्, लेपनव्यापारे विशेषणतयाऽन्वितः कर्त्ता उपमानतया कथं तमसा सहान्वयो स्यादिति तु परो निष्कर्षः। ननु—एकत्रान्वितस्य अपरत्राप्यन्वयः स्यात् को दोष इत्याशङ्कामपनुदति—स्वक्रियासाधनव्यग्रः=स्वस्य कर्त्तुः या क्रिया धात्वर्थव्यापाराख्या लेपनरूपा तस्याः साधने सिद्धौ सम्पादने व्यग्रः तत्परः अर्थात् विशेषणभावं प्राप्तः असौ कर्त्ता अन्यत्=कार्यान्तरम् अपेक्षितुम्=साधयितुं[1] अलम्=नैव समर्थः।

अयमाशयः—यः कश्चित् यदा यस्यायत्तो भूतः कार्यं करोति तदासौ अन्यायत्तो भूत्वा कार्यं कर्त्तुं नैव पारयते एवमेव एकक्रियापरतन्त्रो विशेषणीभूतः कर्त्ता प्रकृते उपमानस्य कथं विशेषणीभूतः स्यात्। आह च दीधितिकारः—'इतरविशेषणत्वेनान्वितस्यान्यत्र विशेषणत्वेनान्वयायोगात्' इति। तस्मात् प्रकृते कर्त्ता नोपमानभावं भजते—इति तत्त्वम्।

तथा च निराकाङ्क्षत्वादुपमानत्वेनान्वयो न युक्त इति भावः। एतेन तमसि लेपनकर्तृत्वमुत्प्रेक्ष्यालङ्कारसर्वस्वकारोक्तमपास्तम्, तस्यापि कर्तृविशेषणत्वात् विवक्षितविवेकेन लेपनस्यैवोत्प्रेक्ष्यत्वाच्च। एवञ्च—प्रधानभूतलेपनक्रियागोचरा भावनैव निगीर्णव्यापनविषया इति सिद्धम्॥ २३०॥

[ आक्षेपान्तरपरिहारः ]

**यो लिम्पत्यमुना तुल्यं तम इत्यपि शंसतः।**
**अज्ञानीति न सम्बद्धं सोऽपि मृग्यः समो गुणः॥ २३१॥**

ननु—व्यापारविशेष्यकान्वयबोधवादिनां वैयाकरणानां मते कर्त्तुर्नोपमानत्वेनान्वयः स्यात् प्रथमान्तमुख्यविशेष्यकशाब्दबोधवादिनां नैयायिकानां मते तु नासौ दण्डवारितः, नह्येषां मते कर्त्ता क्रियायां विशेषणीभूतो येनान्वयो न भविष्यति इतीममाक्षेपं परिहर्त्तुमाह- 'य' इति। यः लिम्पति, अमुना तमः तुल्यम् इत्यपि शंसतः=एवमपि प्रतिपादयतः वादिनो नैयायिकस्य मत इति शेषः, 'अज्ञानि' इति [कर्मपदमेतत्] न सम्बद्धम्=नैवान्वितं भवती-

---

१ स्वप्रकारकान्वयबोधे विशेष्यत्वेनाकाङ्क्षितुम् पदार्थान्तरान्वयबोधे प्रकारीभवितुमिति यावत्।

न्यर्थः । अर्थात् एवंवादिनो मते उपमेयं तमः तत्कर्तृकान्वययोग्या काचनान्या क्रिया नास्ति । एवञ्चोपमेयांशे क्रियाया अनन्वय एव दोषः ततश्च कथं शाब्दबोधः ।

वस्तुतस्तु—'लेपनकर्तृ तम' इत्येव बोधः यददसोः पदयोरनुपादाने स्फुटं शाब्दबोधानुदयात् उपात्तशब्दार्थानामेव शाब्दबोधविषयत्वात् ।

ननु—'अङ्गकर्मकलेपनकर्तृ तुल्यं तम' इत्येव शाब्दबोधोऽस्तु का क्षतिरिति चेत् ? तत्राह—'सोऽपि' इति । एवं कृते सति सः=साधारणगुणः 'अपि' मृग्यः=अन्वेषणीयः, अन्यथा [साधारणधर्माप्रयोगे] उपमायाः प्रतीतिरेव न स्यात् ।

इदमत्राकूतकम्—यद्यपि 'अङ्गकर्मकलेपनानुकूलवर्तमानकालिककृतिमत्तमः' इति शाब्दबोधो नैयायिकमते, तत्रापि अचेतने तमसि चेतनधर्मस्य कृतेर्बाधात् तादृशव्यापाराश्रयस्तम इत्येव बोधः यथा 'रथो धावति' इत्यादिस्थले स्पष्टम् तथापि प्रकृते उपमावादिनो मते नोक्तरीत्या शाब्दबोधः तस्य तु 'यः लिम्पति अमुना तमः तुल्यम्' इत्येवोपमाया आकारः स्यात् । तथा च 'लेप्यसंयोगफलकवर्तमानकालिककृतिमान् देवदत्तः तत्प्रतियोगिकसादृश्याश्रयस्तम' इत्येव शाब्दबोधस्याकारो वक्तव्यः, तथा सति श्लोकस्थम् 'अङ्गानि' इति कर्मपदं कुत्राप्यन्वितं न भविष्यतीति दर्शितस्थले उपमावादिनो मते वाक्यार्थानुपपत्तिरिति दूषणमनिवार्यमापद्येत । अथ 'अङ्गकर्मकलेपनकर्तृतुल्यं तम' इति शाब्दबोधः स्वीक्रियेत तदा उपमानोपमेययोः साधारणधर्मोऽवश्यं वक्तव्यो भविष्यति, स चेहानुपात्तोऽपि अप्रसिद्ध एवेति सर्वथेहोपमावादपक्षो गर्हणीयः एतच्च वक्ष्यमाणयुक्त्यापि स्फुटं प्रदर्श्यते॥२३१॥

**यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते ।**
**न तथा लिम्पतौ लेपादन्यदत्र प्रतीयते ॥ २३२ ॥**

नन्वत्र साधारणधर्माप्रयोगे लुप्तोपमैव स्याद् इति चेद् ? अत्राह—'यथा' इति । ते वक्त्रम् इन्दुः इव इति=इत्यत्र यथा कान्तिः=सौन्दर्यम् [आह्लादकत्वादि] प्रतीयते=वाचकाप्रयोगेऽपि साधारणधर्मत्वेनावगम्यते, अत्र=उक्तकाव्ये लिम्पतौ=लिम्पतिपदघटितप्रयोगे लेपनकर्तर्युपमाने सतीति वा लेपात् अन्यत् किमपि तथा=तद्वत् न प्रतीयते=नैव ज्ञायते इत्यर्थः।

यद्यपि धर्मलुप्तोपमास्थले साधारणस्य प्रयोगो न भवति तथापि तत्र सादृश्यं प्रसिद्धमिति कृत्वा साधारणधर्मः स्फुट एवावभासते। अत्र तु—तमसः लेपनकर्तुश्च नैव कश्चित्स्फुटः साधारणो धर्मः तस्मान्नात्र लुप्तोपमाऽपि भवितुमर्हतीति साधारणधर्माप्रतीतौ उपमाकथनं नितान्तमसङ्गतमित्याशयः ॥ २३२ ॥

[ परमतनिरासपूर्वकः स्वसिद्धान्तोपसंहारः ]

**तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्तृकः ।**
**अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम् ॥ २३३ ॥**

एवं विपक्षे दोषानुपसंहरन् स्वमतं दृढीकरोति—'तद्' इति। तत्=तस्मात् कारणात् उपश्लेषणार्थः=उपश्लेषणं व्यापनमेवार्थो यस्य स तादृशः ध्वान्तकर्तृकः=ध्वान्तं तमः कर्तृ यस्य सः तमःकर्तृकः तथा अङ्गकर्मा=अङ्गानि कर्म यस्य सः लिम्पतिः=लेपनक्रिया पुंसा=कविनिबद्धेन वक्त्रा उत्प्रेक्ष्यते=सम्भाव्यते इति इष्यताम्=अकामेनाप्यङ्गीक्रियतामिति भावः ।

विषयः, प्रस्तुतोऽर्थः, उपमेयं, प्रकृतमित्यनर्थान्तरम् । एवं विषयी, अप्रस्तुतोऽर्थः

उपमानम् अप्रकृतमित्यनर्थान्तरम् । प्रकृते च तमःकर्तृकमङ्गव्यापनमुत्प्रेक्षाया विषयः, तादृशलेपनञ्च विषयी, एवं प्रस्तुतं तमोव्यापनं विषयः तादृशविषयिभूतेन लेपनत्वेन रूपेण उत्प्रेक्ष्यत एव नतूपमीयत इति परः सारः ॥ २३३ ॥[1]

[ उत्प्रेक्षाया व्यञ्जकाः शब्दाः ]

**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।**
**उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ २३४ ॥**

---

इति-उत्प्रेक्षाचक्रम्

---

उत्प्रेक्षाव्यञ्जकान् शब्दानाह—'मन्य' इति । व्यज्यते=द्योत्यते । तादृशः=उत्प्रेक्षाव्यञ्जकः । यत्र तु द्योतकशब्दस्य प्रयोगो न कृतः तत्रान्वयबोधनाय सम्भावनाया उत्थाने प्रतीयमानोत्प्रेक्षा ज्ञेया इति चोक्तप्रायम् । शिष्टं स्पष्टम् । 'इति' इति । उत्प्रेक्षायाः चक्रं गणः समाप्त इत्यर्थः ।

अथ जिज्ञासुजनबुद्धिवैशद्याय उत्प्रेक्षाया अन्यान्यपि कानिचिदुदाहरणानि प्रदर्श्यन्ते लक्ष्येषु प्राचुर्येण योजितं लक्षणं स्थिरं भवतीति—

अङ्गुलीभिरिव केशसञ्चयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥

[ काव्यालङ्कारवृत्तौ ]

अत्र अङ्गुलीसदृशीभिर्मरीचिभिः केशसञ्चयसदृशस्य तिमिरस्य ग्रहणात् स्वमात्र-

---

१ अयमत्राभिसन्धिः—'लिम्पति' इति 'लिप' उपदेहे । तौदादिकः । 'शेमुचादीनाम्' [७।१।५९] इति नुमि लटि प्रथमपुरुषैकवचने रूपम् । उपदेहो वृद्धिः । सा च प्रकृते शुष्काशुष्कद्रव्याधिकरणको द्रवद्रव्यीयसंयोगविशेषः लेपनक्रिया, एतस्मिन्नेवार्थे [एतद्रूपायां लेपनक्रियायाम्] 'लिप' धातोः शक्तिः । अत एव कविकल्पद्रुमादिषु 'लिम्पति लिम्पते वा चन्दनेन गात्रं सुखी' इत्येवंरीत्या उदाह्रियते । ततश्च प्रकृते बाधितमुख्यार्थो लिम्पतिः अधोदेशव्यापनरूपेऽर्थे लक्षणया वर्त्तते, लक्षणा चात्र साध्यवसाना एवमाख्यातार्थो लक्षणाया विषयत्वम्, सम्भावनञ्चेवार्थः । तथा सति—तमःकर्त्तृकाधोदेशव्यापनम् अङ्गलेपनप्रकारकसम्भावनाविषयः [ सान्द्रमलिनीकारकतमःकर्त्तृकाङ्गकर्मकलेपनप्रकारकसम्भावनाविषयस्तमः ] इति वाक्यार्थबोधः । अथवा—लेपनप्रकारकसम्भावनाविषयाधोदेशव्यापनाश्रयस्तमः । प्रथमबोधे तु—इवार्थसम्भावनाया विशेष्यतया आख्यातार्थे तमसश्च कर्त्तृतासम्बन्धेन धातुलक्ष्याधोदेशव्यापने, धातुशक्यलेपनस्य प्रकारतासम्बन्धेन सम्भावनायामन्वयः । द्वितीयवाक्यार्थे तु—शक्यभूतस्य लेपनस्य प्रकारतया सम्भावनायां, सम्भावनाया निरूपितत्वसम्बन्धेन विषयत्वे, तस्य च लक्ष्येऽधोदेशव्यापने तस्याश्रयतया तमसि अन्वय इति पक्षद्वयेऽपि विशेषः । गूढविचारस्तु रसगङ्गाधरालङ्कारकौस्तुभप्रभृतिषु कृतो द्रष्टव्यः । सुकुमारमतीनां बुद्धिव्याकुलताभिया नेह प्रतानितः ।

धर्मादेव शशिनश्चुम्बनमुत्प्रेक्षितम् अर्थात् प्रस्तुतेऽस्मिन् चन्द्रोदयवर्णने स्वभावतो रज-र्नीमुखस्य चन्द्रोदयात् पूर्वं तमसावृतिरूपा वृत्तिः स्थिता उदीयमानस्य चन्द्रस्य तदपसारण-पूर्वकप्रकाशरूपा वृत्तिश्च स्थिता [कविना] 'मुख' शब्देन आरम्भलक्षणे उदये वर्ण्यमाने श्लेषमहिम्ना शशिकर्तृकरजनीमुखकर्मकचुम्बनत्वेन उत्प्रेक्षिता [सम्भाविता]। अत्र च सम्भाव्यमानत्वात् स्वरूपोत्प्रेक्षेयं बोध्या । यथा वा—

नभस्तले किञ्चिदिव प्रविष्टाश्चकाशिरे चन्द्ररुचिप्ररोहाः ।
जगद्गिलित्वा हसतः प्रमोदात् दन्ता इव ध्वान्तनिशाचरस्य ॥ [वाग्भटे]

अत्रान्यरूपेण स्थितस्याचेतनस्य चन्द्रमयूखस्य स्वरूपं ध्वान्तराक्षसस्य दन्तरूपत्वे-नोत्प्रेक्षितम् । 'ध्वान्तमेव निशाचर' इत्यत्र तु रूपकम् । यथा वा मम 'दरभङ्गाभिनन्दने'—

क्षीरसमुद्रविलोडनकरणादुत्थाः सुधाकणिकाः ।
ताभिर्धाता नूनं तव नेत्रे रचितवान् दयाक्रान्ते ॥

अत्र शास्त्रीयाचारपरिपालनलब्धदैवीसम्पत्तिमतो राज्ञो नेत्रयोर्दयाक्रान्ततारूपा वृत्तिः स्वरूपेण स्थिता, परमेवंरूपा तयोः सा वृत्तिः कविना क्षीरसमुद्रोद्भूतसुधाकणिकाजन्यत्वेन सम्भाविता इतीयं हेतूत्प्रेक्षा अन्यरूपेण स्थितयोरपि नेत्रयोर्दयाक्रान्तत्वे सुधाकणिका-जन्यत्वं तत्र हेतुत्वेनोत्प्रेक्षितम् । किञ्च—[यशस्तिलके]

---

१ 'सरस्वतीकण्ठाभरणकारः'—तु इमां क्रियोत्प्रेक्षामाह । विवृणोति चैवम्—अत्र अङ्गुलीभिः केशेषु गृहीत्वा प्रियामुखं चुम्ब्यते, सा च लोचने मीलयतीति प्रायोवादः । तत्र मुखचुम्बनादिक्रिया प्रधानमङ्गीभूता प्रतीयते, केशग्रहणाक्षिनिमीलने चाङ्गभूतेऽप्रधाने, तत्र अङ्गीभूतायाः क्रियायाः उत्प्रेक्षणेन अवयवभूता क्रियोत्प्रेक्षिता भवति । यथाहि—'कुड्मली-कृतसरोजलोचनम्' इत्यत्र नोत्प्रेक्षापदम् । एवम् 'अङ्गुलीमरीचिभिः तिमिरकेशसञ्चयं सन्निगृह्य' इत्यत्रापि तन्न प्राप्नोति । मरीच्यङ्गुलीसंनिगृहीततिमिरकेशसञ्चयामित्येवं वा वक्तव्यं भवति । तत्र योऽयमवयवक्रियायामपि अन्यपदार्थोक्तद्वितीयावयवक्रियाविलक्षण इवप्रयोगेण पृथक्-पदतया वाक्यकल्पः स इव अस्यापि व्याख्यानपरत्वेन अप्यनुयोज्यमानः कविभिः उत्प्रेक्षा-वयव इत्युच्यते ।

अन्ये पुनर्यत्र प्रधानक्रिया नोत्प्रेक्ष्यते अवयवक्रिया तु उत्प्रेक्ष्यते तमुत्प्रेक्षावयवं वर्णयन्ति । यथा—

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिः
चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥

अत्र प्रधानक्रिया लग्ना नोत्प्रेक्ष्यते। लग्ना=कथमपि मनसो निष्कर्ष्टुं न शक्येत्यर्थः । अस्माभिस्तु निशाशशिनोः स्वावस्थं स्वरूपं नायकनायिकाव्यवहारसमारोपगर्भीकृतं मत्वा तदवस्थत्वेनोत्प्रेक्षितामिति रुचिभेदो हेतुः ।

२ गिलित्वा=ग्रसित्वा । चकाशिरे=बभासिरे । चन्द्ररुचिप्ररोहाः=चन्द्रस्य प्रभाङ्कुराः ।

या कामकेलीशुकतुण्डकान्ता पातुं मुखामोदमिवायताऽभूत् ।
सा गन्धवाहा विवरावशेषे-निवेशनिर्गच्छदतुच्छपूया ॥

अत्र स्वभावतः सुन्दर्याः नासिकाया स्थिता दीर्घा वृत्तिः कविना मुखामोदपानकर्तृत्वेन रूपेण उत्प्रेक्षिता । यथा वा—[सरस्वतीकण्ठाभरणे]

सेनागजाः स्वकरपल्लवलेखनीभिर्गण्डस्थलान्मदमसीर्मुहुराददानाः ।
मन्ये नरेन्द्र ! तव तोयधितीरतालीपत्रोदरेषु विजयस्तुतिमालिखन्ति ॥

अत्र सेनागजानां गण्डस्थलेभ्यो लेखन्याकारैः करैर्मसीरूपस्य मदपयसो यदादानम्, यश्च तीरतालीपत्रोदरेषु महार्णवतया निक्षेपः स उक्तरूपेण अन्यथोत्प्रेक्ष्यते इति सेयमुत्प्रेक्षा 'क्रियोत्प्रेक्षा' भवति । यथा वा—

पूरं विधुर्वर्धयितुं पयोधेः शङ्केयमेणाङ्कमणीं क्रियन्ति ।
पयांसि दोग्धि प्रियविप्रयोगे सशोककोकीनयने क्रियन्ति ॥

अत्र चन्द्रेण कृतं समुद्रस्य बृंहणं सदेव [ स्वरूपेण स्थितमेव ] कृतस्य चन्द्रकान्तद्रावणस्य कोकाङ्गनावाष्पस्रावणस्य च फलत्वेनोत्प्रेक्ष्यत इति सिद्धविषया [ उपात्तविषया ] फलोत्प्रेक्षेयम् । चन्द्रोदयवर्णनमिदम् । यथा वा—

विवस्वतानायिषतेव मिश्राः स्वगोसहस्रेण समं जनानाम् ।
गावोऽपि नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः ॥

अत्र विवस्वता कृतं स्वकिरणैः सह जनलोचनानां नयनमसदेव रात्रावान्ध्यम्प्रति हेतुत्वेनोत्प्रेक्ष्यते इत्यसिद्धविषया हेतूत्प्रेक्षेयम् । सूर्यास्तवर्णनमिदम् । यथा वा—

परीतमुक्षावजये जयश्रिया नदन्तमुच्चैः क्षतसिन्धुरोधसम् ।
ददर्श पुष्टिं दधतं स शारदीं सविग्रहं दर्पमिवाधिपं गवाम् ॥ [भारवि०]

अत्र चेतनस्य उक्ष्णः उक्षावजयनदननदीतटोत्खाननात्मिका स्थिता वृत्तिः मूर्त्तिमद्दर्पत्वेनोत्प्रेक्षिता । अन्यदपि—

भूयस्तराणि यदमूनि तमस्विनीषु ज्यौत्स्नीषु च प्रविरलानि ततः प्रतीमः ।
सन्ध्यानलेन भृशमम्बरमूषिकायामावर्त्तितैरुडुभिरेव कृतोऽयमिन्दुः ॥ [मुरारिः]

अत्र—ताराविरलत्वरूपेणान्यमात्रधर्मेण चन्द्रस्य [ अचेतनस्य ] सन्ध्यानलमध्यगाम्बरमूषिकावर्त्तिततारानिकरनिमित्तत्वमुत्प्रेक्षितम् [ अत इयं हेतूत्प्रेक्षा ] । किञ्च—

सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसन्तं शिशिरानलैर्मां तरङ्गहस्तैरुपगूहतीव ॥ [रघुवंशे]

अत्राचेतनानां तरङ्गाणामूर्ध्वप्रसरणं नाम स्थिता वृत्तिः उपगूहनत्वेन [आलिङ्गनत्वेन] रूपेण सम्भावितेति क्रियोत्प्रेक्षा । यथा वा—

रुचयोस्तमितस्य भास्वतः स्खलिता यत्र निराश्रयाः खलु ।
अनुसायमभुर्विलेपनापणकाश्मीरजपण्यवीथयः ॥ [नैषधे]

---

१ गन्धवाहा=नासिका । कामस्य यः केलीशुकः क्रीडाकीरः तस्य तुण्डवत् मुखवत् कान्ता मनोहरा । विवरस्य छिद्रस्य अवशेषः उद्धारो योऽसौ निवेशः स्थानं तस्मात् निर्गच्छत् निर्गलत् अतुच्छं प्रचुरं पूयं नष्टरुधिरं यस्यां सा तथाभूता । स्पष्टमन्यत् ।

अत्र—परत्रस्थितानामचेतनानां काश्मीरकुङ्कुमकेसराणां स्थिता वृत्तिः आरुण्यसावर्ण्यात् सायन्तनार्कविटत्वेन रूपेणोत्प्रेक्षिता । परमियं गम्योत्प्रेक्षा । वाचकशब्दाप्रयोगात् । यथा वा—

रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः ।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥

अत्र—उरगान् प्रति प्रियाख्यानमसदेव भूप्रवेशस्य फलत्वेन सम्भावितमित्यसिद्धविषया फलोत्प्रेक्षा । अन्यच्च —

गोवर्धनं गिरिमुपेत्य कटाक्षबाणान् कर्णस्फुरन्मणिशिलोपरि संक्ष्णुवाना[1] ।
का भ्रूधनुर्धुवनसूचितलुब्धनेयं व्यग्रीकरोत्यहह मामपि सम्भ्रमेण ॥

अत्र—कर्णप्रान्ते नेत्रान्तगतागतमेव तद्वर्त्तिमणिशिलोपरि कटाक्षबाणतेजनतादात्म्येन सम्भाव्यते [उत्प्रेक्षितम्] किञ्च—[हरविजये]

मन्दाकिनीसलिलनिर्भरपूर्यमाणगम्भीरकुक्षिकुहरोद्गततारनादम् ।
अद्यापि यस्य शिरसि श्रियमेत्यशान्तवेदध्वनीव परमेष्ठिशिरःकपालम् ॥

अत्र सदेव परमेष्ठिशिरःकपालं मन्दाकिनीसलिलगतागतनादावच्छिन्नम् अनारतवेदध्वनिशोभावत्त्वेन रूपेणोत्प्रेक्षितम् । अपि च—

यस्यां हरिन्मणिविनिर्मितहर्म्यरश्मिलीढोदराः प्रतिदिशं निशि तारकौघाः ।
उद्भिन्नकोमलकुशाङ्कुरकोटिलग्ननैशोदबिन्दुपटलश्रियमालिलिङ्गुः ॥

अत्र—अचेतनानां तारकौघानां मरकतमणिनिर्मितप्रसादसमुत्थकिरणप्रतिफलितानां स्थिता वृत्तिः उद्गच्छद्धरितकुशतृणाग्रभागपतितावश्यायबिन्दुग्रामशोभात्वेन रूपेणोत्प्रेक्षिता इत्यस्मिन्मते द्रव्यस्वरूपोत्प्रेक्षेयम्, मतान्तरे तु क्रियोत्प्रेक्षेति युक्तायुक्तं सुधीभिर्विवेच्यम् । यथा वा—

पल्लवितं चन्द्रकरैरखिलं नीलाश्मकुट्टिमोर्वीषु ।
ताराप्रतिमाभिरिदं पुष्पितमवनीपतेः सौधम् ॥ [रुद्रटः]

अत्र—सौधाख्यस्य वस्तुनः अपल्लविता अपुष्पिता च स्थिता वृत्तिः चन्द्रतारकाप्रतिबिम्बसम्पर्कात् तद्योग्यतायां सत्यामसम्भाव्यमानापि पल्लवितत्वेन पुष्पितत्वेन च रूपेणोत्प्रेक्षिता इवार्थस्य सामर्थ्याद् गम्यमानत्वाद् गम्या [प्रतीयमाना] उत्प्रेक्षेयम् परमियं स्वरूपस्यैव । यथा वा—

कमनीयविशालभालगां कुटिलां चारुकलां कलानिधेः ।
दहनस्य तृतीयदृग्जुषः प्रशमायेव बिभर्त्ति योऽनिशम् ॥ [लक्ष्मीकाव्ये]

अत्र—महादेवशिरसि स्थिताया एव कलानिधेः [शशिनः] कलायाः वृत्तिः तृतीयनेत्रजन्मनोऽनलस्य प्रशमनार्थत्वेन सम्भाविता । धारणन्तु नोत्प्रेक्षाविषयः । यथा वा—

विलोलकल्लोलकरप्रहारैर्वीवारणौघीतनिपातदन्तैः ।
यद्ध्रमुच्छेत्तुमजातशक्तिः फेनैर्विलक्षो हसतीव सिन्धुः ॥ [नेमिनिर्वाणे]

---

१ संक्ष्णुवाना=तीक्ष्णान् कुर्वाणा ।

अत्र सिन्धोः फेनवमनरूपा वृत्तिः हसनत्वेनोत्प्रेक्षितेति क्रियोत्प्रेक्षेयम्। एवमुत्प्रेक्षायाः भूयान् समाचारो महाकाव्येषु द्रष्टव्यः। नाश्च नानाप्रकाराः सन्तीति ग्रन्थगौरवं मन्यमानेन मया सकला न समाहृताः ग्रन्थान्तरतोऽवसेयाः ॥२३४॥

[ हेतोर्वर्णनम् ]

**हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम्।**
**कारकज्ञापकौ हेतू तौ चानेकविधौ यथा ॥ २३५ ॥**

—*—

हेतुः समस्तजगतां सकलेश्वरो यो ब्रह्मादिभिर्हृदि धृतो विधुनोति पुंसाम्।
पापानि पुण्यफलकानि च सन्तनोति तं कृष्णनीलिममणिं शरणं प्रपद्ये ॥

—*—

परमतं खण्डयन्नेव क्रमप्राप्तानां हेतुसूक्ष्मलवानां स्वरूपं निरूपयति—'हेतुश्च' इति। 'हेतुः सूक्ष्मः' तथा उद्देशसूत्रे 'लव' पदेनोक्तो लेशश्च एते त्रयः वाचाम्=कविभणितीनाम् उत्तमभूषणम्=एते त्रयोपि उत्कृष्टा अलङ्कारा इत्यर्थः। तस्माद् 'भामहादिभि'रुक्तम्—यद्

---

१ साहित्याचार्यैः कृतानि उत्प्रेक्षाया लक्षणानि बहुदर्शित्वसम्पादनाय प्रदर्श्यन्ते—

'सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्' इति [काव्यप्रकाशे]।

'उत्त्वेन चारु तद्वत्त्वेन वा सम्भावनं भवेत्।

उत्प्रेक्षा वाच्यगम्यत्वभेदात् सा द्विविधोच्यते' ॥ [साहित्यसारे] उत्त्वेन=उत्प्रेक्ष्यधर्मित्वेन। तद्वत्त्वेन=उत्प्रेक्ष्यधर्मविशिष्टत्वेन वा।

'सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना' [चन्द्रालोके]

'अध्यवसाये व्यापारप्राधान्ये उत्प्रेक्षा' [अलङ्कारसर्वस्वे]

तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयतद्वृत्तितत्समानाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सम्भावनमुत्प्रेक्षा [रसगङ्गाधरे]

'भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना' [साहित्यदर्पणे]

'यत्रान्यधर्मसम्बन्धादन्यत्वेनोपतर्कितम्।
प्रकृतं हि भवेत् प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते ॥ [चित्रमीमांसायाम]

'अन्यथावस्थितं वस्तु यस्यामुत्प्रेक्ष्यतेऽन्यथा।
द्रव्यं गुणः क्रिया वापि तामुत्प्रेक्षां प्रचक्षते ॥ [सरस्वतीकण्ठाभरणे]

'कल्पना काचिदौचित्याद्यत्रार्थस्य सतोऽन्यथा।
द्योतितेवादिशब्दैरुत्प्रेक्षा सा स्मृता यथा ॥ [वाग्भटे]

यत्रातितथाभूते सम्भाव्येत क्रियाद्यसम्भाव्यम्।
सम्भूतमतद्वति वा विज्ञेया सेयमुत्प्रेक्षा ॥ [काव्यालङ्कारे]

अथवा—

अतिसारूप्यादैक्यं विधाय सिद्धोपमानसद्भावम्।
आरोप्यते च तस्मिन्नतद्गुणादीति सोत्प्रेक्षा ॥ [काव्यालङ्कारे]

हेतुश्च सूक्ष्मलेशौ च नालङ्कारतया मताः।
समुदायाभिधेयस्य वक्रोक्त्यनभिधानतः॥ इति—

तत् परास्तं वेदितव्यम्। तत्र सामान्यतो हेतोर्द्वौ प्रकारौ कारको ज्ञापकश्चेति। तौ च कारकज्ञापकौ हेतू अनेकविधौ=अनेकप्रकारौ भवत इति शेषः 'यथा' इत्यग्रेऽनुपदमुदाहरामः॥२३५॥

[ सप्रभेदस्य कारकहेतोरुदाहरणादिप्रपञ्चः ]

**अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः।**
**उत्पादयति सर्वस्य प्रीतिं मलयमारुतः॥ २३६॥**

तत्रादौ कारकहेतुमुदाहरति—'अयम्' इति। अयम्=पुरतश्चलन् मलयमारुतः=दक्षिणोऽनिलः सर्वस्य=विश्वस्यापि कामिनो जनस्य प्रीतिम्=हर्षम् उत्पादयति=जनयति रतिविलासाय चेतश्चञ्चलीकरोतीत्यर्थः। कथम्भूतः आन्दोलितप्रौढचन्दनद्रुमपल्लवः=आन्दोलिताः मन्दमन्दमवधूनिताः प्रौढाः वासन्तिकत्वाद् बहुलीभूताः अर्थात् वसन्तकालत्वात् प्रचुराङ्कुरोपेताः चन्दनद्रुमाणां पल्लवाः पत्राणि [ प्रवाला इति यावत् ] येन सः तादृशः। अनेन मलयमारुतो मन्दः सुगन्धः शीतलश्चेति व्यक्तीकृतम्।

अत्र मलयमारुतः प्रीतिजनने कारको हेतुः। आन्दोलितेतिविचित्रार्थविशेषणवत्तया सहृदयहृदये समधिकचमत्कारजनकत्वात्तस्यालङ्कारत्वमिष्टमेवेति स्फुटोऽभिप्रायः। इदञ्चोत्पादनक्रियायाः प्रवृत्तौ हेतुरुक्तः। निवृत्तावपि च भवति। यथा—

मुग्धे तव मुखामोदलोलुपो मधुपो भ्रमन्।
कर्णिकाकमलं फुल्लमपि नाभिसरत्ययम्॥ इति।

अत्राभिसरणक्रियायाः प्रतिषेधः [ निवृत्तिः ] उक्तः॥ २३६॥

[ उक्तोदाहरणे हेतुस्वरूपयोजनम् ]

**प्रीत्युत्पादनयोग्यस्य रूपस्यात्रोपबृंहणम्।**
**अलङ्कारतयोद्दिष्टं निवृत्तावपि तत्समम्॥ २३७॥**

---

१ इदमत्रावधार्यम्—'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' इति–हेतुमता कार्येण सह हेतोः कारणस्य अभेदतः अभेदेन अभिधानं कथनं हेतुः हेत्वलङ्कारः इति 'भट्टोद्भटस्य' मतम्। तस्यायमाशयः—यथा सारोपा गौणी लक्षणा रूपकालङ्कारस्य सैव साध्यवसाना प्रथमातिशयोक्तेः प्रयोजिका तथैव कार्यकारणभावसम्बन्धनिबन्धनतया शुद्धसारोपाध्यवसानमूलोऽयं हेत्वलङ्कारोपि। परन्तु—दण्ड्यपेक्षया प्राचीना 'भामहाद्याः' अर्वाञ्चश्च 'मम्मटाद्या' नात्र वैचित्रीं मन्यन्ते, ते तु 'काव्यलिङ्ग'मेव हेतुं मन्वन्ते। वस्तुतस्तु—

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः।
रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः॥

इत्यादिषु विचित्रता सहृदयानुभवसिद्धा इत्युद्भटादीनां मतं साध्वेवाभाति इत्यपि केचित्। परमस्माभिः 'भामह' ग्रन्थः साक्षान्न दृष्टः। 'हेतुमता' इत्यादिहेतुलक्षणं 'रुद्रट'कृतकाव्यालङ्कारे दृश्यते परन्तु रुद्रटादपि प्राचीनस्य 'उद्भटभट्टस्य' मते काव्यलिङ्गादपरो हेतुर्नाभातीति तदीयग्रन्थावलोकनादध्यवस्याम इति संक्षेपः।

उक्तं घटयति—'प्रीत्युत्पादनयोग्यस्य' इति । प्रीत्युत्पादनयोग्यस्य=प्रीतिरानन्दः तस्या उत्पादनम् जननं तद्योग्यस्य रूपस्य=आन्दोलनादिविशेषणोपेतस्य मलयमारुतस्य प्रीत्युत्पादनक्रियायाः कर्त्तुः यद् उपबृंहणम्=विचित्रतयोपन्यासः तद् [उक्तपद्ये] अलङ्कार-तया=कारकहेत्वलङ्कारत्वेन उद्दिष्टम्=कथितम् ततश्च वैचित्र्यसत्वे कथमस्यालङ्कारत्वं न स्यादिति भावः । न केवलं प्रवृत्तावेवायमलङ्कारो यावद् निवृत्तावपि इत्याह—'तत्' इति । तत् निवृत्तौ अपि समम्=समानम् अर्थात् क्रियाया निवृत्तावपि हेत्वलङ्कारो भवति. तद्यथा—अधस्तात् टीकायामुदाहृतम् । मूले चाग्रेऽनुपदमपि ॥ २३७ ॥

[ अभावसाधने हेतोरुदाहरणम् ]

**चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान् ।**
**पथिकानामभावाय पवनोऽयमुपस्थितः ॥ २३८ ॥**

भावसाधने उदाहरणमुक्त्वा अभावसाधनेऽपि दर्शयति—'चन्दनारण्यम्' इति । चन्दनारण्यम्=चन्दनवनम् आधूय=मन्दं मन्दं धूनयित्वा ईषत्कम्पयित्वा मलयनिर्झ-रान्=मलयपर्वतसम्बन्धीनि प्रस्रवणानि स्पृष्ट्वा=चुम्बित्वा अयं पवनः=पुरतश्चलन् मारुतः पथिकानाम्=पान्थानाम् अभावाय=ध्वंसाय उपस्थितः=सन्नद्धः । तादृशो मारुतो विरहिणो जनान् अत्यन्तं खेदयतीति भावः । अत्र चन्दनारण्यधवनकथनेन सौगन्ध्यमान्द्ये मलयनिर्झरस्पर्शकथनेन शैत्यञ्च व्यञ्जीकृतम् ॥ २३८ ॥

[ दर्शितलक्ष्ये अभावसाधनहेतोः संगमनम् ]

**अभावसाधनायालमेवम्भूतो हि मारुतः ।**
**विरहज्वरसम्भूतमदनाग्न्यातुरे जने ॥ २३९ ॥**

उक्तोदाहरणे दर्शितमभावसाधनं [हेतुं] स्वयं घटयति—'अभावसाधनाय' इति । हि=यतः एवम्भूतः=सौरभ्यादिगुणोपेतः मारुतः=पवनः विरहज्वर०=विरहज्वरेण वियोगतापेन सम्भूतः सञ्जनितः यः मदनः कामः एवाग्निः अनलः तेन अर्थात् वियोगजनितकामानलेन आतुरे पीडिते जने=कामिनि अभावसाधनाय=मारणाय अलम्=समर्थः उपस्थितिद्वारेति शेषः । एवमत्र पथिकाभावसाधनसमर्थता मलयमारुतवर्णनावैचित्र्यं हेत्वलङ्कारतां प्रयोजयति ॥२३९॥

**निर्वर्त्त्ये च विकार्ये च हेतुत्वं तदपेक्षया ।**
**प्राप्ये तु कर्मणि प्रायः क्रियापेक्षैव हेतुता ॥ २४० ॥**

उक्तयोरुदाहरणयोः क्रियापेक्षयैव हेतुभावो दर्शितः क्वचित् कर्मापेक्षयाप्यसौ भवतीति तद्दर्शयति—'निर्वर्त्त्ये' इति । निर्वर्त्त्ये च विकार्ये च=कर्मणि इति शेषः तदपेक्षया=तत्तद्घट-पटादिकर्मापेक्षया हेतुत्वम्=तत्तत्कर्मापेक्षी हेतुरित्यर्थः । प्राप्ये तु कर्मणि=ग्रामादौ प्रायः=बाहुल्येन हेतुता=हेतुभावः हेतुरित्यर्थः, क्रियापेक्षा एव=क्रियाया अपेक्षा यत्र सा तथाभूता, [हेतुता] अर्थात् क्रियापेक्षी हेतुरिति वर्त्तुलोऽर्थः । तदुक्तं 'वाक्यपदीये' तृतीयकाण्डे—

निर्वर्त्त्यं च विकार्यञ्च प्राप्यञ्च त्रिविधं मतम् । तत्रेप्सिततमं कर्म चतुर्धाऽन्यत्तु कल्पितम् ॥

पूर्वमसदेव कर्त्तुः क्रियया उत्पद्यमानम्, अथवा विद्यमानमेवालक्षितं सत् कर्त्तुः क्रियया प्रकाश्यमानमिति द्विविधं 'निर्वर्त्त्यं' कर्म । आद्यं यथा—'घटं करोति, द्वितीयं 'वत्सं सूते' इति । यत्तु—पूर्वं सदेव पूर्वावस्थापरित्यागपूर्वकमवस्थान्तरमापद्यते तद् 'विकार्यम्'। यथा

'इन्धनं दहति' 'कनकं कुण्डलं करोति' इत्यत्र कनकमिति । यत्र—'कर्त्तुः क्रियया [व्यापारेण] व्याप्तिमात्रमवसीयते तत् 'प्राप्यम्' इति अर्थात् यत्र क्रियाकृतविशेषस्य कस्यापि न प्रतीतिर्भवति तत् 'प्राप्यम्' इति ।

सती वा विद्यमाना वा प्रकृतिः परिणामिनी । यस्य नाश्रीयते तस्य निर्वर्त्त्यत्वं प्रचक्षते ॥

कथमित्याह—

प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदिष्यते । निर्वर्त्त्यं च विकार्यञ्च कर्म शास्त्रे प्रदर्शितम् ॥

यदसज्जायते सद्वा जन्मना यत्प्रकाश्यते । तन्निर्वर्त्त्यं विकार्यञ्च कर्म द्वेधा व्यवस्थितम् ॥

प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत् । किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादि विकारवत् ॥

क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ इत्यादि ॥

अधिकञ्च—'व्याकरणमञ्जूषावैयाकरणभूषणादौ' द्रष्टव्यम् ॥ २४० ॥

[ हेतुभेदकथनाय प्रतिज्ञा ]

**हेतुर्निर्वर्त्तनीयस्य दर्शितः शेषयोर्द्वयोः ।**
**दत्त्वोदाहरणद्वन्द्वं ज्ञापको वर्णयिष्यते ॥ २४१ ॥**

सम्प्रति कतिपयहेतुविशेषदर्शनार्थं प्रतिजानीते—'हेतुः' इति । निर्वर्त्तनीयस्य=निवर्त्त्यस्य कर्मणः हेतुः दर्शितः='अयमान्दोलिते'त्याद्युदाहरणेन निरूपितः शेषयोः द्वयोः=विकार्यप्राप्ययोः उदाहरणद्वन्द्वम्=उदाहरणद्वयम् दत्वा=दर्शयित्वा ज्ञापकः=ज्ञापकनामा कारकहेतुभिन्नः [ प्रकाशको ] हेतुः वर्णयिष्यते=निरूपयिष्यते=शिष्योत्कण्ठावारणाय प्रतिज्ञेयम् ॥ २४१ ॥

[ विकार्यकर्महेतोरुदाहरणम् ]

**उत्प्रवालान्यरण्यानि वाप्यः सम्फुल्लपङ्कजाः ।**
**चन्द्रः पूर्णश्च कामेन पान्थदृष्टेर्विषं कृतम् ॥ २४२ ॥**

तत्र तावत् विकार्य[कर्म]हेतुमुदाहरति—'उत्प्रवालानि' इति । अरण्यानि=वनानि उत्प्रवालानि=उद्गताः प्रवालाः नवपल्लवा येषु तानि । वाप्यः=दीर्घिकाः ['वापी तु दीर्घिका' इत्यमरः] सम्फुल्लपङ्कजाः=सम्फुल्लानि विकसितानि पङ्कजानि कमलानि यासु ताः । चन्द्रः=शशी पूर्णः=पूर्णमण्डलः । अतो हेतोः कामेन=मदनेन पान्थदृष्टेः=पान्थानां पथिकानां दृष्टेः चक्षुषः विषं कृतम्=एतत्त्रयमेव विषीभावरूपविकारमापादितम् ।

---

१ **व्युत्पत्तिवादे** च—कर्म हि त्रिविधं भवति–प्राप्यं प्रकृतिविकृती च । तत्र प्राप्यं कर्म–क्रियाजन्यफलशालि गम्यादेर्ग्रामादि ज्ञानादेर्विषयश्च । क्रियानिष्पाद्यं यत् तत् विकृतिरूपम् यथा-पाकादेरोदनादि, यथा वा कृतेर्माल्यादि कटादि च । प्रथमे–तण्डुलादिरूपपूर्वद्रव्यं विनाश्य ओदनादेर्निर्वर्त्तनम्, द्वितीये—पुष्पादिरूपपूर्वद्रव्यमविनाश्यैव संदर्भादिरूपविशेषनिष्पादनेन विशिष्टस्य माल्यादेर्निर्वर्त्तनम् । तृतीये च–काशादिरूपपूर्वधर्मिणमविनाश्य तत्रैव कटादिरूपधर्मिनिष्पादनम्, ईदृशञ्च कर्म प्रकृते रसममभिव्याहारस्थले निर्वर्त्त्यमुच्यते । 'तण्डुलानोदनं पचति, कुसुमानि स्रजं करोति, काशान् कटं करोति' इत्यादौ प्रकृतिसमभिव्याहारस्थलेऽपि निर्वर्त्त्यते निष्पाद्यते यदिति व्युत्पत्त्या यद्यप्योदनादेरपि निर्वर्त्त्यतास्ति तथापि तद्व्यावृत्तमेव पारिभाषिकं निर्वर्त्त्यत्वम् । तदुक्तमभियुक्तैः–'सती वे'त्यादि ।

अत्रारोपित एव प्रकृतिविकृतिभावश्चमत्कारहेतुरिति 'विकार्यहेत्वलङ्कारः' । वास्तवे प्रकृतिविकृतिभावे तु 'सुवर्णं कुण्डलं करोति' इत्यादिवत् चमत्काराभावान्नायमलङ्कारविषयः । 'सम्फुल्ल' इति । 'उत्फुल्लसम्फुल्लयोरुपसङ्ख्यानम्' [पा० ८।२।५५] इति वार्त्तिकेन निपात्यते ॥ २४२ ॥

[ प्राप्यहेतोरुदाहरणम् ]

**मानयोग्यां करोमीति प्रियस्थानस्थितां सखीम् ।**
**बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरा ॥ २४३ ॥**

प्राप्य [ कर्म ] हेतुमुदाहरति—'मानयोग्याम्' इति । बाला=अप्रगल्भा मुग्धेत्यर्थः, भ्रूभङ्गजिह्माक्षी=भ्रुवोर्भङ्गेन कटाक्षविशेषेण जिह्मे कुटिले अक्षिणी नयने यस्याः सा तादृशी स्फुरिताधरा=स्फुरितः कम्पमान अधरो यस्याः सा । मानयोग्याम् करोमि=मानस्य योग्या अभ्यासः ताम् मानाभ्यासं विदधे इति=एवमभिप्रेत्य प्रियस्थानस्थिताम्=प्रियस्य स्थाने सन्निधौ स्थिताम् विद्यमानां सखीम्=वयस्यां पश्यति=आलोकते ।

अत्र 'सखीम्' इति प्राप्यं कर्म, तद्विषयकदर्शनाक्रियापेक्षिणी बाला भ्रूभङ्गविशेषसम्भावितकोपदर्शने हेतुरिति 'प्राप्यहेत्वलङ्कारः' । सोऽयम्—तथाविधाभिप्रायोपेतभ्रूभङ्गेत्यादिविशेषणपूर्वकचमत्काराधानविशेषतया अलङ्कारपदवीमध्यास्ते । 'भ्रूभङ्गजिह्माक्षी' इति । अत्र —'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' [पा० ५।४।११३] इति सूत्रेण समासान्तः 'षच्' । षित्त्वात् 'षिद्गौरादिभ्यश्च' [४।१।४१] इति सूत्रेण 'ङीष्' । 'मानयोग्याम्' इति—योग्या अभ्यासः । 'अभ्यासः खुरली योग्या' इत्यमरमाला ॥ २४३ ॥

[ अथ ज्ञापकहेतुभेदोदाहरणम् ]

**गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।**
**इतीदमपि साध्वेव कालावस्थानिवेदने ॥ २४४ ॥**

ज्ञापकहेतुमुदाहरति—'गत' इति । अर्कः=सूर्यः अस्तं गतः=सायंकालो जात इत्यर्थः । इन्दुः=चन्द्रः भाति=प्रकाशते चन्द्रोऽपि उदित इत्यर्थः । पक्षिणः=पतत्रिणः वासाय=स्वनिवासस्थानाय यान्ति=गच्छन्ति इति इदम् अपि=एतदुक्तरूपमपि कालावस्थानिवेदने=सायंसन्धिवेलाप्रकाशने साधु एव=सम्यगेव । सायंसन्ध्या जातेत्यर्थः ।

अत्र अस्तमितार्कादयः ज्ञापकाः सायंसन्ध्या च ज्ञाप्या इति 'ज्ञापको हेतुरलङ्कारः' । अत्र ज्ञाप्यं साक्षान्न शब्दोपात्तमिति प्रतीयमानम् । क्वचिच्च शब्दोपात्तमपि भवतीति ज्ञाप्यस्य द्वौ प्रकारौ । तत्सम्बन्धेन ज्ञापकोऽपि द्विविधः । द्वितीयं प्रकारमनुपदं दर्शयति ॥ २४४ ॥

[ शब्दोपात्तज्ञाप्यज्ञापकहेतोरुदाहरणम् ]

**अबध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसाम् ।**
**देहोष्मभिः सुबोधं ते सखि ! कामातुरं मनः ॥ २४५ ॥**

यत्र शब्दोपात्तं ज्ञाप्यं तादृशं ज्ञापकहेतुमुदाहरति—'अबध्यैः' इति । हे ! सखि=आलि ! ते=तव कामातुरम्=मदनविह्वलं विरहव्याकुलं मनः=हृदयम् [ 'स्वान्तं हृन्मानसं मनः' इत्यमरः] इन्दुपादानाम्=चन्द्रमयूखानां अबध्यैः=अबाध्यैः अविनाश्यैरित्यर्थः, तथा

चन्दनाम्भसाम्=चन्दनाक्तजलानाम् असाध्यैः=प्रतीकारानर्हैः देहोष्मभिः=देहस्य सन्तापैः सुबोधम्=अनायासेनानुमातुं शक्यमित्यर्थः ।

अत्र मनसः कामातुरभावो ज्ञाप्यः शब्दोपात्तः, तस्य देहतापाश्च ज्ञापका इति शब्दोपात्ते ज्ञाप्ये 'ज्ञापको हेतुः' अत्र तु 'अबध्यै' रित्यादिविशेषणद्वयोपन्यासमुखेन असाधारणविरहप्रतिपादनशैल्या विचित्रतातिशयः कवितां पुष्णाति, तथाविधवैचित्र्यस्यैवालङ्कारत्वादिति तु न विस्मरणीयम् ॥ २४५ ॥

[ अवान्तरप्रकरणोपसंहारपूर्वकं प्रतिज्ञान्तरम् ]

**इति लक्ष्याः प्रयोगेषु रम्या ज्ञापकहेतवः ।**
**अभावहेतवः केचिद् व्याह्रियन्ते मनोहराः ॥ २४६ ॥**

'इति' इति। इति=दर्शितप्रकाराः रम्याः=सहृदयहृदयावर्जकाः प्रयोगेषु=प्राचां सूरीणां प्रबन्धेषु ज्ञापकहेतवः=ज्ञापकरूपाः हेतवः [हेत्वलङ्काराः] लक्ष्याः=ऊहनीयाः स्वयमिति शेषः । केचित् मनोहराः=हृद्याः अभावहेतवः अभावरूपाः [प्रागभावादिरूपाः] हेतवः [सम्प्रति] व्याह्रियन्ते=कथ्यन्ते इति प्रतिज्ञान्तरम् । नचाऽभावस्य हेतुभावत्वं नास्तीति कथं वैचित्र्ये सत्यपि तस्यालङ्कारत्वम् इति वाच्यम् । आचार्यैरभावस्यापि कारणत्वस्वीकारात् । तदुक्तम्—

भावो यथा तथाभावः कारणं कार्यवन्मतः ।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥ इति ॥ [न्यायकुसुमाञ्जलौ]

द्वितीयातृतीयादिविभक्तिघटितलक्षणा भेदाः सरस्वतीकण्ठाभरणे भोजेनोक्ताः, ते तत एवावगन्तव्याः, ग्रन्थगौरवभिया अत्युपयोगाभावाच्च मया नात्र प्रपञ्चिताः ॥ २४६ ॥

[ प्रागभावहेतोरुदाहरणम् ]

**अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।**
**अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥ २४७ ॥**

तत्र तावत् प्रागभावरूपं हेतुमुदाहरति—'अनभ्यासेन' इति । विद्यानाम्=व्याकरणादिशिक्षाकलानाम् अनभ्यासेन=अभ्यासाभावेन [योग्याभावेनेत्यर्थः] धीमताम्=बुद्धिमताम् सदसद्विवेकिनां महापुरुषाणाम् असंसर्गेण=संसर्गाभावेन, तथा अक्षाणाम्=इन्द्रियाणाम् अनिग्रहेण=संयमाभावेन हेतुना नृणाम्=मनुष्याणाम् व्यसनम्=नीचा प्रवृत्तिः जायते=भवति ।

अत्र विद्याभ्यासादीनां प्रागभावो व्यसनोत्पत्तिम्प्रति हेतुरिति 'प्रागभावरूपो हेत्वलङ्कारः' । प्रागभावादेर्लक्षणं न्यायमुक्तावल्यादौ मत्प्रणीततत्प्रभादौ च स्पष्टम् । तथाहि—'इह कपाले घटो भविष्यति' 'इह तन्तुषु पटो भविष्यति' इति प्रत्ययसाक्षिकः उत्पत्तेः पूर्वं कार्यस्याभावो यः स प्रागभावः । अनादिः सान्तोऽभाव इत्यर्थः, इति दिक् ॥ २४७ ॥[1]

---

१ अनिग्रहे सति मिथ्याचारो भवति—तथा च 'भगवद्गीतायाः' तृतीयेऽध्याये—

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥

तस्मान्मनसा सहैवेन्द्रियाणां निग्रहः शुभायाः प्रवृत्तेर्हेतुरित्यर्थोक्तं भवति ।

अन्यत्राप्युक्तम्—

[ ध्वंसाभावहेतोरुदाहरणम् ]

**गतः कामकथोन्मादो गलितो यौवनज्वरः ।**
**गतो मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः ॥ २४८ ॥**

ध्वंसाभावरूपं हेतुमुदाहरति—'गत' इति । कामकथोन्मादः=कामस्य कथा मदनोत्पादको हेलाविलासादिः तज्जनित उन्मादः सदसद्विवेकाभावः गतः=नष्ट इत्यर्थः । यौवनज्वरः=तारुण्याहङ्काररूपः सन्तापः गलितः=प्रच्युतः । मोहः=अज्ञानम् प्रमादो मृत्युरित्यर्थः, गतः=ध्वस्तः, तृष्णा=विषयगर्धिः च्युता=स्खलिता, अतो हेतो मनः=स्वान्तम् पुण्याश्रमे=चरमाश्रमे संन्यासे कृतम्=स्थापितम् । अपरिपक्वकषायाणां संन्यासानधिकारादिति भावः ।

अत्र कामकथादीनां [ पूर्वोत्पन्नानां ] ध्वंसाभावो पुण्याश्रमगमनम्प्रति हेतुरिति ध्वंसाभावरूपो हेत्वलङ्कारः । वैचित्री च पूर्ववदूहनीया । ध्वंसाभावश्च–'जन्याभावत्वं ध्वंसत्वम्' इति लक्षणकः सादिरनन्तो वेद्यः ॥ २४८ ॥

[ अन्योन्याभावहेतोरुदाहरणम् ]

**वनान्यमूनि न गृहाण्येता नद्यो न योषितः ।**
**मृगा इमे न दायादास्तन्मे नन्दति मानसम् ॥ २४६ ॥**

अन्योन्याभावरूपं हेतुमुदाहरति—'वनानि' इति । गृहाद्विरक्तस्य वनम्प्रयातस्य [वानप्रस्थाश्रमिणः] उक्तिरियम् । अमूनि वनानि=अरण्यानि गृहाणि न एता नद्यः=सरितः योषितः=रमण्यः न, इमे मृगाः दायादाः=बान्धवा न, तत्=तस्माद्धेतोः मे=मम मानसम्=हृदयं नन्दति=ह्लादते ।

अत्र 'अमूनि वनानि' स्वेष्टाशनादिविरहाण्यपि न गृहाणि अर्थात् 'दुःखातिरेकप्रदातृगृहभिन्नानि' इत्येवमादिरूपेण वनगृहादीनामन्योन्याभावः मानसनन्दनम्प्रति हेतुरिति 'अन्योन्याभावरूपो हेत्वलङ्कारः' । अन्योन्याभावश्च—'तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताक' इति लक्षणको ज्ञेयः । अत्र सादृश्यातिशयहेतुकमभेदप्रतीतिपूर्वकभेदप्रतिपादनमेव चमत्कारजनकम् इति वनगृहादीनामस्त्येव सादृश्यम्, तथापि न तद्विवक्षितमिति नात्र 'निर्णयोपमायाः' शङ्कापि कार्येत्यपि कश्चित् ॥ २४६ ॥

---

अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥
व्यसनानि च—
मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥
इत्यादिरूपाणि मनोः सप्तमाध्याये उक्तानि ज्ञेयानि ॥

१ उक्तञ्च **'सनत्सुजातीये'**—

उभे सत्ये क्षत्रियाद्यप्रसूते मोहो मृत्युः सम्मतो यः कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमि ॥
प्रमादाद्वा असुराः पराभवन्नप्रमादाद् ब्रह्मभूताः सुराश्च ।
न वै मृत्युर्व्याघ्र इवात्ति जन्तून् नाप्यस्य रूपमुपलभ्यते हि ॥

[ अत्यन्ताभावहेतोरुदाहरणम् ]

**अत्यन्तमसदार्याणामनालोचितचेष्टितम् ।**
**अतस्तेषां विवर्धन्ते सततं सर्वसम्पदः ॥ २५० ॥**

अत्यन्ताभावरूपं हेतुमुदाहरति—'अत्यन्तम्' इति । आर्याणाम्=सच्चरित्राणाम् कुलीनानाम् अनालोचितचेष्टितम्=अविचार्यकारित्वम् अत्यन्तम् असत्=कालत्रयेऽपि न भवतीत्यर्थः । अतः=हेतोः तेषाम्=साधूनाम् सततम्=निरन्तरम् सर्वसम्पदः=सर्वाः सम्पत्तयो मित्रपुत्रकलत्रादिरूपाः विवर्धन्ते=एधन्ते ।

अत्र अविमृष्यकारितायाः अत्यन्ताभावः सर्वसम्पत्तिवृद्धिम्प्रति हेतुरिति अत्यन्ताभावरूपो हेत्वलङ्कारः । त्रैकालिको यो नित्योऽभावः सोयमत्यन्ताभावः । यथा—'वायौ रूपं नास्तीति' । 'महाकुलकुलीनार्यसभ्यसज्जनसाधवः' इत्यमरः ॥ २५० ॥

[ अभावाभावहेतोरुदाहरणम् ]

**उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी ।**
**देयः पथिकनारीणां सतिलः सलिलाञ्जलिः ॥ २५१ ॥**

अधुना अभावाभावरूपं हेतुमुदाहरति 'उद्यान०' इति । उद्यानसहकाराणाम्=उद्यानस्य आरामस्य सहकाराणाम् आम्रवृक्षाणां मञ्जरी वल्लरी अनुद्भिन्ना न=अपि तु उद्भिन्नैव स्फुटितैव जाता अतः हेतोः पथिकनारीणाम्=पान्थस्त्रीणां प्रोषितभर्तृकाणाम् सतिलः=तिलसहितः सलिलाञ्जलिः=तोयाञ्जलिः [ तिलतोयाञ्जलिरिति समग्रोऽर्थः ] देयः=निर्वाप्यः । अत्र वसन्तोदये चूतमञ्जर्यादीनामतिमात्रं कामोद्दीपकत्वात् प्रोषितभर्तृकाणां कृते मरणमेवोपस्थितमिति व्यज्यते ।

अत्र चूतमञ्जरीणामुद्भेदाभावस्याभावः विरहिणीनां मरणहेतुत्वेनोपनिबद्ध इत्यभावाभावरूपो हेत्वलङ्कारः । अयञ्च प्रागभावाभावरूपो हेतुः । [ वस्तुनः ] प्रतियोगिन उत्पाद एव 'प्रागभावाभाव' उच्यते । 'अभावविरहात्मत्वं वस्तुनः प्रतियोगिता' इत्याचार्योक्तेः । एवमेव प्रध्वंसाभावादेरपि हेतुत्वमूह्यम् ॥ २५१ ॥[1]

---

1 तत्र प्रध्वंसाभावाभावो यथा—

पीनश्रोणि गभीरनाभि निभृतं मध्ये भृशोच्चस्तनं
पायाद्वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः ।
स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशे
यस्मै सोऽच्युतनाभिपद्मवसतिर्वेधाः शिवं ध्यायति ॥

अत्र नारायणस्य नाभिपङ्कजरूपस्यावासस्य उपघाताभावः विधेर्मनोनिर्वाणकारणं भवति अतः प्रध्वंसाभावाभावहेतुरयम् । अन्योन्याभावाभावो यथा—

अवनिरुदकं तेजो वायुर्नभः शशिभास्करौ
पुरुष इति यत्केचिद् भिन्ना वदन्ति तनूस्तव ।
तदनघ ! वचो वैचित्रीभिर्निरावरणस्य ते
विदधति पयःपूरोन्मीलन्मृषा मिहिरोपमाम् ॥

[ अभावहेतुप्रकरणोपसंहारः ]

**प्रागभावादिरूपस्य हेतुत्वमिह वस्तुनः ।**
**भावाभावस्वरूपस्य कार्यस्योत्पादनं प्रति ॥ २५२ ॥**

अभावहेतुमुपसंहरति--'प्रागभावादिरूपस्य' इति । इह=उक्तेषु उदाहरणेषु भावाभावस्वरूपस्य=अर्थात् भावरूपस्य अभावरूपस्य च कार्यस्य उत्पादनम्=उत्पत्तिं प्रति प्रागभावादिरूपस्य वस्तुनः=विषयस्य हेतुत्वम्=कारणभावः वर्णितमिति शेषः ॥ २५२ ॥

[ चित्रहेतुभेदनिरूपणम् ]

**दूरकार्यस्तत्सहजः कार्यानन्तरजस्तथा ।**
**अयुक्तयुक्तकार्यौ चेत्यसंख्याश्चित्रहेतवः ॥ २५३ ॥**

कारकत्वज्ञापकत्वाभावत्वरूपोपाधिभिः हेतोः त्रैविध्यमभिहितम्, सम्प्रति 'चित्रनामक' हेतुभेदमाचष्टे--'दूरकार्य' इति । दूरकार्यः=दूरे कार्यं यस्य स दूरकार्यः । तत्सहजः=तेन कार्येण सह जात इत्यर्थः । तथा कार्यानन्तरजः=कार्यस्यानन्तरं जायमानः । अयुक्तयुक्तकार्यौ= अयुक्तकार्यः=अयुक्तमनुचितं कार्यं यस्य सः, तथा युक्तकार्यः=युक्तमुचितं कार्यं यस्य सः इति द्वौ भेदावित्यर्थः । इति=एवंप्रकाराः चित्रहेतवः=चित्रसंज्ञा हेत्वलङ्काराः असङ्ख्याः=न संख्या येषां ते अनेकप्रकाराश्चित्राख्या हेतव इति सारार्थः । उक्तञ्च सरस्वतीकण्ठाभरणे 'भोजराजेन'-

क्रियायाः कारणं हेतुः कारको ज्ञापकस्तथा ।
अभावश्चित्रहेतुश्च चतुर्विध इहेष्यते ॥ इति ॥ २५३ ॥

[ चित्रहेतूनां गौणवृत्तिनिबन्धनत्वम् ]

**तेऽमी प्रयोगमार्गेषु गौणवृत्तिव्यपाश्रयाः ।**
**अत्यन्तसुन्दरा दृष्टास्तदुदाहृतयो यथा ॥ २५४ ॥**

चित्राख्यहेतुविषये किञ्चिद्विशेषतामाह--'ते' इति । ते=उक्ता अमी=चित्रहेतवः गौणवृत्तिव्यपाश्रयाः=गौणी चासौ वृत्तिः गौणवृत्तिः=सादृश्यसम्बन्धप्रयुक्ता लक्षणा सैव व्यपाश्रयः अप्रस्तुतविषयाभेदप्रतीतिजनिका आलम्बनं येषां ते तादृशः सन्तः प्रयोगमार्गेषु= प्रयोगाणां काव्यानां मार्गेषु वैदर्भ्यादिरीतिषु अत्यन्तसुन्दराः=अतिमात्रं हृदयहारिणो दृष्टाः= प्रतीताः यथा उदाहृतयः=तेषामुदाहरणानि अग्र उच्यन्त इत्यर्थः । गौणी वृत्तिः द्विधा भवति सारोपा, साध्यवसाना च । यत्र--विषयस्य [प्रस्तुतस्य] अपि उपादानं भवति सा 'सारोपा

---

अत्र 'भिन्ना' इत्यन्योन्याभावमुपन्यस्य मृषेत्येताभ्यो निषेधः अन्योन्याभावः । सच मिहिरोपमात्वसाधकः, अतो हेत्वलङ्कारः ।

अत्यन्ताभावाभावो यथा--

न विद्यते यद्यपि पूर्ववासना गुणानुबन्धि प्रतिभानमद्भुतम् ।
श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम् ॥

अत्र न विद्यते इत्यन्ताभावमुपन्यस्य कमपीति प्रतिभा सत्ताभिधानेन प्रतिषेधः । सच 'श्रुतयत्नाभ्यां वागुपासितव्या' इत्युन्नीतार्थस्य हेतुः इति अत्यन्ताभावाभावहेत्वलङ्कारः । इत्यादिरीत्या सरस्वतीकण्ठाभरणादिषु प्रपञ्चितं ज्ञेयम् ।

गौणी' । यथा—गौर्वाहीकः । साध्यवसाना=यत्र विषयस्य [ आरोपविषयस्य ] अनुपादानं भवति सा 'साध्यवसाना गौणी' । यथा—गौरयम् । प्रकृते च हेतूनां तद्व्यपाश्रयत्वे सारोपाया एव गौण्या ग्रहणम् । वैचित्र्यार्थं विषयोपादानस्येष्टत्वात् । परन्तु 'गौणवृत्तिव्यपाश्रय' इत्युपलक्षणमध्यवसायमात्रविषयत्वे हेतूनां चमत्कारातिशयजनकत्वे । तच्च 'आविर्भवति नारीणाम्' इत्यादिवक्ष्यमाणोदाहरणे घटितं द्रष्टव्यम् । 'रागसागर'स्तु—क्वचित्कार्यस्यापि गौणवृत्तिव्यपाश्रयत्वं मन्यते । यथा 'पश्चात् पर्यस्य' इति वक्ष्यमाणोदाहरणे ॥ २५४ ॥

[ दूरकार्यस्य चित्रहेतोरुदाहरणम् ]

**त्वदपाङ्गाह्वयं जैत्रमनङ्गास्त्रं यदङ्गने ! ।**
**मुक्तं तदन्यतस्तेन सोऽप्यहं मनसि क्षतः ॥ २५५ ॥**

तत्रादौ 'दूरकार्यं चित्राख्यं' हेतुमुदाहरति—'त्वदपाङ्गाह्वयम्' इति । हे ! अङ्गने != वरवर्णिनि ! यत्=तत् प्रसिद्धं जैत्रम्=जयसाधनम् तव=त्वदीयम् अपाङ्गाह्वयम्=कटाक्षाख्यम् अनङ्गस्य=अतनोरपि मदनस्य अस्त्रम्=अमोघं शस्त्रमित्यर्थः, 'तत्' अन्यतः=अन्यस्मिन् जने मुक्तम्=भवति आपातितमित्यर्थः, तेन=त्वदपाङ्गरूपेणानङ्गास्त्रेण सः लक्ष्यः सन् 'अपि' [अपिर्भिन्नक्रमः] अहमपि च लक्ष्यभूतः मनसि=हृदये क्षतः=विद्धः सव्रणो जात इत्यर्थः ।

अत्र लक्ष्यवेधरूपं निकटवर्त्ति कार्यम्प्रति अनङ्गास्त्ररूपं कारणम्, अलक्ष्यवेधनरूपं कार्यन्तु दूरवर्त्त्येव इति तत्प्रत्यपि अनङ्गास्त्रं हेतुः । परं तस्यासम्भवत्वादत्र हेतोश्चित्रता ज्ञेया परमत्र कार्यस्य देशतो दूरस्थता । कालतो यथा—

अनश्नुवानेन युगोपमानमलब्धमौर्वीकिणलाञ्छनेन ।
अस्पृष्टखड्गत्सरुणापि चासीद् रक्षावती तस्य भुजेन भूमिः ॥

अत्र—बाल्यावस्थायामेवाभिनवयौवनकार्यकारित्वात् दूरकार्योऽयं चित्रहेतुः ॥ २५५ ॥

[ तत्सहजचित्रहेतोरुदाहरणम् ]

**आविर्भवति नारीणां वयः पर्यस्तशैशवम् ।**
**सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः ॥ २५६ ॥**

तत्सहजं चित्रहेतुमुदाहरति—'आविर्भवति' इति । नारीणाम्=स्त्रीणां पर्यस्तशैशवम्= पर्यस्तं व्युदस्तं शैशवं शिशोर्भावो येन तादृशं वयः=तारुण्यम् पुंसाम्=तरुणानाम् विविधैः= नानाप्रकारैः अङ्गजोन्मादविभ्रमैः=अङ्गजः मनसिजः तेन य उन्मादः मनसः अवस्थाविशेषः तज्जनितैः विभ्रमैः विलासैः सह एव=साकमेव आविर्भवति=प्रकटीभवति । 'वय' इति कर्त्तृपदम् ।

अत्र नारीणां यौवनरूपं कारणं कार्यभूतैः पुंसां विभ्रमैः सहैव प्रकटीभवति इति कारणस्य क्षिप्रकार्यकारित्वबोधनाय कार्यकारणयोर्यौगपद्येन वैचित्र्यं गुम्फितमिति 'तत्सहजो विचित्रो' हेत्वलङ्कारः । नात्र सारोपगौण्यव्यपाश्रयत्वम्—अपितु यौवनरूपकारणोत्तरमुत्पद्यमानानां विभ्रमाणां प्रागुत्पद्यमानत्वेनाध्यवसायादध्यवसायमूलत्वं ज्ञेयम् । तस्मादत्र अध्यवसायव्यपाश्रयो हेतुश्चमत्कारातिशयपोषको नतु सारोपगौण्यव्यपाश्रय इति ॥ २५६ ॥

[ कार्यानन्तरजहेतोरुदाहरणम् ]

**पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।**
**प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥ २५७ ॥**

कार्यानन्तरजं हेतुमुदाहरति—'पश्चात्' इति । हरिणाक्षीणाम्=मृगाक्षीणां विशालनेत्राणां सुन्दरीणामिति यावत्, रागसागरः=रागः [प्रेमा] एव सागरः [समुद्रः] कामाभिलाषसमुद्र इत्यर्थः, प्राक् एव=पूर्वमेव उदीर्णः=उच्छलितः स्फीततां प्राप्तः । चन्द्रमण्डलम्=शशिबिम्बम् पश्चात्=रागसागरोच्छलनानन्तरम् किरणान्=मयूखान् पर्यस्य=परिक्षिप्य पश्चात् उदीर्णम्=उदीतम् ।

अत्र चन्द्रोदयो रागोद्दीपकत्वात् रागहेतुः क्षिप्रकार्यकारित्वेन च कार्यभूतस्य रागस्य पश्चाद्भावित्वे पूर्वभावित्वेनाध्यवसितः इति कार्यानन्तरजो हेत्वलङ्कारः । अत्र च पश्चाद्भाविनः पूर्वभावित्वेनाध्यवसाय एव चमत्कारहेतुरित्यस्यालङ्कारत्वे बीजम् । अतिशयोक्तेः छटाऽप्यत्राऽनिवार्या ॥ २५७ ॥

[ अयुक्तकार्यचित्रहेतोरुदाहरणम् ]

**राज्ञां हस्तारविन्दानि कुड्मलीकुरुते कुतः ।**
**देव ! त्वच्चरणद्वन्द्वरविबालातपः स्पृशन् ॥ २५८ ॥**

अयुक्तकार्यं हेतुमुदाहरति—'राज्ञाम्' इति । हे देव !=राजन् ! त्वच्चरणद्वन्द्वरविबालातपः=तव चरणयोः पादयोर्द्वन्द्वं युगलमेव रविबालातपः अभिनवोदितसूर्यद्योतः राज्ञाम्=नृपतीनाम् हस्तारविन्दानि=हस्ताः [कराः] एव अरविन्दानि [कमलानि] तानि स्पृशन्=चुम्बन् कुतः=कस्मात् हेतोः कुड्मलीकुरुते=मुद्रितानि करोति निमीलयतीत्यर्थः ।

बालातपस्पर्शात् पद्मानां विकासभावो युज्यत इति वस्तुस्थितिः । अत्र तु कारणभूतस्य बालातपस्पर्शस्य पद्मसंकोचरूपं कार्यमयुक्तमिति 'अयुक्तकार्याख्यो' हेत्वलङ्कारः । सोऽयं राजविषयकरतिभावं पुष्णातीत्यस्य वैचित्र्यवहत्वेन चित्रता बोध्या । अयञ्च--'न मीलयति पद्मानि' इत्यत्रापि । अत्र रूपकमपि ॥ २५८ ॥

[ युक्तकार्यचित्रहेतोरुदाहरणम् ]

**पाणिपद्मानि भूपानां सङ्कोचयितुमीशते ।**
**त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥ २५६ ॥**

युक्तकार्यं हेतुमुदाहरति--'पाणिपद्मानि' इति । कुन्दनिर्मलाः=माघ्यकुसुमवच्छुभ्राः त्वत्पादनखचन्द्राणाम्=त्वच्चरणनखरचन्द्राणाम् अर्चिषः=मयूखाः भूपानाम्=राज्ञाम् पाणिपद्मानि=करकमलानि सङ्कोचयितुम्=निमीलयितुम् ईशते=समर्था भवन्ति ।

अत्र चन्द्रकिरणात्मकहेतोः पद्मसंकोचरूपं कार्यं युक्तमिति 'युक्तकार्याख्यो' हेत्वलङ्कारः, सच राजविषयकरतिभावं व्यञ्जयन्समधिकचमत्कारीति युक्तस्यापि चित्रता ॥२५६॥

[ हेतोरुपसंहारः ]

**इति हेतुविकल्पानां दर्शिता गतिरीदृशी ।**

इति हेतुचक्रम्

---

हेत्वलङ्कारमुपसंहरति--'इति' इत्यर्धेन । इति=दर्शितमार्गेण हेतुविकल्पानाम्=

---

(प्र०) हेतोः किं लक्ष्यलक्षणम् ? केषां मते हेतोर्नालङ्कारता ? हेतोरलङ्कारत्वे दण्डिना का उपपत्तिरुक्ता ? (उ०) १६४ पृष्ठात् आरभ्य २०४ पृष्ठान्तम्——

हेतुभेदानाम् ईदृशी=उक्तप्रकारा गतिः=रीतिः दर्शिता=निरूपिता, अनयैव दिशाऽनुक्ता अप्य-परे हेतुभेदा ऊहनीया इति भावः ॥

हेतूनां चक्रं गणः समाप्त इत्यर्थः ।

[ अथ सूक्ष्मलक्षणम् ]

**इङ्गिताकारलक्ष्योऽर्थः सौक्ष्म्यात्सूक्ष्म इति स्मृतः ॥२६०॥**

---

सूक्ष्मातिसूक्ष्मं यं प्राहुः श्रुतयो यज्वा अपि ।
जनाः ! तमेव शरणं यात वाञ्छथ चेत्सुखम् ॥ १ ॥

---

क्रमप्राप्तं सूक्ष्मं लक्षयति—'इङ्गिताकारलक्ष्यः' इति । 'इङ्गितं हृद्गतो भाव' इति विश्वोक्तेः हृदयाभिप्रायाविष्करणं प्रकृते इङ्गितम्, आकारः=रतिरागादिबोधको मुखरक्ततादि-रूपोऽवस्थाविशेषः ताभ्यां लक्ष्यः=लक्षयितुं योग्यः अनुमेय इति यावत्, अर्थः=बाह्याभ्यन्त-ररूपो विषयः सौक्ष्म्यात्=परेण ज्ञातुमशक्यत्वात् सूक्ष्म इति=सूक्ष्म इति नामाऽलङ्कारः स्मृतः=उक्तः । 'इङ्गिताकाराभ्यां चतुरबुद्धिगम्यत्वं सूक्ष्मत्व' मिति फलितं सूक्ष्मलक्षणम् । आह च 'मम्मटाचार्यः'—

कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ।
धर्मेण केनचिद् यत्र तत् सूक्ष्मं परिचक्षते ॥

कुतोऽपि आकारादिङ्गिताद्वा, सूक्ष्मः तीक्ष्णमतिसंवेद्यः तस्य यद् भङ्ग्यन्तरेण यत् सूचनं स सूक्ष्म इति तात्पर्यम् ॥ २६० ॥

[ इङ्गितलक्ष्यसूक्ष्मोदाहरणम् ]

**कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम् ।**
**अवेक्ष्य कान्तमबला लीलापद्मं न्यमीलयत् ॥ २६१ ॥**

आदौ इङ्गितलक्ष्यं सूक्ष्ममुदाहरति—'कदा' इति । कदा=कस्यां वेलायाम् नौ=आवयोः सङ्गमः=समागमः भावी=भविष्यन् इति=एतत् आकीर्णे=जनसंघटे स्थाने वक्तुम्=गदितुम् अक्षमम्=असमर्थम् कान्तम्=वल्लभमुपपतिम् अवेक्ष्य=दृष्ट्वा अबला=तत्सङ्गमा-र्थिनी कामिनी लीलापद्मम्=लीलार्थं हस्ते धृतं कमलं न्यमीलयत्=समकोचयत् । अत्र नायि-काया इष्टो रात्रिभाविसमागमरूपोऽर्थः सूक्ष्मः पद्मनिमीलनात्मना इङ्गितेन व्यञ्जितः ॥२६१॥

[ उक्तोदाहरणे लक्षणयोजनम् ]

**पद्मसंमीलनादत्र सूचितो निशि सङ्गमः ।**
**आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् ॥ २६२ ॥**

उक्तोदाहरणे स्वयं सूक्ष्मलक्षणं घटयति—'पद्मसंमीलनात्' इति । अत्र=उक्तवाक्ये अङ्गजपीडितम्=मदनातुरम् प्रियम्=वल्लभम् आश्वासयितुम्=धीरयितुम् इच्छन्त्या=कामय-

---

(प्र०) सूक्ष्मं लक्ष्यलक्षणतत्प्रभेदैः प्रपञ्चय ? दण्डिदर्शितरीत्या च लक्ष्येषु लक्षणं योजय ? (उ०) अस्य पृ० पं० ५

मानया कयाचिन्नायिकया पद्मसम्मीलनात्=कमलमुकुलीकरणात् निशि सङ्गमः=रात्रौ समागमः सूचितः=तादृशचेष्टया व्यक्तीकृतः ।

अत्र पद्मनिमीलनमिङ्गितम्, नायकजिज्ञासितः रात्रिसमागमश्च सङ्केतरूपः सूक्ष्मोऽर्थः।

संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूलं लीलापद्मं निमीलितम् ॥

अत्रापि जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ॥ २६२ ॥

[ आकारलक्ष्यसूक्ष्मोदाहरणम् ]

**मदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्धत ।**
**उद्दामरागतरला छाया कापि मुखाम्बुजे ॥ २६३ ॥**

आकारलक्ष्यं सूक्ष्ममुदाहरति—'मदर्पितदृशः' इति । गीतगोष्ठ्याम्=गानसमाजे मदर्पितदृशः=मयि अर्पिते दत्ते दृशौ नयने यया सा तस्याः प्रियायाः मुखाम्बुजे=मुखमेवाम्बुजं तस्मिन् आननकमले इत्यर्थः, का अपि=वक्तुमशक्या छाया=कान्तिः अवर्धत=एधाम्बभूव। कीदृशी छाया । उद्दामरागतरला=उद्दामः उत्कटो यो रागः भोगेच्छा तेन तरला चपला मनोहारिणी स्फारा वेत्यर्थः । अत्र मुखच्छायया विलक्षणतया कामिन्या रतिकामो लक्षितोऽर्थः सूक्ष्मः । आकारलक्ष्यसूक्ष्मोदाहरणान्तरं यथा—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥

अत्राकृतिमवलोक्य कयापि वितर्कितं पुरुषायितम् असिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतम् । पुंसामेव कृपाणपाणितायोग्यत्वात् ॥ २६३ ॥

[ उक्तलक्ष्ये सूक्ष्मलक्षणयोजनम् ]

**इत्यनुद्भिन्नरूपत्वात् रत्युत्सवमनोरथः ।**
**अनुल्लङ्घ्यैव सूक्ष्मत्वमभूदत्र व्यवस्थितः ॥ २६४ ॥**

इति सूक्ष्मम्

---

उक्तोदाहरणे स्वयं लक्षणं घटयन् सूक्ष्मनिरूपणं समापयति—'इति' इति। अत्र=उक्ते पद्ये रत्युत्सवमनोरथः=भोगोत्सवसङ्कल्पः अनुद्भिन्नरूपत्वात्=स्फुटमप्रतीयमानत्वात् सूक्ष्मत्वम्=परैरज्ञेयत्वम् अनुल्लङ्घ्य एव=अपरिहायैव व्यवस्थितः=निरूपितः 'अभूत्' तेनायं सूक्ष्मालङ्कारः।

अयमाशयः—अत्रालौकिकी मुखच्छाया रत्युत्सवमनोरथं व्यक्तीकरोति, सच मनोरथोऽर्थः तादृशनिपुणतरनायकमतिगम्य इन्यपरैरलक्षितत्वात् सूक्ष्मः । इतीति—सूक्ष्मालङ्कारप्रकरणं समाप्तमित्यर्थः ॥ २६४ ॥

[ अथ लेशलक्षणम् ]

**लेशो लेशेन निर्भिन्नवस्तुरूपनिगूहनम् ।**
**उदाहरण एवास्य रूपमाविर्भविष्यति ॥ २६५ ॥**

यत्कृपालेशमात्रेण मूकः सुरगुरूयते ।
जङ्घालति तथा पङ्गुस्तस्य किं वर्णयामहे ॥

—*—

उद्देशक्रमप्राप्तं लवाख्यं लेशं लक्षयति—'लेश' इति । लेशेन=मात्रया अल्पतयेति यावत् निर्भिन्नवस्तुरूपनिगूहनम्=निर्भिन्नं प्रकाशितं यत् वस्तुनः रूपं स्वरूपं तस्य यत् निगूहनं संवरणमाच्छादनं स लेशः=लवापरपर्यायो लेशालङ्कार इत्यर्थः । अस्य=लेशस्य रूपम्=स्वरूपम् उदाहरणे एव=उदाहरणनिरूपणेनैवेत्यर्थः, आविर्भविष्यति=स्फुटीभविष्यति ।

'रोमोद्भेदादिविकारेण किञ्चित्प्रकाशमानस्य गोप्यविषयस्य यत्केनचिद् व्याजेन गोपनं तल्लेश' इति तु लेशलक्षणनिष्कर्षः । अयमेव लेशः अलङ्कारसर्वस्वकारादिमते व्याजोक्तिः । तथा च तत्सूत्रम्—'उद्भिन्नवस्तुनिगूहनं व्याजोक्तिः' इति । 'अप्पय्यदीक्षिते' रुक्ता छेकापह्नुतिरप्यस्यैव विशेषः । तथाच—

छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यनिह्नवे ।
प्रजल्पन् मत्पदे लग्नः कान्तः किं नहि नूपुरः ॥ इति ॥ २६५ ॥

[ अनिष्टसम्भावनायां लेशोदाहरणम् ]

**राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः ।**
**अवगच्छेयुराः ज्ञातमहो शीतानिलं वनम् ॥ २६६ ॥**

निर्भिन्नस्य निगूहने द्वौ प्रकारौ अनिष्टसम्भावना लज्जा चेति तत्राद्यमुदाहरति—'राजकन्यानुरक्तम्' इति । राजकन्यायां राजकुमार्याम् अनुरक्तम् आसक्तं 'माम्' रक्षकाः=राज्ञो रक्षिपुरुषाः अवगच्छेयुः=जानीयुः । निगूहनोपायं चिन्तयित्वा आह—'आः' इति । आः=स्मृतो निगूहनहेतुरित्यर्थः । तदेवाह—'अहो' इति । अहो ! वनम्=उद्यानम् शीतानिलम्=शीतः शिशिरः अनिलो मारुतो यत्र तत् तादृशमित्यर्थः ।

अत्र शीतानिलसम्पर्केण रोम्णामुद्भेदो निगूहितः रोमोद्भेदस्य अनुरागशीतानिलस्पर्शाभ्यामुभाभ्यामपि जनितत्वसम्भवात् । एवञ्च शीतानिलसम्पर्कजनितत्वेन रोमोद्भेदस्य अनुरागनिगूहनं चमत्कारातिशयमावहतीति युक्तास्यालङ्कारता । यथा वा—'सखि ! पश्य गृहारामपरागैरस्मि धूसरा' इति । अत्र चौर्यरतवृत्तधूलिसम्बन्धत्वेऽपि गृहारामेत्यादि कथनेन गुप्तसुरतगोपनं लेशः । परमयं लज्जायां लेशः ॥ २६६ ॥

[ लज्जायां लेशस्योदाहरणम् ]

**आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम् ।**
**अक्षि मे पुष्परजसा वातोद्धूतेन दूषितम् ॥ २६७ ॥**

लज्जानिमित्तं लेशमुदाहरति—'आनन्दाश्रु' इति । कन्यकाम्=कुमारीम् अजातपुरुषसम्बन्धां विवाहाय सभायामानीतामित्यर्थः, दृष्ट्वा एव=आलोक्यैव मे=मम कथम्=कुतः आनन्दाश्रु=हर्षजनितनेत्रवारि प्रवृत्तम्=प्रचलितम् । आनन्दास्रेण अनुरागस्य प्रकाशो लज्जाहेतुरिति तत्संवरणायाह—'अक्षि' इति । वातोद्धूतेन=अनिलकम्पितेन पवनसञ्चालितेन पुष्परजसा=सुमनःपरागेण मे=मम अक्षि=नेत्रम् दूषितम्=कदर्थितम् । अत्रादृणोः पौष्परजःसम्पर्कव्याजेन अनुरागो निगूहितः इत्यस्य लेशालङ्कारभावः । अन्यदपि यथा—

समये पयोधराणामपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठितासि बाले ! नहि नहि सखि ! पिच्छिलः पन्थाः ॥ २६७ ॥

[ लेशस्यालंकारत्वसमर्थनम् ]

**इत्येवमादिस्थानेयमलङ्कारोऽतिशोभते ।**

[ मतान्तरेण लेशस्वरूपम् ]

**लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम् ॥ २६८ ॥**

स्वमतेऽस्यालङ्कारभावं समर्थयति—'इत्येवम्' इति । इति एवमादिस्थाने=दर्शितोदाहरणादौ अयम् अलङ्कारः=लेशः स्वातन्त्र्येणालङ्कारभावमापन्नः अतिशोभते=अतिशयेन चमत्कारवान् भवति । चमत्कृतिश्चालङ्कारो वैचित्र्या तादृशनिगूहनस्य इति भावः ।

अत्र अन्येषां मतमाह—'लेशम्' इति । एके=अन्ये पुनः कवयः लेशम्=लेशाख्यमलङ्कारम् लेशतः=व्याजेन कृताम् निन्दाम् स्तुतिं वा विदुः=जानन्ति मन्यन्ते लेशं व्याजस्तुतिमेवाहुरित्यर्थः, व्याजस्तुतिस्वरूपात् नान्यः कश्चन स्वतन्त्रो 'लेशालङ्कार' इति भावः । यथा चोक्तं तैरेव—

दोषस्य यो गुणीभावो दोषाभावो गुणस्य यः ।
स लेशः स्यात्ततो नान्या व्याजस्तुतिरपीष्यते ॥ इति ॥

एवं लेशकथनेनैव व्याजस्तुतेरपि गतार्थता । व्याजस्तुतेः स्वातन्त्र्येण नैव स्वीकारो बहु युक्त इत्याशयः । 'जयदेव'स्तु—एवमाह—

लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् । अखिलेषु विहङ्गेषु हन्त ! स्वच्छन्दचारिषु ॥
शुक ! पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥ २६८ ॥

[ उक्तार्थस्योदाहरणेन स्पष्टीकरणम् ]

**युवैष गुणवान् राजा योग्यस्ते पतिरूर्जितः ।**
**रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥ २६९ ॥**

स्तुतिव्याजेन निन्दामुदाहरति—'युवा' इति । एष राजा युवा=तरुणः गुणवान्=सौन्दर्यादिगुणोपेतः ऊर्जितः=पराक्रमशाली सदैव रणानुरागी इत्यर्थः, अतो हेतोः ते=तव कृते योग्यः=वरीतुमर्हः 'पतिः' अस्ति इति शेषः । तस्योर्जितत्वमुपपादयति—'रणोत्सवे' इति । कामोत्सवाद् अपि=रमणाभिलाषादपि रणोत्सवे=रणः सङ्ग्राम एव उत्सवो महः तत्र सङ्ग्रामोत्सवे यस्य मनः=हृदयम् सक्तम्=सदैवानुबद्धमित्यर्थः । अतिवीरोऽयं वरणयोग्य इत्यापाततः स्तुतिरूपोऽर्थः । 'सर्वदायं रणव्यग्रः अनेन सार्कं तव रमणसुखमाशामोदकायितमिति नायं वरणीय' इति निन्दायां पर्यवस्यति । सोऽयं स्तुतिमुखो निन्दापर्यवसायी व्याजस्तुतिरलङ्कारः । स्वयंवरसभायां कस्यचिद्राज्ञः समीपे समागतां राजकन्याम्प्रति तस्या राजैतिह्यविदा सख्योक्तिरियम्, एवं स्तुतिमिषेण निन्दाविधानात् दण्डिस्वरसे 'लेश' एव ॥२६९॥

[ स्वोक्तिसमर्थनम् ]

**वीर्योत्कर्षस्तुतिर्निन्दैवास्मिन् भावनिवृत्तये ।**
**कन्यायाः कल्पते भोगान्निर्विविक्षोर्निरन्तरम् ॥ २७० ॥**

उक्तोदाहरणे दर्शितां व्याजस्तुतिं स्वयमुपपादयति—'वीर्योत्कर्षस्तुतिः' इति । अस्मिन्=उक्ते उदाहरणे निरन्तरम्=अनारतम् भोगान्=रतिविलासान् निर्विविक्षोः=भोक्तुमिच्छोः कन्यायाः भावनिवृत्तये=भावस्य वरणसंकल्पस्य निवृत्तये वारणार्थम् वीर्योत्कर्षस्तुतिः=राज्ञः पराक्रमाधिक्यस्य गुणत्वेन कीर्त्तनम् निन्दा एव=निन्दारूपैव कल्पते=पर्यवसिता भवति ॥ २७० ॥

[ निन्दाव्याजेन व्याजस्तुतिः ]

**चपलो निर्दयश्चासौ जनः किं तेन मे सखि ! ।**
**आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥ २७१ ॥**

निन्दाव्याजेन स्तुतिमुदाहरति—'चपल' इति । स्वप्रिये गौरवार्थं मानः कर्त्तव्य इति कथितवतीम्प्रति कस्याश्चिदुक्तिरियम् । हे ! सखि !=आलि ! असौ जनः=नायकः चपलः=अस्थिरवृत्तिः नैकत्र स्थिरप्रेमा निर्दयः=परपीडानभिज्ञत्वात् दयाहीनः येन आगःप्रमार्जनाय एव=अपराधशोधनाय एव चाटवः=प्रियोक्तयः शिक्षिताः=अभ्यस्ताः ॥ २७१ ॥

[ स्वोक्तिसमर्थनम् ]

**दोषाभासो गुणः कोऽपि दर्शितश्चाटुकारिता ।**
**मानं सखीजनोद्दिष्टं कर्त्तुं रागादशक्तया ॥ २७२ ॥**

---

इति लेशचक्रम्

---

अत्र यद्वक्तव्यं तत्स्वयं घटयति—'दोषाभास' इति । सखीजनोद्दिष्टम्=वयस्याजनेन उपदिष्टम् मानं कर्त्तुम्=मानं निर्वोढुम् अशक्तया=असमर्थया नायिकया चाटुकारिता=प्रियवादरूपः कः अपि=अलौकिकः गुणः दोषाभासः=दोष इवाभासत इति दोषाभासः दोषरूपः दर्शितः=उक्तः । अत्र निन्दाव्याजरूपेण स्तुतिरेव दर्शिता । चाटुकारितारूपो गुणः स्त्रीणामतीवहृदयङ्गमो भवतीति भावः । व्याजस्तुतेरुदाहरणान्तरम्—यथा—

त्वदङ्घ्रिमूलं भजतां मुकुन्द ! लाभोऽस्तु दूरे वपुषो निजस्य ।
चिरन्तनस्यापि भवेद्विनाशः स्वभाव एवैष तव प्रसिद्धः ॥

अत्र निन्दया स्तुतिः । मुकुन्दसेवका मायालिङ्गदेहपर्यन्तं मायामलं निर्धूय नित्यविशुद्धं तत्पदं प्रविशन्तीति स्तुतिर्व्यज्यते ।

जगति त्वत्समो नान्यः स्पृहाशून्यः समीक्ष्यते ।
कृष्णकीर्त्तनरत्नानि कण्ठे यत्कुरुषे नहि ॥

अत्र स्तुत्या निन्दा । अत्र त्वमतिपामरः कृष्णवैमुख्यान्नरकाणि यास्यतीति निन्दा व्यज्यते ॥ २७२ ॥

लेशालङ्कारगणः समाप्तः ।

—*—

---

१ हरिविमुखं कश्चिद्भक्त उपहसति ।

[ अथ क्रमस्य लक्षणम् ]

**उद्दिष्टानां पदार्थानामनूद्देशो यथाक्रमम् ।**
**यथासङ्ख्यमिति प्रोक्तं सङ्ख्यानं क्रम इत्यपि ॥ २७३ ॥**

त्रिभिः क्रमैस्ततान यो दिवं भुवं रसातलम् ।
प्रचक्षते त्रिविक्रमं तमार्यजातिजन्तवः ॥

—*—

यथासङ्ख्यापरपर्यायं क्रमालङ्कारं लक्षयति—'उद्दिष्टानाम्' इति । उद्दिष्टानाम्=पूर्वमुक्तानाम्, पदार्थानाम्=पदप्रतिपाद्यानामर्थानाम् यथाक्रमम्=क्रममनतिक्रम्य वर्त्तत इति यथाक्रमम् तत् अनूद्देशः=पश्चादुद्देशः कथनं अर्थात् पश्चादुक्तैः पदार्थैः क्रमेण अन्वयरूपः सम्बन्धः यथासंख्यम् इति प्रोक्तम्=यथासंख्यं नाम अलङ्कार उक्तः तस्यैव संख्यानं क्रम इति अपि=नामान्तरमिति शेषः । **भट्टोद्भटस्तु** इत्थमाह—

भूयसामुपदिष्टानामर्थानामसधर्मणाम् ।
क्रमशो योऽनुनिर्देशो यथासङ्ख्यं तदुच्यते ॥
तद्द्विगुणं त्रिगुणं वा बहुषूद्दिष्टेषु जायते रम्यम् ।
यत्तेषु तथैव ततो द्वयोस्तु बहुशो निबध्नीयात् ॥ इति । [काव्यालङ्कारसङ्ग्रहे]

उदाजहार च—

कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनः शं नः ।
जलनिधिगिरिपद्मस्थाः हरिहरचतुराननाः ददतु ॥

अत्र हि हरिप्रभृतीनां त्रयाणामुद्दिष्टानां कज्जलरुक्सुपर्णवाहनत्वजलनिधिस्थत्वादयो धर्माः क्रमेणानुनिर्दिष्टाः । जयदेवोप्याह—

यथासङ्ख्यं द्विधार्थाश्चेत्क्रमादेकैकमन्विताः ।
शत्रुं मित्रं द्विषत्पक्षं जय रञ्जय भञ्जय ॥ इति ॥ २७३ ॥

[ क्रमस्योदाहरणम् ]

**ध्रुवं ते चोरिता तन्वि ! स्मितेक्षणमुखद्युतिः ।**
**स्नातुमम्भः प्रविष्टायाः कुमुदोत्पलपङ्कजैः ॥ २७४ ॥**

—:*:—

इति क्रमः

'क्रम' मुदाहरति—'ध्रुवम्' इति । हे ! तन्वि !=कोमलशरीरे ! स्नातुम्=शौचं कर्त्तुम् अम्भः=पानीयं प्रविष्टायाः=प्राप्तायाः ते=तव स्मितेक्षणमुखद्युतिः=स्मितञ्च ईक्षणञ्च

१ द्विधा अर्थाः=क्रियाकारकरूपा द्विविधा अर्थाः, तेन कारकाणां क्रियाणां वा क्रमिकाणां क्रमेण कारकेषु क्रियासु वा प्रत्येकमन्वयो यथासंख्यालङ्कारः ।

(प्र०) लक्ष्यलक्षणद्वारा यथासंख्यं [क्रमं] स्पष्टीकुरुत ? (उ०) अस्य० पृ० पं० २

मुखञ्च तानि स्मितेक्षणमुखानि तेषां द्युतिः शोभा अर्थात् स्मितद्युतिः ईक्षणद्युतिः मुखद्युतिश्च [ द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति नियमात् द्युतिपदस्य प्रत्येकमन्वयः] सा कुमुदोत्पलपङ्कजैः ध्रुवम्=निश्चयेन चोरिता=अपहृता क्रियतांशेनेति शेषः । सर्वस्या द्युतेरपहरणे नायिकायाः सौन्दर्यक्षतिरेव वर्णिता स्यात् । तत्र स्मितद्युतिः कुमुदेन, ईक्षणद्युतिः उत्पलेन, मुखद्युतिः पङ्कजेन चोरिता इति क्रमिकाणां क्रमिकैरेव पदार्थैरन्वयः । प्रकृते चोरणप्रौढोक्तिश्चास्या अलङ्कारत्वे बीजम् । इति क्रमः=क्रमप्रकरणं समाप्तमित्यर्थः ॥ २७४ ॥[1]

[ अथ प्रेयोरसवदूर्जस्विनां लक्षणानि ][2]

**प्रेयः प्रियतराख्यानं, रसवद्रसपेशलम् ।**
**ऊर्जस्वि रूढाहंकारं, युक्तोत्कर्षञ्च तत्त्रयम् ॥ २७५ ॥**

अधुना प्रेयःप्रभृति अलङ्कारत्रयमाचष्टे--'प्रेय' इति । प्रियतराख्यानम्=प्रियतरस्य अत्यन्तं प्रीतिजनकस्य आख्यानं कथनम् भावव्यञ्जनेन निरूपणं यत् तत् प्रेयः=प्रेयोनामालङ्कारः। रसपेशलम्=विभावादिर्व्यक्तः चित्तवृत्तिविशेषो रत्यादिरूपः स्थायिभावः रसः तेन पेशलम् सहृदयहृदयाह्लादकत्वं यत् तत् रसवत्=रसवत् इति नामालङ्कारः । तथा रूढाहङ्कारम्=रूढः अभिव्यक्तः अहङ्कारो गर्वो यस्मिन् तत् तादृशमाख्यानं यत् तत् ऊर्जस्वि=ऊर्जस्विनामालङ्कारः । तत्=एतत् उक्तमलङ्कारत्रयम् युक्तोत्कर्षम्=युक्तः योग्य उत्कर्षः वैचित्र्यविशेषो यस्य तादृशम् अर्थात् एतेषां त्रयाणां सहृदयसाक्षिकं वैचित्र्यमेवालङ्कारत्वे बीजम् ।

**इदमत्रावधानीयम्**—'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः। भावः प्रोक्तः' इति मम्मटोक्तेरयमर्थः--'रति'रिति पदं सकलस्थायिभावोपलक्षणम् । देवादिविषयेत्यपि अप्राप्तरसावस्थोपलक्षणम्, तेन देवादिविषया सर्वप्रकारा, कान्तादिविषयापि अपुष्टा रतिः हासादयश्च अप्राप्तरसावस्थाः विभावादिभिः प्राधान्येन अञ्जितो व्यञ्जितो व्यभिचारी च भावः प्रोक्तः

---

१ उदाहरणान्तरं यथा—

मृदुभुजलतिकाभ्यां शोणिमानं दधत्या
चरणकमलभासा चारुणा चाननेन ।
बिसकिसलयपद्मान्यात्तलक्ष्मीणि मन्ये
विरहविपदि वैरात्तन्वते तापमङ्गे ॥ [ वाग्भटः]

अत्र चरणकमलभासा आननेन च यथाक्रमं बिसकिसलयपद्मानि आत्तलक्ष्मीणि कृतानि इति क्रमः । विरहिण्या वर्णनमेतत् । यथा वा--

दधीचिबलिकर्णेषु हिमहेमाचलाब्धिषु ।
अदातृत्वमधैर्यञ्च दृष्टे भवति भासते ॥ [प्राणाभरणे]

अत्र दधीच्यादिषु अदातृत्वस्य हिमाचलादिषु अधैर्यस्यान्वयक्रमः ॥ २८४ ॥

२ पूर्वं संलक्ष्यक्रमाणां वस्त्वलङ्काररूपव्यङ्ग्यानां वाच्यार्थशोभाधायकत्वे समासोक्तिरूपकादिनामतयालङ्कारत्वमभिहितम्, सम्प्रति असंलक्ष्यक्रमाणां रसादिव्यङ्ग्यानामपि वाच्यार्थम्प्रति गुणीभूततया अलङ्कारत्वं युज्यते इति मन्वानः प्रेयोरसवदूर्जस्विनामकान् तान् निरूपयितुं प्रवर्त्तते आचार्यः ।

भावपदार्थाभिधेय इति सूत्रार्थः। ततश्चैवंभूतस्य भावस्य यत्र परंप्रति [वाक्यार्थरूपं वाच्यम्प्रति] अङ्गता भवति तत्र **'प्रेयोऽलङ्कार'** इति व्यपदेशः। एतेनैवाभिप्रायेण 'भट्टोद्भटः' प्रेयोलङ्कारमित्थमललक्षत्—

रत्यादिकानां भावानामनुभावादिसूचनैः।
यत्काव्यं बध्यते सद्भिस्तत्प्रेयस्त्वमुदाहृतम्॥ इति।

एतद् व्याचकार च 'श्रीमत्प्रतीहारेन्दुराजः' काव्यालङ्कारसङ्ग्रहस्य [ उद्भटभट्टप्रणीतस्य ] लघुवृत्तौ। तथाहि—रत्यादयो भावास्त्रिविधाः स्थायिनो व्यभिचारिणः सात्त्विकाश्च। तत्र—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्त्तिताः॥

अथ व्याभिचारिणः—

निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः। आलस्यञ्चैव दैन्यञ्च चिन्ता मोहः स्मृतिर्धृतिः॥
व्रीडा चपलता हर्ष आवेगो जडता तथा। गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च॥
सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता। मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः। त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः॥

[ अथ सात्त्विकाः ]

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥

एतेषां पञ्चाशत्संख्याकानां भावानां सूचकाः चत्वारोऽनुभावादयः। ते च—अनुभावो विभावो व्यभिचारी स्वशब्दश्च।

तत्रानुभावश्चतुर्विधः—आङ्गिको वाचिकः सात्त्विकः आहार्यश्च। आङ्गिकः—हस्ताभिनयादिः। वाचिकः—काक्वादिप्रयोगः। सात्त्विकः—स्तम्भादिः। आहार्यस्तु—प्रतिशीर्षकञ्चुकादिः। एवमयमनुभावः चतुःसंख्यः कार्यत्वात् कारणभूतान् भावान् गमयति।

'रसवद्रसपेशल'मिति—तत्र रसस्य लक्षणमाह 'काव्यानुशासने' **'श्रीहेमचन्द्रः'** तथाहि—**विभावानुभावव्यभिचारिभिरभिव्यक्तः स्थायी भावो रसः**। व्यक्तिश्च भग्नावरणा संविदेवेति परः सिद्धान्तः। इदञ्च—**भरतमुनि**सूत्रानुसारमेव—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति। एतस्य विवरणे अनेकेषां मतभेदः। सङ्क्षिप्तं प्रदर्श्यते। तत्र—विभावयति उत्पादयति रत्यादिमिति 'विभावः' निमित्तकारणम्। स च द्वेधा—आलम्बनोद्दीपनभेदात्। तदुक्तमग्निपुराणे—

विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते।
विभावो नाम स द्वेधालम्बनोद्दीपनात्मकः॥

आद्योऽपि द्वेधा—विषयाश्रयभेदात्। तत्र यमुद्दिश्य रत्यादिः प्रवर्त्तते सोऽस्य विषयः। आश्रयस्तु तदाधारः। यत्तु—तमुद्दीपयति चन्द्रचन्दनरोलम्बवनाभ्रविद्युत्प्रभृति तदुद्दीपनम्।

अनु पश्चाद् भावो यस्य सो'ऽनुभावः' कार्यम्। सच द्वेधा—स्तम्भादिः स्मितकटाक्षादिश्चेति। तदुक्तम्—

ते स्तम्भस्वेदरोमाञ्चाः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥
स्मितं गीतं कटाक्षश्च भुजक्षेपश्च हुंकृतिः। तनुमोटनजृम्भादिश्चानुभावः प्रकीर्त्यते॥ इति॥

विशेषेणाभिमुख्येन स्थायिनं प्रति चरतीति 'व्यभिचारी'। सञ्चारयति भावस्य गतिमिति सञ्चारी च। एष रत्यादेः सहायभूतो निर्वेदादिः। एषां संयोगात्=स्थायिनः सम्बन्धात् उत्पाद्योत्पादकभावात् गम्यगमकभावात् पोष्यपोषकभावरूपाच्च सम्बन्धात् रसस्य निष्पत्तिः [उत्पत्तिः] अनुमितिः, पुष्टिश्च¹ भवतीति भट्टलोल्लटशंकुकभट्टनायकानां मतानुसारं यथाक्रमं यथाश्रुतो भरतसूत्रार्थः। अर्थात् लौकिके व्यवहारे यानि कारणान्याश्रित्य रत्यादेराविर्भावो भवति तानि कान्तकान्तादिरूपाणि आलम्बनपदवाच्यानि भवन्ति जनककारणानि इति यावत्। उद्भूते च रत्यादौ यानि तत्पुष्टिकराणि चन्द्रचन्दनादीनि तानि उद्दीपनानि उच्यन्ते, एतेषां द्विविधानां काव्ये नाट्ये चोपनिबध्यमानानां 'विभाव' संज्ञा। रत्यादिजन्यानि कटाक्षभुजाक्षेपादीनि शास्त्रे 'अनुभाव'संज्ञां भजन्ते। निर्वेदादीनि च पूर्वोक्तानि त्रयस्त्रिंशत् उल्लिखितस्य रत्यादेर्जनने झटिति प्रतीतौ वा समर्थानि 'व्यभिचारिभावा'इत्युच्यन्ते। एतेषां विभावानुभावव्यभिचारिभावानां संयोगात्=उत्पाद्योत्पादकभावात् सम्बन्धात् रसस्य निष्पत्तिः=उत्पत्तिरिति मीमांसाप्रक्रियामनुसरन्तः **भट्टलोल्लट**प्रभृतयः। एतेषां मते वास्तविकसम्बन्धेन अनुकार्ये [नाट्येनाभिनेये नायकादौ] स्थितोऽपि तद्रूपतानुसन्धानात् [रामत्वाद्यारोपात्—एवंविधसीताहरणजनितदुःखानुसन्धानवान् रामोऽहम् इत्याकाराभिमानात्] नर्त्तकेऽपि प्रतीयमानः² [आरोपरूपेण विषयीक्रियमाणः] स्थायी रसः। किमुक्तम्? शृणु यदुक्तम्—विभावैर्जनितोऽनुभावैः प्रतीतिपदं नीतो व्यभिचारिभिरुपचितो मुख्यवृत्त्यानुकरणीये रामे [नायकादौ] वर्त्तमानोऽपि तद्रूपतानुसन्धानात् अनुकर्त्तरि [नटे] प्रतीयमानो यः स्थायी [रत्यादिः] स एव 'रस' संज्ञां भजते इति 'भट्टलोल्लटादीनां' मतस्य परः सारः।

परमेवम्—अनुकार्ये रामादावेव रसनिष्पत्तिः स्यात् सामाजिके [सहृदये नाट्यादिद्रष्टरि] रसनिष्पत्तेरभावः, तेन तेषु चमत्कारानापत्तिरिति दूषणं पश्यन्तो न्यायमतगृह्याः **श्रीशंकुक**प्रभृतयो भरतमुनिसूत्रमन्यथा व्याचक्षते, तथाहि—[कृत्रिमैरप्यकृत्रिमतया गृहीतैः] विभावानुभावव्यभिचारिभावैः संयोगात्=अनुमानात् रसस्य निष्पत्तिः=अनुमितिरिति सूत्रार्थः। अयमत्राशयः—एका सम्यक् बुद्धिर्भवति यत्र नियमेन [बाधाद्यभावेन] विषयोऽध्यवसीयते। तत्र द्वौ प्रकारौ, एकोऽयोगव्यवच्छेदविषयकः यथा 'राम एवायम्' इति। अपरोऽन्ययोगव्यवच्छेदविषयकः यथा 'अयमेव राम' इति।

अपरा मिथ्या बुद्धिः यत्र रामत्वाभाववति अरामे 'रामोय' मिति ज्ञानञ्जायते, यथा शुक्ताविदं रजतमिति अरजते शुक्तौ रजतप्रत्ययः, इयञ्च बन्ध्या बुद्धिरभिधीयते उत्तरकालमेव 'न रामोऽय'मिति यथार्थप्रत्ययेन, यथा 'नेदं रजत' मिति प्रत्ययेन शुक्तौ 'रजतमिद' मिति प्रत्ययो निवर्त्तते। विरुद्धोभयकोटिका तु तृतीया संशयबुद्धिः तथा 'अयं

१ 'पुष्टि' रेव 'भुक्ति'रित्युच्यते।

२ प्रतीयमानः=व्यञ्जनयाभिव्यक्तः इति व्याख्यानं कुर्वन्तः भट्टलोल्लटादीनां मतस्थितिं न जानन्ति नह्येषां मते व्यञ्जनास्वीकारः। सिद्धान्ते त्वेवं भविष्यति।

रामो नवा' इति । सदृशविपरीता तु चतुर्थी बुद्धिर्भवति यथा 'रामसदृशोऽयम्' इति । एताभ्यश्चतुर्विधाभ्योऽपि लोकप्रसिद्धाभ्यो धीभ्यो विलक्षणा या अरामे [ नटे ] 'रामोयम्' इति धीः सा, चित्रे 'तुरगोऽय' मितिवत् लोकोत्तरसहृदयजनानुभवसाक्षिका, तयैव प्रथमं पक्षभूतो नटो विषयीक्रियते, ततः पक्षताज्ञाने सति अविद्यमानमपि [तत्र नटे] विभावादित्रयं लिङ्गरूपेणावगम्यते यतो गुरुशिक्षां प्राप्य कृतदीर्घकालाभ्यासे नटे 'सेयं ममाङ्गेषु' इत्यादिकाव्यानुसन्धानबलात् आलम्बनस्योद्दीपनस्य च विभावस्य प्रकटनं भवति तदनु तदनुगुणस्य रोमाञ्चादेरनुभावस्याविर्भावः, ततो व्यञ्जनीयस्य उत्कण्ठादेर्व्यभिचारिभावस्य च प्रकाशो जायते, एवं कृत्रिमभावेन अतल्लिङ्गैः [ वस्तुतो नटावृत्तिभिः ] अपि कृत्रिमभावेन ज्ञानाभावात् स्थायी रत्यादिरनुमीयते । यस्यायं प्रकारः—'रामोऽयं सीताविषयकरतिमान् सीताद्यालम्बनविभाववर्षर्तुरूपोद्दीपनविभावरोमाञ्चाद्यनुभावौत्सुक्यादिव्यभिचारिभावसम्बन्धवत्त्वात्। यो यदात्मकविभाववत्त्वे सत्यनुभावव्यभिचारिभाववान् स तदीयरतिमान्' इति यत्तद्भ्यां सामान्यतो व्याप्तिः । यो नैव स नैवमिति वा व्यतिरेकव्याप्तिरनुसन्धेया । एवञ्च येयमनुमितिः सैव चमत्काररूपा चर्वणा, तया चर्वणाया विषयीक्रियमाणो रत्यादिः स्थायी एव 'रस' इति, सा च चर्वणा सामाजिकानामेवेति तेष्वेव रसव्यवहारः ।

परमत्राप्ययमस्वरसः—नहि क्वचिदनुमितिज्ञाने चमत्कृतिविशेषोऽनुभवसिद्धः,प्रत्यक्षमेव ज्ञानं चमत्कारकं भवतीति लोकसिद्धमेव । अपि च—नटे 'नायं राम' इति बाधज्ञाने सत्यपि तादृशानुमितेरभावेऽपि सहृदयानामास्वादो दरीदृश्यते । रसानुमितिवादपक्षे 'रसं साक्षात्करोमि' इत्यनुव्यवसायज्ञानानुपपत्तिरपि महद् दूषणमतः शङ्कुकादीनां मतमप्यनादेयमेव । तस्मात्—

विभावानुभावव्यभिचारिणां संयोगात्=सम्यक् साधारणात्मतया योगात्=भावकत्वव्यापारेण रसस्य=सत्त्वोद्रेकप्रकाशितस्थाय्युपहितस्वात्मानन्दरूपस्य निष्पत्तिः=भोगाख्यव्यापारेण भुक्तिः [विषयीकरणमिति यावत् ] इति सूत्रार्थः । इति **भट्टनायकः** ।

अस्य मतस्य संक्षिप्तसारोऽयम्—शब्दस्य अभिधाव्यापारवत् काव्यनाट्ययोस्तद्विलक्षणं 'भावकत्वभोजकत्व' नामकं व्यापारद्वयमतिरिक्तमप्यस्ति, तत्राद्येन व्यापारेण व्यक्तिविशेषसम्बन्धित्वेन असाधारणस्य विभावादेः स्थायिनश्च व्यक्तिविशेषांशपरिहारेण उपस्थापनरूपं साधारणीकरणम्भवति, अन्त्येन तु विभावादिसहकृतेन रतिरास्वाद्यते सहृदयैः। असत्या अपि च रतेरास्वादोऽलौकिकत्वान्नानुपपन्नः, स चायं रतेरास्वादो **भुक्तिरेव** । तत्र सीतात्वादिविशेषसम्बन्धांशपरिहारेण कान्तात्वादिसामान्यांशसम्बन्धेन विभावादीनां साधारणीकरणञ्च जायते । तत्र यद्यपि भावकत्वव्यापारस्य विषयो रसादिः परन्तु भोजकत्वव्यापारस्य विषयः सहृदयजन एव अतस्तस्यैव रसोपभोगः । रत्यादेः स्थायिनो भोगस्तु—सत्त्वगुणोद्रेकात् प्रकाशमानानन्दस्वरूपा संवित् सापि वेद्यान्तरसम्बन्धरहिता, सैवैतन्मते भोगात्मकव्यापारभूता [ भोजकत्वव्यापारभूता ] एतेनैव व्यापारेण सत्त्वोद्रेकस्थाय्युपहितस्वात्मानन्द-

१ 'अयं घट' इति प्रथममुत्पन्नं 'व्यवसायज्ञानम्'। तदुत्तरं 'घटमहं जानामि' इति ज्ञानविषयकं ज्ञानम् 'अनुव्यवसायज्ञानम्' । इति दार्शनिकानां परिभाषा ।

रूपस्य रसस्य निष्पत्तिर्भुक्तिरास्वाद इति यावत् । स चास्वादः लौकिकसुखानुभवविलक्षणः, अन्यथा भयादेः स्थायिनो भयानकत्वादिरसत्वेनानुभवो न स्यात् । ['सम्मतैतन्मतो भट्टनायकः' साङ्ख्यानुग इति सम्प्रदायः, तत्रास्माकं महद्वैचित्र्यमाभाति, तदेतद्विषये—'काव्यप्रकाश-प्रभायां' समीक्षितम्] ।

अस्य मतस्यास्वारस्यबीजन्तु—अभिधालक्षणाभ्यामतिरिक्तेन तृतीयेन व्यञ्जनात्मक-व्यापारेणैव पूर्वोक्तसकलप्रयोजनसिद्धेः मध्ये तदतिरिक्तव्यापारद्वयकल्पनं निष्प्रमाणकमेव तस्मात्—स्थायिनां रत्यादीनां विभावादिभिः सह संयोगात्=व्यङ्ग्यव्यञ्जकभावरूपात् सम्ब-न्धात् [ व्यञ्जनाख्यव्यापारात् ] रसस्य=चिदानन्दविशिष्टस्य स्थायिनो, रत्यादिस्थाय्युपहितस्य चिदानन्दात्मनो वा निष्पत्तिः=अभिव्यक्तिरिति भरतसूत्रार्थ इति **सिद्धान्तानुयायिनः** । अस्यायं परः सारः—मुकुटप्रतिशीर्षकादिना तावन्नटबुद्धिराच्छाद्यते गाढप्राक्तनसंवित्संस्का-राच्च काव्यबलेन आनीयमानापि रामधीर्न तत्र विश्राम्यति, अत एवोभयदेशकालपरित्यागः, रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टाः । तत्रावलोकिता देशकाला अनियमेन रतिं गमयन्ति, यस्यां स्वात्माऽपि तद्वासनावत्त्वादनुप्रविष्ट इव, तस्मात्तटस्थतया तत्र रत्यवगमः । एवञ्च [ साधारणीभूतः ] सन्तानवृत्तेरेकस्या एव संविदो गोचरीभूतः स्थाय्येवाभिव्यक्तो 'रस' पदव्यवहारभाग् भवति ।

तत्र आस्वादनार्थकाद् 'रस' धातोः भावे करणे वा घञि कृते रस्यते आस्वाद्यतेऽसौ अनेन वेति **रसः** । भावार्थकप्रत्यये आस्वादनमेव रसः, करणार्थकप्रत्यये तु आस्वादनाभि-व्यञ्जकोऽन्तःकरणस्य व्यापारो वृत्तिविशेषो रसः स्यात् । उक्तञ्च—विभावानुभावव्यभिचा-रिभिर्व्यञ्जितो रतिहासशोकादिस्थायित्वेन चित्तवृत्तिविशेषो 'रसः' । अधिकन्तु मत्प्रणीतकाव्य-प्रकाशप्रभायां दशरूपकटीकायां वा द्रष्टव्यम् । एतद्विषये **भट्टतोतेन** यदुक्तं तद् **आचार्य-हेमचन्द्रैः** स्वरचितकाव्यानुशासनस्य स्वोपज्ञा 'ऽलङ्कारचूडामणि' व्याख्यायां स्पष्टीकृतं द्रष्टव्यम् । ग्रन्थगौरवभयात् तदिह नालोडितमस्माभिः । किन्तु—

शृङ्गारहास्यकरुणारौद्रवीरभयानकाः ।
बीभत्साऽद्भुतसञ्ज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥

इत्याचार्यैरष्टोक्ताः । 'श्रीहेमचन्द्राचार्येण' तु—'शृङ्गारहास्यकरुणा रौद्रवीरभयानका बीभत्साद्भुतशान्ता नव रसा' इति तेषां समष्ट्या नव सङ्ख्योक्ता । तेन हेमचन्द्राचार्यमते 'शान्त' रसस्य नाट्येऽपि सम्प्रदायतयैव स्वीकारः नतु तद्विषये मतैकदेशित्वमिति ममाभा-तीति दिक् । आस्तां तावत्—प्रकृतमनुसरामः । एवम्भूतः शृङ्गारादिभेदभिन्नो रसो यत्र पर-स्याङ्गं भवति तद् 'रसवदलङ्कारः' । तदुक्तं ध्वनिकारादिभिः—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥ १ ॥

तदयमत्र निष्कर्षः—रसानां परस्याङ्गभावे रसवदलङ्कारः, भावानामङ्गत्वे प्रेयोऽलङ्कारः, रसाभासभावाभासयोरङ्गत्वे ऊर्जस्व्यलङ्कारः, भावशान्तेरङ्गत्वे समाहितालङ्कारः, भावोदय-

---

१ 'आचार्याभिनवगुप्तपादाः' तदनुयायिनो 'मम्मटाचार्य'प्रभृतयश्चेत्यर्थः ।

भावसन्धि-भावशबलतानामङ्गत्वे तत्तन्नामकालङ्काराः । आह च विश्वनाथः—

रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।
गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ॥
रसवत् प्रेय ऊर्जस्वि समाहितमिति क्रमात् ।
भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः ॥ इति ।

एतच्च प्रायो मूलोदाहरणेष्वपि स्फुटीभविष्यति ।

परमग्रे रसवदलङ्कारस्य यान्युदाहरणानि दण्डिना आचार्येण उक्तानि तत्रास्माकं मतौ कस्यापि रसस्याङ्गभावो न दृश्यते, तेन सम्भावये—यद् रसवदलङ्कारता आचार्यस्य स्वाभीष्टा नास्तीति कथमन्यथा महाकवी रसवदलङ्कारं प्रतिज्ञाय स्वशैल्या तथाभूतानि तदुदाहरणानि नावक्ष्यत् यद्यस्य तथाभीष्टमभविष्यत्। केवलं परमतसंरक्षणकामोऽयं प्रधान-रसवत्यपि काव्ये औपचारिकं रसवद्व्यवहारं करोतीति प्रतीयते । 'आचार्यमम्मटो'ऽपि 'एते च रसवदाद्यलङ्कारा' इति लिखन् परमताभिप्रायाऽविष्करणमात्रैकप्रयास एव सन् तेषु गुणीभूतव्यङ्ग्यव्यवहारं सध्रीचीनं मनुते इति तदीयपूर्वोत्तरग्रन्थग्रन्थिग्रन्थनस्थूलेतरनिरीक्षणमपेक्षते । काव्यादर्श'प्रभा'कारोऽपि—'तद्वर्णनपरमेतद्वचः रसवदलङ्कारालङ्कृतम्' इति लिखन् अस्मत्संवाद्येव । एवञ्चैतेषां मते रसवदादीनामलङ्कारत्वमनभीष्टम् ॥ २७५ ॥

[ प्रेयोलङ्कारस्योदाहरणम् ]

**अद्य या मम गोविन्द ! जाता त्वयि गृहागते ।**
**कालेनैषा भवेत् प्रीतिस्तवैवागमनात्पुनः ॥ २७६ ॥**[१]

तत्रादौ प्रेय उदाहरति—'अद्य' इति । हे! गोविन्द ! त्वयि गृहागते=भवनं प्राप्ते या मम प्रीतिः=प्रेमा जाता=उत्पन्ना सा एषा कालेन=वेलान्तरेण पुनः आगमनात्=भूयोपि समागमनात् तव एव भवेत्=नेतरस्य भविष्यतीत्यर्थः । त्वयि गते सति इतरसाधु-समागमेन नैवेदृशी प्रीतिर्भविष्यति इति भावः । यावत्पुनस्तवागमनं न भावि तावत् क्लेशैनैव दिनानि यापयिष्यामीति व्यङ्ग्यम् ।

अत्र विदुरस्य वाक्यविच्छित्तिविशेषतया अभिव्यज्यमाना भगवद्विषयिणी रतिर्भावः । स च भगवतः श्रीकृष्णस्य प्रेमातिशयजनकत्वे वाच्यस्य [ वाक्यार्थस्य ] एव शोभातिशयं पुष्णातीति वाच्याङ्गत्वाद्रतिभावस्य प्रेयोलङ्कारत्वं सुस्पष्टम् ॥ २७६ ॥

[ उक्तार्थस्य स्पष्टीकरणम् ]

**इत्याह युक्तं विदुरो नान्यतस्तादृशी धृतिः ।**
**भक्तिमात्रसमाराध्यः सुप्रीतश्च ततो हरिः ॥ २७७ ॥**

उक्तोदाहरणे प्रेयःस्वरूपं घटयति—'इति' इति । विदुरः इति=[ उक्तेन ] प्रकारेण

---

१ तत्पदेन प्रकृतं रसमेव परामृशति ।

२ इत्थमेव प्रह्लादोक्तिः 'विष्णुपुराणे'—

या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥
[अंश० १ अ० २० श्लो० १७ ]

युक्तम्=उचितम् आह=कथितवान् । अस्मिन्नर्थे हेतुं दर्शयति—'न' इति । यतः अन्यतः= अपरस्मात् कस्माच्चित् तादृशी धृतिः=धैर्यं सन्तोष इति यावत् 'न' अभूत् इति शेषः । ननः हेतोः भक्तिमात्रसमाराध्यः=भक्तिमात्रेण समाराध्यः सेव्यः अर्थात् ईश्वरे परानुरक्तिरूपा या भक्तिः केवलं तयैव वश्यः हरिः श्रीकृष्णः नत्वन्यैर्यज्ञादिभिः साधनैः तथाराध्य इति भावः । सुप्रीतः=अतिमात्रं प्रसन्न आसीत् इति शेषः । मर्मार्थस्तु—अधस्तादुक्तप्रायः ॥ २७७ ॥

[ प्रेयस उदाहरणान्तरम् ]

**सोमः सूर्यो मरुद् भूमिर्व्योम होतानलो जलम् ।**
**इति रूपाण्यतिक्रम्य त्वां द्रष्टुं देव ! के वयम् ॥ २७८ ॥**

पूर्वं वक्तृबोद्धव्यवैशिष्ट्येन प्रीतौ प्रेयोऽलङ्कार उदाहृतः, सम्प्रति वक्तृमात्रप्रीतौ तद्दर्शयति—'सोम' इत्यादिना । हे देव !=महादेव ! सोमः=चन्द्रमाः, सूर्यः=रविः, मरुत्= अनिलः, भूमिः=पृथिवी, व्योम=आकाशम्, होता=यजमानः, अनलः=वह्निः, जलम्= नीरम् इति=एतानि रूपाणि=नवाष्टौ मूर्त्तीः तनूः अतिक्रम्य=उल्लङ्घ्य अतीत्य वर्त्तमानं त्वां= शुद्धस्वरूपं परमात्मानं द्रष्टुम्=साक्षात्कर्तुं वयं के=न केऽपि नैव समर्था इत्यर्थः । अदृश्योऽपि त्वं यद् दृष्टः स भक्तजनेषु तवानुकम्पैव केवलं विश्वासार्हेति भावः ।

अत्र महादेवविषयको भक्तस्य रतिभावः । अत्र निष्कलस्य परब्रह्मणो जन्यायाः प्रीतेरभावात् वक्तुः [ भक्तस्य ] तद्विषयिण्या प्रीत्या एव प्रेयस्त्वं ज्ञेयम् ॥ २७८ ॥

[ उक्तार्थस्पष्टीकरणम् ]

**इति साक्षात्कृते देवे राज्ञो यद्राजवर्मणः ।**
**प्रीतिप्रकाशनं तच्च प्रेय इत्यवगम्यताम् ॥ २७९ ॥**

उक्ते काव्ये केवलं वक्तुः प्रीतौ प्रेयो घटयति—'इति' इति । इति=दर्शितप्रकारेण साक्षात्कृते=तपसा अध्यक्षीकृते देवे=महादेवे राजवर्मणः=राजवर्मनाम्नो राज्ञः=भूपस्य यत् प्रीतिप्रकाशनम्=प्रेम्ण आविष्कारः तत् च प्रेयः=इत्याख्योऽलङ्कारः अवगम्यताम्=ज्ञायताम् अर्थात् अत्रापि महादेवविषयको व्यङ्ग्यो राजनिष्ठो रतिभावः स्वव्यञ्जकस्य प्रियाख्यान-रूपस्य वाक्यार्थस्याङ्गत्वात् 'प्रेयोऽलङ्कारः' । एवमादिष्वन्यत्राप्यूह्यम्[3] ॥ २७९ ॥

---

१ उक्तञ्च-[भक्तिमीमांसायाम्] शाण्डिल्येन—'सा परानुरक्तिरीश्वरे'[१।२] इति ।

२ उक्तञ्च श्रीमद्भगवद्गीतायाम्—
नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ॥
मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ! ॥
(अ० ११—५३, ५४, ५५)

३ तत्र मुनिविषयको रतिभावो यथा—
हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ [माघः]
इदं नारदमुनिम्प्रति श्रीकृष्णवचनम् । अत्रापि श्रीनारदविषया श्रीकृष्णनिष्ठा अभि-व्यज्यमाना रतिर्भावः, सच वाक्यार्थस्यातिशयकरत्वादङ्गतां गतः सन् प्रेयोऽलङ्कारः ।

[ रसवदलङ्कारप्रसङ्गे प्रथमं शृङ्गाररसोदाहरणम् ]

**मृतेति प्रेत्य सङ्गन्तुं यया मे मरणं मतम् ।**
**सैषा तन्वी मया लब्धा कथमत्रैव जन्मनि ॥ २८० ॥**

क्रमप्राप्तं रसवदलङ्कारमुदाहर्त्तुकामः रसेषु प्रथमं शृङ्गारस्य प्राधान्यात् तत्स्वरूपमुदाहरणेन स्पष्टीकरोति—'मृता' इति । मृतां तदालसां पुनर्नागानां कृपयोज्जीवितां दृष्ट्वा तत्पत्युः कुवलयाश्वस्योक्तिरियम्—'मृता' इति । इयं मृता=इति निश्चयं कृत्वा प्रेत्य=मृत्वा यया=प्रियया सह सङ्गन्तुम्=परलोके सङ्गमं कर्त्तुं मे=मम मरणम्=मृतिः मतम्=निश्चितमासीत् सा एषा तन्वी कथम् अत्र एव जन्मनि=मरणं विनेत्यर्थः, मया लब्धा=प्राप्ता । 'लब्धा' इत्यत्र कर्मणि 'क्तः' । 'सङ्गन्तुम्' इत्यत्र 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' [३।३।१०] इति सूत्रेण सम्पूर्वकाद् 'गम्' धातोः 'तुमुन्' । अत्र शृङ्गारो रसः, सच सम्भोगात्मकः विप्रलम्भपूर्वः । उक्तञ्च—

न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्धते ॥ इति ॥

आह च 'विश्वनाथः'—

शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥ इति ॥

सारस्तु—रतिस्थायिभावकः कान्ताद्यालम्बनकः स्रक्चन्दनाद्युद्दीपितः कटाक्षाद्यनुभावितो व्रीडादिसञ्चारितः **शृङ्गारः** । सच[1] विप्रलम्भसम्भोगभेदेन सामान्यतो द्विविधः । रतिश्च—कान्ताविषयकोऽनुराग एव । उक्तं हि—'रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्' इति ।

प्रकृतश्लोके निरुक्ता [मदालसा] नायिका आलम्बनविभावः, तदीयस्मेरताद्या अनुभावाः, हर्षविस्मयादयश्च व्यभिचारिभावाः, एतैरभिव्यज्यमाना रतिः स्थायिभावः सामाजिकहृदये शृङ्गाररसतामापद्यते ।

इदन्तु ध्येयम्—रसोद्बोधे मिलितानामेव त्रयाणां विभावादीनां हेतुभावः, यत्र तु एकस्य द्वयोर्वा सद्भावः तत्रान्यस्यौचित्या आक्षेपः । आक्षेपोदाहरणन्तु काव्यप्रकाशादौ द्रष्टव्यम् ॥ २८० ॥

[ प्रेयोऽलङ्काररसवदलङ्कारयोर्विशेषः ]

**प्राक् प्रीतिर्दर्शिता सेयं रतिः शृङ्गारतां गता ।**
**रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥ २८१ ॥**

प्रेयोलङ्काराद् विशेषतां दर्शयन् अस्य रसवदलङ्कारत्वं समर्थयते—'प्राक्' इति । प्राक्=पूर्वयोर्द्वयोरुदाहरणयोः[2] या प्रीतिः=प्रेमा विभावादिभिः परिपोषरहितैव रतिः दर्शिता=

---

१ 'यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ' इत्युक्तलक्षणो ज्ञेयः । अयञ्च—पूर्वराग-मान-प्रवास-करुणात्मकतया चतुर्विधः इत्येके । अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविध इत्यपरे । अत्र मदालसापक्षे करुणात्मको विप्रलम्भः । तदुक्तम्—

यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥ इति प्रपञ्चस्त्वन्यत्र ।

२ 'अद्य या' तथा 'सोमः सूर्यः' इत्युदाहरणद्वये ।

भगवद्विषयकत्वेन प्रेयोरूपतया स्फुटीकृता सा इयम्=सैव रतिः प्रीतिः कान्ताविषयकोऽनुराग इत्यर्थः, रूपबाहुल्ययोगेन=रूपाणि विभावानुभावव्यभिचारिणः तेषां बाहुल्यं प्राचुर्यं विस्तार इति यावत्, तस्य योगेन=व्यङ्ग्यव्यञ्जकभावसम्बन्धेन [व्यञ्जनाख्येन शब्दव्यापारेणेत्यर्थः] शृङ्गारताम्=शृङ्गारभावं गता=प्राप्ता । तत्=तस्मात् इदं वचः=मृतेति काव्यरूपं वाक्यम् रसवत्=रसवदलङ्कारोपेतमित्यर्थः ।

**अयमाशयः**—इष्टपदार्थविषयकोऽन्तःकरणस्य परिणामविशेषः तत्रान्तरे वृत्तिपदवाच्यः, स एव सुखानुशयी सन् रागः प्रीतिरिति चोच्यते । यदासौ नायिकादिविषयको भवति तदा 'रतिः' इत्यभिधीयते । 'रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्' इत्युक्तेः । सैवेयं रतिर्देवादिविषयिणी सती 'भाव' पदेन भण्यते । प्रकृते तु—कान्ताविषयकानुरागरूपत्वादियं रतिः शृङ्गाररसस्य स्थायिभावः, सैव विभावानुभावव्यभिचारिणां संयोगाद् शृङ्गारत्वं गता [शृङ्गारो रसः] तस्मादिदं वचो 'रसवत्' ।

अत्र मदालसा नायिका विभावः, तदीयवदनस्मेरताद्या अनुभावाः, हर्षविषादाद्याः व्यभिचारिणः, एतैः पुष्टितां नीतोऽभिव्यक्तो रत्याख्यः स्थायिभावः सहृदयहृदयेषु रसभावमापद्यते इत्यधस्तादाम्रेडितप्रायम् ।

**इदमत्रावश्यकमवधानीयम्**—यत्र रसः परस्याङ्गभावं भजते तत्रैव प्रायः सर्वेषामालङ्कारिकाणां मते रसवदलङ्कारत्वव्यपदेशः । यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः । येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥

अत्र—एकचुलकेन समुद्रे पीयमाने तदन्तर्गतयोरवताररूपयोर्मत्स्यकूर्मयोर्दर्शनेन गम्योऽद्भुतरसो मुनिप्रभावातिशयपर्यवसानत्वेन मुनिविषयकरतिपोषकदिति तदङ्गत्वे रसवदलङ्कारः । यथा वा—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

अत्र शृङ्गारावस्थया करुणरसस्य परिपोष इति शृङ्गारस्य पराङ्गत्वेऽस्य रसवदलङ्कारत्वम् । 'ध्वन्यालोककार'मते तु—'मुनिर्जयति' इत्यत्र नैव रसवदलङ्कारत्वेन व्यपदेशः । किन्तु--असौ तस्मात् स्थितमेतत्--अङ्गिभूतरसाद्याश्रयेण काव्ये क्रियमाणे नवनवार्थलाभो भवति, बन्धच्छाया च महती सम्पद्यते इति । अत एव च रसानुगुणार्थविशेषोपनिबन्धनमलङ्कारान्तरविरहेऽपि छायातिशययोगि लक्ष्ये दृश्यते । यथा--इत्युक्त्वा अद्भुतरसमेवात्रपद्येऽङ्गित्वेन मन्यमानः 'मुनिर्जयति' इति पद्यमुदाजहार । 'अलङ्कारसर्वस्वकार'स्तु—सुगूढं शास्त्रमर्थयन् प्रकृते 'भाविक'नामानमलङ्कारं स्थिरीचकार । 'अप्पय्यदीक्षिताः'—रसवन्तमेव मेनिरे । आस्तां तावदेतत्—सर्वथापि प्राचां मते रसस्य अङ्गित्वे अलङ्कार्यत्वम्, तस्य पराङ्गत्वे अलङ्कारत्वम्, मम्मटाचार्यादीनां स्वमते रसस्य पराङ्गतास्थले गुणीभूतव्यङ्ग्यत्वम्, दण्ड्याचार्यमते [ काव्यशोभाकरत्वात्मकं सामान्यमुपाधिं लक्ष्यीकृत्य ] रसवत्येव काव्ये ऐच्छिकं रसवदलङ्कारत्वमिति स्थितो राजमार्गः । अत एव दण्डिवामनमम्मटानामलङ्कारलक्षणेऽपि महान् मतभेदः ।

---

१ 'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते' इति दण्डी । 'काव्यशोभायाः

ननु—दण्डिमते रसस्यापराङ्गतायामपि रसवत्त्वमिति कुतस्त्वयाऽवगम्यते इति चेत्? शृणु—

मूलग्रन्थे तत्र तत्र [ शृङ्गाररसाद्युदाहरणे ] न कस्यापि रसस्येतराङ्गत्वं कथमप्यवगच्छामः रसवतो वर्णनं प्रस्तुत्य तदुदाहरणाप्रदर्शनं ग्रन्थकारस्य ग्रन्थनन्यूनता स्फुटं प्रतीयमाना कथं वार्येत। शृङ्गारादीनां स्वरूपमेवात्रावतारितं दण्डिना, तदङ्गत्वे [रसवदलङ्कारत्वे] उदाहरणानि ग्रन्थगौरवं मत्वा ग्रन्थान्तरतो वा तेषामवसायं हृदि कृत्वा नेह प्रपञ्चितानि इति सम्भाव्येतापि । मन्ये तु—[कदाचित्] रसवति काव्य एव गौण्या भावनया रसवदलङ्कारव्यवहारो दण्ड्याचार्याणामिति, 'इह त्वष्ट रसायत्ता रसवत्ता स्मृता गिराम्' इति वक्ष्यमाणस्पष्टोक्तेः, तदत्र विपश्चिद्भिर्या युक्तायुक्ते स्वयमप्यामालोचयन्तु । मया तु गुरुभावितान्तःकरणेन यथामति विवरीतम् ।

परमिदमन्यदपि विभाव्यम्—किं सर्वत्र सर्वथा सर्वदा प्रतीयमानस्य सर्वस्य व्यङ्ग्यमात्रस्य एव अलङ्कार्यत्वम् [स्वप्रधानत्वम्?] अथवा तादृश रसादेरेव? । तत्र न तावदाद्यः पक्षः क्षोदक्षमः—समासोक्त्यप्रस्तुतप्रशंसापर्यायोक्तप्रभृतिस्थले मुख्यतयैव प्रतियमानानां वस्त्वलङ्काराणामपि अलङ्कारतयैव स्वीकारात् । ननु तत्तत्स्थले वाच्यार्थस्यैव प्रधानत्वम्, प्रतीयमानानां वस्त्वलङ्काराणां नैव तत् तस्मादप्रधानभूतानामलङ्कारान्तरत्वमेवेति चेत्? न, व्यङ्ग्यमात्रस्य प्रधानताया अनुभवसिद्धत्वेनापलपितुमशक्यत्वात् । नच परः पक्षः—सामान्यतः काव्यात्मत्वेन स्वीकृतानां वस्त्वलङ्काररसादिव्यङ्ग्यानां मध्ये वस्त्वलङ्काराणान्त्वलङ्कारत्वम् रसादीनां नियमेनालङ्कार्यत्वमेवेति विनिगमनाविरहात् । तस्माद् व्यङ्ग्यतयाऽविशिष्टानां वस्त्वलङ्काराणां रसादीनाञ्च काव्यशोभाजनकत्वेनालङ्कारत्वं युक्त्यनुभवसिद्धमिति प्राचां सरणिरेव साधीयसीत्यपि केचित्। अधिकन्तु—**"काव्यप्रकाशप्रभाया"** मालोडितमस्माभिरिति तत एव कणेहत्य निरीक्षणीयम् ॥ २८१ ॥

[ अथ रौद्रो रसः ]

**निगृह्य केशेष्वाकृष्टा कृष्णा येनाग्रतो मम ।**
**सोऽयं दुःशासनः पापो लब्धः किं जीवति क्षणम् ॥ २८२ ॥**

शृङ्गारमुदाहृत्य रौद्ररसमुदाहरति—'निगृह्य' इति । येन मम अग्रतः=पुरतः मामनादृत्येत्यर्थः, कृष्णा=द्रौपदी केशेषु=शिरोरुहेषु निगृह्य=नितरां गृहीत्वा आकृष्टा=आलोठिता, सः अयम् पापः=दुष्टः दुःशासनः=दुर्योधनानुजः मया=भीमेन प्राप्तः=गृहीतः क्षणं जीवति=प्राणिति किम्=नैव जीवति [जीविष्यति] इत्यर्थः ॥ २८२ ॥

[ उक्तलक्ष्ये रौद्ररसस्वरूपसङ्गमनम् ]

**इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः ।**
**भीमस्य पश्यतः शत्रुमित्येतद्रसवद्वचः ॥ २८३ ॥**

---

कर्त्तारो धर्मा गुणाः ॥१॥ 'तदतिशयहेतवस्त्वलङ्काराः' इति 'वामनः' ।

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥ इति 'मम्मटाचार्याः' ।

उक्ते उदाहरणे स्वयं रौद्रं रसं लापयति—'इति' इति । शत्रुम्=दुःशासनम् पश्यतः=आलोकयतः भीमस्य=मध्यमपाण्डवस्य क्रोधः=[ कोपः ] क्रोधात्मकः स्थायिभावः पराम्=प्रकृष्टाम् कोटिम्=सीमानम् आरुह्य=प्राप्य अर्थात् विभावादिभिः परितः पोषं गत्वा रौद्रात्मतां गतः=रौद्ररसभावं प्राप्तः, रौद्ररसरूपेण परिणत इति निर्गलितोऽर्थः । उक्तञ्च 'प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोधः इष्यते' इति । अत्र क्रोधः स्थायिभावः, दुःशासनः सपत्न आलम्बनविभावः, तस्य कृष्णाकेशाद्याकर्षणमुद्दीपनविभावः, पाप इति निन्दावचनमनुभावः, प्रतीयमाना गर्वाद्या व्यभिचारिणः, एतैः पुष्टितां नीतः क्रोधः स्थायिभावः रौद्ररसभावं प्राप्तः इति—एतत् 'रसवत् वचः' इत्येवमुक्तं वचः काव्यं रसवदलङ्कारवदित्यर्थः ।

'क्रोधस्थायिभावको द्विषदालम्बनकः तदपकाराद्युद्दीपितो विकत्थनाद्यनुभावितो गर्वादिसञ्चारितो रौद्र' इति रौद्ररसस्वरूपम् । तथाच 'वाग्भटः'—

क्रोधात्मको भवेद्रौद्रः क्रोधश्चारिपराभवात् ।
भीष्मवृत्तिर्भवेदुग्रः सामर्षस्तत्र नायकः ॥
स्वांसाघातस्वशंसास्त्रोत्क्षेपभ्रुकुटयस्तथा ।
अत्रारातिजनाक्षेपोद्वेलनं चोपवर्ण्यते ॥ इति ॥ २८३ ॥

[ वीररसोदाहरणम् ]

**अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।**
**अदत्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥ १८४ ॥**

वीररसमुदाहरति—'अजित्वा' इति । सार्णवाम्=अर्णवेण समुद्रेण सहिताम् उर्वीम्=पृथ्वीम् अजित्वा=न जित्वा जयेनाप्राप्येत्यर्थः, विविधैः=नानाप्रकारैः मखैः=वेदविहितैः राजसूयाश्वमेधप्रभृतिभिर्यज्ञैः अनिष्ट्वा=देवान् असन्तर्प्य, अर्थिभ्यः=याचकेभ्यः अर्थम्=वसु अदत्वा=असमर्प्य कथम्=केन प्रकारेण [ विधिना ] अहम् पार्थिवः=पृथिवीपतिः भवेयम्=स्याम् । तत्तत्पृथिव्यादिदानात्मकदर्शितोपायरहितस्य पृथिवीपतित्वं मनोरथमात्रमेवेति तात्पर्यम् । अत्र युद्धवीरता धर्मवीरता दानवीरता चेति ध्वनितम् ॥ २८४ ॥

[ लक्ष्ये वीररसस्वरूपसङ्गमनम् ]

**इत्युत्साहः प्रकृष्टात्मा तिष्ठन् वीररसात्मना ।**
**रसवत्त्वं गिरामासां समर्थयितुमीश्वरः ॥ २८५ ॥**

उक्तोदाहरणे स्वयमेव वीररसं घटयति—'इति' इति । इति=उक्तरूपे काव्ये प्रकृष्टात्मा=प्रकृष्टः उत्कृष्टः आत्मा स्वरूपं यस्य स तथाविधः विभावादिभिः परिपोषं प्राप्त इत्यर्थः । उत्साहः=संरम्भः 'कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते' इत्युक्तलक्षणः वीररसात्मना तिष्ठन्=वीररसरूपेण परिणामं प्राप्तः आसां गिराम्=दर्शितकाव्यरूपाणां कविवाचाम् रसवत्त्वम्=रसवदलङ्कारभावं समर्थयितुम्=परिपोषयितुम् ईश्वरः=युक्तः समर्थ इत्यर्थः ।

अत्र संग्रामे जेतव्यो वैरिवर्गः, धर्मे यज्ञाः, दानेऽर्थिनश्च आलम्बनविभावाः, प्रतीयमानाः तत्तत्सहकारिणोऽनुभावाः, हर्षधृतिसंवेगप्रभृतयो व्यभिचारिभावाः, एतैः सर्वैरभिव्यक्तः उत्साहरूपः स्थायिभावः सहृदयहृदये वीररसतां भजते । उक्तञ्च—'उत्साहस्थायिभावकः

द्विषद्विद्वज्जनदीनाद्यालम्बनकोऽपकारगुणाद्युद्दीपितः प्रतीकारकरणदानाद्यनुभावितो हर्षवेगाचिन्तादिसञ्चारितो '**वीरः**'। इति। उक्तञ्च—

उत्साहात्मा भवेद्वीरस्त्रिधा वीराजिदानतः।
नायकोऽत्र भवेत्सर्वैः श्लाघ्यैरधिगतो गुणैः॥ २८५॥

[ करुणरसस्योदाहरणम् ]

**यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी।**
**साधिशेते कथं तन्वी हुताशनवतीं चिताम्॥ २८६॥**

करुणरसमुदाहरति—'यस्या' इति। यस्याः कोमलाङ्ग्याः=मृदुशरीरायाः नायिकायाः कुसुमशय्या=पुष्पास्तरणम् 'अपि' रुजाकरी=पीडाजनिका, सा=तन्वी सुकुमाराङ्गी कथम्=केन विधिना हुताशनवतीम्=जाज्वल्यमानानलाम् चिताम्=चित्याम् अधिशेते=तत्रास्ते इत्यर्थः। 'चिता चित्या चितिः स्त्रियाम्' इत्यमरः। 'अधिशीङ्स्थासामाधारः' [ १।४।४६ ] इत्यनेन कर्मसंज्ञा॥ २८६॥

[ करुणरसस्वरूपसङ्गमनम् ]

**इति कारुण्यमुद्रिक्तमलङ्कारतया स्मृतम्।**
**तथापरेऽपि बीभत्सहास्याद्भुतभयानकाः॥ २८७॥**

एतद् घटयित्वा दर्शयति—'इति' इति। इति=एवम् उद्रिक्तम्=विभावादिभिः परितः पुष्टिम्प्राप्तम् कारुण्यम्=करुणस्य [ करुणाख्यरसस्य ] भावः कारुण्यं शोकः स्थायिभावः 'इष्टनाशादिभिश्चेतो वैक्लव्यं शोकशब्दभाक्' इत्युक्तलक्षणः अलङ्कारतया=रसवदलङ्कारभावेन स्मृतम्=उक्तं कविभिरित्यर्थः।

अत्र मृता तन्वी आलम्बनविभावः, कुसुमशय्यादिस्मृतिः उद्दीपनविभावः, तथाविधकरुणोपेतवचनमनुभावः, कथमित्यादिना गम्यमानाश्चिन्ताप्रभृतयो व्यभिचारिभावाः, एतैरभिव्यक्तः शोकस्थायिभावः सचेतसां हृदये करुणरसतां भजते।

उक्तञ्च—शोकस्थायिभावको मृताद्यालम्बनकः तद्गुणाद्युद्दीपितो रोदनाद्यनुभावितो दैन्यादिसञ्चारितः '**करुणः**' इति। 'वाग्भटो'प्याह—

शोकोत्थः करुणो ज्ञेयस्तत्र भूपातरोदने।
वैवर्ण्यमोहनिर्वेदप्रलापाश्रूणि कीर्त्तयेत्॥ इति।

तथा परे अपि बीभत्सहास्याद्भुतभयानकाः=रसा ज्ञेया इति शेषः। अर्थात्—जुगुप्सास्थायिभावकः विण्मूत्राद्यालम्बनको दुर्गन्धाद्युद्दीपितो निष्ठीवनाद्यनुभावितो ग्लान्यादिसञ्चारितो **बीभत्सः**। हासस्थायिभावको विकृतिकृदालम्बनको वैकृताद्युद्दीपितः गल्लफुल्लनाद्यनुभावितः श्रमादिसञ्चारितो **हास्यः**। विस्मयस्थायिभावकः विस्मयजनककर्मकर्त्रालम्बनकः विस्मयकर्माद्युद्दीपितः चकितताद्यनुभावितो हर्षादिसञ्चारितोऽ**द्भुतः**। भयस्थायिभावको विकटाद्यालम्बनकः तद्विकटकर्माद्युद्दीपितः पलायनाद्यनुभावितो जडतादिसञ्चारितो **भयानकः**, इत्येवमाद्यमीषां स्वरूपादि ग्रन्थान्तरेषु वैशद्येनावतारितम्, इह तु संक्षिप्योक्तम्॥ २८७॥

[ बीभत्सोदाहरणम् ]

**पायं पायं तवारीणां शोणितं पाणिसम्पुटैः ।**
**कौणपाः सह नृत्यन्ति कबन्धैरन्त्रभूषणाः ॥ २८८ ॥**

तत्रादौ बीभत्सरसमुदाहरति—'पायम्' इति । अन्त्रभूषणाः=अन्त्रं पुरीतत् भूषणं मण्डनं येषां ते तथाविधाः कौणपाः=राक्षसाः पाणिसम्पुटैः=पुटाकारैः करैरित्यर्थः, तव अरीणाम्=शत्रूणाम् शोणितम्=रुधिरम् पायम्पायम्=पुनः पुनः पीत्वा कबन्धैः=उत्तमाङ्ग-रहितैः क्रियावद्भिः कलेवरैः सह=साकम् नृत्यन्ति=नर्तनं विदधते ।

अत्र 'दोषेक्षणादिभिर्गर्हा जुगुप्सा विषयोद्भवा' इत्युक्तलक्षणा जुगुप्सा स्थायिभावः, शोणितपिबाः आन्त्रभूषणा राक्षसा आलम्बनविभावाः, एतैरेव नेत्रचेष्टायाः हर्षाद्याश्च आक्षिप्ता यथायथमनुभावाः व्यभिचारिभावाश्च सन्ति, तैरेतैरभिव्यक्तः उक्तलक्षणो जुगुप्सारूपः स्थायि-भावः सचेतसां हृदि बीभत्सरूपेण परिणमते। एवमेतादृशरसवद्वाक्यत्वाद्रसवदलङ्कारोऽयम्। परमयं बीभत्सो कविनिष्ठराजविषयकरतिभावमप्रत्यङ्गतया गुणीभूत इति प्रेयोऽलङ्कारोऽयम्, अथवा प्रेयोरसवतोः सङ्करः स्यादित्यपि केचित् । 'पायं पायम्' इत्यत्र 'आभीक्ष्ण्ये णमुल च' [३।४।२२] इति 'पा' धातोः 'णमुल्' । 'नित्यवीप्सयोः' [८।१।४] इति द्वित्वम् ॥२८८॥

[ हास्योदाहरणम् ]

**इदमम्लानमानाया लग्नं स्तनतटे तव ।**
**छाद्यतामुत्तरीयेण नवं नखपदं सखि ! ॥ २८९ ॥**

हास्यरसमुदाहरति—'इदम्' इति । [सख्याः समीपे कृतमानामेकान्ते कान्तेन कृत-कामकेलिं काञ्चित् सखीम्प्रति तद्वयस्यायाः सोपहासं वचनमिदम् ।] हे ! सखि!=आलि ! अम्लानमानायाः=न म्लानः खण्डितः मानो गर्वः प्रणयकोपो यस्याः तथाविधायाः अर्थात् अस्माभिर्बहुवारं कृतेऽपि प्रणयकोपशमनार्थमाग्रहेऽपरित्यक्तमानायाः तव स्तनतटे=कुचतटे लग्नम्=संसक्तम् इदम्=दृश्यमानम् नवम्=सद्यस्कं ननु चिरकालीनम् नखपदम्=करजा-घातचिह्नम् उत्तरीयेण=प्रावरणपटेन छाद्यताम्=आव्रियताम् । अस्मत्पुरतः कृता मानकथा वञ्चनामात्रमेवेति भावः ।

अत्र कान्तभुक्ता तथाविधमानिनी नायिका आलम्बनविभावः, करजव्रणादिकमुद्दीपन-विभावः, तथा वाक्चेष्टादिकमनुभावः, एतैर्गम्यमाना [आक्षिप्ताः] अवहित्थाद्या व्यभिचा-रिणः तैः सर्वैरभिव्यक्तः 'वागादिवैकृतैश्चेतोविकाशो हास उच्यते' इत्युक्तलक्षणो हासः स्थायि-भावः सहृदयहृदयेषु हास्यरसतां प्राप्नोति, तादृशरसोपेतश्चेदं काव्यं रसवत् ।

उदाहरणान्तरं यथा 'विश्वनाथस्य'—

गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयञ्च ।
अमी समाघ्राय च तर्कवादान् समागताः कुक्कुटमिश्रपादाः ॥ इति ॥ २८९ ॥

[ अद्भुतरसोदाहरणम् ]

**अंशुकानि प्रवालानि पुष्पं हारादिभूषणम् ।**
**शाखाश्च मन्दिराण्येषां चित्रं नन्दनशाखिनाम् ॥ २९० ॥**

अद्भुतरसमुदाहरति—'अंशुकानि' इति। एषाम् नन्दनशाखिनाम्=सुरारामतरूणाम् प्रवालानि=नवपल्लवाः अंशुकानि=वस्त्राणि सन्ति इति क्रियाशेषः। पुष्पम्=कुसुमं [जातावेकवचनम्] हारादिभूषणम्=हारादि मण्डनम् शाखाः=विटपाश्च मन्दिराणि=गृहाः चित्रम्=इदं सर्वमत्याश्चर्यमित्यर्थः।

अत्र नन्दनशाखिन आलम्बनविभावाः, तेषां तादृशलोकोत्तरगुणा उद्दीपनविभावाः, प्रतीयमानाः स्तम्भस्वेदाद्या विशेषा अनुभावाः, हर्षाद्याश्च व्यभिचारिणः, एतैरभिव्यक्तः परिपोषितश्च विस्मयाख्यः स्थायिभावः सामाजिकहृदये अद्भुतरसरूपेण परिणमते।

विस्मयस्य लक्षणन्तु—

विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु।
विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः॥ इति ज्ञेयम्॥ २९०॥[1]

[ भयानकरसस्योदाहरणम् ]

**इदं मघोनः कुलिशं धारासन्निहितानलम्।**
**स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते॥ २९१॥**

भयानकरसमुदाहरति—'इदम्' इति। मघोनः=इन्द्रस्य इदं कुलिशम्=वज्रम् धारासन्निहितानलम्=धारासु सन्निहितो वर्त्तमानः अनलो हुतभुक् यस्य तत्तथाविधं 'वर्त्तते' इति शेषः। यस्य=कुलिशस्य स्मरणम्=स्मृतिः [अपि] दैत्यस्त्रीगर्भपाताय=दैत्यानाम् असुराणां स्त्रियः रमण्यः तासां गर्भस्य भ्रूणस्य पाताय विनाशाय कल्पते=समर्था भवति। यस्य स्मृतिरपि गर्भविनाशेन महतीं भीतिं जनयति तस्य दर्शनं किमु वक्तव्यमिति भावः।

अत्र मघोना आलम्बनविभावः, तस्य तथाविधं कुलिशमुद्दीपनविभावः, गर्भपातोऽनुभावः, एतैर्गम्यमाना मनोव्यापारविशेषा [ आवेगसम्मोहादयः ] व्यभिचारिभावाः तैरभिव्यक्तः 'रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्' इतिलक्षणं भयं स्थायिभावः सचेतसां वृत्तौ भयानकाख्यरसपदवीम्प्राप्तश्चमत्कारमाधत्ते, तादृशरसवद्वाक्यमिदं रसवदलङ्कारोपेतं काव्यमिति बोध्यम्॥ २९१॥[2]

---

१ यथा वा—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतः
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः।
द्राक् पर्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति॥

अत्र लक्ष्मणस्य विस्मयः स्थायी भावः, धनुष्टङ्कारा आलम्बनविभावः। तस्य विशालता उद्दीपनविभावः, एतादृगुक्तिरनुभावः, हर्षादयो व्यभिचारिणः, एतैरभिव्यक्तो विस्मयः सामाजिकहृदयेऽद्भुतरसतामापद्यते।

२ यथा वा—

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तःकञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।

[ पूर्वोक्तिविरोधपरिहारः ]

**वाक्यस्याग्राम्यतायोनिर्माधुर्ये दर्शितो रसः ।**
**इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम् ॥ २६२ ॥**

इति रसवच्चकम्

गुणप्रस्तावे 'मधुरं रसवद्वच' इति माधुर्यगुणवत्त्वेन रसवत्त्वं काव्यस्योक्तम्, इह पुना रसेनैव 'रसवत्त्वस्य' अलङ्कारत्वमुच्यते इति कथं पूर्वापरं विरुद्धमभिधानम्? इत्याशङ्कायां स्वोक्तिविरोधपरिहारार्थमिदमाह—'वाक्यस्य' इति। माधुर्ये=माधुर्यप्रस्तावे वाक्यस्य=काव्यगिराम् अग्राम्यतायोनिः=ग्राम्यत्वदोषाभाव एव योनिः कारणं यस्य स तथाविधः रसः=रसवद्वचः दर्शितः=निरूपितम् अर्थात् तत्र अग्राम्यताया रसत्वमुपचारत उक्तम् । इह तु=अस्मिन्नलङ्कारप्रस्तावे तु गिराम्=काव्यवाचां रसवत्ता रसवदलङ्कारभावः अष्टरसायत्ता=अष्टसु रसेषु शृङ्गारादिषु आयत्ता शृङ्गाराद्यष्टरसप्रयुक्तेत्यर्थः ।

इदमुक्तं भवति—रसव्यञ्जकग्राम्यत्वादिदोषाभावसहकृतालङ्कारादिमत्त्वं माधुर्यगुणत्वम् रसवदलङ्कारस्तु रस एवेत्युभयोर्विशेषे नैव पूर्वापरविरुद्धाभिधानम् ।

इदन्तु बोध्यम्—यद्यपि 'अष्टौ नाट्ये रसाः स्मृताः' इति प्रायोवादः तथापि 'शान्तोपि नवमो रसः' स्वीकर्त्तव्य एव। तस्य स्वरूपमुक्तं 'काव्यानुशासने' तथाहि—'वैराग्यादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृत्यादिव्यभिचारी शमः [शमस्थायिभावकः] शान्तः। उदाहरणं यथा—

गङ्गातीरे हिमवति शिलाबद्धपद्मासनस्य ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्येषु ते निर्विशङ्काः कण्डूयन्ते जरठहरिणाः शृङ्गकण्डूं विनेतुम् ॥

अत्र शमः स्थायिभावः, वैराग्यं समाधिर्वा आलम्बनविभावः, गङ्गातीराद्युद्दीपनविभावः, यमाद्यनुभावः, धृत्यादयो व्यभिचारिणः, तैरेतैः तृष्णाक्षयरूपः शमः पुष्टितां नीतः शान्तरसस्वरूपेण परिणमते इति दिक् ॥ २६२ ॥

[ ऊर्जस्विन उदाहरणम् ]

**अपकर्त्ताहमस्मीति हृदि ते मा स्म भूत् भयम् ।**
**विमुखेषु न मे खड्गः प्रहर्त्तुं जातु वाञ्छति ॥ २६३ ॥**

'ऊर्जस्व्यलङ्कारम्' उदाहरति—'अपकर्त्ता' इति । [सङ्ग्रामे पलायमानं शत्रुम्प्रति

---

पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥

अत्र अकस्मादुपस्थितो वानर आलम्बनविभावः, तस्य विकटदशनप्रकाशादिरुद्दीपनविभावः, वर्षवरादीनां पलायनाद्यनुभावः, शङ्कादयो व्यभिचारिणः तैरेतैरभिव्यक्तः 'भयं' स्थायी सहृदयहृदये भयानकरसरूपतया परिणमते। इत्येवमादि यत्र तत्र यथायोग्यमूहनीयम्।

(प्र०) ऊर्जस्विलक्षणं सोदाहरणं विवृणु ? (उ०) अस्य पृ० पं० २४ ।

कस्यचिद्वीरस्य वचनमिदम्]। 'अहम्' ते=तव अपकर्त्ता=अपकारकारी सपत्नः अस्मि=भवामि इति=कारणात् ते=तव भयम्=भीतिः मा स्म भूत्=मा भवतु। मे=मम खड्गः=असिः विमुखेषु=पृष्ठदायिषु भीतेष्वित्यर्थः, जातु=कदाचिदपि प्रहर्त्तुम्=प्रहारं कर्त्तुम् न वाञ्छति=नैव कामयते न प्रहारपरो वर्त्तते इत्यर्थः। भीतेषु नाहं शस्त्रपातीति भावः। उक्तञ्च मानवे धर्मशास्त्रे [सप्तमाध्याये]

नायुधव्यसनप्राप्तं नार्त्तं नातिपरिक्षतम्।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन्॥ [९३] इति॥

अत्र गर्वाख्यो व्यभिचारिभावः, उत्साहरूपात् स्थायिभावादप्यत्युद्भटः तस्मादूर्जस्विनामायमलङ्कारः। ऊर्जः=बलप्रकाशनमत्रास्तीति व्युत्पत्तेः। यत्र तु उक्तव्यभिचारिभावस्य तथाविधमौद्भट्यं नास्ति तत्र वीर एव रसो वाक्यार्थस्याङ्गभावङ्गतः सन् रसवदलङ्काररूपेण प्रतीयते।

'ऊर्जस्वि'। 'अस्मायामेधास्रजो विनिः'[५।२।१२१] इति सूत्रेण 'विनि' प्रत्ययः। यद्यप्ययं भावः तथापि ऊर्जःप्रकाशनयोगात् ऊर्जस्वीति विशेषसंज्ञया व्यवहारः। अलङ्कारेषु योगसमाख्याया आदरणीयत्वात्। यत्र तु—ऊर्जः [गर्वाख्यो व्यभिचारी] उत्साहे स्थायिन्यात्मानमर्पयति तत्र वीरो रसो व्यज्यते तदाऽयं पूर्वोक्तरसवदलङ्कारतो नातिरिच्यते। उदाहरणान्तरं यथा—'क्षुद्राः सन्त्रासमेते विजिहित हरय' इत्यादि प्रकाशकृतां ज्ञेयम्। एतावता—रसवत्येव काव्ये गौणीं वृत्तिमाश्रित्य रसवदलङ्कारत्वेन व्यवहारो दण्डिनां नतु यत्र रसः परस्याङ्गं स्यात् तत्रेति सूक्ष्मया दृशा पूर्वोत्तरानुसन्धानपुरःसरं पूर्वोक्तमिहाप्यूहनीयम्। इत्थम्—अनौचित्येन प्रवृत्तो रसो भावश्च रसाभासो भावाभासश्चेत्युच्यते, स यत्रापरस्याङ्गं तदूर्जस्वित्, इत्याधुनिकानां मतानुरोधेन ऊर्जस्विन उदाहरणान्तरन्त्वन्यत्। यथा—

त्वत्प्रत्यर्थिवसुन्धरेशतरुणीः सन्त्रासतः सत्वरं
यान्तीर्वीर! विलुण्ठितुं सरभसं याताः किराता वने।
तिष्ठन्ति स्तिमिताः प्ररूढपुलकास्ते विस्मृतोपक्रमा-
स्तासामुत्तरलैः स्तनैरतितरां लोलैरपाङ्गैरपि॥

अत्र प्रभुविषयरतिभावस्य शृङ्गाररसाभासोऽङ्गम्। शृङ्गारस्य अननुरक्तराजवनिताविषयत्वादनौचित्येन प्रवृत्तिरिति तस्याभासत्वम्। यथा वा—

त्वयि लोचनगोचरङ्गते सफलं जन्म नृसिंह! भूपते!।
अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषां गणः॥

---

१ [इतोऽग्रे यथा]— क्षुद्राः सन्त्रासमेते विजहित हरयः क्षुण्णशक्रेभकुम्भाः
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः।
सौमित्रे! तिष्ठ पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि॥

अत्र राम आलम्बनम्। तत्समुद्रबन्धनमुद्दीपनम्. क्षुद्रेषूपेक्षा पराक्रमशालिनां रामे प्रतिस्पर्धा अनुभावौ, गम्यो गर्वश्च व्यभिचारी, उत्साहः स्थायिभावः तदभिज्ञे सहृदये वीरो रसोऽभिव्यज्यते। अत्र 'गर्वाख्यव्यभिचारिभावस्य उत्साहरूपस्थायिकुक्षिनिलीनत्वान्नोर्जस्वित्वं किन्तु रसवदलङ्कारत्वमिति दण्डिस्थितिः॥ २३६॥

अत्र कवेः प्रभुविषयस्य रतिभावस्य तद्विषयद्विपद्वारनिरूपो भावाभासोऽङ्गम् । यत्तु काश्चित् एवंविधस्थले तादृशौद्धत्याभावेन नोर्जस्विव्यवहारो युक्त इत्याचष्टे तन्न, अत्राप्यङ्गिन औद्धत्यप्रदर्शनसंरम्भवशात् कविप्रवृत्तेः । प्रत्युत इतरानङ्गेऽपि रसे रसवदलङ्कारत्वेन व्यवहारे परेषां साहस एवाभाति । आह च—'काव्यालङ्कारसार' व्याख्यायां 'श्रीमत्प्रतीहारेन्दुराजः'—'तत्र हि रागद्वेषमोहकारणका अनौचित्येन रसभावा उपनिबध्यन्ते अत एव तत्र स्वकल्पनापरिकल्पितत्वेन ऊर्जसो बलस्य विद्यमानत्वात् ऊर्जस्विव्यपदेशः' इति । उदाजहार च—

तथाकामोऽस्य ववृधे यथा हिमगिरेः सुताम् ।
संग्रहीतुं प्रववृते हठेनोपास्य सत्पथम् ॥

अत्र सकललोकातिशायिनो भगवतोऽकृतविवाहकुमारीविषयतया हठसंग्रहः शास्त्रसंविद्विरुद्धः प्रवृद्धरागकारणक उपनिबद्धः । तेन ऊर्जस्विता ।

अपिच—'रसाभासादीनां पराङ्गतायामेव ऊर्जस्विव्यवहारो युक्तः । तथा चाह—'उद्भटभट्टः'

अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात् ।
भावानाञ्च रसानाञ्च बन्ध ऊर्जस्वि कथ्यते ॥ इति ।

तस्मात्—'नव्यास्तु रसाभासो भावाभासो वा रसान्तरादेरङ्गत्वमापन्नः सन् ऊर्जस्व्यलङ्कारो भवतीत्याचक्षते तन्न रुचिरमित्यादि वदतां 'प्रभा' कारादीनां प्रमाद एव अतिप्राचीनस्योद्भटभट्टस्यापि नवीनैः सह संवादसत्त्वात् ॥ २६३ ॥

[ ऊर्जस्विस्वरूपयोजना ]

**एवमुक्त्वा परो युद्धे निरुद्धो दर्पशालिना ।**
**पुंसा केनापि तज्ज्ञेयमूर्जस्वीत्येवमादिकम् ॥ २६४ ॥**

उक्तोदाहरणे ऊर्जस्व्यलङ्कारं स्वयं स्पष्टयति—'एवम्' इति । दर्पशालिना=साहङ्कारेण केन अपि=वीरेण पुंसा=पुरुषेण राज्ञेत्यर्थः, एवम्=उक्तरूपं वचनम् उक्त्वा=अभिधाय परः=शत्रुः युद्धे=सङ्ग्रामे निरुद्धः=युद्धकरणाय प्रतिहस्तितः तत्=तस्माद् हेतोः इत्येवमादिकम्=उक्तप्रकारप्रभृति रसान्तरेऽपि तथाविधो गर्वः ऊर्जस्वि ज्ञेयम्=ऊर्जस्व्यलङ्काररूपेण परिणतो बोद्धव्यः । अत्र यत् कथनीयं तदधस्तादुक्तम् ॥ २६४ ॥

[ अथ पर्यायोक्तस्य लक्षणम् ]

**अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये ।**
**यत् प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते ॥ २६५ ॥**

—:*:—

पर्यायेणापि यस्योक्तं नाम पापौघनाशकम् ।
हरेस्तस्य गुणान्पूज्यान् कीर्त्तयेम दिवानिशम् ॥ १ ॥

---

( प्र० ) पर्यायोक्तस्य लक्षणोदाहरणादिः सर्वः प्रपञ्चः स्पष्टीकर्त्तव्यः ।
( उ० ) अस्य पृ० पं० २८ ।

उद्देशक्रमप्राप्तं पर्यायोक्तमलङ्कारं लक्षयति—'अयम्' इति । इष्टम्=वाञ्छितम् अर्थम्=वाच्यार्थम् अनाख्याय=साक्षात् अभिधया वृत्त्या वाचकशब्देन अनभिधाय तस्य एव=इष्टस्यैवार्थस्य सिद्धये=बोधनाय यत् प्रकारान्तराख्यानम्=प्रकारान्तरेण भङ्गयन्तरेण आख्यानं व्यञ्जनात्मकव्यापारेण प्रत्यायनं तत् 'पर्यायोक्तम्' नाम अलङ्कारः इष्यते=अलङ्कारशास्त्रविद्भिरिति शेषः ।

वाच्यवाचकभावभिन्नेन व्यञ्जनव्यापारेणार्थाद् वाच्यस्यैव यदभिधानं तत्पर्यायोक्तमिति लक्षणसारः । उक्तञ्च 'उद्भटभट्टेन'—

पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
वाच्यवाचकवृत्तिभ्यां शून्येनावगमात्मना ॥ इति ॥

तथा च—विवक्षितस्वप्रकारातिरिक्तेन चारुतरेण रूपेण व्यङ्गयस्याभिधानं 'पर्यायोक्त' मित्युक्तं भवति । पर्यायेण भङ्गयन्तरेणोक्तमभिहितं व्यङ्गयं यत्रेति व्युत्पत्तेः । यद्यपि व्यङ्गयस्याभिधानं न युज्यते विरोधात्, तथापि प्रकारभेदेनाविरोध एव तदुक्तम्—'यदेवोच्यते तदेव व्यङ्गयं यथा तु व्यङ्गयं न तथोच्यते' इति[1] ॥ २९५ ॥

[ पर्यायोक्तस्योदाहरणम् ]

**दशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।**
**तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥ २९६ ॥**

पर्यायोक्तमुदाहरति—'दशति' इति । असौ=सन्निकृष्टवर्त्ती परभृतः=पिकः सहकारस्य=चूतस्य [लताकुञ्जस्य बहिःप्रदेशे वर्त्तमानस्येति शेषः] मञ्जरीम्=वल्लरीं दशति= त्रोट्या खण्डयतीत्यर्थः । तम्=पिकम् अहम् वारयिष्यामि=उड्डाययिष्यामि । युवाभ्याम् [इह] स्वैरम्=स्वच्छन्दम् आस्यताम्=उपविश्यताम् ।

अत्र मयि स्थितायां नायकनायिकयो रतिमहो निर्विघ्नो भवितुं नार्हति इत्यालोच्य ममातोऽपसरणमेवोचितम् इति च विभाव्य 'अस्मात्स्थानादहं यास्यामि' इति वाचकशब्दाभ्यामिष्टमर्थं साक्षादनाख्याय पिकवारणव्याजेन स एवार्थो भङ्गयन्तरेण प्रत्यायितः [व्यक्तीकृतः] इति तदेव पर्यायोक्तम् ॥ २९६ ॥

[ लक्ष्ये लक्षणयोजनम् ]

**सङ्गमय्य सखीं यूना संकेते तद्रतोत्सवम् ।**
**निर्वर्त्तयितुमिच्छन्त्या कयाप्यपसृतं ततः ॥ २९७ ॥**

इति पर्यायोक्तम्

—*—

पर्यायोक्तलक्षणसङ्गमनं विशदयति—'सङ्गमय्य' इति । सङ्केते=रतिविलासाय कृते

---

१ यथा—सविकल्पकज्ञानात्पूर्वं जायमानम् 'इदं किञ्चित्' इत्याकारकं विशेषणतादिसम्बन्धानवगाहि निर्विकल्पकं ज्ञानम्, तदेवोत्तरकाले 'गौरयम्' इत्याकारकं जात्यादिसंसर्गतावगाहि 'सविकल्पकं' भवति । परमुभयोराकारे प्रकारे च विभेद एव, एवमेव वाच्यस्यापि व्यङ्गयस्वरूपेण लापनं नायुक्तम् । एतदेव 'भङ्गयन्तरेणाभिधान' मुच्यते इति सरलतरसारः ।

सङ्केतस्थाने सखीम्=वयस्याम् यूना=तरुणेन सह सङ्गमय्य=मेलयित्वा तद्गतोत्सवम्=तयोर्यूनो-र्भोगविलासं निर्वर्त्तयितुम्=साधयितुम् इच्छन्त्या=अभिलषन्त्या कया अपि=कयाचित् चतुरया ततः=तस्मात् स्थानात् अपसृतम्=अपगतमित्यन्वितार्थः । एवञ्च 'अहं गच्छामि' इति साक्षा-दनभिधाय परभृताङ्कुरयनव्याजेन स्वगमनोत्तरमाभ्यां निर्विशङ्का रतिः क्रियताम् इति व्यञ्जना-करणं स्पष्टं पर्यायोक्तम् । अस्मद्भावनया तु इदमुदाहरणं जयदेवोक्तद्वितीयपर्यायलक्षणाक्रान्तम् । तथाहि— 'पर्यायोक्तं' तदप्याहुर्यद्व्याजेनेष्टसाधनम् ।

यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥

अत्र नायिकां नायिकेन सङ्गमय्य चूतलतादर्शनव्याजेन निर्गच्छन्त्या सख्या तत्स्वा-च्छन्द्यसम्पादनरूपेष्टसाधनं पर्यायोक्तम् । 'गम्यस्यैव भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम्' इत्य-लङ्कारसर्वस्वकार 'रुय्यक' प्रभृतिमतेन उदाहरणान्तराणि सन्ति बहूनि अपराण्यपि तेषु किञ्चित्प्रदर्श्यते—

स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः । सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः ॥

अत्र 'हयग्रीवेण इन्द्रो जितः' इति व्यङ्ग्यं कार्यमुखेन वर्णितमिति गम्यप्रकारान्त-रोक्तिर्ज्ञेया । यथा वा —

लोकं पश्यति यस्याङ्घ्रिः स यस्याङ्घ्रिं न पश्यति ।

ताभ्यामप्यपरिच्छेद्या विद्या विश्वगुरोस्तव ॥

अत्र गौतमः पतञ्जलिश्च स्वासाधारणरूपाभ्यां गम्यौ रूपान्तराभ्यामभिहितौ । यथा वा—

निवेद्यतां हन्त ! समापयन्तौ शिरीषपुष्पम्रदिमाभिमानम् ।

पादौ कियद्दूरमिमौ प्रयासे निधित्सते तुच्छदयं मनस्ते ॥

अत्र कियद्दूरं जिगमिषेति गम्य एवार्थो रूपान्तरेणाभिहितः ।

यथा वा [शाकुन्तले] राजानम्प्रति अनसूयोक्तिः १—'कतमो वा विरहपर्युत्सुकजनः कृतो देशः' इति । अत्र 'कुतः समागतोऽसि' इत्ययमेवाभिधेयाऽर्थो भङ्ग्यन्तरेणोक्तः ।

यथा वा—[ काव्यालङ्कारसारलघुवृत्तौ ]

येन लम्बालकः सास्रः करघातारुणस्तनः । अकारि भग्नवलयो गजासुरवधूजनः ॥

सोऽपि येन कृतः प्लुष्टदेहेनाप्येवमाकुलः । नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥

अत्र लम्बालकत्वादयः कार्यरूपत्वात् कारणभूतं गजासुरवधं वाच्यवाचकव्यापारा-स्पृष्टमपि गमयन्ति । यथा वा—मम

अपकारपरा नित्यं धृतराष्ट्रतनूद्भवाः । मृत्युबीजान्यवाप्सुस्ते पाण्डवेषु न संशयः ॥

अत्र बीजावापकारणेन तैः कुलक्षयः कृत इति कार्यरूपोऽर्थो भङ्ग्यन्तरेणोक्तः । एवमादि दर्शितरीत्या अन्यत्रापि ऊहनीयम् ॥ २६७ ॥

---

१ रसगङ्गाधरादिग्रन्थेषु गूढो विचारः कृतः । पर्यायोक्तस्य अतिसंक्षिप्तसरलस्वरूप-सारस्तु—'इह भवद्भिरागन्तव्यम्' इत्यस्मिन्विषये 'अयं देशोऽलङ्कर्त्तव्यः' पवित्रीकर्त्तव्यः' 'अस्माकं नयनयोः कर्पूरशलाकिका देया' इत्येवमादिर्ज्ञेयः ।

[ अथ समाहितलक्षणम् ]

**किञ्चिदारभमाणस्य कार्यं दैववशात् पुनः ।**
**तत्साधनसमापत्तिर्या तदाहुः समाहितम् ॥ २९८ ॥**

—*—

समाहिता हि पश्यन्ति यस्य रूपं निरञ्जनम् ।
धर्ममेघवितानाय तस्मै योगात्मने नमः ॥

—*—

क्रमप्राप्तं समाहितं लक्षयति--'किञ्चित्' इति । किञ्चित् कार्यम्=कर्त्तव्यम् आरभमाणस्य=अनुष्ठातुमुपक्रमाणस्य दैववशात्=अकाण्डतः एव पुनः या तत्साधनसमापत्तिः= तस्य साधनं तत्साधनं तत्समाधानं तस्य या समापत्तिः संयोगः साधनसौकर्यमिति यावत् तत् समाहितम्=नामालङ्कारम् आहुः=कथयन्ति प्रारिप्सितकार्यसमाधानरूपत्वात्समाहितमित्यन्वर्थेयं संज्ञा ॥ २९८ ॥

[ समाहितस्योदाहरणम् ]

**मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।**
**उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥ २९९ ॥**

—*—

इति समाहितम्

—*—

समाहितमुदाहरति—'मानम्' इति । अस्याः=मानिन्याः मानम्=गर्वं प्रणयकोपं निराकर्त्तुम्=दूरीकर्त्तुम् पादयोः=चरणयोः पतिष्यतः=पतनं करिष्यतः मे=मम उपकाराय= हिताय दिष्ट्या=दैववशात् घनगर्जितम्=मेघगर्जना उदीर्णम्=उदितम् ।

अत्र मानिन्या मानभङ्गार्थं पादपतनरूपे कार्ये प्रवृत्तस्य दैववशादुदितेन घनगर्जितेन अक्लेशेन तत्समाधानं जातमिति समाहितालङ्कारः । 'जयदेव' मते अस्यैव 'समाधि' रिति नाम । 'वाग्भट' स्तु समाधेरेव 'समाहितं' नामाह—

कारणान्तरसम्पत्तिर्दैवादारम्भ एव हि ।
यत्र कार्यस्य जायेत तज्जायेत समाहितम् ॥

उदाहरणं तस्यैव यथा—

मनस्विनी वल्लभवेश्म गन्तुमुत्कण्ठिता यावदभून्निशायाम् ।
तावन्नवाम्भोधरधीरनादप्रबोधितः सौधशिखी चुकूज ॥

अत्र कान्तगृहे गमनकार्यारम्भः पुनस्तत्प्रेरकः शिखिशब्दः कारणान्तरसम्पत्तिरिति समाहितम् ।

* [प्रायः आलङ्कारिकाणां तत्तल्लक्षणेषु सूक्ष्मं सूक्ष्ममन्तरं ममाभाति यदि तत्र समालोचनात्मिका दृष्टिः पात्येत तदा ग्रन्थभूयस्त्वं स्यादिति मत्वा तद्रूपेण मया लेखिनी क्वाचिदपि नोत्थापिता] 'यातु भावस्य प्रशाम्यदवस्था भावशान्तिः, तस्याः पराङ्गत्वे समाहितम्' इति ये वदन्ति तन्मते समाहितोदाहरणन्तु—

पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मां नालपतीत्ययं खलु शठ ! कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्ष्यदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो मुक्तस्तु बाष्पस्तया ॥

अत्र शृङ्गारस्य कोपशान्तिरङ्गमिति समाहितम् । एतेनैवाभिप्रायेण 'भट्टोद्भटः'—'रसभावतदाभासवृत्तेः प्रशमबन्धनम् । अन्यानुभावनिःशून्यरूपं यत्तत्समाहितम्' ॥ इति लक्षयामास । उदाजहार च लघुवृत्तिकारः—

अथ कान्तां दृशं दृष्ट्वा विभ्रमाच्च भ्रमं भ्रुवोः । प्रसन्नं मुखरागञ्च रोमाञ्चस्वेदसंकुलम् ॥
स्मरज्वरप्रदीप्तानि सर्वाङ्गानि समादधत् । उपासर्पद्गिरिसुतां गिरिशः स्वस्तिपूर्वकम् ॥

अत्र भगवता शृङ्गारस्य येऽनुभावाः कान्तदृष्ट्यादयः तेषामवहित्थेन आकारप्रच्छादनात्मकेन भावेन तिरोधानं विहितामिति दर्शितलक्षणानुसारं समाहितम् ॥ २९९ ॥

[ अथ उदात्तस्य लक्षणम् ]

**आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् ।**
**उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः ॥ ३०० ॥**

—*—

यस्य चरितं महोदात्तं राघवस्य महात्मनः ।
तस्य सीतासनाथस्य श्रये चरणपङ्कजम् ॥ १ ॥

—*—

उदात्तं लक्षयति—'आशयस्य' इति । आशयोऽभिप्रायः ['अभिप्रायश्छन्द आशय' इत्यमरः ] तस्य, वा=अथवा विभूतेः=ऐश्वर्यस्य ['विभूतिर्भूतिरैश्वर्यम्' इत्यमरः] यत् अनुत्तमम्=नास्त्युत्तमं यस्मात् तत् लोकोत्तरं महत्त्वम्=महिमा आधिक्यमिति यावत् 'निरूप्यते' इति शेषः । मनीषिणः=अलङ्कारशास्त्रविदः पण्डिताः तम् अलङ्कारम् उदात्तं नाम प्राहुः=उदात्ताख्यं वदन्तीत्यर्थः । वर्ण्यस्य [राजादेः] महाशयत्ववर्णनम्, लोकोत्तरसम्पत्तिशालित्ववर्णनञ्चेति द्विविधमुदात्तमित्यर्थः । उत्कर्षेण आदीयते गृह्यते स्मेति 'उदात्तम्' । कर्मणि 'निष्ठा' [ ३।२।१०२] इति सूत्रेण 'क्त' प्रत्ययः 'अच उपसर्गात्तः' [७।४।४७ ] इति सूत्रेण तादेशः ।

'लोकोत्तर'मिति कथनेन कविप्रतिभोत्थापितमैश्वर्यलक्षणम्, असम्भाव्यमानविभूतिमतो वस्तुनो वर्णनञ्चेति फलति । तेन स्वभावोक्त्यलङ्कारे भाविकालङ्कारे च यथावस्थितवस्तुवर्णनात् उदात्तेन सह तयोर्द्वयोर्भेदः इति बोध्यम् ॥ ३०० ॥

[ उदात्तस्योदाहरणम् ]

**गुरोः शासनमत्येतुं न शशाक स राघवः ।**
**यो रावणशिरश्छेदकार्यभारेऽप्यविक्लवः ॥ ३०१ ॥**

तत्राद्यम् 'आशयमहत्त्ववर्णनाख्यम्' उदात्तमुदाहरति—'गुरोः' इति । सः=सर्वलोक[शास्त्र]प्रसिद्धः राघवः=श्रीरामचन्द्रः गुरोः=पितुः शासनम्=राज्यं परित्यज्य चतुर्दशवर्ष-

(प्र०) उदात्तस्य सोदाहरणं लक्षणं विवेचय ? (उ०) अस्य० पृ० पं० १३ ।

पर्यन्तं वनवासकरणरूपामाज्ञाम् अत्येतुम्=उल्लङ्घयितुम् न=नैव [कदापि] शशाक=शक्तो नाभूदित्यर्थः। सः कः यः=रावणशिरश्छेदकार्यभारे=रावणस्य दशकन्धरस्य शिरसां दशानामप्युत्तमाङ्गानां छेदः कर्त्तनमेव कार्यम् अनुष्ठेयं कृत्यं तस्य भारे प्रपन्ने अपि अविक्लवः=वैक्लव्यरहितः।

अत्रातिमात्रमसाध्ये रावणवधरूपे कार्येऽपि सर्वथा क्षोभरहितस्य रामस्य यद्राज्यच्युतिकरपितृशासनपरिपालनं तद्धर्मपरतन्त्रतयाऽस्य लोकातीतां महाशयतामवगमयतीति 'आशयमहत्त्ववर्णनं' नामोदात्तम्॥ ३०१॥

**रत्नभित्तिषु सङ्क्रान्तैः प्रतिबिम्बशतैर्वृतः।**
**ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः॥ ३०२॥**

'विभूतिमत्त्ववर्णनम्' उदात्तमुदाहरति—'रत्नभित्तिषु' इति। आञ्जनेयेन=अञ्जनापुत्रेण हनूमता रत्नभित्तिषु=रत्ननिर्मितकुड्येषु संक्रान्तैः=प्रतिफलितैः प्रतिबिम्बशतैः=असंख्यातप्रतिरूपकैः वृतः=परितो व्याप्तः लङ्केश्वरः=लङ्काया अधिपती रावणः कृच्छ्रात्=अतिकष्टेन तत्त्वतः=याथातथ्येन ज्ञातः=निश्चितः अयमेव रावण इति। कृच्छ्रेण रावणस्य तत्वतो ज्ञाने प्रतिबिम्बशतावृतत्वं कारणम्।

अत्र लङ्केश्वरस्य प्रासादभित्तीनां प्रतिबिम्बशतग्राहिरत्नमयत्ववर्णनेन महती विभूतिः प्रत्यायितेति 'विभूतिमत्त्ववर्णनं' मुदात्तमिदं द्वितीयम्।

**जयदेवस्तु** उदात्तमित्थमलक्षयत्। तथाहि—

'उदात्तमृद्धेश्वरितं श्लाघ्यं चान्योपलक्षणम्'।
सानौ यस्याभवद् युद्धं तद्धूर्जटिकिरीटिनोः॥ इति॥

अत्रोत्तरार्धभाग उदाहरणम्। धूर्जटिकिरीटिनोः श्लाघ्ययुद्धात्मकचरितवर्णनेन उदात्तालङ्कारः। ऋद्ध्युदाहरणन्तु मूल एवोक्तं ज्ञेयम्॥ ३०२॥

[ द्विविधस्याप्युदात्तस्य सोपसंहारः लक्षणसङ्गमनप्रकारः ]

**पूर्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम्।**
**सुव्यञ्जितमिति प्रोक्तमुदात्तद्वयमप्यदः॥ ३०३॥**

---

इति उदात्तम्

---

द्विविधमप्युदात्तमुपसंहरति—'पूर्वत्र' इति। पूर्वत्र=गुरोरित्युदाहरणे आशयमाहात्म्यम्=अभिप्रायस्य मानसव्यापारस्य गौरवम्। अत्र=द्वितीयस्मिन् 'रत्नभित्तिषु संक्रान्तै' रित्युदाहरणे अभ्युदयस्य=समृद्धेः [सम्पत्तेः] गौरवम्=उत्कर्षः सुव्यञ्जितम्=स्पष्टरूपेणैव व्यक्तिं नीतम् इति=अस्माद्धेतोः अदः द्वयम् अपि उदात्तम्=अयं द्विविधोऽप्युदात्तालङ्कारः प्रोक्तम्=वर्णित इत्यर्थः।

विषयद्वैविध्यस्य हेतोर्वैचित्र्यस्यापि द्वैविध्यम् इति हेतोरुदात्तस्य द्वौ भेदौ युक्तिसहावेवेति भावः।

यत्तु 'नव्यास्तु प्रस्तुतस्याङ्गत्वेन वर्ण्यमानं महतां चरितमप्युदात्तं वदन्ति, यदाहुः 'यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्' इति कैश्चित् महतां चरितं प्रस्तुतस्याङ्गत्वेन वर्ण्यमानमुदात्तं नव्यमतसम्मतमेवाह, तत्प्राचीनोद्भटादिग्रन्थादर्शनमूलकमेव । तथा च—

'उदात्तमृद्धिमद्वस्तु चरितं च महात्मनाम् । उपलक्षणतां प्राप्तं नेतिवृत्तत्वमागतम्' ॥

इत्यौद्भटे उदात्तलक्षणे महताञ्चरितस्योदात्तलक्षणत्वेन स्पष्टमेवोपादानात् । अत एव तदुत्तरकालभवो '**रुय्यको**'ऽपि 'समृद्धिमद्वस्तुवर्णनमुदात्तम्' इत्यभिधाय 'अङ्गभूत-महापुरुषचरितञ्च' इत्याचचक्षे । उदाहृतवांश्च द्वितीयमुदात्तम्—

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी ।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ।

अत्रारण्ये वर्णनीये रामचरितमङ्गत्वेन वर्णितम् । तस्मात् 'महताञ्चोपलक्षणम्'इत्याचार्यमम्मटकृतलक्षणपर्यन्तानुधावनेन प्राचीननवीनकृतोदात्तलक्षणे आर्थिकमपि किञ्चिद् विशेषं न पश्यामः । दण्डिलक्षणमप्युक्तार्थे संवाद्येवेति कृतं ग्रन्थवृद्धिकरेण तुलनात्मकदृष्टिपातेन ।

[2]उदाहरणान्तरं यथा—

चिन्तामणिश्चरणभूषणमङ्गनानां शृङ्गारपुष्पतरवस्तरवः सुराणाम् ।
वृन्दावने व्रजधनं ननु कामधेनुवृन्दानि चेति सुखसिन्धुरहो विभूतिः ॥

अत्र वृन्दावनविभूतिवर्णनमुदात्तता ।

यत्र प्रधानमप्यङ्गतां गच्छति तदुदाहरणमन्यत् । यथा—

सेयं मथुरा नगरी सुरगुरुभिर्याचितो भगवान् ।
यत्रावतीर्य शतशः सुरद्विषो हेलयो न्यवधीत् ॥

अत्र वीरो नगर्यङ्गम् ॥ ३०३ ॥

[ अपह्नुतेर्लक्षणम् ]

**अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् ।**
**न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति ॥ ३०४ ॥**

—०—

अपह्नुतिर्न यस्यास्ति सर्वानुभवसाक्षिणः ।
तमनन्तमहाशक्तिं कृष्णं वन्दे जगत्प्रियम् ॥ १ ॥

—:*:—

क्रमप्राप्तामपह्नुतिं लक्ष्यलक्षणाभ्यां निरूपयति—'अपह्नुतिः' इति । किञ्चित्=यत् किमपि वर्णनीयस्य गुणक्रियादिरूपं धर्मम् अपह्नुत्य=अवगोप्य असत्यतया प्रतिपाद्येत्यर्थः, अन्यार्थदर्शनम्=अन्यस्य अर्थस्य अप्रस्तुतधर्मान्तरस्य दर्शनं सत्यतयावस्थापनम् सत्यत्वेन

---

१ मालिन्यप्रोञ्छनीकारः ।

२ साहित्यकौमुदीकार '**श्रीविद्याभूषणेन**' उक्तम् ।

(प्र०) अपन्हुतेः किं लक्षणम् किञ्चोदाहरणम् ? कथञ्च तत्र तल्लक्षणसङ्गतिरिति सर्वं सुविविच्य व्याख्याहि ? (उ०) अस्य पृ० पं० २२ ।

निश्चितीकरणमिति यावत् [ सा ] अपह्नुतिः=अपह्नुतिनामालङ्कार इत्यर्थः । उत्तरार्धेनोदाहरति—'न' इति । स्मरः=कामः तस्य=नायकस्य [ कृते ] पञ्चेषुः=पञ्च इषवो बाणा यस्य सः तथाभूतो न=नास्ति [ किन्तु ] पत्रिणाम्=बाणानां सहस्रम्=सहस्रसङ्ख्यत्वम् अस्ति इति शेषः ।

अत्र स्मरस्य पञ्चेषुत्वरूपं धर्मं निषिध्य तस्मिन् सहस्रबाणतारूपस्य अन्यस्यार्थस्य [ धर्मस्य ] सत्यत्वेनावस्थापनं सैव प्रकृते अपह्नुतिः इति ।

इदन्तु ध्यातव्यम्—अपन्हुतौ प्रकृतधर्मनिषेधपूर्वको धर्मान्तरारोपः । रूपकसामान्ये तु नैव प्रकृतधर्मनिषेधः । तत्त्वापह्नवरूपके धर्मिणमेव प्रकृतं निषिध्य धर्म्यन्तरारोप इति रूपकादपन्हुतेर्भेदो बोध्यः, उत्प्रेक्षायामतिशयोक्तौ च कस्यापि निषेधो न भवतीति ततोऽप्यस्या भेदः । अपि चोत्प्रेक्षायां सम्भावनारूपा प्रतीतिर्भवति, अत्र तु आहार्यस्वरूपा, आक्षेपे तु केवलं निषेध एव नत्वारोपः । नच—'प्रकृतस्य यदन्यत्व' मित्येवंरूपातिशयोक्तिरिति वाच्यम् स्पष्टं प्रस्तुतं निषिध्यान्यार्थस्थापनात् ॥ २०४ ॥

[ विषयापन्हुतेरुदाहरणम् ]

**चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः ।**
**सेयमग्निमयी सृष्टिर्मयि शीता परान् प्रति ॥ २०५ ॥**

अपन्हुतेर्भेदान्तराणि दिदर्शयिषुरादौ 'विषयापन्हुति' माह—चन्दनम्=मलयजरसः, चन्द्रिका=ज्योत्स्ना [तथा] मन्दः=मन्दगमनः दक्षिणः=दक्षिणादिग्वाही गन्धवाहः च=पवनश्च [इति] त्रयम् सृष्टिः=विधातृकृतः सर्गः मयि=विरहिण्यां विरहिणि वा अग्निमयी=अनलरूपा तद्वद्दाहकत्वात् 'प्रतीयते' इति शेषः । परान् प्रति=मद्भिन्नान् प्रति शीता=तापनिवर्त्तकत्वेन सुखकारीति भावः ॥ २०५ ॥

[ विषयापन्हुतिस्वरूपयोजना ]

**शैशिर्यमभ्युपेत्यैव परेष्वात्मनि कामिना ।**
**औष्ण्यप्रकाशनात्तस्य सेयं विषयनिह्नुतिः ॥ २०६ ॥**

उक्तोदाहरणे विषयापन्हुतिस्वरूपं स्वयं योजयति—'शैशिर्यम्' इति । अत्र कामिना मदनावेशवता पुंसा परेषु=स्वभिन्नेषु शैशिर्यम्=शिशिरस्य भावः शैशिर्यम् शीतलत्वम् अभ्युपेत्य=आरोप्य तस्यैव=शीतलत्वधर्मस्यैव आत्मनि=स्वस्मिन् [ स्वविषये ] औष्ण्यप्रकाशनात्=अग्निमयत्वधर्मारोपणेन चन्दनादीनां दाहकत्वकीर्त्तनात् सा इयं विषयनिन्हुतिः=एवम्प्रकारा सेयं विषयापन्हुतिरित्यर्थः ।

अत्र प्रकृतस्य चन्दनचन्द्रिकादेर्निषेध्यो धर्मः शैत्यम्, आरोप्यो धर्मस्तापकत्वम् तयोर्द्वयोर्व्यवस्थितस्वपरात्मकविषयप्रतिपादनात् इयं विषयापन्हुतिरित्युच्यते । इदन्तु ज्ञेयम्—यत्र नञादिशब्दप्रयोगः तत्रापह्नवः शाब्दः तदप्रयोगे तु आर्थः । 'शैशिर्यम्' इत्यत्र 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' [५।१।१२४] इति पाणिनिसूत्रेण भावे 'ष्यञ्' ॥२०६॥

[ स्वरूपापन्हुतेरुदाहरणम् ]

**अमृतस्यन्दिकिरणश्चन्द्रमा नामतो मतः ।**
**अन्य एवायमर्थात्मा विषनिष्यन्दिदीधितिः ॥ २०७ ॥**

स्वरूपापन्हुतिमुदाहरति—'अमृतस्यन्दि०' इति । चन्द्रमाः=शशी नामतः=संज्ञामात्रेणैव अमृतस्यन्दिकिरणः=अमृतस्य सुधायाः स्यन्दिनः प्रवाहिनः किरणा मयूखा यस्य स तादृशः मतः=अभिमतः लोकानामिति शेषः, अथवा मतः प्रसिद्धः लोके इति शेषः। नत्वयमर्थतोऽपि सुधांशुरित्यर्थः ।

अमृतस्यन्दिकिरणैराह्लादजनकत्वमस्य यथार्थतो नास्ति, वियोगिनां हृदि परमसन्तापकरत्वेन तदीयकिरणानां सोढुमशक्यत्वात्। यथा दमयन्तीविरहवर्णने महाकविः 'श्रीहर्षः'–

अयि ! विधुं परिपृच्छ गुरोः कुतः स्फुटमशिक्ष्यत दाहवदान्यता ।

ग्लपितशम्भुगलाद्गरलात्त्वया किमुदधौ जड वा वडवानलात् ॥ इत्याकलितवान्।

'शब्दमात्रं व्युत्पत्तिसिद्ध'मित्येकं मतं तत्र व्युत्पत्तिलभ्योऽर्थो घटेत नवा घटेत इति तु नाग्रहः। एवञ्च चन्द्रचन्द्रमःप्रभृति संज्ञाशब्दानां 'चन्दति किरणैराह्लादयति इति चन्द्रः' चन्द्रः सन् मस्यति परिणमते इति चन्द्रमाः इत्येवमादि व्युत्पत्तिमात्रमेव नतूक्तेऽर्थे एतेषां पदानां शक्तिरपि, यथा गृहाद्यर्थवाचकानां मण्डपादिशब्दानां मण्डपानकर्त्रादिरूपे योगार्थे न शक्तिः, किन्तु रूढा अमी शब्दाः एवमेव चन्द्राद्या अपि शब्दा इन्द्वादिरूपेऽर्थे रूढाः नत्वमीषां कश्चन योगशक्तिलभ्योऽर्थोऽस्ति इति कविगुम्फनायाः सारः ।

इत्थं चन्द्रस्य अमृतस्यन्दिकिरणैराह्लादकत्वं निषिध्यारोप्य च दर्शयति--'अन्य एवायम्' इति। अर्थात्मा=तादृशपदप्रतिपाद्ययोगार्थः आत्मा स्वरूपं यस्य स तादृशः चन्द्रमाः अन्य एव=प्रसिद्धचन्द्राद् भिन्न एव । अयम्=प्रसिद्धः [तु] विषनिष्यन्दिदीधितिः=विषस्य गरलस्य निष्यन्दिन्यः प्रस्राविण्यो दीधितयः किरणाः यस्य स तथाविधोऽस्ति । [कस्यचिद्विरहिण्या उक्तिरियम् ] ।

अत्र चन्द्रे अमृतनिष्यन्दिकिरणत्वधर्मनिषेधपूर्वको विषनिष्यन्दिकिरणत्वधर्मारोपः कृतः । एवञ्च स्वं रूप्यते निरूप्यतेऽनेनेति स्वरूपम् नैसर्गिकगुणक्रियादिरूपो धर्मः तन्निषेधपूर्वकत्वादियमन्वर्थसंज्ञा स्वरूपापन्हुतिरिति ॥ ३०७ ॥

[ स्वरूपापन्हुतिस्वरूपयोजना ]

**इति चन्द्रत्वमेवेन्दौ निवर्त्यार्थान्तरात्मता ।**
**उक्ता स्मरार्त्तेनेत्येषा स्वरूपापह्नुतिर्मता ॥ ३०८ ॥**

उक्तोदाहरणे स्वयं स्वरूपापन्हुतिस्वरूपं योजयति—'इति' इति । इति=उक्तया दिशा स्मरार्त्तेन=केनापि मदनातुरेण कामिना पुंसा इन्दौ=चन्द्रमसि चन्द्रत्वम्=असाधारणो धर्मः निवर्त्य एव=निषिध्यैव [या] अर्थान्तरात्मता=वस्त्वन्तरस्वरूपत्वं विषनिष्यन्दिदीधित्वरूपम् उक्ता=कथिता आरोपिता [सा] एषा स्वरूपापन्हुतिः=एतदाख्या अलंकृतिः मता=इष्टा 'कविभि' रिति शेषः। स्वरूपस्य=स्वतःसिद्धस्य धर्मस्य अपह्नवपूर्विकेयमपन्हुतिरित्यर्थानुगतमस्या नाम॥ ३०८॥

[ अपन्हुतेरुपसंहारः ]

**उपमापह्नुतिः पूर्वमुपमास्वेव दर्शिता ।**
**इत्यपह्नुतिभेदानां लक्ष्यो लक्ष्येषु विस्तरः ॥ ३०९ ॥**

—*—

॥ इत्यपन्हुतिचक्रम् ॥

—*—

अपन्हुतिमुपसंहरति—'उपमापन्हुति'रिति । उपमापन्हुतिः=उपमाया सादृश्यस्य अपन्हुतिः औपम्यनिषेधपूर्वकतदतिशयस्थापनस्वरूपा अपन्हुतिः पूर्वम् उपमासु एव दर्शिता= पूर्वत्रोपमालङ्कारभेदनिरूपणप्रस्तावे एवोक्ता प्रतिषेधोपमायां कथिता ।

न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।
कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥ इति श्लोकेनोक्तेत्यर्थः ।

इति=अनया दिशा अपन्हुतिभेदानाम्=अपन्हुतिविशेषाणाम् लक्ष्येषु=उदाहरणेषु [उदाहरणान्तरेषु] विस्तरः=अनेकता लक्ष्यः=अनुसन्धातव्यः । ग्रन्थगुरुताभीतिमता मया न बहु विस्तरः कृत इति भावः ।

उदाहरणान्तरं यथा [ काव्यालङ्कारसारलघुवृत्तौ ]

एतद्धि न तपः सत्यमिदं हालाहलं विषम् ।
विशेषतः शशिकलाकोमलानां भवादृशाम् ॥

अत्र प्राकरणिकस्य तपसः स्वरूपमपन्हुत्य हालाहलविशेषत्वं व्यवस्थापितम् । अपन्हुतेः स्वरूपसारस्तु—'उपमेयमसत्यं कृत्वा उपमानस्य सत्यतया स्थापनमेव' इति । यथा—

ताम्राधरौष्ठदलमुन्नतचारुनासमत्यायतेक्षणमिदं वत नास्यमास्यम् ।
बन्धूकयुग्मतिलपुष्पसरोजयुग्मैः सम्पूजितः स्वयमसौ विधिनैव चन्द्रः ॥

[श्रीकृष्णपुरःस्थितायाः श्रीराधाया वदनस्य सखीकर्तृकं वर्णनमिदम्] उन्नता चारुर्नासा यस्य तादृशमस्या आस्यम् आस्यं न भवति किन्तु बन्धूकेत्यादिविशेषणविशिष्टो विध्यर्चितश्चन्द्र एवेति उपमेयभूतं मुखमसत्यं कृत्वा उपमानभूतश्चन्द्र एव सत्यत्वेन स्थापितः। यथा वा—

तन्वि ! त्वन्मुखचन्द्रेण निर्जितो हन्त ! लज्जितः ।
विषाणयङ्कमिषाद् भुङ्क्ते प्राणहानेच्छया विधुः ॥

[ श्रीराधाम्प्रति कृष्णस्योक्तिरियम् ] नायं मृगरूपः कलङ्कः किन्तु विषभक्षणहेतुकः कालिमा इत्युपमेयभूतं मृगरूपं कलङ्कमसत्यं कृत्वा उपमानभूत उक्तः कालिमैव सत्यत्वेन स्थापिता। परमियं ग्रन्थान्तरेषु 'कैतवापन्हुति' रित्युच्यते। उक्तञ्च 'जयदेवेन' चन्द्रालोके—

कैतवापन्हुतिर्व्यक्तौ व्याजाद्यैर्निन्हुतेः पदैः ।
निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥ इति ॥

अत्र पूर्वार्धं लक्षणम् उत्तरार्धन्तु लक्ष्यम् । अत्रासत्यत्वाभिधायिना 'कैतव'पदेन नेमे कान्ताकटाक्षाः किन्तु स्मरनाराचा इत्यपह्नवः प्रतीयते। एवमेव 'तन्वि' इत्यादि पद्येऽपि नेदं मृगाङ्कनम् अपि तु विषाणयेवेति 'मिष' पदेनापह्नवः प्रतीयते । यथा वा अन्यत्—

रिक्तेषु वारिकथया विपिनोदरेषु मध्याह्नजृम्भितमहातपतापतप्ताः ।
स्कन्धान्तरोत्थितदवाग्निशिखाच्छलेन जिह्वां प्रसार्य तरवो जलमर्थयन्ते ॥

ग्रीष्मवर्णनमेतत् । अत्र नेयं दवाग्निशिखा अपि तु जिह्वेति छलपदप्रयोगात् प्रतीयत इतीयमपि कैतवापन्हुतिः । अत्र तु आचार्येण—विषयापन्हुतिः, स्वरूपापन्हुतिः, उपमापन्हुतिः, इति अपन्हुतेः प्रकारत्रयं निरूप्य 'इत्यपन्हुतिभेदानां लक्ष्यो लक्ष्येषु विस्तर'

इति आचार्योन्तरोक्तापन्हुतिभेदसङ्ग्रहीकरणायोक्तम् तेन शुद्धापन्हुतिः,[1] हेत्वपन्हुतिः,[2] पर्यस्तापन्हुतिः,[3] भ्रान्तापन्हुतिः,[4] छेकापन्हुतिः इत्याद्या अपि भेदा दण्डिनां सम्मता एवाभान्ति किन्तु शुद्धापन्हुतिरेव च स्वरूपापन्हुतिः। यथा—'नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम्' इति । अत्राहुः 'अप्पय्यदीक्षिताः'—वर्णनीये वस्तुनि तत्सदृशधर्मारोपफलकतदीयधर्मनिह्नवः कविमतिविकासोत्प्रेक्षितधर्मान्तरस्यापि निह्नवः शुद्धापन्हुतिः । यथा चन्द्रे वियन्नदीपुण्डरीकत्वारोपफलकस्तदीयधर्मस्य चन्द्रत्वस्यापन्हवः। एवमेव 'अमृतस्यन्दिकिरण' इति मूलकृदुक्तस्वरूपापन्हुत्युदाहरणेऽपि 'इति चन्द्रत्वमेवेन्दो' इत्यादिना चन्द्रत्वस्वरूपं निषिध्य तत्र धर्मान्तरस्यैवारोपः प्रदर्शितः । परन्तु—आरोपस्य सादृश्यमूलकत्वं प्रकृते वस्तुनि धर्मनिन्हवं चानादृत्य यत्किञ्चिद् धर्मनिह्नवपूर्वकयत्किञ्चिद्धर्मारोपमात्रमपह्नवं मत्वैव दण्डिनो लक्षणप्रणयनप्रयासो नापह्नोतुं शक्यत इति सुधियो विदाङ्कुर्वन्तु, तल्लक्षणयोजनप्रकारश्चास्माभिः प्रदर्शित एवेति दिक् ॥ ३०९ ॥

[ श्लेषवर्णनम् ]

**श्लिष्टमिष्टमनेकार्थमेकरूपान्वितं वचः ।**
**तदभिन्नपदं भिन्नपदप्रायमिति द्विधा ॥ ३१० ॥**

यः श्लिष्टो राधया यो वा श्लिष्टो हिमवत्कन्यया ।
तयोर्भेदो न मन्तव्य इति शास्त्रस्य डिण्डिमः ॥

शब्दगतमर्थगतञ्च श्लेषमेकेनैव यत्नेन लक्षयति—'श्लिष्टम्' इति । अनेकार्थम्=अभिधाख्यया शब्दवृत्त्या युगपदनेकार्थप्रतिपादकपदोपेतम् तथा एकरूपान्वितम्=एकेन समानेन [अभिन्नेन] रूपेण आकारेण अन्वितं युक्तम् अर्थात् अर्थभेदेन भिन्नत्वेऽपि युगपदुच्चारणविषयतां प्राप्तेन एकेनैव स्वरूपेण युक्तम् वचः=वाक्यं श्लिष्टम्=श्लेषालङ्कारवदिति लक्षण-

---

१ 'नेन्दुस्तीव्रो न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः' इति । अत्र चन्द्रे एव तीव्रत्वनैशत्वयुक्तिभ्यां चन्द्रत्वसूर्यत्वापह्नवो बडवानलत्वारोपार्थः ।

२ 'नायं सुधांशुः किन्तर्हि सुधांशुः प्रेयसीमुखम्' इति। 'यत्र क्वचित् वस्तुनि तदीयधर्मनिह्नवः [इत्यत्र] वर्णनीये वस्तुनि तस्य धर्मस्यारोपार्थः सा पर्यस्तापन्हुतिः यथा–[उक्तोदाहरणे] चन्द्रे चन्द्रत्वनिन्हवो वर्णनीये मुखे तदारोपार्थः।

३ 'तापं करोति सोत्कम्पं ज्वरः किं न सखि ! स्मरः' इति । अत्र तापं करोतीति स्मरवृत्तान्ते कथिते तस्य ज्वरसाधारण्यात् ऋजुबुद्ध्या सख्या ज्वरः किमिति पृष्टे 'न सखि ! स्मर' इति तत्त्वोक्त्या भ्रान्तिवारणं कृतम् ।

४ 'प्रजल्पन् मत्पदे लग्नः कान्तः किं नहि नूपुरः' इति कस्यचित् कञ्चित् प्रति रहस्योक्तौ अन्येन श्रुतायामुक्तौ तात्पर्यान्तरवर्णनेन तथ्यनिह्नवे छेकापन्हुतिः [छेको विदग्धः तत्कृतापन्हुतिः] यथा—नायिकया नर्मसखीं प्रति 'प्रजल्पन् मत्पदे लग्न' इति स्वनायकवृत्तान्ते निगद्यमाने तदाकर्ण्य 'कान्तः किम्' इति शङ्कितवतीमन्यां प्रति 'नूपुर' इति निह्नवः। अन्यान्येवञ्जातीयकानि उदाहरणानि 'अलङ्कारमणिहार' प्रभृतिषु ग्रन्थेषु द्रष्टव्यानि । ग्रन्थगौरवं मत्वा नेहोद्धृतानि ।

वाक्यार्थः। तत्=वचः अभिन्नपदम्=अभिन्नानि पदानि यस्य अर्थात् शक्यतावच्छेदकस्य धर्मस्य एकत्वे अनेकत्वे वा अभिन्नप्रकृतिप्रत्ययसमासघटितत्वेन अभिन्नपदवत् तथा भिन्नपद-प्रायम्=भिन्नानां प्रकृतिप्रत्ययसमासादिघटितत्वेन विलक्षणरूपाणां पदानां प्रायो बाहुल्यं यत्र तत् तथाविधम् इति=इत्येवमुक्तरूपेण द्विधा=द्विप्रकारम् 'अस्ति' इति शेषः।

एवञ्च—अभिन्नपदवाक्ये 'अभङ्गश्लेषः' भिन्नपदवाक्ये तु 'सभङ्गश्लेष' इति द्विविधत्वं श्लेषस्य फलितमित्याशयः। ततश्च—'शब्दार्थयोरेकताप्रत्ययवभासहेतुर्निरन्तरसम्बन्धविशेषः श्लेष' इति श्लेषलक्षणं फलितम्। यदुक्तं पण्डितराजैः—'श्रुत्येकयानेकार्थप्रतिपादनं श्लेष' इति। तत्रापि शब्दार्थयोरेकताप्रत्ययवभासहेतुः सम्बन्धविशेषोऽर्थबललभ्योऽस्त्येव। परमयं क्वचित् शब्दार्थयोः एकप्रयत्नोच्चार्यत्वरूपः। क्वचित्तु—अर्थयोश्चैकप्रयत्नोच्चार्यमाणशब्देन समकाल-बोध्यत्वस्वरूपः। अपरे तु—शब्दयोर्जतुकाष्ठन्यायेन अर्थयोश्चैकवृन्तगतफलद्वयन्यायेन श्लेष इति शब्दार्थश्लेषयोर्विवेकमाहुः। इदञ्च श्लेषद्वयमेकत्रापि भवितुमर्हति। **अयमाशयः**—यत्र शब्दस्यैव नानार्थता तत्रार्थयोरपि श्लिष्टत्वमविनाभावि। यत्र तु शब्दस्य श्लिष्टिः तत्रापि 'अर्थभेदेन शब्दभेद' इति नयेन भिन्नत्वाच्छब्दयोरपि श्लिष्टत्वमङ्गीकर्त्तव्यं भवति। तस्मादयं शब्दश्लेषः शब्दालङ्कारमध्य एव पठनीय इति यद्यप्यौचित्यमाभाति तथापि अर्थश्लेषस्यावि-नाभावित्वादर्थालङ्कारमध्ये गणना कृतेति न किमप्यसामञ्जस्यं प्रतीमः।

अथ नानार्थकशब्दश्लेषस्थले शब्दप्रयुक्ताया एव वैचित्र्याः सत्त्वात् शब्दालङ्कारमध्य एव तन्निरूपणमुचितामिति ब्रूषे? तदा 'अर्थद्वय्याः प्रतीतिमाधायैव शब्दोऽपि वैचित्रीजनक' इत्यर्थमुखप्रेक्षिततायाः शब्दस्य, स्वतो वैचित्र्या अजनकत्वमेव न मुख्यत्वमस्य इति समाधानं जानीहि। ननु—किमिदं शब्दस्यानेकार्थत्वं नाम? उच्यते—अभिधाख्यया [शब्दस्य] वृत्त्या अनेकार्थोपस्थापकत्वं तदिति। परन्तु यत्र अभिधया युगपदनेकेऽर्था उपस्थापिताः शक्तिसंकोचकाश्च संयोगाद्या अवतीर्णाः तत्र शक्तिसंकोचहेतोः सत्त्वात् न युगपदर्थद्वयप्रतीति-रिति न तत्र श्लेषावसरः किन्तु अभिधामूलो ध्वनिरेव।

ते चैते नानार्थशक्तिनियमनहेतवः संयोगाद्याः—

[२]संयोगो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इति।

तत्र—**संयोगो** [नाम] पदनानार्थशब्दशक्यान्तरवृत्तितया अप्रसिद्धत्वे सति तच्छक्यवृत्तितया प्रसिद्धः सम्बन्धः अर्थात् समभिव्याहृतपदार्थानां प्रायेण संयोगसम्बन्धः।

---

१ प्रकरणनियामका इत्यर्थः।

२ हरिरप्याह—[ वाक्यपदीये ]

वाक्यात् प्रकरणादर्थादौचित्याद्देशकालतः।
शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात्॥
संसर्गो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥ इति॥

यथा—'सशंखचक्रो हरिः' इत्यत्र शंखचक्रसंयोगेन अनेकार्थोऽपि 'हरि' शब्दो विष्णुमेवाभिधत्ते [ नतु इन्द्रादिरूपमप्यर्थम् ] । **विप्रयोगो** विश्लेषः, अर्थात् प्रायेण संयोगापन्नाना समभिव्याहृतपदार्थानां कदाचिद्वियोगः । यथा 'अशंखचक्रो हरिः' इत्यत्र तद्वियोगेन तमेव । **साहचर्यम्** एकस्मिन् कार्ये परस्परापेक्षित्वम् । यथा 'भीमार्जुनौ' इत्यत्र भीमसाहचर्यात् अर्जुनः पार्थः नतु कार्त्तवीर्यः । एवमेव 'रामलक्ष्मणा' वित्यादावपि लक्ष्मणसाहचर्येण 'राम' पदात् दाशरथेर्बोधो नतु बलभद्रस्यापि । **विरोधिता** प्रसिद्धं वैरम् । यथा—'कर्णार्जुनौ' इत्यत्र 'कर्ण'पदेन राधेयस्यैव बोधो नतु श्रवणेन्द्रियस्य अर्जुनेन सह तस्य प्रसिद्धवैरात् । **अर्थः** प्रयोजनम् [तात्पर्यम् ] । यथा—'स्थाणुं भज भवच्छिदे' इत्यत्र भवच्छेदनप्रयोजनात् 'स्थाणु' पदेन शिवस्यैव बोधः नतु शाखादिहीनस्य तर्वादेः । अथवा 'स्थाणुं वन्दे' इत्यत्र 'वन्दे' पदप्रयोगतात्पर्यात् स्थाणुः शिव एव । **प्रकरणं** प्रस्तावः । यथा—'सर्वं जानाति देवः' इत्यत्र राजप्रस्तावे 'देव' पदस्य युष्मदर्थे शक्तिर्निर्णीता नतु अमरेषु । **लिंगं** सम्भाव्यमानो धर्मविशेषः । यथा—'कुपितो मकरध्वजः' इत्यत्र प्राणिधर्मकोपलिङ्गात् मकरध्वजः काम एव नतु समुद्रोपि । **अन्यशब्दसन्निधिः** अन्यस्य सन्दिग्धार्थकभिन्नस्य शब्दस्य समानविभक्त्यन्तपदस्य सन्निधिरव्यवधानम् । यथा—'देवः पुरारिः' इत्यत्र पुरारिः शिवः समानविभक्त्यन्तदेवपदसान्निध्यात् नतु तदन्यः शत्रुपुरनाशकर्ता । अथवा—'करेण राजते नागः' इत्यत्र करपदस्य नागपदमादाय 'नाग' पदस्य च करपदमादाय करनागपदयोः शुण्डायां गजे च [यथाक्रमं] शक्तिः नतु मनुष्यपाण्यादौ सर्पादौ वा । **सामर्थ्यम्** पदार्थशक्तिः । यथा—'मधुना मत्तः पिकः' इत्यत्र मधुर्वसन्तः पिकमादने वसन्तकालस्यैव सामर्थ्यात् तेनात्र न मद्यादेर्बोधः । **औचिती** योग्यता । यथा—'पातु वो दयिता मुखम्' इत्यत्र औचित्या 'मुख' पदस्य साम्मुख्ये शक्तिः, नतु मुखं लपनं पातु प्रविशत्वित्यर्थः, [ अर्थात् नात्र मुखपदस्य लपने शक्तिर्गृह्यते] । **देशः** नगरादिराश्रयस्थानम् । यथा—'विभाति गगने चन्द्रः' इत्यत्र चन्द्रः शशी नतु कर्पूरः गगनदेशे तस्य भानासम्बन्धात् । **कालः** दिवसादिः । यथा—निशि चित्रभानुर्वह्निरेव नतु सूर्यः तस्य निशाकालाधिकरणताया अभावात् । **व्यक्तिः** स्त्रीपुन्नपुंसकलिङ्गानि । यथा—'मित्रो भाति' इति पुंव्यक्त्या मित्रः सूर्यः । 'मित्रं भाति' इति नपुंसकव्यक्त्या मित्रं सुहृद् । एवं 'नभो भाति' । 'नभा भाति' इत्यत्रापि ज्ञेयम् । 'नभाः' श्रावणः । **स्वर** उदात्तादि वेदे एव विशेषप्रतीतिकृत् न काव्य इति तद्विषय नोदाहृतम् । एते विशेषार्थस्मृतिहेतव उक्ताः । अतः—

> भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य ।
> यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥

---

१ '**हरि**श्चन्द्रार्कवाताश्वशुकभेकयमाहिषु । कपौ सिंहे हरेऽजेशौ शक्रे लोकान्तरे पुमान् । वाच्यवत् पिङ्गहरितोः' इति [ मेदिनी ] ।

२ यथा 'इन्द्रशत्रुः' इत्यत्र यदि समासान्तोदात्तता तदा इन्द्रस्य शत्रुरित्यर्थः । अथ पूर्वपदप्रकृतिस्वरप्राप्तमाद्युदात्तत्वं तदा इन्द्रः शत्रुः [शातयिता] यस्येत्यर्थः ।

३ 'यस्य प्रकृतस्य राज्ञः करो हस्तः सततं निरन्तरं दानस्य वितरणस्य संबन्धि

अत्र 'भद्रात्मन' इत्याद्याः शब्दा अनेकार्थाः सन्तोऽपि प्रकरणवशात् [प्रकरणसङ्कोचितया अभिधया] तदन्वययोग्ये राजनि [राजरूप एवार्थे] नियन्त्रिताः तथापि सहृदयानां प्रतिभासामर्थ्यात् तदन्वययोग्यस्य गजरूपस्याप्यर्थस्य प्रतीतिः परं सा अभिधामूलया व्यञ्जनयैव, एवमेवंविधस्थले नानार्थसत्त्वेऽपि न श्लेषः। अत्रोक्तविशेषणविशिष्टगजरूपार्थप्रतीतौ राजगजयोर्द्वयोरप्यर्थयोर्मिथः सम्बन्धे उपमानोपमेयभावोऽपि व्यङ्ग्यः।

अत्रेदं विलोडितम्—नानार्थेषु यत्रानेकत्र वक्तृतात्पर्यग्राहकं प्रकरणादिकं नावतरति युगपद्वाऽवतरति तत्र श्लेष एव। यत्र प्रकरणाद्यवतारेण एकस्मिन्नेवार्थेऽभिधाया नियन्त्रणम् तत्र द्वितीयार्थस्य भानमभिधामूलकेन व्यञ्जनेन, परन्तु यत्र विशेष्यं नैव श्लिष्टं प्रकरणादेश्च नावतारो विशेषणानि नानार्थानि तत्र समासोक्तिरेव।

अपि चैवंविधस्यार्थस्यानेकत्वं क्वचिद् वास्तवम्। क्वचिच्च एकरूपत्वेऽपि सम्वन्धिभेदसमुत्थम्। आद्ये शब्दश्लेषः द्वितीये तु अर्थश्लेष इति नवीनानां मतम्। तत्रार्थश्लेषो यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥[1]

अत्र एकापि उन्नतिः, अधोगतिश्च तुलाकोटिखल [रूप] सम्बन्धिभेदाद् भिन्नरूपेणैव प्रतीयते। दण्डिमते तु सम्बन्धिभेदेन तयोरनेकत्वात् तद्वाचकपदयोरपि अनेकत्वमिति लक्षणसङ्गतिः। शब्दश्लेषो यथा—

अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति।
सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः॥ इति।

---

यदम्बु तस्य सेकेन सुभगः शोभनोऽभूदित्यन्वयः। कीदृशस्य यस्य। भद्रः शोभन आत्मा स्वरूपमन्तःकरणं वा यस्य तथाभूतस्य। तथा दुरधिरोहाऽनाधृष्या तनुः शरीरं यस्य तथाभूतस्य। एवं विशाले महति वंशे कुले उन्नतिर्महत्त्वं यस्य तथाविधस्य। विशालस्य वंशस्योन्नतिर्यस्मादिति वा। तथा कृतः शिलीमुखानां बाणानां संग्रहः समीचीनो ग्रहोऽभ्यासदार्ढ्यं येन तस्य। तथानुपप्लुताबाधिता गतिर्ज्ञानं यस्य तथाभूतस्य। गतिर्यानं वा। यद्वानुपप्लुतानां निर्दुष्टानां गतिर्हितकर्ता। पराञ्शत्रून्वारयतीति परवारणस्तस्येति राजपक्षे गजपक्षे तु—यस्य परवारणस्य श्रेष्ठकरिविशेषस्य करः शुण्डादण्डः दानाम्बु मदजलम्। भद्रात्मनो भद्रजातीयस्य। 'भद्रो मन्द्रो मृगश्चैव' इत्युक्त्वा 'एतेऽष्टौ गजयोनयः' इत्युक्तेः। दुरधिरोहतनोः दुःखेनाधिरोह आरोहणं यस्यास्तथाभूता तनुर्यस्य तथाभूतस्य। अत्युच्चत्वादित्यर्थः। विशालो दीर्घो यो वंशो वेणुस्तद्वदुन्नतिरुच्चत्वं यस्य। यद्वा विशाला वंशस्य पृष्ठदण्डस्योन्नतिर्यस्य। शिलीमुखा भ्रमराः। संग्रहः आकर्षणम्। अनुपप्लुतगतेरनुद्धतगमनस्य धीरगमनस्येत्यर्थः।

१ अयमस्यार्थः—स्तोकम्=अल्पम्। उन्नतिम्=ऊर्ध्वगमनम् अहङ्कारश्च। अधोगतिम्=अधोगमनम् दर्पभ्रंशश्च। अधोगतिम्=अधःपतनम् पादपतनञ्चेत्यपरे। तुलाया धटायाः कोटिः अग्रम्। खलः=दुर्जनः। सुसदृशी=तुल्या। वृत्तिः=वर्त्तनम् आचरणमिति यावत्। यद्यत्र 'अल्पेनोद्रेकमायाति' इत्यादिरीत्या अल्पादिपदान्युपादीयेरन् तदापि न श्लेषभङ्ग इत्यतोऽयमर्थश्लेषः।

अत्र [हृदि] 'वक्ष्यति' धारयिष्यति [क्षेपु] दुःखेषु कथयिष्यति च । सामर्थ्यं कृन्तात, करोतीति च सामर्थ्यकृत् 'सामर्थ्यच्छेत्ता' सामर्थ्यकारकश्चेति यथाक्रममर्थः । 'वक्ष्यति' इति वहिवच्योर्लृटि तुल्यं रूपम् । कृदिति कृन्ततिकरोत्योः क्विपि तुल्यं रूपम् । तदत्र प्रकृत्योरेव भिन्नस्वरूपं नतु प्रत्ययस्यापि । तदयं वर्णपदलिङ्गभाषाप्रकृतिविभक्तिवचनानां भेदादष्टधा भवति । अयन्तु 'प्रकृतिश्लेषो' दर्शितः ॥ ३१० ॥

[ अभिन्नपदश्लेषस्योदाहरणम् ]

**असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।**
**राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥ ३११ ॥**

तत्र आद्यमभिन्नपदश्लेष[अभङ्गश्लेष]मुदाहरति—'असौ' इति । असौ=पुरतो दृश्यमानः उदयम्=उन्नतिम् [ऐश्वर्यम्] उदयाचलञ्च आरूढः=प्राप्तः कान्तिमान्=कमनीयाकारः श्वेतरश्मियुतश्च रक्तमण्डलः=रक्तम् अनुरक्तं मण्डलं प्रकृतिवर्गो यस्येति राजपक्षे, आलोहितबिम्बश्च इति चन्द्रपक्षे । राजा=नृपः चन्द्रश्च मृदुभिः=अनुद्वेजकैः प्रजाम्प्रति पीडाया अजनकैः शीतलैश्च करैः=राज्ञे देयैरंशैः राजस्वैः, दीधितिभिश्च लोकस्य=प्रजायाः हृदयम्=मनः हरति=एकत्र दुःखाजनकत्वेन अपरत्र आल्हादकत्वेन हृदयहरणं ज्ञेयम् ।

अत्र प्रकरणादिषु मध्ये न किमपि नियामकं पश्यामः, अतः नृपचन्द्रौ द्वावप्यर्थौ मुख्यौ । उदयादीनि पदान्यपि अभिन्नप्रकृतिप्रत्ययैः साधितत्वात् अभिन्नानीत्ययमभिन्नपदश्लेष एव 'अभङ्गश्लेष' उच्यते ॥ ३११ ॥

[ भिन्नपदश्लेषस्योदाहरणम् ]

**दोषाकरेण सम्बध्नन् नक्षत्रपथवर्त्तिना ।**
**राज्ञा प्रदोषो मामित्थमप्रियं किन्न बाधते ॥ ३१२ ॥**

भिन्नपदश्लेष [सभङ्गश्लेष] मुदाहरति—'दोषाकरेण' इति । प्रदोषः=रजनीमुखम्, प्रकृष्टो दोषो यस्य सः प्रदोषः समधिकदुष्टः कश्चन पुरुषः [प्रस्तुतः] दोषाकरेण=निशाकरेण, दोषस्य परपीडादेराकरेण खनिभूतेन अत्यन्तं परोद्वेजकेनेत्यर्थः, नक्षत्रपथवर्त्तिना=आकाशमार्गचारिणा तथा 'न क्षत्रपथवर्त्तिना' क्षत्रपथे क्षत्राणां राज्ञामुचिताचारे न वर्त्तमानेन राज्ञा=चन्द्रेण नृपेण च सम्बध्नन्=सम्बन्धं प्राप्नुवन् सन् अप्रियम्=प्रियावियोगिनम् द्वेष्यञ्च 'माम्' इत्थम्=एवम्प्रकारेण किं न बाधते=न पीडयति अपि तु बाधते एवेत्यर्थः ।

अत्र 'दोषाकरेण' इत्यादीनि पदानि दोषां रात्रिं करोति इत्याकारया दोषस्य आकर इत्याद्याकारया च व्युत्पत्त्या प्रकृतिप्रत्ययसमासानां भिन्नतया भिन्नानीत्येवमयं 'सभङ्गश्लेषः'। 'राज्ञा' इत्यस्मिन् पदे तु 'अभङ्गश्लेष' एव । तस्मादयं 'सभङ्गाभङ्गात्मकः' तृतीयो 'विश्वनाथादिभि' रपि सम्मतः श्लेषो भवति । शुद्धसभङ्गश्लेषोदाहरणन्तु—

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ इति ।

अत्र—पृथूनि कार्त्तस्वरपात्राणि सुवर्णभाजनानि यस्मिन् इत्येकोऽर्थः, पृथुकानां

---

(प्र०) अभिन्नपदश्लेषस्योदाहरणं लिखित्वा व्याख्याहि ? (उ०) अस्य पृ० पं० ७

शिशूनाम् आर्त्तस्वरपात्रम् खाद्यपेयाद्यभावात् क्रन्दनध्वनिस्थानमित्यपरोऽर्थः । तथा—भूषिता रत्नादिभिरलङ्कृताः निःशेषाः सर्वे परिजनाः पुत्रमित्रकलत्रादयो यस्मिन् इति राजपक्षे। भुवि मृत्तिकायाम् उषिताः आसनाद्यभावादवस्थिताः निःशेषा सकलाः परिजनाः पुत्राद्या यत्र तत्ता-दृशमिति रङ्कपक्षे । तथा विलसन्तीभिः करेणुभिः हस्तिनीभिर्गहनं ससम्बाधम् इति राज०। बिलेषु गर्त्तेषु सीदन्ति अवतिष्ठन्ते ये ते बिलसदो मूषिकाः बिलसद एव बिलसत्काः तेषां रेणुभिर्धूलिभिर्गहनं दुर्गमम् इति रङ्क० । हे देव !=राजन् ! सम्प्रति आवयोः तव मम च सदनं भवनम् [उक्तविशेषणम्] समं समानं 'जात' मिति शेषः । अत्र—सर्वाण्येव पदानि श्लिष्टानि विभिन्नप्रकृतिप्रत्ययादिघटितानीति तेषां भिन्नत्वमेवेति शुद्धसभङ्गोदाहरणम् ॥ ३१२ ॥

[ श्लेषस्य अलङ्कारान्तराणामङ्गभावः ]

**उपमारूपकाक्षेपव्यतिरेकादिगोचराः ।**
**प्रागेव दर्शिताः श्लेषा दर्श्यन्ते केचनापरे ॥ ३१३ ॥**

श्लेषस्य स्वप्रधानतयोदाहरणं निरूप्य सम्प्रति अलङ्कारान्तराणामङ्गभावेन तं निरू-पयितुमाह—'उपमा०' इति । उपमारूपकाक्षेपव्यतिरेकादिः गोचरो विषयो येषां ते तथा-विधाः 'श्लेषाः' प्रागेव=तत्र तत्र दर्शिताः=अलङ्कारान्तरनिर्वाहकत्वेन अङ्गभावेन उक्ता इत्यर्थः। केचन अपरे=दर्शितोपमाद्यलङ्कारभिन्नालङ्काराङ्गभूता अन्ये श्लेषाः दर्श्यन्ते=निरूप्यन्ते ।

तत्रोपमा साधारणधर्मप्रयोगवर्ता ज्ञेया । यत्र तु साधारणधर्मोऽभिन्नः 'तत्र अम्भोरु-हमिवाताम्रम्' इत्यादिधर्मोपमाश्लेषोपमादौ अर्थश्लेषः । 'बालेवोद्यानमालेयं सालकानशोभिनी' इत्यादिसमानोपमायान्तु 'शब्दश्लेषः' । 'रूपक' मपि साधारणधर्मप्रयोगोपेतं श्लिष्टरूपकादि-कम् । आक्षेपस्तु—

अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके । मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना ॥

इत्यादौ 'श्लिष्टाक्षेपः' । 'व्यतिरेको'ऽपि साधारणधर्मप्रयोगवान् । आदिपदेन अर्थान्त-रन्याससमासोक्त्याद्यलङ्काराणां ग्रहणम् । एवमाद्यूह्यम् ॥ ३१३ ॥

[ वक्ष्यमाणश्लेषभेदोद्देशः ]

**अस्त्यभिन्नक्रियः कश्चिदविरुद्धक्रियोऽपरः ।**
**विरुद्धकर्मा चास्त्यन्यः श्लेषोनियमवानपि ॥ ३१४ ॥**
**नियमाक्षेपरूपोक्तिरविरोधी विरोध्यपि ।**
**तेषां निदर्शनेष्वेव रूपमाविर्भविष्यति ॥ ३१५ ॥**

निरूपयिष्यमाणश्लेषभेदानाचष्टे—'अस्ति' इति । कश्चित् श्लेषः अभिन्नक्रियः । कश्चित् विरुद्धक्रियः । अपरः विरुद्धकर्मा अस्ति । अन्यः श्लेषः अनियमवान् अपि अस्ति । कश्चित् नियमाक्षेपरूपोक्तिः, अविरोधी, विरोधी अपि च अस्ति । तेषाम् भेदानाम् रूपम्= लक्षणम् स्वरूपम् निदर्शनेषु=उदाहरणेषु 'एव आविर्भविष्यति' अतोऽत्र पृथक्लक्षणोक्ति-प्रयासो व्यर्थ एवेति भावः ॥ ३१४, ३१५ ॥

[ अभिन्नक्रियस्य श्लेषस्योदाहरणम् ]

**वक्त्राः स्वभावमधुराः शंसन्त्यो रागमुल्बणम् ।**
**दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिता प्रियान् ॥ ३१६ ॥**

तत्रादौ 'अभिन्नक्रियं श्लेषमुदाहरति—'वक्रा' इति । वक्राः=मार्चीकृताः, कुटिलभाषणापराश्च स्वभावमधुराः=स्वभावेन प्रकृत्या मधुराः हृद्याः स्पृहणीयाः, मिष्टवादिन्यश्च । तथा उल्वणम्=उत्कृष्टम् रागम्=रक्तताम्, प्रेमानुरागञ्च शंसन्त्यः=सूचयन्त्यः [व्यञ्जयन्त्यः] प्रकाशयन्त्यश्च, एवम्भूताः कान्ताभिः=नायिकाभिः प्रेषिताः=सञ्चालिताः आनेतुं प्रयुक्ताश्च दृशः=चक्षूंषि दूत्यः=सखीप्रभृतयश्च प्रियान्=वल्लभान् कर्षन्ति=आवर्जयन्ति ।

अत्र वक्रादीनि विशेषणानि श्लिष्टानि, तद्विशेष्यभूतानां दृशां दूतीनां च 'कर्षन्ति' इति कर्षणक्रियया एकयैव सम्बन्ध इति अभिन्नक्रियः श्लेषः । किञ्चात्र वक्ष्यमाणलक्षणस्तुल्ययोगितालङ्कारोपीति तन्निर्वाहकत्वात्तस्याङ्गभूतोऽयं श्लेषः । परे तु—एकयैव कर्षणक्रियया वाक्यद्वयदीपनाद् दीपकस्यायमङ्गभूत इत्याहुः ॥ ३१६ ॥

[ अविरुद्धक्रियस्य श्लेषस्योदाहरणम् ]

**मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः ।**
**आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः ॥ ३१७ ॥**

अविरुद्धक्रियं द्वितीयं श्लेषमुदाहरति—'मधुरा' इति । मधुराः=मधुरस्वरोपेता हृद्याः='सर्वावस्थाविशेषेषु माधुर्यं रमणीयता' इत्युक्तलक्षणमाधुर्याख्यनायिकालङ्कारवत्यश्च रागवर्धिन्यः=उद्दीपकत्वात् प्रणयाविष्काराच्च रागम् अनुरागं प्रेमाणं वर्धयन्त्यः । कोमलाः=सुश्रवणीयाः, कोमलाङ्ग्यश्च [ मृद्ववयवाः ] । मदकलाः=वसन्तारम्भेण मदोन्मत्ताः [ मदजनितहर्षमधुराः ] 'मदो विकारः सौभाग्ययौवनाद्यवलेपजः' इत्युक्तरूपेणाङ्गनासम्बन्धिना मदेन कलाः उन्मत्ताः, एवम्भूताः, [ श्लिष्टविशेषणाः ] कोकिलागिरः=कोकिलानां पिकानां गिरः एव आकर्ण्यन्ते=श्रूयन्ते असितेक्षणाः=असिते ईक्षणे यासां ता नीलोत्पलनयनाः श्लिष्यन्ते=आलिङ्ग्यन्ते च= कामिभिरिति शेषः ।

अत्र 'आकर्ण्यन्ते श्लिष्यन्ते' इति क्रियाद्वयं प्रधानतयोपात्तम् तस्य मधुरा इत्यादिभिः श्लिष्टैः पदैः सह समुच्चयेन सम्बन्धः, सच परस्परमविरुद्ध इति अविरुद्धक्रियोऽयम् अभङ्गश्लेषः । पूर्ववदयमपि तुल्ययोगितापुष्टिकृत् इति तदङ्गभूत एव ॥ ३१७ ॥

[ विरुद्धक्रियस्य श्लेषस्योदाहरणम् ]

**रागमादर्शयन्नेष वारुणीयोगवर्धितम् ।**
**तिरोभवति घर्मांशुरङ्गजस्तु विजृम्भते ॥ ३१८ ॥**

विरुद्धक्रियं श्लेषमुदाहरति—'रागम्' इति । एष घर्मांशुः=अयं सूर्यः वारुणीयोगवर्धितम्=वारुणी पश्चिमा दिक् मदिरा च, तस्या योगः=सम्बन्धः पानञ्च, तेन वर्धितम् वृद्धिङ्गतम् रागम्=लौहित्यम् प्रेमाणञ्च आदर्शयन्=प्रकटयन् वर्धयंश्च तिरोभवति=अस्तं याति 'अङ्गजः तु' कामस्तु विजृम्भते=उद्रिक्तो भवतीत्यर्थः ।

---

१ दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ।
बाला प्रव्राजिका कारुः शिल्पिन्याद्याः स्वयं तथा ॥

इति ग्रन्थान्तरे संख्याताः ।

अत्र तिरोभवनजृम्भणक्रिये परस्परं विरुद्धे इति विरुद्धक्रियाश्लेषोऽयमभङ्गः पूर्ववत् तुल्ययोगितापरिपोषकरः ॥ ३१८ ॥

[ नियामकश्लेषस्योदाहरणम् ]

**निस्त्रिंशत्वमसावेव धनुष्येवास्य वक्रता ।**
**शरेष्वेव नरेन्द्रस्य मार्गणत्वञ्च वर्त्तते ॥ ३१६ ॥**

'सनियमं' श्लेषमुदाहरति—'निस्त्रिंशत्वम्' इति । अस्य नरेन्द्रस्य=प्रकृतस्य राज्ञः निस्त्रिंशत्वम्=निर्गतः त्रिंशतोऽङ्गुलिभ्य इति निस्त्रिंशः 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' [वा० २।२।१८] इति समासः । 'संख्यायास्तत्पुरुषस्य वाच्यः' [वा० ५।४।७३] इति समासान्तो डच् । 'निस्त्रिंशो निर्घृणे खड्गे' इति हैमः । ] तस्य भावः निस्त्रिंशत्वम् त्रिंशदङ्गुलयधिकपरिमाणवत्त्वं निर्दयत्वञ्च, असौ=खड्गे एव नतु हृदये इति भावः । वक्रता=वक्रस्य भावः ['वक्रं पुरभेदे वक्रः कुटिले क्रूरभौमयोः' इति हैमः] वक्रता कौटिल्यं क्रूरत्वञ्च धनुषि एव=नतु लोकव्यवहारे । मार्गणत्वम्=मार्गणस्य भावः मार्गणत्वं बाणत्वं याचकत्वञ्च शरेषु एव=बाणेष्वेव नतु स्वात्मनीति भावः, 'वर्त्तते' इति क्रियापदं सर्वत्र योज्यम् [ 'मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि' इति हैमः ]

अत्र सर्वत्र एवकारेण निस्त्रिंशत्वादिपदानां द्वितीयार्थो व्यवच्छेद्येषु निषिद्धतारूपेण प्रतीयन्ते इति पदानामनेकार्थत्वात् श्लेषः । स तु एवकारेण नियमप्रकाशनात् सनियमः, परमयं परिसङ्ख्यालङ्कारस्याङ्गभूतो नतु स्वप्रधानम् । परिसङ्ख्यालङ्कारलक्षणमुक्तं 'आचार्यमम्मटेन'-

किञ्चित् पृष्टमपृष्टं वा कथितं यत्प्रकल्पते ।
तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥ इति ।

सा चेयं वाच्या प्रतीयमाना चेति द्विधा भवति । यत्रान्यव्यवच्छेदः शब्दोपात्तः सा वाच्या । यत्र तु एवकाराद्यभावेऽपि अन्यव्यवच्छेदरूपनियमः अर्थसामर्थ्यादेव प्रतीयते सा प्रतीयमाना । तत्राद्या यथा—

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः ।
किञ्चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥

अत्र यशःप्रभृतेर्भूषणत्वादिकमागमतो ज्ञातमेव 'न रत्न' मित्यादि निषेध्यं शाब्दम् । द्वितीया यथा—

किमासेव्यं पुंसा सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ॥

अत्र शास्त्रप्रमाणज्ञातमपि गङ्गातटादि प्रश्ने सति सेव्यध्येयादितया क्रमेण कामिनीसेवातद्ध्यानपापहिंसानां निषेधायोक्तम् । निषेधश्चात्र गम्य इति प्रतीयमाना परिसंख्या ।

एवमेव कादम्बर्यादिग्रन्थेषु 'यस्मिंश्च राजनि परिपालयति मही चित्रकर्मसु वर्णसङ्कराः चापेषु गुणच्छेदाः' इत्यादि गम्यो निषेधः ।

अत्रापि च चित्रकर्मस्वेव वर्णानां नीलपीतकपिशादीनां सङ्कराः मिश्रणानि ननु प्रजासु वर्णानां ब्राह्मणक्षत्रियादीनां सङ्करा इति स्फुटमर्थद्वयं नियमश्च प्रतीयमानः अतो नियमश्लेषार्थपरिसंख्ययोरङ्गाङ्गिभावो बोध्यः ।

ननु—'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते' इति मीमांसाशास्त्रप्रसिद्धा नियमपरिसङ्ख्ययोर्भेदप्रतीतिः तत्कथमनयोरेकत्र समावेशसम्भव इति चेत् ? न, आलङ्कारिकमते नियमपरिसङ्ख्ययोर्भेदाभावात् । उक्तञ्च—'नियमोऽप्यत्र दर्शने उक्तलक्षणाक्रान्तत्वात्परिसङ्ख्यैव' इत्युद्योते स्पष्टम् । 'परि' शब्दोऽत्र वर्जनार्थः,¹ संख्या=बुद्धिः । तेन वर्जनबुद्धिः 'परिसङ्ख्या' इत्यन्वर्थेन संज्ञेति कृतमतिप्रासङ्गिकेन ॥ ३१९ ॥

[ नियमाक्षेपरूपोक्तिश्लेषस्योदाहरणम् ]

**पद्मानामेव दण्डेषु कण्टकस्त्वयि रक्षति ।**
**अथवा दृश्यते रागिमिथुनालिङ्गनेष्वपि ॥ ३२० ॥**

'नियमाक्षेपरूपोक्तिश्लेषम्' उदाहरति—'पद्मानाम्' इति । [ हे ! राजन् ! ] त्वयि रक्षति=त्वयि त्रातरि सति पद्मानाम् एव=कमलानाम् एव दण्डेषु=नालेषु कण्टकः=तीक्ष्णाग्रावयवः ननु तव दण्डेषु=दण्डनामकोपायेषु कण्टकः=क्षुद्रारिः रोमाञ्चश्च [ 'रोमाञ्चे क्षुद्रशत्रौ च तरोरङ्गे च कण्टक' इति शाश्वतः ] अथवा रागिमिथुनालिङ्गनेषु=रागि अनुरक्तं यत् मिथुनं स्त्रीपुंसयोर्द्वन्द्वम् तस्य आलिङ्गनेषु क्रोडीकरणेषु 'अपि' दृश्यते=[कण्टको] रोमाञ्च आलोक्यत इत्यर्थः ।

'अत्र पद्मानामेव' इति नियमस्य 'अथवा' इत्यादिना आक्षेपरूपोक्तिरिति 'नियमाक्षेपरूपोक्तिश्लेषः' । सोयं प्रथमार्धे परिसङ्ख्यायाः प्रधानत्वात् द्वयोरर्धयोश्चैकत्र निहितकण्टकस्य वाक्यद्वयोर्दीपनेन दीपकस्य प्रधानत्वाच्च द्वयोरेवालङ्कारयोरङ्गभूतः ॥ ३२० ॥

[ अविरोधिश्लेषस्योदाहरणम् ]

**महीभृद् भूरिकटकस्तेजस्वी नियतोदयः ।**
**दक्षः प्रजापतिश्चासीत् स्वामी शक्तिधरश्च सः ॥ ३२१ ॥**

'अविरोधिश्लेषम्' उदाहरति—'महीभृत्' इति । सः महीभृत्=राजा भूरिकटकः=प्रचुरस्कन्धावारः तेजस्वी=प्रतापवान् तथा नियतोदयः=सततैश्वर्यवान् दक्षः=निपुणः प्रजापतिः=प्रजापालकः स्वामी=प्रभुः शक्तिधरः=प्रभावोत्साहमन्त्रशक्तिमान् आसीत् इत्येकस्मिन् पक्षेऽर्थः । द्वितीये पक्षे तु—महीभृत्=पर्वतः भूरिकटकः विशालनितम्बः तेजस्वी=किरणवान् नियतोदयः=प्रतिदिवसं जायमानोद्गमः दक्षः=तदाख्यो राजा मुनिविशेषश्च प्रजापतिः=सृष्टिकर्ता

१ 'परेर्वर्जने' [ ८ । १ । ५ ] इति पाणिनिः ।

२ 'यत् साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' इति श्रीमद्भगवद्गीतावचनादित्यर्थः ।

स्वामी=विशाखः शक्तिधरः=शक्तिनामकास्त्रविशेषधारी आसीदित्यर्थः।

अत्र महीभृत्तेजस्विदक्षस्वामिशब्दाः राजपक्षे विशेषणानि, पक्षान्तरे च विशेष्यभूताः सन्तीति कृत्वाऽन्वयो ज्ञेयः। एतेषां श्लिष्टानां महीभृदादिपदार्थानां परस्परसम्बन्धे विरोधाभावात् 'अविरोधी श्लेषो' ऽयमलङ्कारः। 'स्वामी प्रभुविशाखयोः' इति मेदिनी ॥ ३२१ ॥

[ विरोधिश्लेषस्योदाहरणम् ]

**अच्युतोऽप्यवृषच्छेदी राजाप्यविदितक्षयः।**
**देवोऽप्यविबुधो जज्ञे शङ्करोऽप्यभुजङ्गवान् ॥ ३२२ ॥**

—※—

इति श्लेषचक्रम्

—※—

विरोधिश्लेषमुदाहरति—'अच्युतः' इति। अच्युतः=सन्मार्गादपरिभ्रष्टः विष्णुश्च। अवृषच्छेदी=वृषः धर्मः वृषाख्यः कंसानुचरश्च तस्य छेदी ध्वंसकृत् यो न भवतीति स तथोक्तः राजा=भूपः चन्द्रश्च अपि अविदितक्षयः=न विदितः ज्ञातः क्षयः सम्पत्तिनाशः क्षयाख्यरोगश्च येन स तथाविधः देवः=राजा अमरश्चापि शङ्करः=शुभकारी हरश्चापि अभुजङ्गवान्=[विट] दुर्जनरहितः सर्परहितश्च जज्ञे=स प्रादुरभूत्। अत्र 'स' इति कर्तृपदमध्याहार्यम्।

अत्र अच्युतादिपदानां द्वितीये विष्ण्वादिरूपेऽर्थे वृषच्छेद्यादिपदलभ्यद्वितीयस्यार्थस्य अभावो विरोधीति विरोधसार्थोऽयं श्लेषो विरोधाभासस्याङ्गम्।

अभिन्नपदश्लेषः, भिन्नपदश्लेषः अभिन्नक्रियश्लेषः, अविरुद्धक्रियश्लेषः, विरुद्धक्रियश्लेषः, नियामकश्लेषः, नियामकाक्षेपरूपोक्तिश्लेषः, अविरोधिश्लेषः, विरोधिश्लेषः, इत्याचार्येणात्र [६] नव प्रकारः श्लेषो दर्शितः। ग्रन्थान्तरेषु प्रकारान्तरेणाप्ययमुक्तः। तथाहि— **'रुद्रट'** कृतकाव्यालङ्कारे 'अधिकश्लेषो' यथा—

प्रेम्णा निधाय मूर्धनि वक्रमपि बिभर्त्ति यः कलावन्तम्।
भूतिञ्च वृषारूढः स एव परमेश्वरो जयति ॥

यः कलावन्तम्=विदग्धं चन्द्रं वा, वक्रम्=अनृजुहृदयम् कलाशेषं वा, वृषे=धर्मे वृषभे च समारूढः, भूतिम्=ऐश्वर्यं भस्म च वहति। कः, परमेश्वरः नायको राजा, महादेवश्च। अत्र राजापेक्षया महादेवोऽधिकः देवत्वात् नृभ्यो हि देवा अधिका भवन्ति विशेषणान्यपि च भिन्नार्थानीत्यधिकश्लेषोऽयम्। इत्याद्यन्यदपि। 'कुवलयानन्दे' तु प्रकृतश्लेषः, अप्रकृतश्लेषः, प्रकृताप्रकृतश्लेष इति त्रैविध्यं प्रपञ्चितम्। तथाहि—

त्राता काकोदरो येन द्रोग्धापि करुणात्मना। पूतनामारणाख्यातः स मेऽस्तु शरणं प्रभुः ॥
नीतानामाकुलीभावं लुब्धैर्भूरि शिलीमुखैः। सदृशे वनवृद्धानां कमलानां तदीक्षणे ॥
असावुदयमारूढः कान्तिमान् रक्तमण्डलः। राजा हरति सर्वस्य हृदयं मृदुलैः करैः ॥ इति ॥

---

**(प्र०)** श्लेषस्य किं लक्षणम्? के च प्रकाराः? कानि चोदाहरणानि? कथञ्च तत्र तत्र सामान्यविशेषलक्षणसङ्गतिः? श्लेषविषये प्राचामर्वाचां च कीदृशि मतानि? इति सर्वं मूलग्रन्थतद्व्याख्यानुसारं विविच्य निरूपणीयम्? **(उ०)** अस्य प्रकरणान्तम्।

१ अभङ्गश्लेषः। २ भङ्गपदश्लेषः।

तत्राद्ये—स्तोतव्यत्वेन प्रकृतयो रामकृष्णयोः श्लेषः। द्वितीये—उपमानत्वेनाऽप्रकृतयोः पद्महरिणयोः श्लेषः। तृतीये—'राजा हरति लोकस्य' इति चन्द्रवर्णनप्रस्तावे प्रकृतस्य प्रत्यग्रोदितचन्द्रस्य अप्रकृतस्य नवाभिषिक्तस्य नृपतेः श्लेषः।

तत्र सभङ्गश्लेषः शब्दालङ्कारः। अभङ्गश्लेषस्तु अर्थालङ्कारः इत्यलङ्कारसर्वस्वकारादयः। सभङ्गोऽभङ्गश्चार्थालङ्कार एवेति **औद्भटाः**। उभयमपि शब्दालङ्कारः तृतीयस्तु अर्थालङ्कार इति **मम्मटभट्टाः**। उभयमप्यर्थालङ्कार एव इति **दीक्षिताः**। एतद्विषयकः सोपपत्तिः प्रपञ्चस्तु मदीय 'काव्यप्रकाशप्रभाया' मालोकनीयः॥ ३२२॥

[ विशेषोक्तिलक्षणम् ]

**गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम्।**
**विशेषदर्शनायैव सा विशेषोक्तिरिष्यते॥ ३२३॥**

---

[इदं ३२२ श्लोकस्य २४७ पृष्ठे टिप्पणं (विवृतिः) द्रष्टव्यम्] यथा वा—[हरविजये]

अशसा तल्पलोपात्तमनोहरतरत्विषम्।
मातङ्गपृष्ठवंशोर्वीमिव विस्तृतदीर्घिकाम्॥

यदा दौत्यं स्वीकृत्य गणाधिपोऽमरावतीं गतवान् तदा तस्या वर्णनमिदम्। कीदृशीं तां देवनगरीम् 'मातङ्गपृष्ठवंशोर्वीम् इव विस्तृतदीर्घिकाम्' विस्तृताः विशालाः दीर्घिकाः पुष्करिण्यो यत्र तादृशीम्। मातङ्गो हस्ती तस्य पृष्ठवंशः पृष्ठनाडी तस्या उर्वी स्थलीमिव अथवा पृष्ठवंश एव उर्वी पृथिवी तामिव। विशालत्वेन साम्यं ज्ञेयम्। कीदृशीं मातङ्गपृष्ठवंशोर्वीम् विस्तृतदीर्घिकाम्=दीर्घैव दीर्घिका विस्तृता चासौ दीर्घिका तां तथाभूताम्। पुनर्नगरीं विशिनष्टि 'अशसा' इत्यादिना। 'अशसा' इति बाहुल्यार्थेऽव्ययम्। अशसा बाहुल्येन तल्पानां महावेश्मनां यः लोपः विनाशः सः तल्पलोपः तल्पलोपस्याभावः 'अतल्पलोपम्' अर्थाभावेऽव्ययीभावः। महावेश्म विनाशाभाव इत्यर्थः, तेन आत्ता प्राप्ता मनोहरतरा अत्यन्तं हृद्या त्विट् श्रीः [ शोभा ] यया ताम् तादृशीमिति नगरपक्षे। [ गजपक्षे ] तु तल्पला पृष्ठवंशस्य पार्श्वभागः तया उपात्ता गृहीता मनोहरतरा त्विट् कान्तिर्यया ताम् मातङ्गपृष्ठवंशोर्वीम्। एवमत्र यथायथं सभङ्गाभङ्गश्लेषो ज्ञेयः। यथा वा [तत्रैव]

शुभप्रस्तावनाहृद्यां प्रख्यातोदात्तनायकाम्। नानार्थप्रकृतिश्लाघ्यां नाटकप्रक्रियामिव॥

अत्र—शुभस्य सुकृतस्य प्रस्तावना प्रारम्भः तया हृद्यामिति नगरीपक्षे। शुभा सुलक्षणा चासौ प्रस्तावना नाटकस्य आमुखम् इति नाटकप्रक्रियापक्षे। प्रख्यातः प्रसिद्धः [ बलादिसम्पत्त्या ] उदात्तः नायकः स्वामी। पक्षान्तरे कथापुरुषः [अभिनयनेता] च यत्र ताम्। नानार्थाः बहुविधधनाः प्रकृतयोऽमात्यादयः तैः श्लाघ्याम्। पक्षान्तरे—नाना अर्थप्रकृतयः=पञ्चबिन्द्वाख्याः दशरूपकादिषु प्रपञ्चिताः ताभिः श्लाघनीयामिति 'अभङ्गश्लेषः'। बिन्द्वादीनां प्रपञ्चो मदीयदशरूपकटीकायाम्।

यथा वा—[ **देवेश्वर**कृत 'कविकल्पलतिकायाम्' वनादिवर्णनरीतिबोधने ]—

सश्रीकाननरोचिष्णुः कान्तारचितवैभवः।
अधिकासारसारश्री विधुनीतश्रियं वहन्॥—

अथ विशेषोक्तिं लक्षयति—'गुण०' इति । विशेषदर्शनाय एव=वर्णनीयस्य [ प्रस्तुतस्य ] वीर्याद्युत्कर्षातिशयो 'विशेषः' तस्य [ विशेषस्य ] दर्शनाय प्रतिपादनाय गुणजातिक्रियादीनाम्=गुणाः शुक्लाद्याः, जातिर्गोत्वादिः, क्रिया पाकादिः, आदिना द्रव्यपरिग्रहः, तेषाम् अर्थात् वर्णनीयस्यैव प्रारिप्सितकर्मसाधनाय उपकरणभूतानाम् यत् तु=यदेव वैकल्यदर्शनम्=कार्यसिद्धौ उपयोगित्वाभावप्रतिपादनम् अनपेक्षणीयत्वनिरूपणं वा सा=कविसमाजे प्रसिद्धा विशेषोक्तिः=रागातिशयादेर्विशेषस्य उक्तिः, विशेषस्य नवीनप्रकारस्य वा उक्तिः कञ्चिद् विशेषं प्रतिपादयितुं वोक्तिरित्यन्वर्थसंज्ञाबलाद् 'विशेषोक्ति' रिति नामालङ्कार इष्यते=मन्यते सूरिभिरिति शेषः ।

लक्षणवाक्ये गुणादीनामिति भेदकथनपरं नतु स्वरूपनिर्वाहकम् । पदार्थमात्रगतवैकल्यवचनस्यैवास्याः स्वरूपत्वात् । अतिशयोक्त्यलङ्कारे प्राकरणिकस्य [ प्रस्तुतस्य ] विशेषदर्शनसत्वेऽपि गुणादीनां वैकल्यप्रदर्शनं नास्ति, अत्र त्वस्ति इत्यतिशयोक्तिविशेषोक्त्योर्विशेषः । 'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्ति' रिति [काव्या० ३।२३] **वामनः** । रागातिशयादेर्विशेषस्योक्तिर्यत्र सा विशेषोक्तिरिति **चक्रवर्त्ती** । अन्ये तु आरोपितवैशिष्ट्यं

---

अत्र श्रीसहितं काननं, सश्रीकम् आननं मुखञ्च । [ तेन रोचिष्णुः भ्राजिष्णुः ] कान्तारो दुर्गमं वर्त्म तत्र चितं व्याप्तं वैभवं यस्य, कान्तया रचितं वैभवं यस्येति [पक्षान्तरे] अधिकासारम्=कासारे अधि [ विभक्त्यर्थेऽव्ययीभावः ] आसारः=धारासम्पातः तेन सारा उत्कृष्टा श्रीः शोभा यस्य, अधिका आसारा व्यापिनी सारभूता श्रीर्यस्येति वा । विशिष्टा धुनी नदी तया इतां प्राप्तां श्रियं शोभाम्, पक्षे विधुना चन्द्रेण विष्णुना वा नीतां धृतां श्रियं लक्ष्मीं शोभाञ्च वहन् धारयन् इति अत्रापि अभङ्गश्लेषो ज्ञेयः ।

यथा वा [ भट्ट 'श्रीकृष्ण'राजवैद्यकृतायां 'सिद्धभैषज्यमणिमालायाम्' ]

यः प्राप्यते वेगनिरोधशीलिभिर्निरन्तरं स्निग्धगुरूपसेवया ।
स सञ्चितान्तर्मलपातने पटुर्मयाऽतिसारः किल कोपि वर्ण्यते ॥

अत्र—वेगनिरोधः=मलमूत्रादीनां स्वाभाविकप्रवाहरोधः । स्निग्धगुरूपसेवया=स्निग्धा आज्यतैलादिसंस्कृताः चिक्कणा गरिष्ठा ये भोज्यपदार्था गोधूमचूर्णसाराद्याः तेषां निरन्तरसेवनेन । सञ्चितस्य अन्तर्मलस्य शरीरास्थितिहेतुभूतस्य गूथस्य पातेन निःसारणे पटुः तीव्रः अप्रतिहतपराक्रमः एवम्भूतो योऽतिसार इति तदाख्यरोगपक्षे । पक्षान्तरे तु—अतिसारयति सञ्चालयति नियमयतीति यावत् अतिसारः=पुरुषोत्तमो भगवान् अथवा—अति=अतिशयेन सारः क्षराक्षराभ्यामतीतत्वात् श्रेष्ठतमः । उक्तञ्च गीतायाम्—

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ इति

वेगनिरोधशीलिभिः=कामादिवेगवशीकरणतत्परैः । स्निग्धगुरूपसेवया=यथाविधि निष्कपटगुरुभजनेन सञ्चितं यदन्तर्मलं अनेकजन्मान्तरसञ्चिताः पापवासनाः तत्पातने समूलोन्मूलने पटुः निपुणः शक्तिमानित्यर्थः, कोपीत्यनिर्वचनीयमायाशक्तिनियामक इत्यर्थः ।

'रूपक'मेवैतादिति मन्यन्ते। एतद्विपर्यये तु 'विशेषोक्ति' रिति। अनेनैवाशयेन 'विशेषोक्ति-रखण्डेषु कारणेषु फलावच' इत्युक्तं श्री**मम्मटभट्टेन**।

यत्तु—नव्यास्तु सत्यपि कारणे कार्याभावो विशेषोक्तिरित्याहुः, तदलङ्कारसञ्ज्ञाया अन्वर्थत्वाभावादयुक्तमित्यर्थमाह कश्चित्, तत्तस्याज्ञानविलासितम्। तथात्वेऽपि विशेषत्वानपायात्। नहि सति पुष्कलकारणे कार्यसामान्यनियम इति तदभावेऽपि कार्यदर्शने तत्र विशेषत्वं नास्तीति कोऽप्यननुन्मत्तो ब्रूयात्। तथा च नवीनमतेऽपि तादृशविशेषस्य उक्तिः विशेषोक्तिरित्यन्वर्था संज्ञा न हीयते ॥ ३२३ ॥

[ गुणविशेषोक्तेरुदाहरणम् ]

**न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः।**
**तथापि जितमेवासीदमुना भुवनत्रयम् ॥ ३२४ ॥**

तत्रादौ 'गुणवैकल्यविशेषोक्ति' मुदाहरति—'न' इति। पुष्पधन्वनः=पुष्पं धनुर्यस्य सः तस्य कामदेवस्य [ 'धनुषश्च' (५।४।१३२) इति सूत्रेण धनुरन्तस्य बहुव्रीहेरनङादेशः ] आयुधम्=अस्त्रम् 'न कठोरम् नवा तीक्ष्णम्' पाषाणादिवत् कठिनं खड्गादिवच्च उग्रमपि नास्ति पुष्पमयत्वात् इति निश्चितमेतत्, तथापि=योग्योपकरणाभावेऽपि अमुना=पुष्पधन्वना भुवनत्रयम्=भूर्भुवःस्वरात्मकं लोकत्रयम् जितम् एव=पराजितं वशीकृतमेव आसीत्=अभूत्।

अत्र जयसाधनस्यायुधस्य कठोरत्वं तीक्ष्णत्वञ्च गुणोऽवश्यमपेक्षणीयः अन्यथा जयानुपपत्तेः, परमत्र तादृशगुणमनपेक्ष्यैव कामेन भुवनत्रयं जितमिति जेतुस्तस्य वीर्योत्कर्षः प्रतीयते, आयुधस्य कठोरत्वतीक्ष्णत्वरूपयोर्गुणयोर्वैकल्यप्रतिपादनाच्च गुणवैकल्यरूपा विशेषोक्तिरियम्।

इदन्तु बोध्यम्—प्रसिद्धकारणनिषेधेऽपि तत्कार्यरूपफलस्य व्यक्तिः प्रकाशनं [कथनं] विभावना, यत्र तु कारकाणां सामग्र्येऽपि क्रियाफलस्य किञ्चिद्विशेषमवगमयितुमनुत्पत्तेरुपनिबन्धः, सा विशेषोक्तिरित्यनयोर्विशेषः। अनेनैवाभिप्रायेण 'उद्भटभट्ट' इत्थं निबबन्ध—

'यत्सामग्र्येऽपि शक्तीनां फलानुत्पत्तिबन्धनम्।
विशेषस्याभिधित्सातस्तद्विशेषोक्तिरुच्यते' ॥ इति ॥ ३२४ ॥

[ जातिविशेषोक्तेरुदाहरणम् ]

**न देवकन्यका नापि गन्धर्वकुलसम्भवा।**
**तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥ ३२५ ॥**

'जातिवैकल्यविशेषोक्ति'मुदाहरति—'न' इति। एषा=समीपवर्त्तिनी नायिका देवकन्यका न=अप्सरा नास्ति न अपि गन्धर्वकुलसम्भवा=गन्धर्वो देवयोनिविशेषः तदीयवंशजापि नास्ति, तासामपि सौन्दर्यातिशयवत्त्वेन तपोभङ्गकरणे शक्तिमत्त्वात्। तथापि एषा वेधसः=प्रजापतेर्ब्रह्मणोऽपि तपोभङ्गम्=तपःक्षयम् विधातुम्=कर्त्तुम् अलम्=समर्थास्ति।

अत्र देवत्वं गन्धर्वत्वञ्च जातिविशेषः तदपेक्षां विनैव तपोभङ्गात्मकसामर्थ्यवर्णनेन

---

**(प्र०)** विशेषोक्तेर्लक्षणभेदोदाहरणानि प्रपञ्चय? विभावनाविशेषोक्त्योर्विशेषञ्च स्फुटं सोपपत्ति ब्रूहि? **(उ०)** अस्य पृ० पं० ६, २०।

वर्णनीयाया नायिकायाः सौन्दर्याद्यतिशयो निरूपितः, तत इयं 'जातिवैकल्यविशेषोक्तिः'। वर्णनीयगताया जातेर्वैकल्यदर्शनात्। देव्यो गन्धर्व्यश्च तपोभङ्गं कुर्वन्तीति पुराणेतिहास-प्रसिद्धमेतद् ॥ ३२५ ॥

[ क्रियावैकल्यविशेषोक्तेरुदाहरणम् ]

**न बद्धा भ्रुकुटिर्नापि स्फुरितो दशनच्छदः ।**
**न च रक्ताऽभवद् दृष्टिर्जितञ्च द्विषतां बलम् ॥ ३२६ ॥**

क्रियावैकल्यविशेषोक्तिमुदाहरति—'न बद्धा' इति। [कस्यचित् प्रस्तुतस्य वीरस्य वर्णनमिदम्] भ्रुकुटिः न बद्धा=नारोपिता, दशनच्छदः अपि=अधरोपि न=नैव स्फुरितः=क्रोधवशात् सकम्पनो न जातः दृष्टिः=चक्षुरित्यर्थः, रक्ता=लोहिता न च अभवत्=नैव आसीत् तथापि द्विषताम्=शत्रूणाम् बलम्=सैन्यम् जितम्=वशीकृतमित्यन्वितार्थः।

अत्र बन्धनं स्फुरणञ्च क्रिया, तयोर्वैकल्यनिरूपणेन वर्णनीयस्य राजादेर्वीरस्य उत्कर्षो व्यक्तीकृतः, एवञ्च क्रियावैकल्यविशेषोक्तिरियम्। वस्तुतस्तु—रक्तत्वमत्र गुणः, तेषां सर्वेषां वैकल्यप्रदर्शनेन क्रियागुणवैकल्याभ्यां द्वयोर्विशेषोक्त्योः सङ्करः ॥ ३२६ ॥

[ द्रव्यवैकल्यविशेषोक्तेरुदाहरणम् ]

**न रथा न च मातङ्गा न हया न च पत्तयः ।**
**स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥ ३२७ ॥**

द्रव्यवैकल्यविशेषोक्तिमुदाहरति—'न रथा' इति। स्पष्टम्। स्त्रीणां जयसाधनानि रथादीनि न सन्ति तथापि ताभिः अपाङ्गदृष्ट्यैव=केवलं कटाक्षपातेनैव भुवनत्रयं जीयते=वशीक्रियते इति रथादिद्रव्यवैकल्यनिरूपणरूपत्वादियं 'द्रव्यवैकल्यविशेषोक्ति' रुच्यते ॥३२७॥

[ विशेषोक्तेः प्रकारान्तरम् ]

**एकचक्रो रथो यन्ता विकलो विषमा हयाः ।**
**आक्रामत्येव तेजस्वी तथाप्यर्को नभस्तलम् ॥ ३२८ ॥**
**सैषा 'हेतुविशेषोक्ति'स्तेजस्वीति विशेषणात् ।**
**अयमेव क्रमोऽन्येषां भेदानामपि कल्पते ॥ ३२९ ॥**

—*—

इति विशेषोक्तिचक्रम्।

—*—

गुणादि वैकल्येन विशेषोक्तेर्भिदा दर्शिताः सम्प्रति आदिपदग्राह्यान् भेदान् प्रतिपादयितुं दिग्रूपेण 'हेतुविशेषोक्तिं' निरूपयन्नुपसंहरति—'एकचक्र' इति। रथः=चक्री एकचक्रः=एकं चक्रं यस्य स तथाविधः, यन्ता=रथचालकः सारथिः विकलः=पंगुः अनूरुत्वात्, हयाः=रथ्याः वाजिनः विषमाः=अयुग्माः सप्तसंख्याकत्वात्, तथापि अर्कः=भानुः नभस्तलम्=गगनमण्डलम् आक्रामति एव=उल्लङ्घयत्येव। अत्रैवार्थे हेतुमाह—यतः तेजस्वी=प्रतापी।

अत्रेतरेषामतिविपुलाध्वक्रमणे बहुचक्रो रथः, अविकलाङ्गो यन्ता, अविषमाः [समानगतेरपेक्षणात्] हयाश्चापेक्षणीया भवन्ति, सूर्यस्य तु तदपेक्षां विनापि मार्गगमनरूपप्रारिप्सितकार्यसिद्धिरिति वर्णनीयस्य सूर्यस्य उत्कर्षातिशये तेजस्वित्वं हेतुरिति हेतुगर्भितवि-

शेषणोपन्यासमुखेन सूर्यस्य विशेषप्रतिपादनात् 'हेतुविशेषोक्ति'रियम्। अत्र च रथादिनिष्ठ-बहुचक्रत्वादिधर्माणां वैकल्यमप्यस्ति अतो नात्र सामान्यलक्षणाऽसङ्गतिरिति ध्येयम्।

स्वयं हेतुविशेषोक्तिं स्फुटीकरोति—'सा एषा' इति। तेजस्वी इति विशेषणात्=हेतुगर्भात् विशेषणात् 'सा एषा हेतुविशेषोक्तिः' ज्ञेया इति शेषः। अन्येषाम् अपि भेदानाम्=विशेषोक्तेरिहानुक्तानामपि विशेषाणाम् कल्पने=रचनायाम् अयम् एव क्रमः=दर्शितो नियमः, ईदृश्येव रीतिरित्यर्थः, अस्ति इति शेषः। विशेषोक्तेरुदाहरणान्तराणि यथा—

अद्वैत! सच्चिदानन्द! सद्गुरो! त्वयि सर्वदा।
हृदि सत्यपि धिक् कान्तां तच्चिन्तयति सन्ततम्॥ [साहित्यसारे]

तत् हृद् यतः सन्ततमपि कान्तां रमणीमेव चिन्तयति अतस्तादृशं तत् प्रति धिगस्त्विति अन्वयः। अप्यन्तं स्पष्टम्। अत्र तादृशे गुरौ हृदि विद्यमानेऽपि विषयवासनाभावात्मककार्यानुत्पत्तिरूपा विशेषोक्तिः। यथा वा [काव्यप्रकाशे]—

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोस्त्ववार्यवीर्याय तस्मै मकरकेतवे॥

अत्र अवार्यवीर्यत्वं शक्तिमत्त्वे कार्याभावरूपे हेतुरुक्तः अत इयम् 'उक्तनिमित्ता' विशेषोक्तिः कथ्यते। यथा वा [कुवलयानन्दे]—

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः। अहो दैवगतिश्चित्रा तथापि न समागमः॥

अत्र अनुरागादिरूपे समागमकारणे सत्यपि समागमाभावरूपकथनं विशेषोक्तिः। परमियमपि दैवगतिरूपस्य वैचित्र्यस्योपादानाद् उक्तनिमित्तैव। अनुक्तनिमित्तापि [काव्यप्रकाशे] यथा—

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपथं पराप्ते।
श्लथीकृताशेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा॥

अत्र निद्रानिवृत्तिसूर्योदयादिरूपकारणकलापसद्भावेऽपि आलिङ्गनपरित्यागरूपकार्याभावोक्तिर्विशेषोक्तिः। परं निमित्तस्य अनुरागातिशयस्यानुक्तेः अनुक्तनिमित्तेयम्। यथा वा [रसगङ्गाधरे]—

उपनिषदः परिपीता गीतापि च हन्त! मतिपथं नीता।
तदपि न हा! विधुवदना मानससदनाद्बहिर्याति॥

अत्रोपनिषदर्थविमर्शरूपे सकलसंसारानित्यत्वबोधे प्रसिद्धहेतौ सत्यपि विरतेरनुत्पत्तिदर्शनात् विशेषोक्तिः। परन्त्वत्रापि निमित्तं [रागान्धं चित्तम्] नोक्तमित्यनुक्तनिमित्ता ज्ञेया। यथा वा [साहित्यकौमुद्याम्]—

त्वां शीलरूपचरितैः परमप्रकृष्टसत्त्वेन सात्त्विकतया प्रबलैश्च शास्त्रैः।
प्रख्यातदेवपरमार्थविदां मतैश्च नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम्॥

श्रीभगवन्तं कृष्णम्प्रति भक्तस्योक्तिरियम्। अत्र शीलादिषु बोधकारणेषु सत्स्वपि तत्कार्यस्य बोधस्यानुदयाद् विशेषोक्तिः। परमत्र आसुरीप्रकृतिर्हेतुरुक्तः। अनयैव दिशा तत्र तत्रोह्यम्॥ ३२८, ३२९॥

'इति' इति। विशेषोक्तिसमुदायः समाप्त इत्यर्थः।

———

[ तुल्ययोगिताया लक्षणम् ]

**विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित् ।**
**कीर्त्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥ ३३० ॥**

क्रमप्राप्तां 'तुल्ययोगितां' लक्षयति—'विवक्षितगुणोत्कृष्टैः' इति । विवक्षिताः=प्राकरणिक[प्रस्तुत]गतत्वेन निरूपयितुमिष्टा ये गुणाः स्तुतिहेतुभूताः निन्दाहेतुभूता वा धर्माः तैः उत्कृष्टैः अप्रस्तुतैः [सह] समीकृत्य=समानकक्षतां नीत्वा कस्यचित्=प्रस्तुतस्य वस्तुनः स्तुतिनिन्दार्थम्=स्तुत्यर्थं निन्दार्थं वा यत् कीर्त्तनम् वर्णनम्, सा 'तुल्ययोगिता' इति नामालङ्कृतिः मता सूरिभिरिति शेषः । 'तुल्ययोगिता' इत्यन्वर्थेयं संज्ञा 'तुल्या योगिता अन्वयो यत्र' इति । वस्तुतस्तु—तुल्यश्चासौ योगः सम्बन्धोऽन्वयो वेति तुल्ययोग एकधर्मान्वयः इत्यर्थः, सोऽस्ति येषां [प्राकरणिकानाम् अप्राकरणिकानां वा] ते तुल्ययोगिनः तेषां भावस्तत्ता। एवञ्च—'केवलप्रकृतानां केवलाप्रकृतानां वा स्तुतिनिन्दार्थं यद् गुणक्रियादिरूपैकधर्मान्वयत्वं तत् तुल्ययोगितालङ्कारत्व'मिति निष्पन्नं लक्षणम्। उक्तञ्च 'जयदेवेन' 'गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता' इति । सूत्रे [कारिकायां] 'विवक्षितगुणोत्कृष्टै'रित्यत्र बहुवचनमविवक्षितम् । एतेन द्वाभ्यामेकेन वाऽप्रस्तुतेन समीकरणेपि न तुल्ययोगितास्वरूपे क्षतिः ।

दीपके वाक्यान्तरस्थपदस्य अनुषङ्गादिना वाक्यान्तरीयार्थोद्दीपकत्वम्, अत्र तु स्तुतिनिन्दारूपार्थसमीकरणमित्युभयोर्विशेषः। 'अप्पय्यदीक्षिता'स्तु—'तुल्ययोगितायां त्वेकं प्रस्तुतमन्यदप्रस्तुतमितिविशेषाग्रहणात् सर्वोद्देशेनैव धर्मान्वय इति विशेषः । अयञ्चापरोऽनयोर्विशेषः—उभयोरनयोरुपमालङ्कारस्य गम्यत्वाविशेषेऽपि अत्र [दीपके] अप्रस्तुतमुपमानम् प्रस्तुतमुपमेयमिति व्यवस्थित उपमानोपमेयभावः, तत्र [तुल्ययोगितायां] तु विशेषग्रहणादैच्छिकः स इति' इत्याहुः ।

प्रकृताप्रकृतयोरपि साधारणधर्मस्य सकृदुपादाने [प्रथमं] दीपकम्, प्रकृतानामेव अप्रकृतानामेव वा साधारणधर्मस्य सकृदुपादाने तुल्ययोगितेत्यनयोर्भेद इति सरलः पन्थाः ।

विवक्षितगुणोत्कृष्टैरप्रस्तुतैरेव तुल्ययोगितेति तु न नियमः, प्रस्तुतेनापि प्रस्तुतसमीकरणे तुल्ययोगिताङ्गीकारात् । यथा—

कटाक्षा मधुरालापा विलासास्ते च ते शुभे ! ।
जगज्जये प्रवृत्तस्य कन्दर्पस्य महद्बलम् ॥ इति ।

अत्र सर्वेऽपि कटाक्षाद्याः प्रस्तुताः ।

ननु—नवीनमतानुसारेण प्रकृतानामप्रकृतानां वा एकधर्मान्वयित्वरूपायास्तुल्ययोगितायाः स्वीकारे दीपकस्य निर्विषयत्वं स्याद् इति चेन्न दण्डिमते वाक्यान्तरस्थपदानामनुषङ्गादिना वाक्यान्तरार्थोद्दीपनत्वेनैव दीपकव्यवहाराङ्गीकारात् तुल्ययोगितायाञ्च तथात्वाभावात्। उक्तञ्चैतत्पूर्वमपि स्पष्टीकरणार्थं पुनरिहोक्तम् ॥ ३३० ॥

[ स्तुतौ तुल्ययोगिताया उदाहरणम् ]

**यमः कुबेरो वरुणः सहस्राक्षो भवानपि ।**
**बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम् ॥ ३३१ ॥**

(प्र०) तुल्ययोगितां लक्षणादिभिः सम्यक् स्पष्टीकुरु ? (उ०) अस्य० पृ० पं० ३ ।

तत्र स्तुतौ तुल्ययोगितामुदाहरति—'यम' इति । यमः=कृतान्तः कुबेरः=यक्षराट् वरुणः=यादसां पतिः सहस्राक्षः=इन्द्रः तथा भवान्=राजा अपि अनन्यविषयाम्=न अन्यो यमादिभिन्नो विषयः गोचरो यस्याः तां तथाभूताम् श्रुतिम्=प्रसिद्धिम् आख्यामित्यर्थः, एते सर्वे बिभ्रति=धारयन्ति ।

अत्र लोकपालत्वरूपो गुणः वर्णनीयत्वेन प्रकृते राज्ञि विवक्षितः, तेनैव गुणेनोत्कृष्टैरप्रकृतैर्यमादिभिः साकं तुल्यगुणत्वकीर्त्तनेन राजा स्तुत इति तुल्यगुणकीर्त्तनात्मकस्तुतिरूपा तुल्ययोगिता । इयं जयदेवमते तृतीया तुल्ययोगिता, यत उक्तं तेन—

'गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता' ।

लोकपालो यमः पाशी श्रीदः शक्रो भवानपि ॥

अत्र वर्णनीयो राजा शक्रादिभिर्लोकपालत्वेन समीकृतः । इयं क्वचित् 'सिद्धि' रलङ्कार उच्यते, केचित्तु दीपकभेदमाचक्षते ॥ ३३१ ॥

[ निन्दायां तुल्ययोगिताया उदाहरणम् ]

**सङ्गतानि मृगाक्षीणां तडिद्विलसितानि च ।**
**क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥ ३३२ ॥**

—:*:—

इति तुल्ययोगिता ।

—*—

निन्दायां तुल्ययोगितामुदाहरति—'सङ्गतानि' इति । मृगाक्षीणाम्=मृगस्याक्षिणीवाक्षिणी यासां ता मृगाक्ष्यः तासां हरिणेक्षणानाम् सङ्गतानि=समागमाः च=तथा च तडिद्विलसितानि=तडितां विद्युतां विलसितानि उद्योतनानि चमत्कराणि इत्यर्थः, स्वयम्=स्वयमेव नतु परप्रेरणया घनारब्धानि=घनं सान्द्रं गाढं यथा स्यात्तथा आरब्धानि प्रवर्त्तितानि इति मृगाक्षीपक्षे, घनैः वारिदैः आरब्धानि चालितानीति तडित्पक्षे, क्षणद्वयम्=द्विक्षणमपि न तिष्ठन्ति=नैव स्थिरतां भजन्ते । क्षणमात्रस्थायीनि इति भावः ।

अत्र प्रकृते मृगाक्षीसमागमे क्षणमात्रस्थायित्वरूपो गुणो वर्णनीयत्वेन विवक्षितः तेन चाप्रकृतस्य तडिद्विलसितस्य तुल्यतया तद्गुणसम्बन्धवर्णनात् तुल्ययोगिता, मृगाक्षीसमागमस्य व्यक्तीकृतायां निन्दायां पर्यवसानमिति सा निन्दायां ज्ञेया । नवीनास्तु—प्रकारान्तरेण लक्षयन्ति—'नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता' इति । प्रकृतानामप्रकृतानामेव वा धर्मश्चेत्प्रकाश्यते तदा तुल्ययोगिता । उदाहरन्ति च—

दृष्टिं निधाय सुरभीनिकुरुम्बवीथ्यां कृष्णेति वर्णयुगलाभ्यसने रसज्ञाम् ।
शुश्रूषणे मुरलिनिस्वनितस्य कर्णौ चित्तं मुखे तव नयत्यहरहः राधा ॥ [साहित्यकौमुद्याम्]

अत्र प्राकरणिकानामेव निधानरूपैकक्रियाभिसम्बन्धः । यथा वा—

त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते । मालती शशभृल्लेखा कदलीनां कठोरता ॥

अत्र मालत्यादीनामप्राकरणिकानामेव कठोरतारूपैकगुणसम्बन्धः । अन्यद्वा यथा—

रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥ [ माघे ]

१ माघे द्वारकावर्णनमेतत्—यस्यां द्वारकायां युवानो वधूभिः समं वलभीः प्रासा-

अत्र वधूनां वलभीनाञ्च प्रकृतानामेव धर्मसाधर्म्येणौपम्यावगमात् केवलप्रकृतगोचरा तुल्ययोगिता [न श्लेषः] इति 'मल्लिनाथः'। यदाहुः—

प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता॥

अप्पय्यदीक्षितास्तु—इदं गूढश्लेषोदाहरणं मेनिरे इति कृतमतिविस्तरेण॥ ३३२॥

[ अथ विरोधस्य लक्षणम् ]

**विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम्।**
**विशेषदर्शनायैव स विरोधः स्मृतो यथा॥ ३३३॥**

———

यत्स्वरूपमविज्ञाय विरोधो भासतेऽविदाम्।
नानारूपेषु लोकेऽस्मिंस्तमनन्तमुपास्महे॥ १॥

———

क्रमप्राप्तं 'विरोधं' लक्षयति—'विरुद्धानाम्' इति। विशेषदर्शनाय एव=विशेषः वर्णनीयस्य उत्कर्षः तस्य दर्शनाय निरूपणायैव विरुद्धानाम्=अन्योन्यविरुद्धधर्मवताम् पदार्थानाम्=जातिगुणक्रियाद्रव्याणाम् यत्र=वैचित्र्ये संसर्गदर्शनम्=सम्बन्धवर्णनम् सामानाधिकरण्यप्रतिपादनमिति यावत्, सः विरोधः=वास्तवविरोधाभावेऽपि विरोधप्रयोजकत्वात् विरोधः [विरोधाभास] इति नामालङ्कारः स्मृतः=उक्तः कविभिरिति शेषः। 'यथा'—इति अग्रे उदाह्रियत इत्यर्थः। उक्तञ्च 'श्रीमम्मटभट्टेन' प्रकाशे—'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति। सोऽयं जातेर्जात्यादिभिश्चतुर्भिर्विरोधः। गुणस्य गुणादिभिस्त्रिभिः। क्रियायाः क्रियाद्रव्याभ्यां द्वाभ्याम्। द्रव्यस्य द्रव्येणैकेन इत्येवमन्यैर्दशप्रकार उक्तो ग्रन्थान्तरेषु ज्ञेयः। केचित्तु—शब्दश्लेषनिबन्धनश्चेत्तदासौ 'विरोधाभास'पदेनोच्यते। यथा पूर्वम् 'अच्युतोऽप्यवृषच्छेदी' इत्यादौ उक्त इत्याहुः। किञ्च—अपिशब्दप्रयोगे वाच्यः तदप्रयोगे तु व्यङ्ग्य इत्यपि न विस्मरणीयम्॥ ३३३॥

[ विरोधस्योदाहरणानि ]

**कूजितं राजहंसानां वर्धते मदमञ्जुलम्।**
**क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम्॥ ३३४॥**

आदौ क्रियाविरोधमुदाहरति—'कूजितम्' इति। राजहंसानाम्=कलहंसानां पक्षिविशेषाणाम् मदमञ्जुलम्=मदेन मनोहरम् कूजितम्=रवविशेषः वर्धते=एधते। मयूराणाम्=बर्हिणाम् उत्क्रान्तसौष्ठवम्=उत्क्रान्तं विनष्टं सौष्ठवं मनोज्ञता यस्मात् तत् तथाभूतम् रुतम्=केकाध्वनिः क्षीयते=विनश्यति।

अत्रैकमेव शब्दरूपं कर्तृ। तत्र विरुद्धयोरपि वृद्धिक्षयक्रिययोः संसर्गो विरोधः, तत्परि-

---

दोपरितनगृहाग्रयसेवन्त सेवितवन्तः। किंभूताः। रम्या इति हेतोः पताका वैजयन्तीः प्राप्तवतीः। विविक्ता विजना इति हेतोः रागं रतिं वर्धयन्तीः। नमन्ति वलीकानि छादनपटप्रान्ता यासां ताः। वधूपक्षे—पताकाः सौभाग्यानि। 'पताका वैजयन्त्यां स्यात्सौभाग्यनाटकाङ्कयोः' इति [ मेदिनी]। रागम्=अनुरागम्। विविक्ताः सतीत्वेन पवित्राः नमत्त्रिवलीकाश्च।

हारस्तु भिन्नसम्बन्धिगतत्वेन ज्ञेयः । अत्र च वर्णनीयः शरत्कालः तस्मिन् एकजातीययोरपि बलाबलकारित्वेन विशेषप्रतीतिवैचित्र्यमावहतीत्यस्यालङ्कारत्वं बोध्यम् । क्रियाविरोधश्चायम् । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः । 'राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे' इति [हैमः] । हंसानां राजा इति राजहंसः । 'राजदन्तादिषु परम्' [पा० २।२।३१] अनेन 'हंस' शब्दस्य परनिपातः । 'न्नीयत इति कर्मकर्त्तरि' इति वामनः [का० २ सू० ४] ॥३३४॥

**प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते ।**
**रागेण पुनराक्रान्तं जायते जगतां मनः ॥ ३३५ ॥**

वस्तुगतगुणविरोधमुदाहरति—'प्रावृषेण्यैः' इति । [ वर्षाकालवर्णनमिदम् ] । प्रावृषेण्यैः=प्रावृषि भवैः वर्षाकालिकैः जलधरैः=मेघैः अम्बरम्=व्योम [ गगनम् ] दुर्दिनायते=आच्छन्नं भवति [ 'मेघाच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः ] श्यामलं जायते इत्यत्र तात्पर्यम् । जगताम्=लोकानाम् मनः=हृदयम् पुनः रागेण=रागोऽनुरागः लौहित्यञ्च तेन आक्रान्तम्=व्याप्तं 'जायते' इत्यन्वितार्थः ।

अत्र अनुरागे लौहित्यस्याऽभेदाध्यवसानं कृतम्, तस्मात् श्यामलत्वलौहित्ययोर्गुणयोरेकजलधरजन्यत्वरूपस्य संसर्गस्य कीर्त्तनं विरोधः । परिहारस्तु श्लेषेण कृतः । अनया रीत्या वर्णनीयस्य वर्षाकालस्य किमप्यौत्कर्ष्यं व्यज्यते ।

'प्रावृषेण्यै'रिति । 'प्रावृष एण्यः' [पा० ४।३] इति सूत्रेण शैषिक 'एण्य' प्रत्ययः । 'दुर्दिनायते' इत्यत्र 'सुदिनदुर्दिननीहारेभ्यश्च' [ वा० ३।१।१७ ] इत्यनेन 'दुर्दिन' प्रातिपदिकात् करोत्यर्थे क्यङ् । दुर्दिनं करोतीति दुर्दिनायते ॥ ३३५ ॥

**तनुमध्यं पृथुश्रोणि रक्तौष्ठमसितेक्षणम् ।**
**नतनाभि वपुः स्त्रीणां कं न हन्त्युन्नतस्तनम् ॥ ३३६ ॥**

अवयवगतगुणविरोधमुदाहरति—'तनुमध्य'मिति । तनुमध्यम्=तनु सूक्ष्मं मध्यं कटिभागो यस्य तत् पृथुश्रोणि=पृथुः स्थूला विशाला च श्रोणिः नितम्बो यस्य तत्, रक्तौष्ठम्=रक्तो लोहित ओष्ठोऽधरो यस्य तत्, असितेक्षणम्=असिते कृष्णे ईक्षणे नयने यस्य तत्, नतनाभि=नता निम्ना गम्भीरा नाभिर्यस्य तत्, उन्नतस्तनम्=उन्नतौ वर्त्तुलौ कठोरौ च स्तनौ कुचौ यस्य तत् एतादृशविशेषणोपेतं स्त्रीणाम्=युवतीनाम् वपुः=शरीरम् कम्=जनम् न हन्ति=नाकुलयति अपि तु सर्वमपि विह्वलीकरोति, तापयतीत्यर्थः ।

अत्र तनुत्वपृथुत्वयोः रक्तत्वासितत्वयोः नतत्वोन्नतत्वयोर्गुणयोः परस्परं विरोधः, तेन च वर्णनीयत्वेन प्रस्तुतानां स्त्रीणां किमपि वैचित्र्यं द्योत्यते । परिहारस्तु तनुत्वादीनामाश्रयीभूतावयवभेदाद् बोध्यः । केचित्तु—बहूनां गुणयुग्मानां विरोधोपन्यासे वैचित्र्यातिशयः इति ज्ञापनीयतादृशगुणविरोधप्रदर्शनार्थैतदुदाहरणमिति मन्यन्ते इति **'प्रभा'** ॥ ३३६ ॥

**मृणालबाहु रम्भोरु पद्मोत्पलमुखेक्षणम् ।**
**अपि ते रूपमस्माकं तन्वि ! तापाय कल्पते ॥ ३३७ ॥**

विषमविरोधमुदाहरति—'मृणालबाहु' इति । हे ! तन्वि=कोमलशरीरे ! मृणालबाहु=मृणालवत् शीतलौ बाहू भुजे यस्मिन् तत्, रम्भोरु=रम्भे कदल्याविव ऊरू यत्र तत्,

पद्मोत्पलमुखेक्षणम्=पद्ममिव उत्पले इव च मुखम् आननम् ईक्षणे दृशौ यत्र तत्, तथाविधम्, अपि ते=तव रूपम्=आकृतिः सौन्दर्यं वा अस्माकं तापाय=विरहजनितम्लान्यै कल्पते=समर्थं भवति ।

अत्र दर्शितरीत्या उपमागर्भितबहुव्रीहिसमासे शीतलत्वगुणस्य तापक्रियया सह विरोधः । यदा तु मृणाले एव बाहू यत्र, रम्भे एवोरू यत्र, पद्ममेव उत्पले, मुखम् एव च ईक्षणे यत्र इत्यादि रूपकगर्भितो बहुव्रीहिः, तदा मृणालत्वरम्भात्वादिभिर्जातिभिः तापक्रियाया विरोधः । परिहारस्तु—वक्ता विरही वर्षाकाल इति च ज्ञेयः ॥ ३३७ ॥

**उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः ।**
**उदश्रयन्ति पान्थानामस्पृशन्तोऽपि लोचने ॥ ३३८ ॥**

उक्तेषूदाहरणेषु भावाभिमाने क्रियादिविरोधा उक्ताः सम्प्रति अभावाभिमाने क्रियाविरोधमुदाहरणेन स्पष्टीकरोति—'उद्यान०' इति । विरहिणां वर्णनमिदम् । उद्यानमारुतोद्धूताः=उद्यानस्य उपवनस्य मारुतेन पवनेन उद्धूता उत्कम्पिताः चूतचम्पकरेणवः=चूतानामाम्राणां चम्पकानां चाम्पेयानां रेणवः परागाः, पान्थानाम्=अध्वनीनानाम् लोचने=नयने अस्पृशन्तः अपि=असंसृष्टाः सन्तोपि उदश्रयन्ति=उद्गतवाष्पे विदधते ।

अत्र 'अस्पृशन्तोपि' इति स्पर्शनक्रियाया अभावेन उदश्रयणक्रियायाः [वाष्पोद्गमनक्रियायाः] विरोधः । तत्परिहारस्तु चूतचम्पकरेणूनामुद्दीपकत्वादभावाभिमानेन ज्ञेयः । क्रियागतश्चायं विरोधः । अयमसङ्गतिविरोधः इत्यप्युच्यते तथा च स्पर्शनाभावेऽपि वाष्पोद्गमः इति परस्परमसङ्गतेरयमसङ्गतिर्नाम विरोध इति प्रभाकारः ॥ ३३८ ॥

**कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।**
**याति विश्वसनीयत्वं कस्य ते कलभाषिणि ! ॥ ३३९ ॥**

श्लेषमूलं विरोधमुदाहरति—'कृष्णार्जुना०' इति । हे ! कलभाषिणि !=मधुरवाचे ! ते=तव दृष्टिः कृष्णार्जुनानुरक्ता अपि=अर्जुनानुरक्ता पार्थानुरागवती कृष्णा द्रौपद्यपि कर्णावलम्बिनी=कर्णो राधेयः तत्पक्षपातिनी वर्त्तते । पक्षे-कृष्णा असिता कनीनिकामण्डलस्य कृष्णात्वात्, तथा अर्जुना श्वेता तत्परतः स्थितभागस्य श्वेतत्वात्, अनुरक्ता प्रान्तभागे लोहिता तथा कर्णावलम्बिनी श्रवणपर्यन्तविश्रान्ता चेत्यर्थः, कस्य=पुंसः विश्वसनीयत्वम्=विश्वासार्हत्वं याति=प्राप्नोति न कस्यापीत्यर्थः, अर्थात् तव दृष्टौ न कस्यापि विश्वासः ।

अत्र कृष्णा[ द्रौपदी ]रूपस्य द्रव्यस्य कर्ण[राधेया]वलम्बनं न सम्भवीति क्रियाया आपाततः प्रतीयमानोऽपि विरोधः श्लेषसामर्थ्यात् परिहर्तुं शक्यः । अयञ्च विरोधः श्लेषमुखप्रेक्षी ॥ ३३९ ॥

**इत्यनेकप्रकारोऽयमलङ्कारः प्रतीयते ।**

—*—

इति विरोधचक्रम् ।

—:—

विरोधमुपसंहरति—इति=उक्तप्रकारेण अयम्=विरोधः अलङ्कारः अनेकप्रकारः=नानाविधः 'प्रतीयते' । उक्तमस्य बहुविधत्वं ३३३ कारिकायाः व्याख्याने ।

इतीति—विरोधालङ्कारप्रकरणं समाप्तमित्यर्थः। विरोधस्यान्यदुदाहरणं यथा—

तव दक्षिणोऽपि वामो बलभद्रोऽपि प्रलम्ब एष भुजः।
दुर्योधनोऽपि राजन्! युधिष्ठिरोऽस्तीत्यहो चित्रम्॥

अत्र दक्षिणस्यापि वामत्वे विरोधः, परिहारस्तु—भक्तान् प्रति अनुकूलत्वाद् दुष्टान् प्रतिकूलत्वाच्च ज्ञेयः। इत्येवमादिरीत्या ज्ञेयम्। 'वामन'स्तु—विरुद्धाभासत्वं 'विरोधः' [ का० ३।१२ ] इति सूत्रयित्वा—

पीतं पानमिदं त्वयाद्य दयिते! मत्तं ममेदं मनः
पत्राली तव कुङ्कुमेन रचिता रक्ता वयं मानिनि!।
त्वं तुङ्गस्तनभारमन्थरगतिर्गात्रेषु मे वेपथु-
स्त्वन्मध्ये तनुता ममाधृतिरहो प्रेम्णो विचित्रा गतिः॥

इत्युदाजहार। विस्तरस्तु 'सरस्वतीकण्ठाभरणे' द्रष्टव्यः।

[ अप्रस्तुतप्रशंसाया लक्षणम् ]

**अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः॥ ३४०॥**

क्रमप्राप्तामप्रस्तुतप्रशंसां लक्षयति—'अप्रस्तुतप्रशंसा' इति। अप्रक्रान्तेषु=अप्रस्तुतेषु या स्तुतिः=अर्थात् प्रस्तुतस्य निन्दार्थं गुणकीर्त्तनम् सा 'अप्रस्तुतप्रशंसा' एतन्नामालङ्कृतिः स्यात् भवतीत्यर्थः। 'अप्रस्तुतस्तुत्या प्रस्तुतनिन्दाबोधनमप्रस्तुतप्रशंसा' इति फलितं लक्षणम्। अप्रक्रान्तेषु इति बहुवचनमविवक्षितम्। सप्तमी च षष्ठ्यर्थे बोध्या, तेन द्वयोरेकस्य अप्रस्तुतत्वेनापि इयं सम्भवति।

ये तु—'अपक्रान्तेप्सितस्तुति'रिति पाठं कल्पयित्वा अपक्रान्तेन=अप्रस्तुतवर्णनेन ईप्सितस्य=प्रस्तुतस्य स्तुतिर्वर्णनम् 'अप्रस्तुतप्रशंसा' इति नव्यमतानुरोधेन दण्डिसूत्रं व्याख्यानयन्ति ते दण्ड्याचार्याशयानभिज्ञा इति प्रतीमः, यतो दण्डिमते—अप्रस्तुतेन प्रस्तुतं गम्यते यत्र स समासोक्तिविषयः यथा 'वस्तु किञ्चिदभिप्रेत्य' इत्यादि समासोक्तिलक्षणे १६२ पृष्ठे व्याख्यातम्। तल्लक्षणे यद् अन्यस्य=अप्रस्तुतस्य उक्तिः कथनम् इत्युक्तं तेन स्पष्टमेव समासोक्तौ अप्रस्तुताभिधानेन प्रस्तुतस्यैव गम्यता बोध्यते, एवञ्च पूर्वोत्तरयोर्द्वयोरलङ्कारयोः दण्डिकृतलक्षणानुसरणमुखतया 'अप्रस्तुताभिधानेन प्रस्तुतवर्णनं समासोक्तिः, प्रस्तुतस्य गर्हणेच्छया अप्रस्तुतस्य प्रशंसनम् अप्रस्तुतप्रशंसा इति स्थितो द्वयोरलङ्कारयोर्विविक्तो विषयः। भोजराजोप्यत्र दण्डिपथानुयायी। तथाहि—

---

(प्र०) अप्रस्तुतप्रशंसाया लक्षणोदाहरणे निरूप्य तत्र नवीनमताद् दण्डिगतस्य विशेषो वक्तव्यः? (उ०) अस्य पृ० पं० १३।

१ हे राजन्! तव बाहुर्भक्तान् प्रत्यनुकूलत्वाद्दक्षिणोऽपि शत्रून्प्रति प्रतिकूलतया वाम इत्यविरुद्धमर्थद्वयम्। तथा स एव बलेन भद्रोऽपि श्रेष्ठोऽपि प्रलम्बो दीर्घः। तथा दुःखेन योध्यत इति दुर्योधनोऽपि युधि समरे स्थिरोऽचञ्चल इत्यविरोधः। विरोधप्रतिभासश्च दक्षिणवामयोः सव्येतररूपयोरन्यत्वात्, तथा बलभद्रप्रलम्बयोर्हलधरासुरयोरन्यत्वात्, तथा दुर्योधनयुधिष्ठिरयोर्धार्तराष्ट्रपाण्डवयोर्भिन्नत्वाल्लक्ष्यते।

अप्रस्तुतप्रशंसा स्यादस्तोतव्यस्य या स्तुतिः ।
कुतोऽपि हेतोर्वाच्या च प्रत्येतव्या च सोच्यते ॥ इति—

अप्रस्तुतप्रशंसनमेवाप्रस्तुतप्रशंसाविषयमाह ।

नव्यानां मते तु प्रस्तुतेन अप्रस्तुतस्य गम्यत्वं समासोक्तौ, अप्रस्तुतेन प्रस्तुतस्य गम्यत्वम् अप्रस्तुतप्रशंसायां स्यादिति त्वन्यत् । अत एव—'अप्रस्तुतप्रशंसा स्यात् सा यत्र प्रस्तुताश्रया' इति चन्द्रालोककारकृताप्रस्तुतप्रशंसालक्षणं व्याचक्षाणा दीक्षिता अपि 'यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुतवृत्तान्तावगतिपर्यवसायि तत्राप्रस्तुतप्रशंसालङ्कारः' इत्याहुः । तस्माद् 'अपक्रान्तेप्सितस्तुति'रिति पाठेऽपि अपक्रान्तस्य=अप्रस्तुतस्य ईप्सिता स्तुतिः अर्थात् प्रस्तुतगर्हणफलकं प्रशंसनमप्रस्तुतप्रशंसेति व्याख्यानेऽपि दण्डिसम्मतं मतं न हीयत इति कृतमतिपल्लवितेन क्लिष्टिकरेण ॥ ३४० ॥

[ अप्रस्तुतप्रशंसाया उदाहरणम् ]

**सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ।**
**अन्नैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः ॥ ३४१ ॥**

अप्रस्तुतप्रशंसामुदाहरति—'सुखम्' इति । [ स्वामिसेवाखिन्नमनस उक्तिरियम् ] अपरसेविनः=ये परान् न सेवन्ते स्वच्छन्दचारिण इत्यर्थः, हरिणाः=मृगाः वनेषु=अरण्येषु अयत्नसुलभैः=अनायासप्राप्यैः यत्नं विनापि सुखेन प्राप्यैरित्यर्थः, तृणदर्भाङ्कुरादिभिः=कुशघासाङ्कुरप्रभृतिभिः अन्नैः=अदनीयैर्भक्ष्यैः प्राणभूतैः 'सुखम्' यथा स्यात् तथा सानन्दं जीवन्ति=प्राणन्ति ॥ ३४१ ॥

[ लक्ष्ये लक्षणयोजनम् ]

**सेयमप्रस्तुतैवाऽत्र मृगवृत्तिः प्रशस्यते ।**
**राजानुवर्त्तनक्लेशनिर्विण्णेन मनस्विना ॥ ३४२ ॥**

इति अप्रस्तुतप्रशंसा ।

—:*:—

उक्तोदाहरणे स्वयमेवाप्रस्तुतप्रशंसालक्षणं योजयति—'सेयम्' इति । राजानुवर्त्तनक्लेशनिर्विण्णेन=राज्ञा भूपस्य अनुवर्त्तनेन सेवया यः क्लेशः गमनपतनोत्थानादिरूपं दुःखम् तेन विर्विण्णः निर्वेदं प्राप्तः तेन तादृशेन मनस्विना=सन्तुष्टहृदयेन मुनिना केनचित् मृगवृत्तिः=हरिणव्यवहारः प्राणयात्रानिर्वाहात्मकः प्रशस्यते=स्तूयते । अत्र अप्रस्तुतस्य मृगस्य स्तवनेन प्रस्तुतः स्वात्मा निन्द्यत इत्यप्रस्तुतप्रशंसा । इतीति—अप्रस्तुतप्रशंसाप्रकरणं समाप्तमित्यर्थः ॥३४२॥

[ व्याजस्तुतेर्लक्षणम् ]

**यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ स्मृता ।**
**दोषाभासा गुणा एव लभन्ते यत्र सन्निधिम् ॥ ३४३ ॥**

—*—

व्याजेनापि स्तुवन् यं नो भजते निरयात्मताम् ।
तमशेषपुमर्थेशं नौमि विष्णुं चतुर्भुजम् ॥ १ ॥

—*—

(प्र०) लक्षणादिना व्याजस्तुतिः स्पष्टीकर्त्तव्या । (उ०) अस्य० पृ० पं० २६

क्रमप्राप्तां व्याजस्तुतिं लक्षणादिना निरूपयति—'यदि' इति । 'यदि' इत्यस्यार्थे क्रियाविशेषणम् । निन्दन् इव=निन्दां कुर्वन् इव यत् स्तौति=असौ व्याजेन=छलेन निन्दा स्तुतिव्यञ्जनरूपत्वाद् 'व्याजस्तुतिः' स्मृता । अत्र=व्याजस्तुतौ दोषाभासतः=दोषा इव आभासन्ते आपाततः प्रतीयन्ते दोषाभासाः गुणा एव वस्तुतो गुणरूपा धर्मा एव हि=निश्चयेन सन्निधिम्=सामीप्यं लभन्ते=भजन्ते अर्थात् वस्तुतः गुणाः आपाततो दोषरूपेण प्रतीताः उत्तरकाले गुणत्वेनैव स्वरूपेण प्रत्ययपथमवतरन्ति ।

अत्र [ लक्षणवाक्ये ] 'निन्दन्निव स्तौतीति कथनात् प्रत्ययादिव्यत्ययेन स्तुवन्निन्दतीति इत्यप्यर्थो बोध्यः' तेन स्तुतिच्छलेन निन्दोक्तिरपि व्याजस्तुतिः । आह च 'मम्मटाचार्यः' 'व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा' इति ॥ ३४३ ॥

[ व्याजस्तुतेरुदाहरणम् ]

**तापसेनापि रामेण जितेयं भूतधारिणी ।**
**त्वया राज्ञापि सैवेयं जिता मा भून्मदस्तव ॥ ३४४ ॥**

निन्दामुखीं स्तुतिपर्यवसायिनीं 'व्याजस्तुति' मुदाहरति—'तापसेन' इति । तापसेन अपि=तपस्विना सता करितुरगादिनानाविधजयोपकरणविरहिणापीत्यर्थः, रामेण=परशुरामेण इयम् भूतधारिणी=भूतधात्री पृथिवी जिता=वशीकृता । त्वया राज्ञा अपि=जयसाधनीभूतकरितुरगादिविविधबलोपेतेनापि सा एव इयम्=तापसजिता नत्वन्या भूतधात्री 'जिता' अतो हेतोः तव मदः=गर्वः मा भूत्=नैव स्यादित्यर्थः ।

अत्र प्राकरणिको [ वर्णनीयः ] राजा तस्य तापसजिताया एव पृथ्व्या जयनमापाततो निन्दारूपेण प्रतीयते, पर्यवसाने तु साक्षाद्भगवदवतारभूतेन त्रिपुरारिसकाशाल्लब्धपरशुना परशुरामेण यावती धरित्री जिता सैव मनुष्येणापि सता त्वया वशीकृतेयमित्यतिमात्रं राज्ञः स्तुतिः प्रतीयत इति निन्दामुखी व्याजस्तुतिः ।

अप्रस्तुतप्रशंसायामप्रस्तुतस्य प्रशंसनं प्रस्तुतस्य च निन्दनं व्यवस्थितम्, इह तु प्रस्तुतस्यापाततो निन्दा पर्यवसाने तु स्तुतिरित्यनयोर्विवेकः । अपि च तत्र प्रस्तुतं गम्यमिह तु वाच्यमिति विशेषः ॥ ३४४ ॥

[ उदाहरणान्तराणि ]

**पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते ।**
**राजन्निक्ष्वाकुवंशस्य किमिदं तव युज्यते ॥ ३४५ ॥**

अलङ्कारान्तरसम्बन्धेनापीयमतिचमत्कारिणीत्यतस्तादृशीं व्याजस्तुतिमुदाहरति—'पुंस' इति । [ इक्ष्वाकुवंश्यं राजानं प्रति कस्यचिद्वन्दिन उक्तिरियम् ] हे राजन् !=नरपते ! पुराणात्=सनातनात् आद्यात्, पक्षे वृद्धात् च पुंसः=मनुष्यात्, पक्षे विष्णोः सकाशात् त्वया आच्छिद्य=आहृत्य श्रीः=लक्ष्मीः, पक्षे सम्पत्तिश्च परिभुज्यते=सम्भुज्यते ।

अत्र सनातनात्पुराणपुरुषादाहृताया लक्ष्म्याः भोगः इक्ष्वाकुवंशीयस्य तव सर्वथा अयोग्य इत्यापाततः प्रतीता निन्दा श्लेषमाहात्म्येन 'प्रभूततरास्ते सम्पत्तय' इति स्तुतौ परिणता भवति, तदेवं स्तुतिर्गम्या । अत्र 'पुराण' पदे 'श्री' पदे च श्लेषः । आद्यवृद्ध-

रूपयोः लक्ष्मीसम्पत्तिरूपयोश्चार्थयोरेकवृन्तगतफलद्वयन्यायेनार्थगतः । एवञ्चेयमर्थगतश्लेषानुप्राणिता समधिकां वैचित्रीमावहतीति सहृदयाः सन्ति साक्षिणः । अत्र श्रियां स्त्रीत्वप्रतीतेः परिभोगसाम्यात् 'समासोक्ति'रपीति न विस्मरणीयम् ॥ ३४५ ॥

**भुजङ्गभोगसंसक्ता कलत्रं तव मेदिनी ।**
**अहङ्कारः परां कोटिमारोहति कुतस्तव ॥ ३४६ ॥**

अर्थश्लेषमूलां व्याजस्तुतिं निरूप्य शब्दश्लेषमूलां तामुदाहरति—'भुजङ्ग' इति। भुजङ्गभोगसंसक्ता=भुजङ्गानां सर्पाणां भोगैः शरीरैः संसक्ता खचिता, पक्षे—भुजङ्गाः षिङ्गाः जारा इत्यर्थः, तेषां भोगे विलासे संसक्ता संलग्ना, एवंभूता मेदिनी=धरित्री तव कलत्रम्=पालनीया भार्या च एवं सति कुतः=कस्मात् हेतोः तव अहङ्कारः=अभिमानः पराम्=अनुत्तमां कोटिम्=प्रकारम् आरोहति=आश्रयते ।

अत्र—परासक्तकलत्रस्य तवाहङ्कारो न युक्त इत्यापाततो निन्दा, पर्यवसाने सकलायाः पृथिव्या पतित्वमिति स्तुतिः भुजङ्गादिशब्दानाञ्चानेकार्थतया परिवृत्त्यसहत्वात् शब्दश्लेषनिबन्धनेयं व्याजस्तुतिरिति ध्येयम् ॥ ३४६ ॥

[ व्याजस्तुतेरुपसंहारः ]

**इति श्लेषानुविद्धानामन्येषाञ्चोपलक्ष्यताम् ।**
**व्याजस्तुतिप्रकाराणामपर्यन्तस्तु विस्तरः ॥ ३४७ ॥**

—*—

इति व्याजस्तुतिः ।

———

व्याजस्तुतिमुपसंहरति—'इति' इति । इति=उक्तप्रकारेण श्लेषानुविद्धानाम्=श्लेषमूलकानाम् तथा अन्येषाम्=इतरालङ्कारमूलकानाञ्च व्याजस्तुतिप्रकाराणाम्=व्याजस्तुतिभेदानाम् अपर्यन्तः तु=निस्सीम एव विस्तरः=बाहुल्यम् उपलक्ष्यताम्=स्वमत्याऽवबुध्यतामित्यर्थः । श्लेषसङ्कीर्णत्ववत् अलङ्कारान्तरसङ्कीर्णत्वेनापि अनेके भेदाः सन्तीति ग्रन्थगौरवभयाद् दिङ्मात्रमुक्तमिति भावः ।

इति व्याजस्तुतिप्रकरणम् ।

अस्या उदाहरणान्तरं यथा वा—

काकतीयविभोः कीर्त्या किं वाद्य धवलीकृतम् ।
यत्तदीयारिवक्त्रेषु दृश्यते कालिमा महान् ॥

अत्र—'विशेषनिषेधे शेषाभ्यनुज्ञानम्' इति न्यायेन अरिवक्त्रव्यतिरिक्तं विश्वं कीर्त्या धवलीकृतमिति निन्दया स्तुतिर्गम्यते । यथा वा—

प्रतापरुद्रनृपतेरहो साहसिका द्विषः । यद्विशन्त्युदधीन् शैलानारोहन्ति समन्ततः ॥

अत्र—शत्रूणां साहसप्रशंसया स्तुत्या निन्दा व्यज्यते । यथा वा मम—

विश्वम्भर इति यस्त्वं ख्यातिं लोके गतो हरे ! । का ते प्रशंसा दैत्यानां सूदने तत्परस्य हि ॥

अत्र नियतिमनुल्लङ्घयतो दैत्यसूदनेऽपि प्रवृत्तस्य भगवतो निन्दामुखी स्तुतिर्व्याजस्तुतिः । इत्यनया दिशाऽन्यदप्यूह्यम् ॥ ३४७ ॥

[ निदर्शनस्य=निदर्शनायाः लक्षणम् ]

**अर्थान्तरप्रवृत्तेन किञ्चित् तत्सदृशं फलम् ।**
**सदसद्वा निदर्श्येत यदि तत्स्यान्निदर्शनम् ॥ ३४८ ॥**

—*—

यन्निदर्शनमात्रेण पापपुञ्जात् प्रमुच्यते ।
तां कृष्णमूर्त्तिमालोक्य जनाः ! तृप्यत सादरम् ॥ १ ॥

क्रमप्राप्तं निदर्शनं नामालङ्कारं लक्षयति—'अर्थान्तरप्रवृत्तेन' इति । अर्थान्तरे=निदर्शनीयात् अर्थात् फलात् अन्यस्मिन् फले कार्ये प्रवृत्तेन=उद्यतेन 'केनचित्' यदि=चेत् तत्सदृशम्=तत्तुल्यम् सत्=उत्कृष्टम् वा=अथवा असत्=अपकृष्टम् किञ्चित् फलम्=कार्यम् निर्दिश्येत निरूप्येत तत् निदर्शनम्=नाम अलङ्कारः स्यात्=भवतीत्यर्थः । 'निदर्शना' इत्यपि पाठान्तरम् । 'प्रस्तुतार्थप्रवृत्तस्य तत्सदृशाप्रस्तुतार्थान्तरज्ञापनं निदर्शना' इत्युक्तं भवति । 'नवीनानां मते तु सम्भवद्वस्तुसम्बन्धो निदर्शना तथा असम्भवद्वस्तुसम्बन्धोऽपि यत्र सादृश्यं निदर्शयति सापि निदर्शना' इति केषाञ्चिदुक्तिः प्राचीनग्रन्थादर्शनमूला । लक्षयति च भामहोत्तरवर्त्ती अतिप्राचीन 'उद्भटः'—

अभवन्वस्तुसम्बन्धो भवन्वा यत्र कल्पयेत् ।
उपमानोपमेयत्वं कथ्यते सा [वि]निदर्शना ॥ इति उदाहरति च 'प्रतीहारेन्दुः'—

विनोचितेन पत्या च रूपवत्यपि कामिनी ।
विधुबन्ध्यविभावार्याः प्रबिभर्त्ति विशोभताम् ॥

अत्रान्यस्यान्यकर्त्तृकविशोभताधारणसम्बन्धोऽनुपपद्यमानः कामिनीविभावर्योरुपमानोपमेयभावे पर्यवस्यतीत्याद्या निदर्शना ।

द्वितीया तु भामहोदिता—

अयं मन्दद्युतिर्भास्वानस्तम्प्रति यियासति ।
उदयः पतनायेति श्रीमतो बोधयन्नरान् ॥

अत्र भास्वत उदयः पातावसान इति सम्बन्धः सम्भवति उदयम्प्राप्यास्तम्प्रति यातवता तेन [ निमित्तेन ] तथा सर्वस्योदयः पातावसान इति श्रीमन्तो बुध्यन्ते तस्मात्तथाविधसूर्यश्रीमज्जनयोरुपमानोपमेयभावः पर्यवसितो वाक्यार्थेनेतीयमपि निदर्शना । इमामेवासदर्थनिदर्शनामाहुः ॥ ३४८ ॥

[ निदर्शनस्योदाहरणम् ]

**उदयन्नेष सविता पद्मेष्वर्पयति श्रियम् ।**
**विभावयितुमृद्धीनां फलं सुहृदनुग्रहम् ॥ ३४९ ॥**

तत्रादौ सत्फलनिदर्शनमुदाहरति—'उदयन्' इति । एषः=पुरोवर्त्ती सविता=सूर्यः उदयन्=उत्सर्पन् उन्नतिं प्राप्नुवंश्च ऋद्धीनाम्=सम्पत्तीनाम् फलम्=प्रयोजनम् सुहृदनुग्रहम्=सुहृदाम् बन्धूनाम् अनुग्रहं विभावयितुम्=प्रकटीकर्त्तुम् ऋद्धौ विद्यमानायां सुहृदामानुकूल्यमवश्यं कर्त्तव्यमिति बोधयितुम् पद्मेषु=कमलेषु श्रियम्=विकाशरूपां शोभाम् अर्पयति=आसञ्जयति ।

अत्र पद्मेषु श्रीवितरणपरेण उदयभाजा रविणा सुहृदामुपकाररूपमुदयफलं प्रदर्श्यते इति, फलमत्रोत्कृष्टरूपत्वात् सदात्मकम्, अत इदं सत्फलनिदर्शनम् ॥ ३४६ ॥

**याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजी पराभवम् ।**
**सद्यो राजविरुद्धानां सूचयन्ती दुरन्तताम् ॥ ३५० ॥**

———

इति निदर्शनम् ।

—:*:—

असत्फलनिदर्शनमुदाहरति—'याति' इति । चन्द्रांशुभिः=शशिकिरणैः स्पृष्टा=संसर्गवती ध्वान्तराजी=तमस्ततिः राजविरुद्धानाम्=नृपतिविरुद्धानाम् चन्द्रप्रतिकूलानाञ्च सद्यः=शीघ्रमेव दुरन्तताम्=दुःखान्तताम् दुःखप्रदं परिणामम् सूचयन्ती=प्रकटयन्ती सती पराभवम्=विध्वंसं याति=प्राप्नोति ।

अत्र चन्द्रकिरणैः पराभवं प्राप्ता ध्वान्तराजी राजविरोधिनां परिणामे दुःखरूपं फलं निदर्शयतीति असदर्थप्रत्यायनात् असत्फलनिदर्शनमिदम् । यथा वा—

महामहानीलशिलारुचः पुरो निषेदिवान्कंसकृषः स विष्टरे ।
श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥ [ माघे ]

अत्रान्यस्यान्यधर्मसम्बन्धासम्भवात् 'चन्द्रमसोऽभिरामतामिवाभिरामताम्, इत्युपमायां पर्यवसानम्, अतोऽसम्भवद्वस्तुसम्बन्धरूपेयं निदर्शना । इत्यादि ॥ ३५० ॥

[ सहोक्तेर्लक्षणम् ]

**सहोक्तिः सहभावेन कथनं गुणकर्मणाम् ।**

—:—

सहैव सज्जनैः सज्जैर्हरिध्याने निरन्तरम् ।
सङ्गं कुरुत वाञ्छा चेद् विष्णुलोकस्य दर्शने ॥ १ ॥

——

सहोक्तिं लक्षयति—'सहोक्तिः' इति । गुणकर्मणाम्=गुणानां क्रियाणाञ्च सहभावेन=साहित्येन यत् कथनम्=आख्यानम् सहार्थवाचकपदैरेव, सा सहोक्तिः=इति नामालङ्कारः । उभयनिष्ठधर्मस्य सहैवोक्तिर्यत्रेत्यन्वर्था सञ्ज्ञा । अत्र 'कर्म' शब्दः क्रियावाची । बहुवचनेन द्रव्यादेरपि ग्रहः । वाग्भटोऽप्याह—

सहोक्तिः सा भवेद्यत्र कार्यकारणयोः सह ।
समुत्पत्तिकथाहेतोर्वक्तुं तज्जन्मशक्तताम् ॥ उदाहरति च—
आदत्ते सह यशसा नमयति सार्धं मदेन संग्रामे ।
सह विद्विषां श्रियाऽसौ कोदण्डं कर्षति श्रीमान् ॥

योजनं स्पष्टम् ।

[ परिवृत्तेर्लक्षणम् ]

**अर्थानां यो विनिमयः परिवृत्तिस्तु सा स्मृता ॥ ३५१ ॥**

पद्यस्यार्धेन सहोक्तिं लक्षयित्वा पद्यस्य शेषार्धपूरणार्थमादौ परिवृत्तिं लक्षयति—'अर्थानाम्' इति। अर्थानाम्=प्रतिपाद्यानां वस्तूनाम् य. विनिमयः=प्रतिपादनम् अर्थात् गोधूमं दत्वा चणकानामादानम् सा तु परिवृत्तिः=परिवर्त्तनं [विनिमयकरणं] परिवृत्तिरित्यन्वर्थसंज्ञाबलादुक्तनामालङ्कारः।

उक्तञ्च मम्मटेन—'परिवृत्तिर्विनिमयो योऽर्थानांस्यात्समासमै'रिति। त्रिविधा चेयम्—क्वचित् समेन समस्य, अधिकेन न्यूनस्य न्यूनेनाधिकस्य इति। आद्यद्वितीये यथा—

लतानामेतासामुदितकुसुमानां मरुदयं मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम्।
लतास्त्वध्वन्यानामहह! दृशमादाय सहसा ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम्॥

अत्र प्रथमेऽर्धे समेन समस्य, द्वितीये उत्तमेन न्यूनस्य। तृतीया यथा—

नानाविधप्रहरणैर्नृप! सम्प्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान्।
दृप्तारिवीरविसरेण वसुन्धरेयं निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा॥

अत्र न्यूनेनोत्तमस्य। अर्थात् प्रहारा अनुपादेयत्वेन न्यूनाः॥ ३५१॥

[सहोक्तेरुदाहरणम्]

**सह दीर्घा मम श्वासैरिमाः सम्प्रति रात्रयः।**
**पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः॥ ३५२॥**

सहोक्तिमुदाहरति—'सह' इति। [कस्याश्चन वियोगिन्या उक्तिरियम्]। सम्प्रति=वल्लभविरहवेलायाम् [नतु पूर्वमपि] इमा रात्रयः=निशाः मम श्वासैः सह दीर्घाः=विशालाः 'संवृत्ता' इति शेषः। अर्थात् प्रियवियोगकालीना रात्रयः प्रचुरदुःखतया दुःखेन यापनीया सञ्जाताः। वस्तुतस्तु तासां दैर्घ्यं नास्ति। चन्द्रभूषणाः=चन्द्रो भूषणं मण्डनं यासां ताश्च ता शुक्लपक्षीया रात्रयः मम=विरहिण्या एव अङ्गैः=अवयवैः सह=समं पाण्डुराः=धूसरवर्णाः सञ्जाताः। अत्र दीर्घत्वपाण्डुरत्वे गुणौ वस्तुतो भिन्नावपि सहार्थबलात् एककालिकावुक्ताविति 'गुणसहोक्ति' रियं ज्ञेया॥ ३५२॥

**वर्द्धते सह पान्थानां मूर्च्छया चूतमञ्जरी।**
**पतन्ति च समं तेषामसुभिर्मलयानिलाः॥ ३५३॥**

क्रियागतां सहोक्तिमुदाहरति—'वर्द्धते' इति। पान्थानाम्=पथिकानां विरहिणाम् मूर्च्छया=विरहजनितेनावस्थाविशेषेण सह=साकम् चूतमञ्जरी=आम्रशिञ्जरी वर्धते=वृद्धिं याति मलयानिलाः=दक्षिणाः समीरणाः तेषाम्=पान्थानाम् असुभिः च=प्राणैः समम्=सार्धमेव पतन्ति=वान्ति। अत्र विरहिपान्थवर्णने वर्धनपतनात्मिके क्रिये सहभावेनोक्ते विच्छित्तिविशेषं पुष्णीत इति क्रियागता सहोक्तिः॥ ३५३॥

**कोकिलालापसुभगाः सुगन्धिवनवायवः।**
**यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः॥ ३५४॥**

अन्यविधां सहोक्तिमुदाहरति—'कोकिला०' इति। कोकिलालापसुभगाः=कोकिलानाम् पिकानाम् आलापेन पञ्चमस्वरेण सुभगाः मनोरमाः तथा सुगन्धिवनवायवः=सुगन्धिनः शोभनगन्धयुता वनवायवः उद्यानपवनाः येषु तथाभूताः सुरभिवासराः=वसन्तदिनानि जना-

नाम्=कामिनाम् आनन्दैः=हर्षैः सार्द्धम्=साकम्, वृद्धिं यान्ति=एधन्ते । अत्र सुरभिवातानां सुरभिदिनानाञ्च जनानन्दैः सहैव वर्धनमुक्तमिति सहोक्तिः । अन्यद् यथा—

पुरोपनीतं नृप ! रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिनः परं परैति कार्श्यं यशसा समं वपुः ॥ [भारविः]

अत्र—यशसा सहैव शरीरकार्श्यमिति सहोक्तिः । यथा वा—

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥ [रघुवंशे]

यथा वा—

रजनी निष्फलमधुना त्वदधरमधुना समं याति ।
अयि ! मानिनि ! मयि मानं परमनिदानं मृषा वहसि ॥

इत्यादि ज्ञेयम् ॥ ३५४ ॥

**इत्युदाहृतयो दत्ताः सहोक्तेरत्र काश्चन ।**

—*—

इति सहोक्तिः ।

—*—

सहोक्तिमुपसंहरति—'इति' इति । इति=उक्तप्रकारेण अत्र काश्चन सहोक्तेः उदाहृतयः=उदाहरणानि दत्ताः=निरूपिताः अनयैव रीत्या अन्यविषयाऽपि सहोक्तिर्ज्ञेयेत्यर्थः । इतीति—समाप्ता सहोक्तिरित्यर्थः ।

**क्रियते परिवृत्तेश्च किञ्चिद्रूपनिदर्शनम् ॥ ३५५ ॥**

'क्रियते' इति । सम्प्रति परिवृत्तेः च=परिवृत्त्याख्यालङ्कारस्यापि किञ्चित् रूपनिदर्शनम्=दिङ्मात्रं स्वरूपप्रकाशनं 'क्रियते' येन ग्रन्थबाहुल्यं न स्यादिति भावः ॥ ३५५ ॥

[ परिवृत्तेरुदाहरणम् ]

**शस्त्रप्रहारं ददता भुजेन तव भूभुजाम् ।**
**चिरार्जितं हृतं तेषां यशः कुमुदपाण्डुरम् ॥ ३५६ ॥**

—*—

इति परिवृत्तिः ।

—*—

परिवृत्तिमुदाहरति—'शस्त्रप्रहारम्' इति । [ कश्चन राजानं स्तौति ] हे राजन् ! शस्त्रप्रहारम्=शस्त्राघातम् ददता=अर्पयता तव भुजेन=बाहेन भूभुजाम्=राज्ञाम् कुमुदपाण्डुरम्=कुमुदवच्छुभ्रम् चिरार्जितम्=बहुकालसञ्चितम् यशः=कीर्त्तिः हृतम्=विनाशितमित्यर्थः । अत्र शस्त्रप्रहारं दत्वा यशस आदानं न्यूनेन अधिकस्य ग्रहणरूपो विनिमयः कृत इति 'परिवृत्ति' नामालङ्कारः ॥ ३५६ ॥

[ आशीरलङ्कारस्य लक्ष्यलक्षणे ]

**आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा ।**
**पातु वः परमं ज्योतिरवाङ्मनसगोचरम् ॥ ३५७ ॥**

—*—

इत्याशीः ।

—*—

आशीरलङ्कारं लक्ष्यलक्षणाभ्यां निर्दिशति—'आशीः' इति । अभिलषिते=इष्टे वस्तुनि आशंसनम्=प्राप्तीच्छाप्रकटनम् अथवा इष्टे=प्रिये वस्तुनि=सुहृज्जनादौ आशंसनम्=शुभाभ्यर्थनम् आशीर्नाम=अशीरलङ्कार इत्यर्थः । 'यथा' उदाह्रियते—अवाङ्मनसगोचरम्=वागतीतम् मनोऽतीतञ्च परमं ज्योतिः=परब्रह्म वः=युष्मान् पातु=रक्षतु । अत्र शिष्यादीनां शुभाभ्यर्थनमाशीरलङ्कारः ।

'अवाङ्मनसगोचरम्' इति पाठश्चिन्त्यः । 'गोचर' शब्दस्य अजहल्लिङ्गत्वात् प्रकृते स्वार्थापरित्यागाच्च । वाक् च मनश्च वाङ्मनसे तयोर्गोचरो न इत्यवाङ्मनसगोचर इति स्यात् । तथा च श्रुतिः—'नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा' इति । यदि तु—'वाङ्मनसे गोचरौ प्रतिपादकौ यस्य तद् वाङ्मनसगोचरम् तन्न भवतीति अवाङ्मनसगोचरम्' इति विगृह्येत तदा क्लिष्टया युक्तिः स्याद्वा । उदाहरणान्तरं यथा—

ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ [ शाकुन्तले ]

केषाञ्चिन्मते तु—प्रेयोऽलङ्कारस्यैवायं विशेषः । अपरे तु नाट्यालङ्कृतिमेवाशिषं मन्यन्ते ॥ ३५७ ॥

इत्याशीः प्रकरणम् ।

———

[ मतान्तरोक्तानामलङ्काराणां स्वमतेष्वेवान्तर्भावः ]

**अनन्वयससन्देहावुपमास्वेव दर्शितौ ।**
**उपमारूपकञ्चापि रूपकेष्वेव दर्शितम् ॥ ३५८ ॥**

स्वभावाख्यानप्रभृत्याशीरन्तानलङ्कारान् उद्देशक्रमेण निरूप्य सम्प्रत्यन्यैरुक्तान् कांश्चित् स्वोक्तेष्वेवान्तर्भावयति —'अनन्वय०' इति । अनन्वयससन्देहौ=अनन्वयः 'उपमानोपमेयत्वं यदेकस्यैव वस्तुनः । इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः' इत्युक्तलक्ष्यलक्षणः, ससन्देहः='ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः' इत्युक्तलक्षणः तौ उपमासु एव=उपमाभेदेष्वेव दर्शितौ=निरूपितौ । 'उपमारूपकं च अपि रूपकेषु एव दर्शितम्' । एवञ्चैतेषां पृथङ् निरूपणं नावश्यकमिति भावः । एतच्च पूर्वोक्तेषु तत्र तत्र स्वयमूह्यं किमत्र पाठावृत्त्या ॥ ३५८ ॥

**उत्प्रेक्षाभेद एवासावुत्प्रेक्षावयवोऽपि च ।**

[ सङ्कीर्णोदाहरणम् ]

**नानालङ्कारसंसृष्टिः सङ्कीर्णन्तु निगद्यते ॥ ३५९ ॥**

उत्प्रेक्षाभेद इति । असौ=अन्यैरभिहितः उत्प्रेक्षावयवः=एतन्नामालङ्कारभेदः 'अपि' उत्प्रेक्षाभेद एव=उत्प्रेक्षाविशेष एव ज्ञेयः इति शेषः । तथा चोक्तम्—

शिलष्टेनार्थेन संस्पृष्टः किञ्चिच्चोपमयान्वितः ।
रूपकार्थेन वा युक्त उत्प्रेक्षावयवो यथा ॥ इति ।

तत्र शिलष्टार्थसंस्पृष्टो यथा—

मुक्तोत्करः सङ्कटशुक्तिमध्याद् विनिर्गतः सारसलोचनायाः ।
जानीमहेऽस्याः कमनीयकम्बु-ग्रीवाधिवासाद् गुणवत्त्वमाप ॥

अत्र गुणवत्त्वे श्लेषः । तथाचायं श्लेषादिसङ्कीर्णोत्प्रेक्षामात्रम्, अतः पृथङ् निरूपणायासो व्यर्थ इति भावः ।

इत्थञ्च—दृष्टान्तस्योपमायाम्, परिणामोल्लेखयोः रूपके, कारणमालाया हेतावन्तर्भावो ज्ञेयः । तथैव नव्यैः स्वीकृतानामन्येषामपि केषाञ्चिदलङ्काराणामनयैव रीत्या यथायथमन्तर्भाव ऊहनीयः । दिङ्मात्रन्तु प्रादर्शि ।

सङ्कीर्णं लक्षयति—नानालङ्कारसंसृष्टिः=एकत्र नानालङ्कारसमावेशः सङ्कीर्णम्=सङ्कीर्णना मालङ्कारः निगद्यते=अभिधीयते 'तु' ना संसृष्टेरपृथग्भाव उक्तः ।

अयमाशयः—यथा लौकिकानां हारकटककुण्डलादीनां परस्परं संसर्गविशेषेण सौन्दर्यातिशयजनकता दृश्यते तेषाञ्च गोस्तनहारयष्ट्यादिसंज्ञाभेदोऽपि जायते एवमेव काव्यालङ्काराणां साङ्कर्यादिना विलक्षणचमत्कृतिजनकत्वे सङ्कीर्णादिव्यवहारोपि ज्ञेयः ॥ ३५६ ॥

[ सङ्कीर्णभेदकथनम् ]

**अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्षता ।**
**इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥ ३६० ॥**

सङ्कीर्णस्य भेदावाचष्टे—'अङ्गाङ्गि०' इति । अङ्गाङ्गिभावावस्थानम्=कुत्रचित् निर्वाह्यनिर्वाहकतयावस्थानम् गुणप्रधानभावेनावस्थितिरित्यर्थः, अथवा क्वचित् सर्वेषाम्=अलङ्काराणाम् समकक्षता=समानबलवत्त्वम् इति=अनया दिशा अलङ्कारसंसृष्टेः=सङ्कीर्णालङ्कारस्य द्वयी गतिः=द्वौ प्रकारौ लक्षणीया=बोध्या इत्यर्थः, नव्यैस्तु—अङ्गाङ्गिभावे 'सङ्करसंज्ञा' समकक्षतायान्तु 'संसृष्टिसंज्ञा' स्वतन्त्रैव कृता नत्वेकं सङ्कीर्णं मत्वा तस्य द्वौ भेदावुक्तौ । उक्तञ्च—

सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ।
अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वन्तु सङ्करः ॥ इति ॥ ३६० ॥

[ सङ्कीर्णोदाहरणम् ]

**आक्षिपन्त्यरविन्दानि मुग्धे ! तव मुखश्रियम् ।**
**कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥ ३६१ ॥**

तत्रादावङ्गाङ्गिभावसङ्कीर्णमुदाहरति—'आक्षिपन्ति' इति । हे मुग्धे ! अरविन्दानि=कमलानि तव मुखश्रियम्=आननशोभाम् आक्षिपन्ति=न्यक्कारयन्ति जेतुमिच्छन्ति समीकुर्वन्तीत्यर्थः । तथाहि—कोषदण्डसमग्राणाम्=कोषः धनसञ्चयः कुड्मलश्च दण्डः चतुर्थोपायः नालञ्च, ताभ्यामुभाभ्यां समग्राणाम् परिपूर्णानां सोपकरणानाम् एषाम् किम् दुष्करम् अस्ति=किमसाध्यमस्ति न किमपीत्यर्थः ।

अत्र श्लेषोऽर्थान्तरन्यासस्याङ्गम् अर्थान्तरन्यासोऽपि आक्षिपन्तीत्यत्र प्रथमार्धे विद-

मानाया उपमाया अङ्गमिति परस्पराङ्गाङ्गिभावरूपं सङ्कीर्णम् । केचित्तु कोपदण्डसमप्राणा-मिति हेत्वलङ्कारोऽत्राङ्गमित्याहुः ॥ ३६१ ॥

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ३६२ ॥**

—*—

इति सङ्कीर्णम् ।

—*—

समकक्षतायां सङ्कीर्णमुदाहरति—'लिम्पति' इति । व्याख्यातमिदं प्राक् । अत्र पूर्वार्धे उत्प्रेक्षा उत्तरार्धे चोपमा इत्यनयोः परस्परं निरपेक्षतयैवावस्थितिरिति समकक्षता [ समान-बलवत्त्वम् ] इति द्वितीयः सङ्कीर्णस्य प्रकारः ।

इदन्त्ववधेयम्—सामान्यतो मिश्रालङ्कारस्य द्वैविध्यम् मिश्रितत्वेऽप्यलङ्काराणां पर-स्परसम्बन्धोऽवश्यमपेक्षितः । स च संयोगः समवायरूपश्च भवति । संयोगे मिश्रतिलतण्डु-लन्यायः । समवाये मिश्रक्षारन्यायः । तिलतण्डुलन्यायेन सम्बन्धे संसृष्टिः । क्षीरनीर-न्यायेन सम्बन्धे सङ्करः । अनयोः पृथक् चारुत्वातिशयहेतुत्वादलङ्कारधुरन्धरत्वम् नतु पूर्वोक्तालङ्कारशेषता । तत्र संसृष्टिर्यथा—[ प्रतापरुद्रीये ]

तिलतण्डुलसंश्लेष न्यायाद्यत्र परस्परम् । संश्लिष्येयुरलङ्काराः सा संसृष्टिर्निगद्यते ॥३६२॥

[ श्लेषस्य बहुषु सङ्कीर्णत्वमाह ]

**श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम् ।**
**भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ॥ ३६३ ॥**

श्लेषस्यानेकेष्वलङ्कारेषु सत्तां [ सङ्कीर्णतां ] दर्शयति—'श्लेष' इति । श्लेषः=पूर्व निरूपितः श्लेषालङ्कारः प्रायः=प्राचुर्येण बाहुल्येनेत्यर्थः, सर्वासु वक्रोक्तिषु=भणितिषु [वचन-] भङ्गिरूपासु अलङ्कृतिषु श्रियम्=द्युतिम् विच्छित्तिमिति यावत्, पुष्णाति=समर्थयति । किञ्च—वाङ्मयम्=काव्यम् स्वभावोक्तिः=जात्यादीनां यथावत्स्वभाववर्णना वक्रोक्तिः च इति=विच्छि-त्तिविशेषशालित्वेन रूपेण उपमाद्यलङ्कारोक्तिश्च इत्येवंरूपेण द्विधा भिन्नम् अर्थात् सङ्कीर्णात् पृथगप्यस्ति ॥ ३६३ ॥

[ भाविकवर्णनम् ]

**तद् भाविकमिति प्राहुः प्रबन्धविषयं गुणम् ।**
**भावः कवेरभिप्रायः काव्येष्वासिद्धि संस्थितः ॥ ३६४ ॥**

—*—

भवे भवन्तु भाविकाः भवार्चनारताः सदा ।
सदा भवाधिवर्जिताः स्वरूपवित्तिसम्पदा ॥ १ ॥

—*—

भाविकालङ्कारोऽलङ्कारमात्रं गर्भीकरोतीत्याह—'तद्' इति । प्रबन्धविषयम्=

१ विस्तरस्तु प्रतापरुद्रीयादिषु द्रष्टव्यः ।

प्रबन्धाः महाकविप्रणीताः महाकाव्यनाटकनाटिकाख्यायिकाख्यानकादयः तद्विषयं तन्निष्ठम् गुणम्=विच्छित्तिविशेषजनकं धर्मम् भाविकम्=इत्याख्यमलङ्कारम् प्राहुः=कथयन्ति, रसिका इति शेषः। स्वयमेव भाविकं निर्ब्रूते 'भाव' इति। कवेः अभिप्रायः=भावः स च काव्येषु=कविप्रणीतेषु निबन्धेषु आसिद्धि=समाप्तिपर्यन्तं संस्थितः।

अयमर्थः—चमत्कारविशेषजनकाः केचन धर्माः स्वभावाख्यानादिनाम्ना अलङ्कारत्वेनोक्ताः तद्वैचित्र्यरूपाण्यनन्तान्यलङ्करणानि सन्ति येषामाहत्य नामानि वक्तुमशक्यानि, परन्तु प्रबन्धगतं यद्वैचित्र्यं तदेव 'भाविक' नाम्ना व्यवह्रियते, स चायमितरालङ्कारवत् न केवलं पदगतो वाक्यगतो वा किन्तु महावाक्यघटितप्रबन्धगतोऽप्यस्ति कवेरभिप्रायस्य व्यापकत्वात् तस्माद् भाविकस्य सर्वत्र सङ्कीर्णता ज्ञेया। अत एव 'शान्तो रसो महाभारतस्याङ्गित्वेन विवक्षित' इत्याद्युक्तिः 'अभिनवगुप्तपादाचार्याणां' सङ्गच्छते ॥ ३६४ ॥

[ भाविकस्वरूपे उपपत्तिप्रदर्शनम् ]

**परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम्।**
**विशेषणानां व्यर्थानामक्रिया स्थानवर्णना ॥ ३६५ ॥**
**उक्तिक्रमबलाद् व्यक्तिर्गम्भीरस्यापि वस्तुनः।**
**भावायत्तमिदं सर्वमिति तद् भाविकं विदुः ॥ ३६६ ॥**

कवेरभिप्रायगोचरान् कतिचन प्रबन्धगतान् धर्मान् [ गुणान् ] द्वाभ्यां दर्शयति—'परस्परोपकारित्वम्' इति। सर्वेषां वस्तुपर्वणाम्=वस्तूनि आधिकारिकानां वर्णनीयानामितिवृत्तानि इतिहासः, पर्वाणि तेषामुपकारकराणि प्रासङ्गिकेतिवृत्तानि तेषां सर्वेषामाधिकारिकेतिवृत्तानां प्रासङ्गिकेतिवृत्तानाञ्चेत्यर्थः, परस्परोपकारित्वम्=अन्योन्योपयोगित्वम् कवेरभिप्रायः स्यादित्यर्थः। यथा रामायणे—रामचरितमाधिकारिकं सुग्रीवादिचरितन्तु प्रासङ्गिकम्, तयोरङ्गाङ्गिभावेन परस्परोपयोगिता वर्त्तते एव। वस्तुविषये 'नखकुट्टेना'ऽप्युक्तम्—

इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते। आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम् ॥ इति।

यथा वा—महाभारते वनपर्वणि युधिष्ठिरदुःखादिचरितमाधिकारिकेतिवृत्तम्, नलचरितन्तु प्रासङ्गिकम्। इत्थं महाकाव्यादौ नगनगरकरितुरगादिवर्णनमपि क्वचित् साक्षात् क्वचित् परम्परया वा प्रधानस्यैवोपकारे पर्यवसानमासादयते इत्यपि न विस्मरणीयम्।

'विशेषणानाम्' इति। तथा व्यर्थानाम्=प्रकृतोपयोगराहितानाम् विशेषणानाम्=धर्माणाम् अक्रिया=अनुपन्यसनं कवेरभिप्रेतं स्यादिति अर्थवशात् सर्वत्र योज्यम्। अर्थात् काव्येऽभिप्रेतार्थबोधकविशेषेणोपन्यासः काव्यमहिमानमुत्कर्षयति न त्वनभिप्रेतार्थविशेषणवर्णनम्। अयमेव नव्यानां मते 'परिकरालङ्कार' उक्तः। यदाह मम्मटः—'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः' इति। अन्ये तु— अपुष्टत्वदोषाभावमाहुः। तथा स्थानवर्णना=स्थानानां प्रकृतरसभावाद्युपयोगिविषयविशेषाणां वर्णना उपन्यासः कवेरभिप्रायगोचरो भवेत्। किञ्च—उक्तिक्रमबलात्=उक्तिक्रमः पदविन्यासपरिपाटी तस्य बलात् प्रतिपादकतासामर्थ्यात् गम्भीरस्य अपि वस्तुनः=अतिगूढस्याप्यर्थस्य व्यक्तिः=प्रकटता इदं सर्वम्=तदिदं सर्वमेव भावायत्तम्=कवेरभिप्रायतन्त्रम् इति=अतो हेतोः 'भाविकम्' एतन्नामालङ्कारं विदुः आलङ्कारिका इति शेषः।

परे तु—'अतीतानागतयोः प्रत्यक्षायमाणत्वं भाविकम्' इति वर्णयन्ति कविगतो भाव आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति। भावो भावना वा पुनः पुनश्चेतसि निवेशनं सोऽत्रास्तीति। यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः। येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥

अत्र वर्णनीयस्य मुनेरगस्त्यस्य वर्णनवशादेव प्रत्यक्षायमाणत्वमिति भाविकालङ्कारः। कुवलयानन्दे त्विदं रसवदलङ्कारोदाहरणम्, अद्भुतरसस्य मुनिविषयकरतिभावम्प्रत्यङ्गत्वात्॥ ३६५, ३६६॥

**यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।**
**व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः॥ ३६७॥**

उक्तविषयेऽन्यदप्याह—'यत्' इति। यत् च=अन्यदपि यत् सन्ध्यङ्गवृत्त्यङ्गलक्षणादि=**सन्धयः** मुखप्रतिमुखगर्भनिर्वहणाभिधाः पञ्च, तेषाम् अङ्गानि उपक्षेपपरिकरप्रभृतीनि चतुःषष्टिसंख्याकानि। **वृत्तयः** कैशिकीसात्त्वत्यारभटीभारत्यः चतस्रः, तासाम् अङ्गानि नर्मनर्मस्फूर्जादीनि षोडश। **लक्षणानि** भूषणाक्षरसंघातादीनि षट्त्रिंशत्। आदिपदेन नाट्यालङ्कारवीथ्यङ्गलास्याङ्गानां ग्रहणम्, ते च आशीरादयः त्रयस्त्रिंशत् वीथ्यङ्गानि उद्घात्यकादीनि त्रयोदश, लास्याङ्गानि गेयप्रभृतीनि दश। एतत्सर्वम् आगमान्तरे=ग्रन्थान्तरे भरतादिरचिते व्यावर्णितम्=नाट्यशोभाकरत्वेन सम्यग्व्याख्यातम्। तत् च इदम् नः=अस्माकम् अलङ्कारतया एव=अलङ्कारत्वेनैव रूपेण इष्टम्=वाञ्छितम् अर्थात् उक्तेष्वस्मदलङ्कारेषु तेषां यथायथमन्तर्भावः, तत्र कानिचित् स्वभावाख्यानप्रभृतिष्वन्तर्भवन्ति, कानिचिच्च भाविकेऽस्मिन्, तच्च दशरूपकादिदत्तोदाहरणेषु स्वबुद्ध्योहनीयम्। एते च ग्रन्थबाहुल्यभिया मयात्र न प्रपञ्चिताः। एतेषां प्रपञ्चो दशरूपकादौ द्रष्टव्यः। मयापि च तद्व्याख्यायां सर्वमिदं स्फुटीकृतम्॥३६७॥

[ परिच्छेदार्थोपसंहारः ]

**पन्थाः स एष विवृतः परिमाणवृत्त्या**
**संहृत्य विस्तरमनन्तमलङ्क्रियाणाम्।**
**वाचामतीत्य विषयं परिवर्त्तमानान्**
**अभ्यास एव विवरीतुमलं विशेषान्॥ ३६८॥**

---

इत्याचार्यदण्डिनः कृतौ काव्यादर्शे
अर्थालङ्कारविभागो नाम
द्वितीयः परिच्छेदः।

---

१ उक्तञ्चाभियुक्तैः—

शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती॥

—*—

इति 'सौभाग्यवती' विवृतेः द्वितीयः परिच्छेदः॥

—:*:—

परिच्छेदार्थमुपसंहरति—'पन्थाः' इति। अलङ्क्रियाणाम्=पूर्वोक्तस्वभावोक्तिप्रभृत्यलङ्काराणाम् अनन्तम्=सीमारहितम् विस्तरम्=प्रपञ्चम् परिमाणवृत्त्या=परिमितत्वेन संहृत्य=संक्षिप्य सङ्गृह्येति यावत्, एषः=प्रख्यातः कविसमाजे पन्थाः=मार्गः सरणिरित्यर्थः, विवृतः=स्फुटीकृतः। नह्यनन्तानां विशेषाणां प्रजापतिनापि संकलना कर्तुं शक्यत इति भावः। ननु-तर्हि तेषां विशेषज्ञानाभावे वैयर्थ्यमेव शास्त्रस्य, तद्विदाश्चाचार्याणामपूर्णविज्ञानितेत्याशङ्क्याह—'वाचाम्' इति। वाचाम्=वाणीनाम् विषयम्=गोचरताम् अतीत्य=अतिक्रम्य परिवर्त्तमानान्=स्थितिभाजः विशेषान्=भेदान् विवरीतुम्=व्याख्यातुम् पृथक् पृथग्वाधिगन्तुम् अभ्यासः एव=पुनःपुनरावृत्तिः एव अलम्=समर्थः। यद्यपि संक्षिप्तोऽयं मार्गः प्रदर्शितः तथापि पुनःपुनःपरिशीलनेन अनुक्ता अपि भेदा ज्ञातुं विवरीतुञ्च शक्या इति भावः। अत एव पूर्वमुक्तम्—'ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति' इति। एवञ्चोपक्रान्त एवार्थः उपसंहृतो दण्डिना आचार्येण इति शिवम्॥ ३६६॥

---

इति श्रीपण्डितदेवीदासतनुजनुषा सारस्वतवंशावतंसेन सतीविष्णुदेवीगर्भजेन
स्यालकोटवास्तव्य-( लवपुरवास्तव्य )-जैनन्यायविशारद-कवितार्किक-
(तन्त्रचक्रवर्त्ति) दर्शनाचार्य-**नृसिंहदेव**शास्त्रिविरचितायां स्वोपज्ञ-
'सौभाग्यवती' विवृतिसहितायां 'कुसुमप्रतिमा' ख्यायां
काव्यादर्शव्याख्यायां द्वितीयः परिच्छेदः।

# तृतीयः परिच्छेदः।

**अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः।**
**यमकं तच्च पादानामादिमध्यान्तगोचरम्॥ १॥**

—*—

अपारशास्त्राम्बुनिधिप्रभूत-प्रभावितानेकसुरत्नहारा।
प्रसादवैशद्यविशालदृष्टिः श्रीशारदा मे वरदा सदास्तु॥ १॥

—*—

द्वितीये परिच्छेदे 'काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते' इति सामान्यतः शब्दार्थालङ्कारलक्षणमभिधाय तदनुसारं पूर्वं शब्दालङ्कारेषु निरूपयितव्येष्वपि अर्थालङ्कारापेक्षया तेषां वैचित्र्यतिशयाभावात् तानुपेक्ष्य प्रथमं चमत्कारातिरेकभूमित्वादर्थालङ्कारानेव निरूपयाम्बभूवाचार्यः। सम्प्रति तु प्रथमपरिच्छेदे सामान्यतो दर्शितेष्वपि शब्दालङ्कारेषु अस्मिन् तृतीये परिच्छेदेऽवसरसङ्गत्या अनुप्रासेतरान् तद्विशेषान् दर्शयिष्यन् दोषाणां सामान्यविशेषलक्षणश्चाभिधास्यन् रीतिप्रसङ्गप्राप्ततया कथितलक्षणमपि यमकालङ्कारमादावनूद्य तद्भेदानाचष्टे—'अव्यपेतव्यपेतात्मा' इति। न व्यपेतोऽव्यपेतोऽव्यवहितः। अव्यपेतश्च व्यपेतश्च तौ अव्यपेतव्यपेतौ, व्यवधानसहितव्यवधानरहितावित्यर्थः, तौ [अव्यपेतव्यपेतौ] आत्मा स्वरूपं यस्याः सा तथाभूता। [इदं 'व्यावृत्ति'रित्यस्य विशेषणम्] वर्णसंहतेः=वर्णानां स्वरव्यञ्जनानां संहतिः संघः तस्याः, स्वरव्यञ्जनवर्णसंघातस्य या व्यावृत्तिः='वि' विशेषेण आवृत्तिः पुनः पुनरुच्चारणम् सा यमकम्=यमकालङ्कार इत्यर्थः। अस्य विशेषाः पूर्वमेवोक्ताः ते सम्प्रति नोच्यन्ते। 'अव्यपेते'त्यादिकथनेन क्वचित् पूर्वोच्चारितवर्णसंघातस्याव्यवधानेन पुनरुच्चारणम्, क्वचित् तद्व्यवधानेनेति तावत् भेदद्वयं प्राप्तम्। 'भिन्नार्थकवर्णसमूहावृत्तिर्यमकम्' इति स्पष्टं यमकलक्षणम्।

[१]स्यात्पादपदवर्णानामावृत्तिः संयुता युता।
यमकं भिन्नवाच्यानामादिमध्यान्तगोचरम्॥ इति।

---

१ अस्येयं व्याख्या—पादो वृत्तचतुर्थो भागः। पदं विभक्त्यन्तम्। वर्णोऽक्षरम्। अमीषां भिन्नवाच्यानां भिन्नार्थानामावृत्तिः पुनः पुनर्वर्णनं यमकं स्यात्। सा आवृत्तिर्द्विधा। संयुता अयुता च। संयुता=अन्तरालेऽपरपदरहिता। अयुता=अन्तरालपदसहिता। तथा संयुतावृत्तौ तद्यमकं त्रिधा—आदिमध्यान्तगोचरम्=आदिगोचरमादियमकम्, मध्यगोचरं मध्ययमकम्, अन्तगोचरमन्तयमकम्।

(प्र०) यमकस्य किं लक्षणम्? (उ०) अस्य पृ० पं० २।

उक्तलक्षणलक्षितस्य यमकस्य स्थानं निर्दिशति—'तच्च' इति । तच्च=यमकम् पादानाम्=एकद्वित्रिचतुरात्मकानां श्लोकचरणानाम् आदिमध्यान्तगोचरम्=आदिश्च मध्यश्च अन्तश्च ते 'आदिमध्यान्ताः' ते गोचरः विषयो यस्य तत् 'आदिमध्यान्तगोचरम्'। एवमत्रायं विभागप्रकारो ज्ञेयः । तथाहि—प्रथमपादस्य आदिभागगतम्, मध्यभागगतम्, अन्तभागगतञ्चेत्येको विभागप्रकारः । एवं द्वितीयपादस्य आदिगतम्, मध्यगतम्, अन्तगतञ्च । एवं तृतीयचतुर्थयोरपि । उक्तञ्चाग्निपुराणे—

अनेकवर्णावृत्तिर्या भिन्नार्थप्रतिपादिका ।
यमकं साऽव्यपेतञ्च व्यपेतञ्चेति तद् द्विधा ॥

अयुतावृत्तौ त्वन्यथा व्याख्या—आदिमध्यगोचरम्,मध्यान्तगोचरम्। काकाक्षिगोलकन्यायेन मध्यशब्द उभयत्रापि सम्बध्यते। तथा मध्यस्यान्तोऽर्थात् पद्यान्त एवोच्यते। तेनाद्यन्तगोचरं यमकं स्यादिति सिद्धम् । आवृत्तिर्यथाशक्ति क्रियते, तेन श्लोकान्तगामिन्यप्यावृत्तिः सम्भवति। निषेधाभावेनैकाकारं चतुष्पदं 'महायमक' मुच्यते इत्यपि सिद्धम्। इति सिंहदेवगणिः।

आनन्तर्यादव्यपेतं व्यपेतं व्यवधानतः । द्वैविध्येनानयोः स्थानपादभेदाच्चतुर्विधम् ॥
आदिपादादिमध्यान्तेष्वेकद्वित्रिनियोगतः । सप्तधा सप्तपूर्वेण चेत्पादेनोत्तरोत्तरः ॥
एकद्वित्रिपदारम्भस्तुल्यः षोढा तदा परम्। तृतीयं त्रिविधं पादस्यादिमध्यान्तगोचरम् ॥
पादान्तयमकं चैव काञ्चीयमकमेव च । संसर्गयमकं चैव विक्रान्तयमकं तथा ॥
पादादि यमकं चैव तथाम्रेडित मेव च । चतुर्व्यवसितं चैव मालायमकमेव च ॥
दशधा यमकं श्रेष्ठं तद्भेदा बहवोऽपरे ॥ इत्यादि ।

एतेषामुदाहरणानि 'स्तुतिकुसुमाञ्जल्या'दि महाकाव्येषु यथायथमुपलब्धुं शक्यन्ते, किंतु विस्तरभयात्सर्वेऽत्र न दर्शिताः, उचितानेव व्याख्यास्यामः ॥ १ ॥

[ यमकभेदवर्णनम् ]

**एकद्वित्रिचतुष्पाद-यमकानां विकल्पनाः ।**
**आदि-मध्यान्त-मध्यान्त-मध्याद्या-द्यन्तसर्वतः ॥ २ ॥**
**अत्यन्तबहवस्तेषां भेदाः सम्भेदयोनयः ।**
**सुकरा दुष्कराश्चैव दर्श्यन्ते तेऽत्र केचन ॥ ३ ॥**

उक्तः स्थानभेदेन यमकभेदः, सम्प्रति पादगतं भेदं दिदर्शयिषुः क्रमशः तत्तद्भेदान् निर्दिशति—'एक०' इत्यादि। एकद्वित्रिचतुष्पादयमकानाम्=एकादिपादगतानाम् अविमिश्राणामित्यर्थः। विकल्पनाः=विविधाः कल्पना विकल्पनाः अर्थात् 'पादानामादिमध्यान्तगोचरम्' इत्यनन्तरमेव सामान्यत उक्ता भेदाः 'विज्ञेया' इति शेषः । पादचतुष्टयात्मकं पद्यं भवति, तस्य प्रतिपादम् आदिमध्यान्तगतत्वेन पूर्वं त्रिधा भिन्नस्य यमकस्य पुनः द्वादशप्रकारा जायन्ते । एते च भेदा अविमिश्रयमकस्यैव । तथाहि—अविमिश्रितं प्रथमपादादिगतम् द्वितीयपादादिगतम्, तृतीयपादादिगतम्, चतुर्थपादादिगतमिति चत्वारः प्रकाराः आदिभागगतयमकस्य । एवमेव प्रथमादिपादमध्यान्तभागगतमपि, ततो मेलनेन द्वादशभेदा अविमिश्रितयमकस्येत्यभिप्रायः ।

(प्र०) के च यमकभेदाः ? (उ०) अस्य पृ० पं० २२

अविमिश्रभेदमुक्त्वा मिश्रयमकभेदमाचष्टे—'आदि०' इति । सम्भेदयोनयः=सञ्जा-यद्यमकानां परस्परसम्मिश्रणं **सम्भेदः**, स योनिर्येषां ते तथाभूताः 'विमिश्रा' इत्यर्थः । तेषाम्=यमकानाम् भेदाः=प्रकाराः आदिमध्यान्त-मध्यान्त-मध्याद्या-द्यन्तसर्वतः अत्यन्त-बहवः=अतिमात्रं विस्तरवन्त ज्ञातव्या इति शेषः । अत एवोक्तं मम्मटाचार्येण—तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेषु अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम् । तदेतत् काव्यान्तर्गड्डुभूतमिति नास्य भेदलक्षणं कृतम् इति । आदीत्यादेः पदविश्लेषचिह्नं योजितम् । 'सर्वत' इति सप्तमीबहुवचनान्तम् । पदच्छेदस्तु–आदिमध्यान्तेषु, मध्यान्तेषु, मध्याद्येषु, आद्यन्तेष्विति ज्ञेयः । अत्र सर्वत्र मध्यशब्दः द्वितीयतृतीयपादबोधकः । शेषमादिपदञ्च प्रथमद्वितीयतृतीयपादबोधकम्, यतः त्रयोऽपि प्रथमाद्याः पादाः चतुर्थपादस्य प्रथमस्थितत्वेनादय इत्युच्यन्ते । 'मध्याद्ये'त्यत्र 'आद्यश्च मध्यौ च' इति विग्रहः । धर्मादिपाठात् आद्यस्य परनिपातः । तत्र आदिमध्यान्तेत्यस्य प्रथमे द्वितीये, प्रथमे तृतीये, प्रथमे चतुर्थे, इति त्रयः प्रकाराः । 'मध्यान्ते'त्यस्य द्वितीये तृतीये, द्वितीये चतुर्थे, तृतीये चतुर्थे इति त्रयः प्रकाराः । 'मध्याद्ये'त्यस्य प्रथमे द्वितीये तृतीये चेत्येकः प्रकारः । आद्यन्तेत्यस्य प्रथमे द्वितीये चतुर्थे, प्रथमे तृतीये चतुर्थे, द्वितीये तृतीये चतुर्थे चेति त्रयः प्रकाराः । 'सर्वे'त्यस्य प्रथमे द्वितीये तृतीये चतुर्थे चेत्येकः प्रकारः । एवं मेलनेन व्याभिश्रयमकस्य एकादश [११] भेदाः सन्ति । इतरेऽपि केचन अस्थानस्थूलसूक्ष्मादियमकप्रकाराः सरस्वतीकण्ठाभरणादिष्वालोक्याः । एते चादिभागविषया मध्यादिभागविषयाश्च विज्ञेयाः । ते च सुकराः=सुखेनावगन्तुं शक्याः सुगमाः । दुष्कराः=दुःखेनावगन्तुं शक्याः दुर्गमाः कवीनां बोद्धॄणाम् [अध्येतॄणां] चेति काठिन्यं मत्वा 'अत्र' ग्रन्थे केचन=कतिपये दर्श्यन्ते=उदाह्रियन्ते इत्यर्थः । ननु सम्भाविनः सर्वेऽत्र दर्शिताः ते तु दर्शितप्रकारेणैव तत्र तत्र महानिबन्धेषूहनीया इति भावः ॥ ३ ॥

[ प्रथमपादगतस्य अव्यपेताविभिश्रादिभागगतयमकस्योदाहरणम् ]

**मानेन मानेन सखि ! प्रणयोऽभूत् प्रिये जने ।**
**खण्डिता कण्ठमाश्लिष्य तमेव कुरु सत्रपम् ॥ ४ ॥**

तत्रादौ प्रथमपादगतम् अव्यपेत–[मव्यवहित]–मविमिश्रम् आदिभागगतं यमकमुदाहरति—'मानेन' इति । [अत्यन्तमानवतीं खण्डिताम्प्रति तस्याः सखीनां वचनमिदम्] हे ! सखि !=आलि ! प्रिये जने=वल्लभे जने प्रणयिनं जनम्प्रतीत्यर्थः, अनेन=एतादृशेन गाढतरत्वादस्माकमपि क्लेशवहेन मानेन=ईर्ष्याजनितेन कोपेन, 'मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भव' इति ज्ञेयं मानस्य लक्षणम् । प्रणयः=प्रेमा 'तव' इति शेषः, मा भूत्=प्रियम्प्रत्येतादृशं कोपं माकार्षीरित्यर्थः । ननु—सापराधे तच्छासनार्थं मान एवाश्रयणीय इत्याशङ्क्याह–'खण्डिता' इति । त्वं खण्डिता=ईर्ष्याकालुष्यं गतापि कण्ठम् आश्लिष्य=स्वयमेवालिङ्गनं दत्वा तम् एव=प्रियं जनम् सत्रपम्=सव्रीडम् कुरु=विधेहि । कृतापराधेऽपि तस्मिन् कण्ठश्लेषद्वारा प्रीतिप्रदर्शनेन लज्जितीकरणं तस्याधिकं शासनमिति भावः ।

अत्र 'मानेन मानेन' इति अव्यपेतं [व्यवधानं विना] आदिपादगतमादिभागयमकम् । इदमेव संयुतावृत्तौ पादयमकमित्युदाहृतं वाग्भटेन—'**दयां चक्रे दयाञ्चक्रे । सतां**

**तस्माद् भवान् वित्तम्'** इति । अस्यायमर्थः—हे राजन्! यस्माद् भवान् दयाम्=करुणां चक्रे=चकार तस्मात्=कारणात् भवान् सताम्=साधूनां वित्तम्=धनम् दयाञ्चक्रे=दत्तवान्। इदं 'व्रीडा'ख्यं छन्दः। अत्रादिपादगता संयुता [अपरपदव्यवधानरहिता] आवृत्तिरिति तादृशं पादयमकम्। खण्डिताया लक्षणमुक्तं दशरूपके-'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति ॥ ४ ॥

—:*:—

[ तस्यैव द्वितीयपादगतस्योदाहरणम् ]

**मेघनादेन हंसानां मदनो मदनोदिना ।**
**नुन्नमानं मनः स्त्रीणां सह रत्या विगाहते ॥ ५ ॥**

द्वितीयपादगतं तदेव यमकमुदाहरणेन स्पष्टयति—'मेघनादेन' इति । हंसानाम्=कादम्बानाम् मदनोदिना=मदं दूरीकुर्वता मेघनादेन=मेघानां बलाहकानां नादेन गर्जनेन [वर्षासु हंसा निर्मदा भवन्तीति प्रसिद्धिः] नुन्नमानम्=नुन्नः उद्दीपनकरत्वात् खण्डितो मानो गर्वो यस्य तत् तथाविधं स्त्रीणाम्=नायिकानाम् मनः=हृदयं कर्मभूतम् मदनः=मन्मथः कामः रत्या=अनुरक्तया स्वपत्न्या च सह विगाहते=विलोडयति उन्मथयतीत्यर्थः । मेघगर्जनं कामोद्दीपकमिति वर्षासु स्त्रीणां मनोऽनुरागाकुलं कामाकुलञ्च जायत इति भावः ।

अत्र 'मदनो मदनो' इति 'द्वितीयपादगतम् अव्यपेतम् अविमिश्रम् आदिपादगतं' यमकम्। नुदति प्रेरयतीति 'नोदी'। ग्रहादित्वात् 'णिन्' । ग्रहादिराकृतिगणोऽपि। तथा च शाकटायनसूत्रम्—'ग्रहादिभ्यो णिन्' [४।३।८७] एतद्व्याख्यायाम्—'ग्रहादिराकृतिगणः तेन विसारीत्यादि सिद्धम्' इत्युक्तम् ।

'नुन्न' इति 'नुद' धातोः 'क्त' प्रत्यये रूपम्। **'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्'** [८।२।५६] इति सूत्रेण निष्ठातस्य नो वा । पक्षे 'नुत्त' इत्यपि भवति ॥ ५ ॥

[ तस्यैव तृतीयपादगतस्योदाहरणम् ]

**राजन्वत्यः प्रजा जाता भवन्तं प्राप्य सत्पतिम् ।**
**चतुरं चतुरम्भोधिरसनोर्वीकरग्रहे ॥ ६ ॥**

अथ—तृतीयपादगतमव्यपेतमविमिश्रमादिभागगतं यमकमुदाहरति—'राजन्वत्य' इति । [हे राजन्!] चतुरम्भोधिरसनोर्वीकरग्रहे=चत्वारः अम्भोधयः समुद्रा एव रसना काञ्ची जघनभूषणं यस्याः सा तथाविधा उर्वी पृथिवी चतुःसमुद्रपर्यन्ता इत्यर्थः, तस्याः करः राजदेयांशः अथ च करः पाणिः तस्य ग्रहे ग्रहणे चतुरम्=दक्षम् भवन्तम्=त्वाम् सत्पतिम्=सन् साधुर्हितकारी चासौ पतिः पालक ईशः सुभर्त्ता धवश्च तम् प्राप्य=इत्वा प्रजाः=विशः राजन्वत्यः प्रशस्तराजोपेता जाताः=सम्पन्नाः 'सन्ति' इति शेषः ।

अत्र—'चतुरं चतुरम्' इति तृतीयपादगतमव्यवहितमादियमकम्। 'राजन्वत्य' इति—'राजन्वान् सौराज्ये' [८।२।१४] इति सूत्रेण सौराज्ये गम्यमाने 'राजन्वान्' इति मतुबन्तो

---

१ 'मुग्धबोधे' तु 'ह्रीत्राघ्रोन्दनुदविन्दो वा' इति सूत्रम्। एभ्यस्तयोस्तस्य नः स्यात् वा। [बोपदेवः]।

निपात्यते । शोभनो राजा यस्मिन्निति 'राजन्वान्' इति बहुव्रीहिसमासः । 'उगितश्च' [४।१।३।] इति स्त्रियां ङीप् । 'सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान्' इत्यमरः । 'रसना' इदं 'रशना' इति । 'तालव्या अपि दन्त्याश्च शम्बशम्बलशूकराः । रशनापि च जिह्वायाम्' 'रसनं निस्वने स्वादे रसना काञ्चिजिह्वयोः' इत्युभयत्रापि [अजयधरणी] । 'बलिहस्तांशवः कराः' इत्यमरः । 'पतिर्धवे ना त्रिषु' इति [विश्वमेदिन्यौ] ॥ ६ ॥

[ तस्यैव चतुर्थपादगतस्योदाहरणम् ]

**अरण्यं कैश्चिदाक्रान्तं कैश्चित्सद्म दिवौकसाम् ।**
**पदातिरथनागाश्वरहितैरहितैस्तव ॥ ७ ॥**

चतुर्थपादगतमव्यपेतमविभिश्रमादिभागगतं यमकमुदाहरति—'अरण्यम्' इति । [ हे! राजन्! ] तव कैश्चित् अहितैः=[शत्रुभिः] सपत्नैः, कीदृशैः—पदातिरथनागाश्वरहितैः=पदातयः पत्तयः, रथाः स्यन्दनाः, नागाः गजाः, अश्वाः वाजिनः, [तेषां द्वन्द्वः] तद्रहितैः चतुरङ्गसेनाविकलैरित्यर्थः, 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्' इत्यमरः, कैश्चित्=कतिपयैः जीवद्भिरेव अरण्यम्=जङ्गलम् आक्रान्तम्=आश्रितम् जीवन्त एवैके वनम्प्रति पलायिताः इत्यर्थः । कैश्चित्=अपरैः संग्रामाङ्गणे पञ्चत्वम्प्राप्तैः अहितैः दिवौकसाम्=देवानाम् सद्म=स्थानं सुरलोक इत्यर्थः, 'आक्रान्त' मिति पूर्वेण सम्बन्धः । अर्थात् तव रणे निर्भीकाः केचिन्मृता स्वर्गं जग्मुः । उक्तञ्च—

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ इति ॥

अत्र 'रहितैरहितैः' इति चतुर्थपादगतमव्यपेतमविमिश्रमादिभागगतं यमकम् । एवमव्यपेताविभिश्रयमकस्यादिभागगताः चत्वारो भेदा दर्शिताः । द्वितीयभागादिविषया अपि एवंभेदा बोधनीयाः ['रथौ स्यन्दनवानीरौ' इत्यजयः] एकस्मिन्नेव श्लोके चतुर्षु पादेषु आदिभागगतं यमकं यथा—[ईश्वरशतके]

**सञ्जातसज्जात**तलोचनाग्ने[1] ! **सन्ध्यात ! सन्ध्यात**पसा सुरौघैः ।
**माधीनमाधीन**परिग्रहेण **कालेन कालेन** हतं कृथा माम् ॥

अत्र 'सज्जात सज्जात' 'सन्ध्यात सन्ध्यात' 'माधीन माधीन' 'कालेन कालेन' इत्येवमाकारेण चतुर्षु पादेषु आदिभागगतं यमकमिदम् ॥ ७ ॥

---

१ सत्=अकृत्रिमं जातं जन्म यस्य स सज्जातः, सज्जः सन्नद्ध आततः विस्तीर्णः विश्वव्यापित्वाल्लोचनाग्निर्यस्य तत्सम्बुद्धौ हे सज्जातसज्जाततलोचनाग्ने ! इति तथा सुरौघैः ब्रह्मविष्णवादिभिर्देवसङ्घैः सन्ध्यातपसा=त्रिसन्ध्यं समाधिकरणेन सन्ध्यात ! सम्यग्ध्यात ! कालेन=कृष्णवर्णेन भयङ्करेण वा तथा आधीनपरिग्रहेण आधीनाम् मनोव्यथानाम् 'पुंस्याधिर्मानसी व्यथा' इत्यमरः, ये इनाः स्वामिनः ज्वरादयो रोगाः परिवारो यस्य स तथाविधः तेन कालेन=मृत्युना हतम्=नष्टं मां मा कृथाः माकार्षीः । 'कृथाः' इति 'कृ' धातोर्लुङि मध्यमपुरुषैकवचने 'न माङ्योगे' [ ६।४।७४ ] इति सूत्रेण अडभावे रूपम् । 'मा' इति श्लिष्टम् । 'मा' मिति, निषेधार्थश्च ।

[ प्रथमद्वितीय (आदि-मध्य) पादगतयमकस्योदाहरणम् ]

**मधुरं मधुरम्भोजवदने ! वद नेत्रयोः ।**
**विभ्रमं भ्रमरभ्रान्त्या विडम्बयति किं नु ते ॥ ८ ॥**

सम्भेदयोनीन् अव्यपेतयमकभेदान् निरूपयन् आदौ 'आदिमध्यान्ते' त्यनेन कथितं भेदत्रयम् [प्रथमद्वितीय-प्रथमतृतीय-प्रथमचतुर्थपादगतभेदत्रयम्] क्रमेणोदाहरति—'मधुरम्' इति । नु=भो अम्भोजवदने=अम्भोजमिव वदनं यस्याः तत्सम्बुद्धौ कमलमुखि ! ते=तव नेत्रयोः=नयनयोः [विषये सप्तमी] मधुः=वसन्तः भ्रमरभ्रान्त्या=इदं भ्रमरयुगलमिति भ्रमेण मधुरम्=मनोहरम् विभ्रमम्=विलासं शोभाम् विडम्बयति किम् ?=विशेषेण प्रेरयति समर्पयति वा इति त्वम् वद=कथय । 'किं न विडम्बयति' इति पाठे तु विडम्बयत्येवेत्यर्थो बोध्यः । अथवा 'नु' इति वितर्के एवमलौकिकस्तव नेत्रयोर्विभ्रमः भ्रमरसम्भ्रमेण मधुना [वसन्तेन] एव सन्तानित इत्यहं सम्भावये मधौ प्रसूते अम्भोजे तादृशभ्रमरविलासस्य सम्भवात् तथा तर्कना युज्यत इति भावः ।

अत्र 'मधुरं मधुरम्' इति तथा 'वदने वदने' इति च प्रथमद्वितीयपादगतम् आदियमकम् पादद्वयमिश्रणाच्च मिश्रसञ्ज्ञम्, पादानां व्यवधानाभावेन च अव्यपेतम्, एवमिदम् 'प्रथमद्वितीयपादगमिश्राव्यपेतादिभागगतयमक' मुच्यते । '**मधु** क्षौद्रे जले क्षीरे मद्ये पुष्परसे **मधुः** । दैत्ये चैत्रे वसन्ते च जीवशोके मधुद्रुमे' इति [विश्वः] ॥ ८ ॥

**वारणो वा रणोद्दामो हयो वा स्मर ! दुर्धरः ।**
**न यतो नयतोन्तं नस्तदहो विक्रमस्तव ॥ ९ ॥**

प्रथमतृतीयपादगतं तदेवोदाहरति—'वारणः' इति । हे स्मर !=कामदेव ! यतः=यस्मात् कारणात् 'तव' रणोद्दामः=रणे सङ्ग्रामे उद्दामः दुर्मदः सङ्ग्रामघस्मर इत्यर्थः, वारणः वा=गजश्च तथा दुर्धरः=पराप्रधृष्यः सङ्ग्रामदुर्धर्षः हयः वा=वाजी [घोटकः] च न=नैव 'अस्ति' इति शेषः, तत्=तस्मात् हेतोः अर्थात् युद्धसाधनाभावरूपात् कारणात् [वस्तुतस्तु 'तत' तथापि इति व्याख्येयम्] नः=अस्मान् विरहिणः अन्तम्=नाशं मृतिं नयतः=प्रापयतः तव विक्रमः=बलम् अहो=आश्चर्यभूत इत्यर्थः । अत्र 'वारणो वारणो' 'नयतो नयतो' इति प्रथमतृतीयपादगतम् आदियमकम्, इदमपि मिश्रमव्यवहितञ्च पूर्ववत् । किञ्च—अत्र विनाशकारणाभावेऽपि विनाशवर्णनात् 'विभावना' अप्यर्थालङ्कारो बोध्यः ॥ ९ ॥

[ प्रथमचतुर्थपादगतस्यादियमकस्योदाहरणम् ]

**राजितैराजितैक्ष्ण्येन जीयते त्वादृशैर्नृपैः ।**
**नीयते च पुनस्तृप्तिं वसुधा वसुधारया ॥ १० ॥**

प्रथमचतुर्थपादगतम् अर्थात् आद्यन्तपादगतं यमकमुदाहरति—'राजितैः' इति । आजितैक्ष्ण्येन=आजिः सङ्ग्रामः तत्र तैक्ष्ण्येन प्रचण्डतया रणदुर्मदतयेत्यर्थः, राजितैः=शोभितैः त्वादृशैः=भवादृशैः नृपैः=राजभिः वसुधा=भूमिः अर्थात् तद्वासिनी प्रजा जीयते=जयेन स्वायत्तीक्रियते सङ्ग्रामकरणेन क्षीणीक्रियते इत्यर्थः, पुनः=जयोत्तरम् वसुधारया=वसूनि धनानि तेषां धारया अभिवर्षणेन अनारतप्रदानेनेत्यर्थः, [सैव वसुधा] तृप्तिम्=आप्या-

यनं नीयते=प्राप्यते। अत्र 'राजिते राजिते' 'वसुधा वसुधा' इत्येवं प्रथमचतुर्थपादयोरादिभागगतत्वात् द्वयोरेव पादयोर्मिश्रणाच्च 'प्रथमचतुर्थपादगतम् मिश्रम् अव्यवहितम् आदिभागगतं' इति ध्येयम् ॥ १० ॥

[अथ द्वितीयतृतीयपादगतस्य अव्यपेतस्य मिश्रस्य आदिभागगतस्य यमकस्योदाहरणम्]

**करोति सहकारस्य कलिकोत्कलिकोत्तरम्।**
**मन्मनो मन्मनोऽप्येष मत्तकोकिलनिस्वनः ॥ ११ ॥**

एवम् आदिमध्यान्तभेदो निरूपितः, मध्यान्तेत्यनेन प्रतिपादितं मध्यमध्यम्, मध्यान्तश्चेति भेदत्रयं क्रमेण निरूपयितुकामः आदौ द्वितीयतृतीयपादगतं [मध्यमध्यम्] अव्यपेतम् आदिभागगतं यमकमुदाहरति—'करोति' इति। [प्रियावियुक्तस्य कस्यचिदुक्तिरियम्] सहकारस्य=रसालस्य [आम्रस्य] कलिका=कोरकं मुकुलमिति यावत्, मन्मनः=मदीयं मानसम् उत्कलिकोत्तरम्=उत्कलिका रुहरुहिका उत्कण्ठाविशेष इति यावत् तया उत् उद्गतः तरः चाञ्चल्यं यस्य, अथवा उत्कलिकया उत्तरं प्रधानम् करोति=विधत्ते वसन्तसमयसूचकतया कामोद्दीपनादिति भावः। किञ्च—एषः=श्रूयमाणः मत्तकोकिलनिस्वनः=मत्तः वसन्तकालत्वाद् उन्मादं गतः [च असौ] कोकिलः पिकः तस्य निस्वनः रवः पञ्चमस्वर इत्यर्थः, [सोऽपि] मन्मनः=दम्पत्यो रहस्यालाप [इव इत्यध्याहार्यम्] मन्मनः=मदीयमानसं उत्कलिकोत्तरं करोति इति पूर्ववदर्थः। मन्मनः—

सुरते कर्णमूले तु निजदेशीयभाषया। दम्पत्त्योः कथनं यत्तु मन्मनं तं प्रचक्षते ॥

इत्युक्तलक्षणको भवति। केचित्तु—मनसि मनुते प्रबुध्यतीति 'मन्मनः' कामः पृषोदरादित्वात् साधु इत्याचक्षते। साधु चैतत् एवं 'मन्मनः' कोकिलालापश्चेति [द्वौ अपि] मन्मनः उत्कलिकोत्तरं करोतीत्यन्वयः। अत्र 'कलिको कलिको' 'मन्मनो मन्मनो' इति द्वितीयतृतीयपादयोरादिगतत्वात् तयोश्च [द्वितीयतृतीयपादयोः] मध्यरूपत्वात् द्वितीयतृतीयमध्यमध्यपादगतम् अव्यपेतम् आदिभागगतं यमकमिदम् ॥ ११ ॥

[द्वितीयचतुर्थपादगतस्य मध्यान्तयमकस्य उदाहरणम्]

**कथं त्वदुपलम्भाशाविहताविह तादृशी।**
**अवस्था नालमारोढुमङ्गनामङ्गनाशिनी ॥ १२ ॥**

द्वितीयचतुर्थपादगतमव्यपेतं मिश्रं मध्यान्तं यमकमुदाहरति—'कथम्' इति। [विदेशे वर्त्तमानं नायकम्प्रति दूतीं प्रेषयन्त्या नायिकाया वचनमिदम्] इह=प्रदेशे [विदेशे] त्वदुपलम्भाशाविहतौ=तव [यः] उपलम्भः समागमः तस्य [या] आशा सङ्कल्पविशेषः [अवश्यं सङ्गमो भवितेति कामना] तस्याः [आशायाः] विहतौ-विघाते सति तादृशी=प्रतिक्षणमनुभूयमाना अङ्गनाशिनी=अङ्गावसादकारिणी अवस्था=विरहिण्या मम स्मरजनिता दशा अङ्गनाम्=[भीरुम्] कामिनाम् [माम्] आरोढुम्=आक्रमितुम् कथम् न अलम्=न शक्ता अपितु एवम्भूता कामदशा त्वद्विरहे मामाकुलीकर्त्तुं सर्वथा समर्थैव, नहि पुरुषाणां धीरतेव स्त्रीणामपि धैर्यम्। प्रकृत्यास्ता अधीरा अवश्यमेव एवंविधया दशया तिरस्क्रियन्ते। एतच्च अङ्गना-

पदनिवेशेन सुतरां द्योतितम् । 'अङ्गात् कल्याणे' [गण० ५।२।१००] इति गणसूत्रेण प्रशस्तार्थे 'नः' प्रत्ययः । प्रशस्तानि अङ्गानि अस्या इति 'अङ्गना' ।

अत्र 'विहता विहता' 'मङ्गना मङ्गना' इति द्वितीयचतुर्थपादयोरादिगतं द्वितीयपादस्य मध्यत्वात् चतुर्थपादस्य च अन्तत्वात् 'द्वितीयचतुर्थपादगतं मध्यान्तं मिश्रमव्यवहितम् आदिभागगतं यमकम्' इति ॥ १२ ॥[1]

[ उक्तस्यैव तृतीयचतुर्थपादगतस्योदाहरणम् ]

**निगृह्य नेत्रे कर्षन्ति बालपल्लवशोभिना ।**
**तरुणा तरुणान् कृष्टानलिनो नलिनोन्मुखाः ॥ १३ ॥**

तृतीयचतुर्थपादगतं [मध्यान्तगं] यमकमुदाहरति—'निगृह्य' इति । नलिनोन्मुखाः=नलिनेषु कमलेषु उन्मुखाः कमलसौरभलोलुपतया तेषु पिपतिषवः इत्यर्थः, अलिनः=भ्रमराः बालपल्लवशोभिना=बालैः सद्योनिर्गतैः पेलवैरिति यावत्, पल्लवैः पत्रैः शोभिना विलसता, तरुणा=वृक्षेण कृष्टान्=हृतहृदयान् तरुणान्=यूनो जनान् नेत्रे=चक्षुषी निगृह्य=बलाद् गृहीत्वा कर्षन्ति=आसञ्जयन्ति अर्थात् स्वकीयशोभादर्शनपरान् कुर्वन्ति । अत्र 'तरुणा तरुणा' 'नलिनो नलिनो' इति तृतीयचतुर्थपादगतत्वेन, तृतीयपादस्य मध्यत्वेन, चतुर्थपादस्यान्तत्वेन च, द्वयोः पादयोर्मिश्रणाच्च तृतीयचतुर्थपादगतं मध्यान्तपादगम्—अव्यवहितं मिश्रसञ्ज्ञमादियमकं बोध्यम् ॥ १३ ॥

[ तस्यैव प्रथमद्वितीयतृतीयपादगतस्योदाहरणम् ]

**विशदा विशदामत्त-सारसे सारसे जले ।**
**कुरुते कुरुतेनेयं हंसी मामन्तकामिषम् ॥ १४ ॥**

प्रथमद्वितीयतृतीयपादगतमेकविधम् [ मध्याद्यनेनेति प्रतिज्ञातम् ] यमकं दर्शयति—'विशदा' इति । विशदामत्तसारसे=विशन्तः प्रवेशं लभमाना आ सर्वथा मत्ता सारसाः पक्षिविशेषा यत्र तत् तथाभूतं तस्मिन् सारसे=सरस इदम् सारसम् सरःसम्बन्धिनि जले=नीरे विद्यमाना विशदा=श्वेतवर्णा इयम् हंसी=हंसस्य योषा वरटा कुरुतेन=कुत्सितेन कूजितेन कामोद्दीपनकरेण रवेण माम् अन्तकामिषम्=अन्तकस्य यमस्य आमिषं भोग्यपदार्थम् कुरुते=विधत्ते [सम्पादयति] । विरहिणां कामोद्दीपनकरत्वेनासह्यतया हंसीरुतस्य कुत्सितत्वमुक्तम् ।

'उपादानेऽप्यामिषं स्याद्' इत्यमरः । आमिष्यते भुज्यते इति 'मिष' श्लेषे इति धातोः घञ् । संज्ञापूर्वकत्वान्न गुणः । 'आमिषं पुन्नपुंसकम् । भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च' इति [ मेदिनी ] ।

---

१ केषाञ्चिन्मते अस्यैव 'युक्पादयमकम्' इति सञ्ज्ञा तथा च—

द्वितीये च चतुर्थे च यमकं यत्र दृश्यते ।
युक्पादयमकं तत्तु विज्ञेयं कविपुङ्गवैः ॥

अन्यदुदाहरणं यथा—[ 'भट्टिकाव्यस्य' दशमे सर्गे द्वितीयं पद्यम् ]

रणपण्डितोऽग्र्य विबुधारिपुरे कलहं स राम महितः कृतवान् ।
ज्वलदग्नि रावण-गृहं च बलात् कलहंस राममहितः कृतवान् ॥ १२ ॥

अत्र प्रथमद्वितीयतृतीयमध्याद्यपादगतम् अव्यवहितं मिश्रम् आदिपादगतं यमकम्। इदन्तु—एकविधमेवेति पूर्वमप्युक्तम् ॥ १४ ॥

**विषमं विषमन्वेति मदनं मदनन्दनः ।**

**सहेन्दुकलयापोढ-मलया मलयानिलः ॥ १५ ॥**

आद्यन्तेत्यनेनोक्तं भेदत्रयं क्रमेण निरूपयन् पूर्वं प्रथमद्वितीयचतुर्थपादगतं तदुदाहरति—'विषमम्' इति । अपोढमलया=अपोढं परित्यक्तं मलम् मालिन्यं यया तया इन्दुकलया=चन्द्रकलया सह विद्यमानः मदनन्दनः=मम कान्ताविरहिणः अनन्दनः अप्रीत्युत्पादकः मलयानिलः=दक्षिणपवनः विषमम्=विकटं प्रतीकारानर्हम् विषम्=गरलम् तथा तथाविधम् [विषरूपं] मदनम्=कामम् अन्वेति=अनुसरति तमुद्दीपयतीत्यर्थः, इन्दुकलामलयानिलौ द्वावपि कामोद्दीपकौ । अत्र 'विषमं विषम' 'मदन मदन' 'मलया मलया' इति प्रथम–द्वितीय–चतुर्थपादगतानि पदानि । तेषां प्रथमद्वितीययोश्चाद्यत्वात् चतुर्थपादस्य चान्तत्वात् प्रथमद्वितीयचतुर्थपादगतम् [आद्यन्तपादगतम्] मिश्रम् अव्यवहितम् आदिभागगतं यमकमिदम् । यत्तु—'विषमं विषमन्वेति' इत्यत्र यम्यमानपदयोरेकस्य सानुस्वारत्वे न सन्तोषश्चेत् तदा 'विषमं विषमं दृणाति'[1] इति प्रथमपादः पठनीयः, द्वितीय 'विषम' मित्यस्य 'विषेण मा उपमा यस्य' इति व्युत्पत्त्या विषसदृशमित्यर्थः, इत्याह कश्चित्, तत्तस्य साहित्यशास्त्रबोधाल्पीयस्त्वमावेदयति, अनुस्वारादिना यमकहानेरनङ्गीकारात् । उक्तं हि—[अभियुक्तैः]—

रलयोर्डलयोस्तद्वज्जययोर्बवयोरपि ।
शसयोर्मनयोश्चान्ते सविसर्गाऽविसर्गयोः ।
सबिन्दुकाबिन्दुकयोः स्यादभेदेन कल्पनम् ॥ इति ।

यदि तु तत्पाठान्तरं तदा तथाऽर्थयोजना साध्वी स्यात् । परं न तथोक्तमिति शम् ॥१५॥

[ तस्यैव प्रथमतृतीयचतुर्थपादगतस्योदाहरणम् ]

**मानिनी मा निनीषुस्ते निषङ्गत्वमनङ्ग ! मे ।**

**हारिणी हारिणी शर्म तनुतां तनुतां यतः ॥ १६ ॥**

प्रथमतृतीय–चतुर्थपादगतम् [आद्यन्तपादगतम्] तदेव यमकमुदाहरति—'मानिनी' इति । हे ! अनङ्ग !=कामदेव ! ते=तव निषङ्गत्वम्=तूणीरत्वम् अर्थात् अनारतस्वसायकनिचयसम्पातेन तत्प्रायत्वम् मा=माम् निनीषुः=प्रापयितुमिच्छुः तथा हारिणी=हाराख्यालङ्कारवती अतएव हारिणी=मनोहरा मानिनी=मानवतीयं कामिनी तनुताम्=तनोर्भावः तनुता क्षीणता ताम् यतः=गच्छतः प्राप्नुवतः मे=मम शर्म=कल्याणम् तनुताम्=विस्तारयतु करोत्वित्यर्थः । 'तनु' विस्तारे लोटि प्रथमपुरुषैकवचने रूपम् ।

अत्र 'मानिनी मानिनी' 'हारिणी हारिणी' 'तनुतां तनुतां' इति प्रथम–तृतीयचतुर्थपादगतत्वेन तृतीयपादस्य आदित्वेन, चतुर्थपादस्य अन्तत्वेन, च प्रथम-तृतीयचतुर्थपादगतम् आद्यन्तगम् मिश्रम् अव्यवहितम् आदिभागगं यमकम् ॥ १६ ॥

---

१ दृणाति=तीदृणं करोति ।

[ तस्यैव द्वितीय-तृतीय-चतुर्थपादगतस्योदाहरणम् ]

**जयता त्वन्मुखेनास्मानकथं न कथं जितम् ।**
**कमलं कमलंकुर्वद्दलिमद्दलि मत्प्रिये ! ॥ १७ ॥**

द्वितीय-तृतीय-चतुर्थपादगतं [ आद्यन्तम् ] यमकमुदाहरति—'जयता' इति । हे ! मत्प्रिये !=मदीयप्राणवल्लभे ! अस्मान् जयता=वशं नयता त्वन्मुखेन=त्वदास्येन अकथम्= नास्ति कथा विवादो यस्यां क्रियायां तद् यथा स्यात् तथा कमलम्=सरोजम् कथं न जितम्= अपि तु जितमेव । कथम्भूतं कमलम् । कम् अलंकुर्वत्=जलं भूषयत् तथा अलिमद्दलि= अलिमन्ति सभ्रमराणि दलानि पत्राणि सन्ति अस्य इति अलिमद्दलि । यत्र अस्मादृशा- श्चेतना अपि जिताः तत्र जडानां तेषां कमलानां जये का कथेति भावः ।

अत्र—'नकथं नकथं' 'कमलं कमलं' 'दलिमत् दलिमत्' इत्येवं द्वितीय-तृतीय- चतुर्थपादगतम् [ द्वितीयतृतीययोरादित्वात् चतुर्थस्य च अन्तत्वात् ] आद्यन्तगं मिश्रमव्यव- हितमादिभागगतं यमकम् । एवञ्च आद्यन्तेत्यनेनोक्ताः त्रयो भेदा निरूपिताः ॥ १७ ॥[1]

[ तस्यैव चतुर्ष्वपि पादेषु वर्त्तमानस्य उदाहरणम् ]

**रमणी रमणीया मे पाटलापाटलांशुका ।**
**वारुणी वारुणीभूतसौरभा सौरभास्पदम् ॥ १८ ॥**

'सर्वत' इत्यनेनोक्तं पादचतुष्टयगतम् अव्यपेतमादिभागगतं यमकमुदाहरति—'रमणी' इति । रमणी=एतादृशी सुन्दरी स्त्री मे=मम रमणीया=रतिस्थानं भवतु इति शेषः । कीदृशी इत्याकाङ्क्षायां विशिनष्टि 'पाटले'ति । पाटलापाटलांशुका=पाटला वृक्षविशेषः, तत्पुष्पमपि पाटला । पाटला[ पुष्प ]वत् पाटलं श्वेतरक्तम् अंशुकं वस्त्रं यस्याः सा तादृशी । पुनः कीदृशी । सौरभास्पदम्=सौरभस्य सौगन्ध्यस्य आस्पदं प्रतिष्ठास्थानमित्यर्थः, पद्मिनीजातेः । [ पद्मिन्या लक्षणमुक्तं प्राक् प्रथमपरिच्छेदस्य टीकायाः विवृतेः ३७ पृष्ठे ] तामुपमिनोति— 'वारुणी' इति । यत एवंभूता अत एव अरुणीभूतसौरभा वारुणी इव=अरुणीभूता चासौ सौरी सूर्यसम्बन्धिनी भा दीप्तिः यत्र सा तथाविधा वारुणी पश्चिमा दिग् इव । अत्र 'रमणी रमणी' 'पाटला पाटला' 'वारुणी वारुणी' 'सौरभा सौरभा' इत्येवं पदानां पादचतुष्टय- गतत्वात् सर्वपादगतमव्यवहितं मिश्रमादिभागगतं यमकम् इति आदिमध्यान्तेति कारिको- क्तस्य अव्यपेतादिभागयमकस्यैकादश प्रकारा उदाहरणैः स्पष्टीकृताः ।

---

१ आद्यन्तयमकस्यान्यद् उदाहरणं यथा—

आसन्नदेवा नर राजराजिरुच्चैस्तटानामिव यत्र नाद्रौ ।
क्रीडाकृतो यत्र दिगन्तनागा आसन्नदे वानरराजराजि ॥ [ वाग्भटे ]

परमिदं प्रथमचतुर्थपादगतमिति विशेषः । अस्यायमर्थः—

अत्राद्रावियं तटानां राजिः श्रेणिर्न [न] रराज । अपि तु रराजैव । कीदृशी । आस- न्नदेवा समीपस्थसुरा । तथोच्चैर्गुर्वी । यत्र यस्यां तटराजौ नदे ह्रदे दिगन्तनागा दिग्गजाः क्रीडाकृत आसन् क्रीडाकारिणोऽभवन् । कीदृशे । वानरराजराजि वानरराजा मुख्यवानरास्तै राजतीत्येवंशीलो वानरराजराट् तस्मिन् वानरराजराजि ।

'सौरी चामौ भा' इति 'सौरभा' इत्यत्र समानाधिकरणसमासे 'स्त्रियाः पुंवद्भाषितपुंस्कादृ०' [६।३।३४] इति पाणिनिसूत्रेण पुंवद्भावः । सूरस्य इयम् 'सौरी' । तस्येदम्' [४।३।१२०] इतीदमर्थेऽण् । ततः ङीष् ॥ १८ ॥[1]

[ अवान्तरभेदोपसंहारपूर्वकप्रकरणान्तरारम्भप्रतिज्ञा ]

**इति पादादियमकमव्यपेतं विकल्पितम् ।**
**व्यपेतस्यापि वर्ण्यन्ते विकल्पास्तस्य केचन ॥ १९ ॥**

यमकस्यावान्तरभेदप्रकरणमुपसंहरति—'इति' इति । इति=दर्शितदिशा अव्यपेतम्=व्यवधानरहितम् अव्यवहितम् पादादियमकम्=पादानामादिभागगतं यमकम् विकल्पितम्=सप्रभेदं निरूपितम् उदाहरणैरित्यर्थः, अधुना व्यपेतस्य अपि=व्यवधानसहितस्यापि तस्य=यमकस्य केचन=कतिपये न तु सर्वे विकल्पाः=भेदाः वर्ण्यन्ते=निरूप्यन्ते अग्रिमग्रन्थेनेति शेषः ॥ १९ ॥

[ प्रथमद्वितीयपादगतस्य मिश्रस्य व्यपेतस्य आदिभागगतस्य यमकस्योदाहरणम् ]

**मधुरेणदृशां मानं मधुरेण सुगन्धिना ।**
**सहकारोद्गमेनैव शब्दशेषं करिष्यति ॥ २० ॥**

निरूपिता आदिभागगता अव्यपेता यमकप्रकाराः । सम्प्रति व्यपेतादिभागगतस्य यमकस्य एकस्मिन् पादे असम्भव इति मत्वा प्रथमं प्रथमद्वितीयपादगतं यमकमुदाहरति—'मधुरेण' इति । मधुः=वसन्तः एणदृशाम्=हरिणाक्षीणां मानिनीनां मानम्=गर्वम् ईर्ष्याजनितं कोपविशेषमित्यर्थः । सहकारोद्गमेन एव=सहकारः आम्रवृक्षः तस्य उद्गमः कलिकोदयः तेनैव अर्थात् उद्गताम्रकलिकया एव शब्दशेषं करिष्यति=नाममात्रेणैव अवशेषयिष्यति नत्वर्थतो मानिनीमानो भविष्यतीति भावः । कथम्भूतेन तेन—मधुरेण=मधुसहितेन मकरन्दबिन्दून् श्च्योततेत्यर्थः । तथा सुगन्धिना=शोभनगन्धवता तीव्रगन्धिनेत्यर्थः । तादृशस्यैव तस्योद्दीपकतया मानिनीमानहानिकरत्वादिति भावः । अत्र—'मधुरेण मधुरेण' इति द्वे पदे प्रथमद्वितीयपादयोः आदिगते यमकघटके [मध्ये] 'दृशां मानम्' इति पदद्वयेन व्यवधानसत्त्वात् । एवञ्चैतत् प्रथमद्वितीयपादगतं व्यवहितं मिश्रम् आदिभागगतं यमकं ज्ञेयम् ॥ २० ॥

[ तस्यैव प्रथमतृतीयपादगतस्योदाहरणम् ]

**करोतिताम्रो रामाणां तन्त्री ताडनविभ्रमम् ।**
**करोति सेर्ष्यं कान्ते च श्रवणोत्पलताडनम् ॥ २१ ॥**

प्रथमतृतीयपादगतं तदेवोदाहरति—'कर' इति । रामाणाम्=सुन्दरीणां नारीणाम्

---

१ पादचतुष्टयगतम् आदिभागगं यमकं यथा—

वने वने वनसदां मार्गं मार्गमुपेयुषाम् ।
बाणैर्बाणैः समासक्तं शङ्केऽशं केन शाम्यति ॥ इति ।

अयमर्थः—वनसदाम्=वनेचराणाम् । अवने=रक्षके वने । मार्गम्=मृगसम्बन्धिनम् मार्गम्=पन्थानम् । बाणः=ध्वनिः तद्युक्तैर्बाणैः । अर्शआदित्वादच् । बाणैः=सायकैः । समासक्तम्=समासञ्जितम् अशम्=दुःखम् केन शाम्यतीति शङ्के ।

अतिताम्रः=अत्यन्तं लोहितः करः=शयः [पाणिः] तन्त्रीताडनविभ्रमम्=तन्त्र्या वीणायाः ताडनं वादनम् तद्रूपं विभ्रमं विलासम् [कर्मपदमिदम्]। तथा कान्ते=वल्लभे अपराधकारिणि प्रिये इत्यर्थः, सेर्ष्यम्=ईर्ष्याजनितकोपसहितं यथा स्यात् तथा [इति क्रियाविशेषणम्] श्रवणोत्पलताडनं च=श्रवणोत्पलाभ्यां श्रवणे [कर्णे] अवतंसीकृताभ्यां कमलाभ्यां ताडनम् आहननञ्च करोति इत्यर्थयोजना।

अत्र 'करोति करोति' इति पदयोः प्रथमतृतीयपादयोरादिगतत्वात् व्यवहितमिति कृत्वा व्यपेतयमकमिति सामान्यविशेषलक्षणसञ्ज्ञातिरपि ध्येया। एवञ्च—'प्रथमतृतीयपाद-व्यवहितं [व्यवधानसहितं] मिश्रम् आदिपादगतं यमकम्' इत्यस्य सञ्ज्ञा॥ २१॥

[ तस्यैव प्रथमचतुर्थपादगतस्योदाहरणम् ]

**सकलापोल्लसनया कलापिन्याऽनु नृत्यते।**
**मेघाली नर्त्तिता वातैः सकलापो विमुञ्चति॥ २२॥**

प्रथमचतुर्थपादगतं तदेवोदाहरति—'सकलापो०' इति। वातैः=मरुद्भिः नर्त्तिता=आन्दोलिता सञ्चालितेति यावत्, सकला=सम्पूर्णा मेघाली=मेघानां घनानाम् आली राजिः जीमूतमालेत्यर्थः, अपः=जलानि विमुञ्चति=विशेषेण वर्षति। अनु=तदनु जल-वर्षणोत्तरम् सकलापोल्लसनया=कलापः पिच्छम् तस्य उल्लसनम्=विस्तारीकरणम् तेन सह वर्त्तमाना इति सकलापोल्लसना तया कलापिन्या=मयूर्या नृत्यते=नर्त्तना क्रियत इत्यर्थः। भावे तङ्। वर्षाकालवर्णनमिदम्। अत्र—'सकलापो सकलापो' इत्याकारयोः पदयोः प्रथमचतुर्थादिभागगतत्वात् व्यवहितत्वाच्च 'प्रथमचतुर्थपादगतं मिश्रं व्यवहितम् आदिभाग-गतं यमकम्' इत्युच्यते॥ २२॥

[ तस्यैव द्वितीयतृतीयपादगतस्योदाहरणम् ]

**स्वयमेव गलन्मानकलि कामिनि! ते मनः।**
**कलिकामिह नीपस्य दृष्ट्वा कां न स्पृशेद्दशाम्॥ २३॥**

द्वितीयतृतीयपादगतं तदेवोदाहरति—'स्वयम्' इति। हे! कामिनि!=भूयान् कामोऽस्यामिति तत्सम्बुद्धौ हे कान्ते! इत्यर्थः, स्वयम् एव=कान्तकृतानुनयनमन्तरेणैव गलन्मानकलि=गलन् दूरीभवन् मानस्य प्रणयकोपस्य कलिः कलहो यस्मात् तत् अथवा मान एव कलिर्यस्य एवंभूतं ते=तव मनः=हृदयम् [ कर्त्तृ ] इह=प्रावृषः प्रथमागमे नीपस्य=कदम्बस्य कलिकाम्=कोरकम् दृष्ट्वा=आलोक्य कां दशाम् न स्पृशेत्=अपि तु सर्वामपि कामदशां स्पृक्ष्यति। वर्षाकाले अतिमृदुत्वात् धैर्यच्युतं ते मनः कथं त्वया विरहे सान्त्वनीयमिति भावः। अत्र—'कलिकामि कलिकामि' इति पदे [उभयत्रापि निरर्थके] द्वितीयतृतीयपादगते व्यवहिते च स्तः, तेन द्वितीयतृतीयपादगतं मिश्रं व्यवहितमादिभागगतं यमकमिदम्॥२३॥

[ तस्यैव द्वितीयचतुर्थपादगतस्योदाहरणम् ]

**आरुह्याक्रीडशैलस्य चन्द्रकान्तस्थलीमिमाम्।**
**नृत्यत्येष लसच्चारुचन्द्रकान्तः शिखावलः॥ २४॥**

द्वितीयचतुर्थपादगतं तदेवोदाहरति—'आरुह्य' इति। आक्रीडे [ उद्याने ] शैलः

[ पर्वतः ] इति आक्रीडशैलः क्रीडापर्वतः तस्य इमाम् चन्द्रकान्तस्थलीम्=चन्द्रकान्तमणि-भुवम् आरुह्य=तदुपरितनभागमाश्रित्य एषः=पुरोवर्त्ती शिखावलः=केकी [मयूरः] 'नृत्यति'। कथम्भूतः शिखावलः। लसच्चारुचन्द्रकान्तः=लसन् शोभमानः चारुः मनोहरः चन्द्रकाणां मेचकानाम् अन्तः प्रान्तभागो यस्य सः। 'चलच्चारुचन्द्रकान्तः' इति पाठे तु चलन् दोला-यमानः चारुः चन्द्रकान्तो यस्येत्यर्थः।

अत्र 'चन्द्रकान्त चन्द्रकान्त' इति द्वयोः पदयोः द्वितीयचतुर्थपादगतयोरादिभागग-तत्वात् व्यवहितत्वाच्च 'द्वितीयचतुर्थपादगतं व्यवहितं मिश्रम् आदिभागगतं यमक' मिदम्। यत्तु—'**जीवेन** चन्द्रकान्तमणिविशेषनिर्मितां स्थलीम्' इति व्याख्यातम् तदसाधु 'जानप-दकुण्डगोणस्थल०' [ ४ । १ । ४२ ] इति पाणिनिसूत्रविरुद्धत्वात्। 'स्थलीभवति अकृत्रिमा चेत्' इत्युक्तसूत्रव्याख्यानेन स्पष्टमेव कृत्रिमायाः 'स्थली' सञ्ज्ञानिषेधात्। अत एव प्रत्युदाह-रणे 'स्थला अन्या' इत्युक्तम्। अमरोऽपि 'स्थलं स्थली' इत्याह। तद्व्याख्याता '**श्रीभानु-जिद्दीक्षितः**' अपि 'स्थली अकृत्रिमा' इत्युक्त्वा उक्तं सूत्रं निर्दिश्य 'कृत्रिमा स्थला' इत्याह 'स्थलं' तूभयसाधारणम्' इति च। तस्मात् 'स्थली' पदनिवेशेन वर्ण्यमाने क्रीडापर्वते अकृ-त्रिमैव भुवः शोभा ग्रन्थकारस्य विवक्षिता भाति। महत्याग्रहे तु 'अनिर्माणवक' इत्यादि-वद् उपचार एव शरणमस्तु स्वसिद्धान्तस्तूक्त एव। 'शिखावलः शिखी केकी' 'समौ चन्द्र-कमेचकौ' इति चोभयत्रामरः। 'शिखावल' इति 'दन्तशिखात् संज्ञायाम्' [ ५।२।११३ ] इति सूत्रेण 'शिखा' शब्दात् मत्वर्थीयो 'वलच्' प्रत्ययः ॥ २४ ॥

[तस्यैव तृतीयचतुर्थपादगतस्योदाहरणम् ]

**उद्धृत्य राजकादुर्वी ध्रियतेऽद्य भुजेन ते ।**
**वराहेणोद्धृता यासौ वराहेरुपरि स्थिता ॥ २५ ॥**

तृतीयचतुर्थपादगतं तदेवोदाहरति—'उद्धृता' इति। [हे ! राजन् !] या असौ वराहेण=वराहावतारेण भगवता विष्णुना उद्धृता=रसातलात् ऊर्ध्वमानीता उर्वी=भूमिः 'सा अद्य ते=तव भुजेन=बाहुना राजकात्=राजसमूहात् उद्धृत्य=आच्छिद्य ध्रियते= स्वायत्तीक्रियते स्ववशं स्थाप्यत इत्यर्थः, कथम्भूता उर्वी। वराहेः=श्रेष्ठस्य शेषनागस्य उपरि स्थिता। वरश्चासौ अहिश्चेति कर्मधारयः।

'अथ राजकम्। राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्' इत्यमरः। राज्ञां समूहो 'राजकम्'। 'गोत्रोक्षोष्ट्रोरभ्रराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्' [ ४ । २ । ३९ ] इति सूत्रेण 'राजन्' शब्दाद् 'वुञ्' प्रत्ययः। अत्र—'वराहे वराहे' इति तृतीयचतुर्थपादयो-रादिभागगतं व्यवहितं मिश्रं यमकम् ॥ २५ ॥

[ तस्यैव प्रथमद्वितीयतृतीयपादगतस्योदाहरणम्]

**करेण ते रणेष्वन्तकरेण द्विषतां हताः ।**
**करेणवः क्षरद्रक्ता भान्ति सन्ध्याघना इव ॥ २६ ॥**

प्रथमद्वितीयतृतीयपादगतं तदेवोदाहरति—'करेण' इति। [ हे राजन् ! ] रणेषु= संग्रामेषु द्विषताम्=शत्रूणाम् अन्तकरेण=मृत्युप्रदेन विध्वंसकेन ते=तव करेण=पाणिना

हताः=व्यापादिताः करेणवः=गजाः अर्थात् शत्रूणामेव क्षरद्रक्ताः=क्षरत् गलत् रक्तं शोणितं येषां ते रुधिरस्राविणः सन्तः सन्ध्याघना इव=सन्ध्याकालीनाः मेघा इव भान्ति=राजन्ते। अत्र—'करेण' इत्येकमेवंरूपं त्रिवारं प्रथमद्वितीयतृतीयपादानामादिभागगतं तेन तद्धि मिश्रं व्यवहितमादिभागगतं यमकमेतत्। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः ॥ २६ ॥

[ प्रथमतृतीयचतुर्थपादगतस्य तस्यैवोदाहरणम् ]

**परागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः।**
**परागतमिव क्वापि परागततमम्बरम्॥ २७ ॥**

प्रथमतृतीयचतुर्थपादगं तदेवोदाहरति—[ हे ! राजन् ! ] वातैः=अनिलैः ध्वस्ता=उत्खानिता अगतरुराजी इव=अगस्य पर्वतस्य ये तरवो द्रुमाः तेषां राजी पंक्तिरिव परा=परपक्षीया शत्रुपक्षवर्तिनी चमूः=सेना भटैः=तव योद्धृभिः ध्वस्ता= नाशिता इति पुनरन्वेतव्यम्। अत एव परागततम्=मृतावशिष्टपलायनोन्मुखानां शत्रुसैनिकानां पादोत्थरजोभिः ततं व्याप्तम् अम्बरम्=गगनम्, क्व अपि परागतम् इव=कुत्रापि देशान्तरे द्वीपान्तरे वा नष्टमिव तादृशरजोभिराकाशमलक्षितमभवदित्यर्थः। 'ध्वंस' धातुरकर्मकः तथापि अन्तर्भावितण्यर्थत्वात् अत्र सकर्मको बोध्यः। अस्माकं मते तु अकर्मका अपि विवक्षावशात् सकर्मका भवन्ति। यथा—भट्टिकाव्यस्य नवमसर्गे—'अक्षारिषुः शराम्भांसि तस्मिन् रक्षःपयोधराः' इत्यत्र 'अक्षारिषुः क्षरितवन्तः'। अत्र 'शराम्भांसि' इत्येतत् 'अक्षारिषुः' इति क्रियापदस्य कर्म। अत एवोक्तं **मल्लिनाथेन**— 'क्षरतिरकर्मकः क्षरेत्क्षतजवृत्ति' रित्यादि प्रयोगेषु दृश्यते। इह तु सकर्मको विवक्षितः इति। अत्र 'परागत' इत्याकारकं पदं त्रिवारमागतम् प्रथमद्वितीयचतुर्थपादस्यादिभागे, तेन प्रथमद्वितीयचतुर्थपादगमादिभागगतं व्यवहितं मिश्रं यमकमेतत्॥ २७ ॥

[ तस्यैव द्वितीयतृतीयचतुर्थपादगतस्योदाहरणम् ]

**पातु वो भगवान् विष्णुः सदा नवघनद्युतिः।**
**स दानवकुलध्वंसी सदानवरदन्तिहा॥ २८ ॥**

द्वितीयतृतीयचतुर्थपादगतं तदेवोदाहरति—नवघनद्युतिः=नवघनस्य नूतनजलधरस्य द्युतिरिव द्युतिर्यस्य सः, सः=लोकवेदप्रसिद्धः नूतनजलधररुचिः [ श्यामः ] विष्णुः=हरिः वः=युष्मान् सदा पातु=रक्षतु। कथंभूतः—दानवकुलध्वंसी=असुरकुलघातकारी। पुनः कीदृशः—सदानवरदन्तिहा=दानेन मदेन सह वर्त्तते इति सदानः समदः चासौ वरः महा-बलो दन्ती गजः कुवलयापीडनामा तं [ दन्तिनम् ] हन्तीति सः सदान-वर-दन्तिहा। अत्र—'सदानव' इत्येतदेव द्वितीयतृतीयचतुर्थपादानामादिभागगतत्वेन व्यपेतं [ व्यवहितं ] मिश्रम् आदिभागगतं यमकम्॥ २८ ॥

[ सर्वपादगतस्य तस्यैवोदाहरणम् ]

**कमलेः समकेशं ते कमलेर्ष्याकरं मुखम्।**
**कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु॥ २९ ॥**

सर्वपादगतं तदेवोदाहरति—[हे ! वल्लभे !] ते=तव कम्=शिरः अलेः=षट्पदस्य

समकेशम्=समाः तुल्याः सान्द्रश्यामलाः केशा यत्र तत् तादृशम् अतिकृष्णमित्यर्थः, तथा मुखम्=आननम् कमलेर्ष्याकरम्=कमलानां पद्मानाम् ईर्ष्यायाः=द्वेषस्य करम् पद्मद्वेषकृद् अर्थात् कमलसदृशम् अस्ति अत एव त्वम् कमला इव=श्रीरिव कम्=जनम् उन्मदिष्णुषु= उन्मादिमध्ये अलेख्यम्=न लेख्यम् अलेख्यं गणनार्हम् उन्मादिसंख्याबहिर्भूतं करोषि विधत्से अपि तु सर्वानेव उन्मदिष्णून् करोषि इति भावः । अत्र 'कमले' इत्याकारकं पदं चतुर्ष्वपि पादेषु आदिभागे समानमिति सर्वपादगतं मिश्रं व्यवहितमादिभागगतं यमकम् ।

'लेख्य' मित्यत्र 'ऋहलोर्ण्यत्' [ ३।१।१२४ ] इति ण्यत् । गुणः । ततो नञ्समासः । 'लक्ष्मीः पद्मासना पद्मा कमला श्रीर्हरिप्रिया' इत्यमरः । 'कं शिरोजलमाख्यातम्' इति 'उन्मदिष्णुषु' इति । मदी हर्षे । दिवादिः । उत्पूर्वः । उन्माद्यति हृष्टो भवति इति 'उन्मदिष्णुः' । अत्र 'भुवश्च' [३।२।१३८] इति सूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् 'इष्णुच्' प्रत्ययः ।

सर्वपादगतं यथा वा **मम**—

**लोकनाथरस** एव पीयतां लोकनाथरस एव दीयताम् ।
लोकनाथरस एव लीयतां लोकनाथरस एव चीयताम् ॥

परमिदं चतुर्ष्वपि पादेषु आदिभागगतं व्यवहितम् अमिश्रं यमकम् ॥ २९ ॥

[ प्रथमद्वितीयतृतीयचतुर्थपादगतस्य तस्यैव विजातीयस्योदाहरणम् ]

**मुदा रमणमन्वीतमुदारमणिभूषणाः ।**
**मदभ्रमदृशः कर्त्तुमदभ्रजघनाः क्षमाः ॥ ३० ॥**

अव्यपेतव्यपेतयोरुदाहरणान्युक्तानि इदानीं तस्यैव व्यपेतस्य सजातीयविजातीयघटितानि स्वरूपाणि दिदर्शयिषुः प्रथमद्वितीयतृतीयपादगतं विजातीयम् [प्रथमद्वितीययोरेकविधम् तृतीयचतुर्थयोरन्यविधम् ] यमकमुदाहरति—'मुदा' इति । उदारमणिभूषणाः=उदाराणि अनर्घ्याणि वहुमूल्यानि मणिभूषणानि रत्नजटिता अलङ्काराः यासां ताः तथा मदभ्रमदृशः=मदः मद्यपानजनितः तारुण्यसौन्दर्यादिजनितगर्वसमुत्थश्चित्तविकारविशेषो वा तेन भ्रमन्त्यः प्रचलायमाना आघूर्णिता इति यावत् दृशः चक्षूंषि यासां तास्तथोक्ताः, तथा अदभ्रजघनाः= अदभ्रम् अनल्पं [पृथु] जघनं कटिपुरोभागो यासां तास्तादृशाः 'रमण्य' इति शेषः, रमणम्= प्रियं रतिक्षमम् मुदा=हर्षेण अन्वीतम्=सम्पन्नं कर्त्तुम्=विदधातुं क्षमाः=शक्ताः । अथवा 'रमणम् अन्वीतुम् अनुगतं स्वायत्तं कर्त्तुं क्षमा' इति योज्यम् । 'ई' गतौ इत्यस्य 'क्ते' रूपम् ।

---

१ अस्येयं व्याख्या—हे ! लोकनाथ ! भूपते ! रसः शृङ्गारादिः एव पीयताम् आस्वाद्यताम् अर्थात् काव्यशास्त्रविनोदेन कालो याप्यतामिति प्रथमपादार्थः । [ हे ! वैद्यवर ! ] लोकनाथरसः वैद्यकशास्त्रप्रसिद्धः सकलोदरामयघ्न एव दीयताम् रोगिणे इति शेषः। इति द्वितीयपादार्थः । [ हे ! भावुक ! ] लोकनाथरसे=जगन्नाथभक्तिभाव एव लीयताम् निमग्नेन त्वया स्थीयताम्, तदा विषयगर्धा न सन्तापयिष्यतीति त्वामिति तृतीयपदार्थः । [ हे जिज्ञासो ! ] लोकनाथरसः=ब्रह्मानन्द एव चीयताम् अन्विष्यताम् नह्यन्यथा सकलसंसारदुःखनिवृत्तिर्भवितुमर्हति । 'रसो वै सः रसं ह्येवायं लब्ध्वा आनन्दी भवति' इति श्रुतेरिति चतुर्थपादार्थः [ इति संक्षेपः ] ।

अत्र—प्रथमद्वितीययोः पादयोरादिभागे 'मुदारम्' 'मुदारम्' इति, तृतीयचतुर्थपादयोरादिभागे 'मदभ्र मदभ्र' इति च यमकसाधकपदानि विजातीयानि व्यवहितानि सन्ति। अतः प्रथमद्वितीयगतं तृतीयचतुर्थगतं विजातीयं मिश्रं व्यवहितं यमकमिदम् ॥ ३० ॥

[ तस्यैव च प्रथमतृतीयपादगतस्य द्वितीयचतुर्थपादगतस्य विजातीयस्योदाहरणम् ]

**उदितैरन्यपुष्टानामा रुतैर्मे हृतं मनः।**
**उदितैरपि ते दूति ! मारुतैरपि दक्षिणैः ॥ ३१ ॥**

प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च तदेवोदाहरति—'उदितैः' इति। 'आः' इति खेदेऽव्ययम्। हे ! दूति !=अन्यपुष्टानाम्=परभृतानां कोकिलानामित्यर्थः, उदितैः=उद्भूतैः रुतैः='कुहू कुहू'रवैरित्यर्थः, न केवलमेतैरेव अपि=किन्तु ते=तव उदितैः=वचनैरपि अर्थात् कान्ताया विरहदुःखसूचकैर्वाक्यैरपि तथा दक्षिणैः=दक्षिणदिगागतैः मारुतैः अपि=पवनैरपि मलयानिलैरित्यर्थः, मे=मम मनः=चित्तम् हृतम्=क्लेशितम्। एकम् 'उदितैः' इति पदम् उत्पूर्वकात् 'इण् गतौ' इत्यस्मात् धातोः 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' [३।४।७२] इति सूत्रेण कर्त्तरि 'क्तः'। द्वितीयम् 'उदितै'रिति तु 'वद' धातोः 'तयोरेव कृत्यक्तखलर्थाः' [३।४।७०] इति भावे 'क्तः'। 'वचिस्वपियजादीनां किति' [६।१।१७] इति सम्प्रसारणम्।

अत्र—प्रथमतृतीयपादयोरादिभागे 'उदितै उदितै' इत्याकारके द्वितीयचतुर्थपादयोरादिभागे तु 'मारुतै मारुतै' इत्याकारके यमकघटके पदे स्तः। ते च विजातीये पादयोरादिभागगते च। एवं 'प्रथमतृतीयपादगतं द्वितीयचतुर्थपादगतञ्च विजातीयं व्यवहितं मिश्रमादिभागगतं यमक'मिदम् ॥ ३१ ॥

[ प्रथमचतुर्थगतस्य द्वितीयतृतीयगतस्य तस्यैवोदाहरणम् ]

**सुराजितह्रियो यूनां तनुमध्यासते स्त्रियः।**
**तनुमध्याः क्षरत्स्वेदसुराजितमुखेन्दवः ॥ ३२ ॥**

प्रथमचतुर्थगतमेकविधं द्वितीयतृतीयगतमन्यविधं तदेवोदाहरति—'सुरा०' इति। तनुमध्याः=तनु कृशं मध्यं कटिभागो यासां ता अणुमध्या इत्यर्थः, क्षरत्स्वेदसुराजितमुखेन्दवः=क्षरन् सात्विकभावसञ्चारात् गलन् यः स्वेदः धर्मः तेन सुराजिताः सुष्ठु शोभमानाः मुखानि एव चन्द्राः मुखचन्द्राः यासां ताः तथा स्त्रियः तथाच सुराजितह्रियः=सुरया मद्येन जिता परिक्षिप्ता [दूरीभूता] ह्रीः व्रीडा [लज्जा] यासां ताः तादृश्यः रमण्यः यूनाम्=तरुणानां कान्तानां तनुम्=देहम् अध्यासते=अधिशेरते [अधितिष्ठन्ति]। 'अधिशीङ्स्थासां कर्म' [१।४।४६] इत्याधारस्य कर्मता।

अत्र—प्रथमचतुर्थपादयोः आदिभागे 'सुराजित सुराजित' इति यमकघटके पदे तथा द्वितीयतृतीयपादयोरादिभागे 'तनुमध्या' 'तनुमध्या' इति पदे वर्त्तेते, तेन 'प्रथमचतुर्थपादगतं द्वितीयतृतीयपादगतञ्च आदिभागगं विजातीयं मिश्रं व्यवहितं यमक' मेतत् ॥ ३२ ॥

[ यमकान्तरनिरूपणप्रतिज्ञा ]

**इति व्यपेतयमकप्रभेदोऽप्येष दर्शितः।**
**अव्यपेतव्यपेतात्मा विकल्पोऽप्यस्ति तद्यथा ॥ ३३ ॥**

अव्यपेतं व्यपेतं च यमकं निरूप्य सम्प्रति तयोर्द्वयोरेकत्र मिश्रीकरणात् जायमानान् अन्यान् दर्शयितुं प्रतिजानीते—'इति' इति। इति=उक्तया दिशा एषः=पूर्वोक्तः व्यपेतयमक-प्रभेदः=व्यपेतानि व्यवहितानि [यानि] यमकानि तेषां प्रभेदः प्रकारः अपि=अव्यपेतयमक-प्रभेदश्च दर्शितः=लक्ष्यलक्षणाभ्यां निरूपितः [सम्प्रति] अव्यपेतव्यपेतात्मा=अव्यपेतः अव्यवहितः व्यपेतो व्यवहितः तौ आत्मा स्वरूपं यस्य स तादृशः अव्यपेतव्यपेतसंमिश्रण-स्वरूपः उभयमिश्र इति यावत् 'अपि' विकल्पः=भेदः 'अस्ति' तत् यथा=अग्रे उदाहरणे. स्पष्टीक्रियते इत्यर्थः॥ ३३॥

[प्रथमद्वितीयगतस्य तृतीयचतुर्थगतस्य अव्यपेतव्यपेतस्य मिश्रस्यादिभागगतस्य यमकस्योदाहरणम्]

**सालं सालम्बकलिका सालं सालं न वीक्षितुम्।**
**नालीनालीनवकुलानाली नालीकिनीरपि॥ ३४॥**

प्रथमे द्वितीये च पादे एकविधम्, तृतीये चतुर्थे च पादे अन्यप्रकारम् अव्यपेतव्य-पेतम् आदिभागगतं यमकमुदाहरति—'सालम्' इति। विदेशगतं नायकम्प्रति नायिकया प्रेषितायाः दूत्याः नायिकावस्थावर्णनमिदम्। [हे! नायक!] 'सा' मम आली=वयस्या [तव प्रिया] सालम्बकलिकासालम्=आलम्बेन सम्यक् लम्बमानेन सह वर्तमाना इति साल-म्बाः सालम्बाश्च ताः कलिकाः कोरका इति सालम्बकलिकाः ताः [कर्मभूताः] सलति गच्छति इति 'सालम्बकलिकासालः [कर्मणि अण्] तं तथाभूतम् सालम्=वृक्षमात्रम् सर्जं वा [पुंसि भूरुहमात्रेऽपि 'सालो' वरुणसर्जयोः' इति रभसः। 'सालः सर्जतरौ वृक्षमात्रप्राका-रयोरपि' इति मेदिनी] वीक्षितुम्=आलोकयितुम न अलम्=समर्था नास्ति। तस्योद्दीपकतया विरहे तत्पीडाधिक्यकारित्वादिति भावः। तथा 'आलीनवकुलान् अलीन् [अपि] वीक्षितुं न अलम्' इति पूर्वेणान्वयः। अर्थस्तु—आलीयन्तेऽत्र इति 'आलीनाः'। 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' [३।४।७६] इति सूत्रेण अधिकरणे 'क्तः'। आलीनाः सम्यगाश्रिता वकुलाः केसरा यैः तान् अलीन् भ्रमरान् [अपि द्रष्टुं न पारिता] तेषामप्युद्दीपकत्वात्। तथा अलीकिनीः अपि=अलीकं मृषावचनम आसामस्तीति अलीकिन्यः 'प्रियस्तेऽद्य समेष्यति धैर्यं धर' इति मिथ्यावाक्यप्रयोजिकाः ताः तथाभूता अलीकिनीः आलीः=सखीः अपि वीक्षितुं न अलम् समर्था] इति पूर्वतो योजनीयम्। विश्वासानर्हत्वात् विरहस्य वर्धमानत्वाच्च।

अत्र—प्रथमद्वितीयपादयोरादिभागे 'सालं' इति चतुर्वारं तृतीयचतुर्थपादयोरादिभागे च 'नाली' इत्याकारकं चतुर्वारं यमकसाधकं पदमुपात्तम् तच्च प्रथमे पादे अव्यपेतं (व्यव-धानरहितम्) द्वितीये च 'वकलिका' इत्यनेन व्यवहितत्वात् व्यपेतम्. एवमेव तृतीये, नाली नाली' इत्यव्यपेतं चतुर्थे च 'नवकुला' इत्यनेन व्यवहितत्वञ्च तदेव व्यपेतम्। एवमुभया-त्मकमादिभागगतं पूर्वार्धात् परार्धस्य विभिन्नतया विजातीयं मिश्रं यमकमिदमुच्यते॥ ३४॥

[तस्यैव प्रथमचतुर्थगस्य द्वितीयतृतीयगस्य चोदाहरणम्]

**कालं कालमनालक्ष्यतारतारकमीक्षितुम्।**
**तारतारम्यरसितं कालं कालमहाघनम्॥ ३५॥**

प्रथमचतुर्थपादयोरेकप्रकारं द्वितीयतृतीयपादयोरन्यप्रकारं तदेवोदाहरति—'कालम्' इति। का=वल्लभविरहातुरा रामा कालम्=ईदृशं वर्षासमयम् ईक्षितुम्=द्रष्टुम् अलम्=समर्था, न कापीति काकुः। कीदृशं कालम्—अनालक्ष्यतारतारकम्=न आ समन्तात् लक्ष्या घनावृतत्वाद् द्रष्टुमशक्याः ताराः उज्ज्वलाः तारकाः नक्षत्राणि यस्मिन् तमिति। पुनः कीदृशम् तारतारम्यरसितम्=तारस्य उच्चस्य भावः तारता तया अत्युच्चतया अरम्यं श्रवणोद्वेजकं रसितम् अर्थात् मेघानां गर्जितं यत्र तं तादृशम्। तथा कालम्=वियोगिनां कृते कालस्वरूपं यमसदृशमित्यर्थः। पुनः—कालमहाघनम्=कालाः श्यामवर्णा महान्तः नीरपूरितत्वात् घनाः मेघाः यस्मिन् तादृशमिति।

अत्र प्रथमचतुर्थपादयो: 'कालं' इति वारचतुष्टयं द्वितीयतृतीयपादयोः 'तार तार' इति वारद्वयं पठितं तच्चादिभागगतम् पूर्ववत् अव्यवहितव्यवहिततया उभयात्मकं विजातीयं मिश्रमादिभागगं यमकम् ॥ ३५ ॥

[ तस्यैव पादचतुष्टयगतस्योदाहरणम ]

**याम यामत्रयाधीनायामया मरणं निशा।**
**यामयाम धियास्वर्त्यायां मया मथितैव सा ॥ ३६ ॥**

पादचतुष्टयगतं तदेवोदाहरति—'याम' इति। रात्रौ समुद्दीपितकामाग्नेः स्वदशयैवानुमितस्वप्रियावस्थस्य कस्यचिद् वियोगिनो विलापावस्थावर्णनम्। यामत्रयाधीनायामया=यामानां प्रहराणां त्रयं यामत्रयम् तस्य यामत्रयस्य अधीनः निघ्न· तत्तन्त्रः आयामो दैर्घ्यं यस्याः सा तथाविधा तया दीर्घतरप्रहरत्रयव्याप्तिमत्या निशा=रात्र्या हेतुभूतया मरणम्=मृतिम् याम=(वयम्) आप्नवाम। 'याम' इति प्रार्थनायां लोट्। तादृश्या रात्र्याः कामोद्दीपनकरत्वादिति भावः।

ननु—'जातस्य मरणं ध्रुवम्' इति न्यायेन स्यादेवं को दोषो मृतौ सत्यामित्यत्राह—धिया=हृदयेन याम्=वल्लभाम् वयम् अयाम=अगच्छाम यच्चिन्तनैकतानतया समययापनमकुर्महि 'सा' अस्वर्त्यायां=असूनां प्राणानाम् आर्त्तिः पीडा इति 'अस्वार्त्तिः ताम् (मां विना) आयाति इति 'अस्वर्त्याया'। आङ्पूर्वकात् 'या' धातोः 'क्विप्' प्रत्ययः। मद्विरहेण प्राणपीडावतीत्यर्थः। एवम्भूता सा 'मया' विदेशागमनेन तद्विरहकारिणा मथिता एव=ध्वस्ता एव=मारितेत्यर्थः। अर्थात् मद्विरहेण तस्यास्त्वन्याः प्राणा अवश्यं निर्यास्यन्ति तथा चेदमेव मे महद्दुःखमुपस्थितमिति भावः।

'अयाम' इति 'या' धातोर्लङि उत्तमपुरुषस्य बहुवचने रूपम्। अत्र—'याम याम' इति यमकपदं चतुर्णां पादानामादिभागे स्थितमिति अव्यवहिताव्यवहिततया सर्वपादगतम् उभयात्मकं यमकमिदम् ॥ ३६ ॥

[ आदिभागगतस्य यमकस्योपसंहारः ]

**इति पादादियमकविकल्पस्येदृशी गतिः।**
**एवमेव विकल्प्यानि यमकानीतराण्यपि ॥ ३७ ॥**

१ स्मृतिकारा निशां त्रियामात्मिकां मन्यन्ते—'त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्' इति।

आदिभागगतयमकभेदमुपसंहरति—'इति' इति। इति=उक्ता पादादियमकविकल्पस्य=पादानामादिभागस्थितस्य यमकस्य यो विकल्पः भेदः तस्य ईदृशी=दर्शितप्रकारा गतिः=दिक् रीतिरस्तीत्यर्थः, 'एवम् एव इतराणि अपि यमकानि विकल्प्यानि' पादमध्यान्तभागस्थानि अव्यपेतव्यपेततन्मिश्राणि च यमकानि अपि एवमेव=प्राक् प्रदर्शितप्रकारेणैव विकल्प्यानि=विभिद्य ज्ञातव्यानि इत्यर्थः, प्राक्प्रदर्शितप्रकारश्च एकद्वित्रिचतुष्पादैन्यादिकारिकोक्तो ज्ञेयः॥ ३७॥

[उत्सूत्रमाशङ्क्य समाधानम्]

**न प्रपञ्चभयाद् भेदाः कात्स्न्येनाख्यातुमीहिताः।**
**दुष्कराभिमता ये तु वर्ण्यन्ते तेऽत्र केचन॥ ३८॥**

ननु—अलङ्कारग्रन्थरचनायां प्रवर्त्तमानेन भवतैव ते भेदा अपि पृथक् २ प्रदर्शनीया इत्याशङ्कायामाह—'न' इति। प्रपञ्चभयात्=प्रपञ्चो ग्रन्थविस्तरः तस्य भयात् हेतोः अर्थात् ग्रन्थबाहुल्ये सति कदाचित् श्रोतॄणां वैमुख्यं भवेदिति कारणात् कात्स्न्येन=साकल्येन आख्यातुम्=निरूपयितुं न ईहिताः=नैवेष्टाः। ये तु दुष्कराभिमताः=दुष्कर इति भावप्रधानो निर्देशः, दुष्करत्वेन काठिन्येन अभिमता अर्थात् अपरेषां तज्ज्ञाने काठिन्यमिति लक्षीकृताः ते केचन अत्र=अस्मिन्नेव ग्रन्थे वर्ण्यन्ते=उदाहरणद्वारा (अनुपदमेव) निरूपयिष्यन्ते इत्यर्थः। 'केचन' इति कथनेन न सर्वे, अनुक्तास्तु पूर्वप्रदर्शितरीत्यैवावगन्तव्या इति भावः॥ ३८॥

[अव्यपेतव्यपेतस्य मिश्रस्य सर्वपादगतस्य मध्ययमकस्य उदाहरणम्]

**स्थिरायते! यतेन्द्रियो न हीयते यतेर्भवान्।**
**अमायतेयतेऽप्यभूत् सुखायतेऽयते क्षयम्॥ ३९॥**

तत्रादौ अव्यपेतव्यपेतस्वरूपमध्यभागगतं यमकमुदाहरति—'स्थिरायते' इति। स्थिरायते!=स्थिरा दृढा (फलाव्यभिचारिणी) आयतिः उत्तरकालो यस्य सः तत्सम्बुद्धौ हे स्थिरायते! भवान् यतेः=यमनं यतिः समाधिरित्यर्थः, ततः चित्तवृत्तिनिरोधात् न हीयते=नैव प्रच्युतो भवति। कीदृशो भवान्—यतेन्द्रियः=यतानि संयतानि शब्दस्पर्शादिविषयेभ्यः प्रत्याहृतानि इन्द्रियाणि चक्षुरादीनि येन स तादृशः इन्द्रियसंयमं विना समाधेरनुपपत्तेः। उक्तञ्च **श्रीकृष्णेन** भगवता [श्रीमद्भगवद्गीता० अ० ५।२७–२८]—

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः॥ इति॥

एतद्वैपरीत्ये तु तत्रैव उक्तं यथा—

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि॥ इति॥ [श्री०गी० २।६७]

तस्मात्समाध्यर्थमिन्द्रियसंयम अत्यावश्यक इति भावः।

तथा ते=तव अमायता अपि=मायाया दम्भस्य भावो मायता, न मायता अमायता दम्भाभावोऽपि इयते=एतावत्परिमाणाय मातुमनर्हायेत्यर्थः, तथा क्षयम्=नाशम् अयते= अगच्छते अर्थात् क्षयरहिताय सुखाय=घनानन्दाय अभूत्=अजायत ।

अत्र—चतुर्ष्वपि पादेषु 'यते यते' इत्याकारकं यमकघटकं पदं पादमध्ये आवृत्तिं नीतम्, एकस्मिन्नपि पादे तस्य पुनरावर्त्तनात् तद् अव्यपेतम् अन्यपादापेक्षया च व्यपेतमिति अव्यपेतव्यपेतात्मकमिश्रं सर्वपादगतं मध्य [भागगत] यमकमुच्यते । 'उत्तरः काल आयतिः' इत्यमरः । 'यतेः' इति 'यम्' धातोः 'स्त्रियां क्तिन्' [३।३।९४] इति भावे 'क्तिन्' । 'अयते' इति 'इण्' धातोः शतरि रूपम् । ततो नञ्तत्पुरुषः । चतुर्थ्येकवचनञ्च । 'हीयते' इति कर्म-कर्त्तरि रूपम् । प्रमाणिकाच्छन्दः 'प्रमाणिका जरौ लगौ' इत्युक्तलक्षणात् ।

[ केवलव्यपेतस्य मध्यमध्यभागगतस्य यमकस्योदाहरणम् ]

**सभासु राजन्नसुराहतैर्मुखै-**
**र्महीसुराणां वसुराजितैः स्तुताः ।**
**न भासुरा यान्ति सुरान्न ते गुणाः**
**प्रजासु रागात्मसु राशितां गताः ॥ ४० ॥**

सम्प्रति प्रतिपादं केवलमव्यपेतं मध्यमध्ययमकमुदाहरति—'सभासु' इति । हे ! राजन् !=नृपते ! ते=तव गुणाः=सौजन्यसौशील्यसौष्ठवशौर्यौदार्यप्रभृतयः सुरान्=देवान् [प्रति] न यान्ति=तत्सदृशा न सन्ति किन्तु ततोऽपि उत्कृष्टा एव भवन्ति । परमेतस्मिन् पक्षे एकं 'न' इति पदमनन्वितमेवावतिष्ठते तस्मात् 'सुरान् न यान्ति [इति] न'=अपि तु यान्त्येव अर्थात् एतादृशा गुणाः सुरेषु एव तिष्ठन्ति नान्यत्र तस्मात्सुरसमो भवानिति व्यङ्ग्योपमा । कथम्भूता गुणाः—महीसुराणाम्=भूदेवानां ब्राह्मणानाम् असुराहतैः=सुरया मद्यपानेन आहतानि भ्रष्टानि इति सुराहतानि न सुराहतानि असुराहतानि तैः मद्यपानहतभिन्नैः अत्यन्तं पवित्रैरित्यर्थः, [एतेन सुरापानां मुखं भ्रष्टं भवतीत्यपि सूचितम्] तथा वसुराजितैः=वसु धनं तेन राजितैः शोभितैः त्वत्कृतधनदानेन विकसद्भिः एवंविधैः मुखैः=आननैः सभासु=त्वदीय-गोष्ठीषु स्तुताः=पूजिताः प्रशस्तिं नीता इति यावत् । पुनः कीदृशाः—भासुराः=सम्यगुज्ज्वलाः, तथा रागात्मसु=त्वयि विषये प्रीतिमतीषु प्रजासु=विक्षु राशितां गताः=बहुलीभावम्प्राप्ताः अर्थात् तादृशोत्तमगुणवन्तं त्वां निरीक्ष्य प्रजाभिरपि स्वसुभाराय स्वीकृताः । अत्र सर्वेषु पादेषु 'सुरा' इति पदं स्थितम्, तच्च व्यवहितं पादमध्यस्थितं व्यपेतं भिन्नं मध्यमध्यभागगतं यमकम् । 'वंशस्थं' वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति तल्लक्षणात् ॥ ४० ॥

**तव प्रियाऽसच्चरिता ! प्रमत्त ! या विभूषणं धार्यमिहांशुमत्तया ।**
**रतोत्सवानन्दविशेषमत्तया प्रयोजनं नास्ति हि कान्तिमत्तया ॥ ४१ ॥**

तदेव सर्वपादगतं व्यपेतमन्तयमकमुदाहरति—'तव' इति । [इयं प्रिया कस्मात् कारणात् भूषणं न परिधत्ते इति प्रश्नयन्तं शठं नायकम्प्रति तस्या वयस्याया उक्तिरियम्] हे ! असच्चरित !=परनायिकासक्तत्वेन दुश्चरित्र ! [शठ ! धूर्त ! इति वेत्यर्थः] तथा प्रमत्त !=स्वप्रि-याया अवस्थायामनवहितचेतः ! इह=प्रस्तावे ते=तव या प्रिया=वल्लभा लोकानां सन्निधाने

या त्वया प्रीतिविषयभूततया कीर्तिता इत्यर्थः, अंशुमत्=प्रस्फुरन्मयूखं समुज्ज्वलं विभूषणम्=कटककुण्डलादि यद् आभरणं तत् तया रतोत्सवानन्दविशेषमत्तया=रतोत्सवेन भोगोत्सवेन य आनन्दः स्वानुभवैकसंवेद्यः तेन मत्तया प्रमुदितया तयैव धार्यम्=धारणीयम् । एवञ्च—विभूषणधारणप्रयोजनं त्वया सह रतिविलासादि तत्तु त्वयाऽन्यथा साध्यते इति किमर्थं मम सखी तद्धारयेत् किन्तु नवीनैव तव प्रेमगोचरा या सैव धारयेदिति उत्तरदायाः सख्या अभिप्रायः । एतदुक्तया स्पष्टीकरोति—'प्रयोजनम्' इति । हि=तथाहि कान्तिमत्तया=सहजसौन्दर्यसमन्वितया [भूषणानामपि] भूषणभूतया मम सख्याः प्रयोजनं न अस्ति=भूषणधारणे किमपि फलं नास्ति । द्विविधं हि भूषणधारणस्य प्रकृते फलम्—धारयित्र्याः सौन्दर्यवर्धनम्, कामयितुर्मनोहरणपूर्वको रतिविलासश्च । तत्र द्विविधस्यापि तस्या आवश्यकता नास्ति स्वाभाविसौन्दर्यवत्त्वात् त्वदीयरतिविलासाभावाच्च । आः ! तस्याः स्वाभाविकी सुन्दरतैव सकलशोकभासमुत्पादिका भूषणधारणेन न किञ्चित् प्रयोजनमिति गूढोऽभिसन्धिः । अत्र—'मत्तया' इति यमकघटकपदं चतुर्ष्वपि पादेषु अन्तभागगतम् अतो व्यवहितं व्यपेतं मिश्रं तद्यमकमुच्यते। 'धार्यम्' इति 'धृ' धातोः 'ऋहलोर्ण्यत्' [३।१।१२४] इति सूत्रेण 'ण्यति' रूपम् । अत्र 'गूढविप्रियकृच्छठः' इति दशरूपकोक्तलक्षणः शठो नायकः । वंशस्थवृत्तम् ॥४१॥

[ तस्यैव व्यपेतान्तभागगतयमकस्य उदाहरणम् ]

**भवादृशा नाथ ! न जानते नते रसं विरुद्धे खलु सन्नतेनते ।**
**य एव दीनाः शिरसा नतेन ते चरन्त्यलं दैन्यरसेन तेन ते ॥ ४२ ॥**

पादचतुष्टयगतमव्यपेतव्यपेतमन्तभागगतं यमकमुदाहरति—'भवादृशाः' इति । हे ! नाथ !=स्वाभिन् । [ राजन् ! ] भवादृशाः=त्वादृशो राजानः नतेः=नमनस्य रसम्=आस्वादम् न जानते=नैव विदन्ति । यतः सन्नतेनते=सन्नतञ्च इनता च सन्नतेनते, तत्र सन्नतं सम्यक् नमनम्, इनस्य [ स्वाभिनः ] भाव इनता प्रभुता, ते द्वे अपि खलु=निश्चयेन विरुद्धे=एकाधिकरणवृत्तिन्यौ न स्त इत्यर्थः । ननु—के नते रसं जानन्ति ? इत्याह—'ये' इति । ये=जना दीनाः=दारिद्र्योपेताः सन्ति इति शेषः, ते एव=केवलम् तेन दैन्यरसेन=दारिद्र्यात्मकेन रसेन विषेण आस्वादेन वा हेतुना ते=तव अलम्=अत्यर्थम् चरन्ति=त्वामनुसरन्ति अतिमात्रं भजन्ते इत्यर्थः । '**रसः** स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे । बोले रागे गृहे धातौ तिक्तादौ पारदेऽपि च ॥' इति हैमः ।

अत्र—चतुर्ष्वपि पादेषु अन्तभागे 'नते नते' इति यम्यमानपदस्य आवृत्तिः, तच्च पादान्तरे व्यवहितत्वात् व्यवहितं (व्यपेतं) मिश्रमुभयात्मकमन्तभागगतं यमकम् । वंशस्थं वृत्तम् ॥ ४२ ॥

[ अथ प्रत्येकपादगतस्य मिश्रस्य व्यपेतस्य मध्यान्तगस्य यमकस्योदाहरणम् ]

**लीलास्मितेन शुचिना मृदुनोदितेन**
**व्यालोकितेन लघुना गुरुणा गतेन ।**
**व्याजृम्भितेन जघनेन च दर्शितेन**
**सा हन्ति तेन गलितं मम जीवितेन ॥ ४३ ॥**

सर्वपादगतं व्यपेतं मध्यान्तयमकमुदाहरति – 'लीलास्मितेन' इति । सा=प्रसिद्धा सुन्दरी शुचिना=शुद्धेन लीलास्मितेन=सविलासेषद्धसितेन तथा मृदुना=माधुर्योपेतेन उदितेन=वचसा, तथा लघुना=अभिलाषितेन इष्टेन [ 'त्रिष्विष्टेऽल्पे लघु' इत्यमरः ] व्यालोकितेन=वीक्षणेन कटाक्षपातेन. तथा गुरुणा=उरोजजघननितम्बानां गौरवात् मन्थरतरेण गतेन=गमनेन, व्याजृम्भितेन=विशिष्टजृम्भया ['जृम्भा हि स्त्रीणामनुरागं व्यञ्जयति । उक्तं हि—'जृम्भते स्फोटयत्यङ्गं बालमाश्रित्य चुम्बति' इति ] तथा दर्शितेन=यथाकथञ्चित् प्रकाशितेन जघनेन=कटिपुरोभागप्रदर्शनेन हेतुना हन्ति=तुदति व्यथयति मामिति शेषः । तेन=च हेतुना मे=मम जीवितेन=गलितम्=नष्टप्रायमिव संवृत्तम् । 'गलितम्' इति भावे 'क्तः' । अत्र--'तेन' इति यम्यमानपदस्य चतुर्ष्वपि पादेषु आवृत्तिदर्शनात् 'व्यवहितं मिश्रं मध्यान्तयमक' मेतत् । अत्र सर्वत्र 'कर्तृकरणयोस्तृतीया' [२।३।१८] इति सूत्रेण तृतीया । 'वसन्ततिलका' वृत्तम् । 'उक्ता वसन्ततिलका तभजा जगौ ग' इति तल्लक्षणात् ॥ ४३ ॥

[ पादचतुष्टयगतस्याव्यपेतव्यपेतस्य मध्यान्तयमकस्य उदाहरणम् ]

**श्रीमानमानमरवर्त्मसमानमान-**
**मात्मानमानतजगत्प्रथमानमानम् ।**
**भूमानमानमत यः स्थितिमानमान-**
**नामानमानमतमप्रतिमानमानम् ॥ ४४ ॥**

पादचतुष्टयगतमव्यपेतमध्यान्तमुदाहरति--'श्रीमान्' इति । तावत् सुखबोधार्थं पदच्छेदं प्रदर्शयामः---श्रीमान् । अमान् । अमरवर्त्मसमानमानम् । आत्मानम् । आनतजगत्प्रथमानमानम् । भूमानम् । आनमत । यः । स्थितिमान् । अमाननामानम् । आनमतम् । अप्रतिमानमानम् । [ हे ! उपासकाः ! ] आत्मानम्=परमात्मानं [ब्रह्म] आनमत=अभिवादयत ।

१ ब्रह्मनमनस्य शास्त्रेषु महत्फलमाम्नातम् । तथा हि— 'विष्णुसहस्रनामस्तोत्रीयशाङ्करभाष्ये' ग्रन्थान्तरेभ्य उद्धृतानि वचनानि । तेषु किञ्चिदिदम्—

यन्नामकीर्त्तनं भक्त्या विलापनमनुत्तमम् । मैत्रेयाशेषपापानां धातूनामिव पावकः ॥
अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः । पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥
गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु । यत्पापं विलयं याति स्मृते नश्यति तद्धरौ ॥
कलावत्रापि दोषाढ्ये विषयासक्तमानसः । कृत्वापि सकलं पापं गोविन्दं संस्मरञ्शुचिः ॥
एकोऽपि कृष्णे सुकृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ इति ॥

तत्र निरपराधानां हरिनामकीर्त्तनं प्रेमवृद्ध्यर्थम् । सापराधानान्तु—नामापराधक्षयार्थमित्येवमादि 'विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिन्यादिषु श्रीमद्भागवतटीकाग्रन्थेषु सविस्तरमुक्तम् । किञ्च—

अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः । स पापिष्ठो मनुष्याणां निरये पतति स्फुटम् ॥

इत्याद्यपि तत्रैव 'श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे' अजामिलोपाख्यानादिषु सुस्पष्टम् । अस्माभिः प्रपञ्चितश्चान्यत्रापीति कृतमतिप्रासङ्गिकेन ।

'यूयम् पापप्रशमनार्थम्' इति शेषः । कथम्भूतम् आत्मानम्—अमरवर्त्मसमानमानम्= अमराणां [देवानाम्] वर्त्म [मार्गः] इत्यमरवर्त्म आकाशम् ['अनन्तं सुरवर्त्म खम्' इत्यमरः] तेन समानं तुल्यं मानं परिमाणं यस्य स तथाभूतः तम् । 'आकाशवत् सर्वगतश्च नित्य' इति श्रुतेः । पुनः कीदृशम्—आनतजगत्प्रथमानमानम्=आ समन्तात् कायेन मनसा वाचा च नतं प्रह्वीभूतं यत् जगत् (उपासकवर्ग इत्यर्थः) तत्र प्रथमानः विस्तारं प्राप्तः ख्यातिं गत इति यावत् मानः पूजा अर्चनं यस्य सः तम्, सर्वजगदर्च्यमानमित्यर्थः, तथा भूमानम्= महान्तं सुखरूपमित्यर्थः, 'यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखम्' [छां० ख० २३] इति श्रुतेः । किंवा—भुवः पृथिव्या मानः सत्कारो यस्य स तम्, वराहावतारे रसातलनिमग्नायाः पृथिव्या उद्धरणकरणादिति । अथवा—'भू' पदं सर्वं कार्यं जगत् उपलक्षयति तेन 'भुवा' पृथिव्यादिकार्यरूपेण मीयते अनुमीयते इति 'भूमानः' तम् । तथा च—तार्किकाणां प्रयोगः—'क्षित्यङ्कुरादि सकर्तृकं कार्यत्वात् घटवत्' इति । अथवा—'भू' पदेन सर्वं क्षेत्रमुच्यते । भवति अस्यां सर्वम् [कर्मबीजादिकम्] इति 'भूः' शरीरम् । धातुमात्राद् बहुलं क्विब्विधेः । तस्याः भुवः=समष्टिव्यष्ट्यात्मकस्य क्षेत्रस्य मानम्=अधिष्ठानं कल्पनाया आश्रयः । पुनः कीदृशम्—अमाननामानम्=अमानानि परिमितिरहितानि असङ्ख्यातानि नामानि यस्य स तम् । अनन्तगुणस्य भगवतो नाम्नामप्यन्तो न विद्यत इति भावः । पुनः कीदृशम्— आनमतम्=अनन्ति प्राणन्ति इति आनाः=प्राणायामपरायणा योगिनः । यद्यपि सर्वे जीवा 'अननक्रियासम्बन्धात्' आना इत्युच्यन्ते तथाप्यत्र विशेषाभिधित्सया संयमपूर्वकश्वसनवतां योगिनामेव उक्तपदेन ग्रहणम् । तैः आनैर्योगिभिर्मतम् योगधारणया ज्ञातम् । 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति श्रुतेः । पुनः कीदृशम्—अप्रतिमानमानम्=प्रतिमीयते अनेन इति प्रतिमानम् प्रमाणम् [करणे ल्युट्] प्रतिमानेन प्रमाणेन मानम् मितिः परिच्छेदो यस्य तत् प्रतिमानमानं न प्रतिमानमानं अप्रतिमानमानं सर्वप्रमाणातीतमित्यर्थः, अवेद्यत्वे सत्यपरोक्षत्वात् । 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेः । ननु—नास्तिकैः । एतादृशस्यात्मनोऽस्वीकारात् कथमेवं वक्षि ? इत्याक्षेपसम्भावनया आह—'यः' इति । यः=सः लोकवेदप्रसिद्धोऽपि केवलमज्ञानवशात् 'नास्ति न भाति' इत्यसत्त्वापादकाऽभानापादकावरणकारणादभातः सन्नपि वस्तुतः श्रीमान्=शोभावान्, शोभा च प्रकृते स्वयम्भातिरूपा नह्यात्मा परप्रकाश्यो घटादिवत् किन्तु स्वयम्प्रकाश इत्यर्थः, तस्मान्मध्यन्दिनप्रचण्डभास्करे भासमानेऽपि घूकादीनां यथा 'नास्ति सूर्यो न भाति' इति प्रत्ययो जायते तथैव नास्तिकादीनामपि, नैतावता वस्तुस्वभावोपह्नोतुं शक्यते इति । ['श्रीर्वेषरचना शोभा भारती सरलद्रुमे । लक्ष्म्यां त्रिवर्गसम्पत्तौ वेशोपकरणे मतौ' इति विश्वमेदिन्यौ] यद्वा—श्रीयते सेव्यते अज्ञानिभिरिति 'श्रीः' माया । 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणञ्च' [उ० २।५७] इति सूत्रेण 'क्विप्' । श्रीः माया विद्यतेऽस्मिन् इति श्रीमान्, मायावी मायानियन्ता इत्यर्थः । 'तस्मान्मायी

१ उक्तञ्च पञ्चदश्याम्—अध्येतृवर्गमध्यस्थपुत्राध्ययनशब्दवत् ।
भानेऽप्यभानं भानस्य प्रतिबन्धेन युज्यते ॥ इति ।

२ सविस्तरोऽयमर्थः प्रकाशितो ज्योतिर्ब्राह्मणे बृहदारण्यके ।

सृजते विश्वमेतत्' इति श्रुतेः। 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' इति श्रुतेश्च। ततश्च नह्यचेतनं चेतनाधिष्ठानमन्तरा नियतं स्थातुं पारयत इति तादृशेश्वरानङ्गीकारो नास्तिकानां भ्रान्तिविलसितमात्रमेव वेदितव्यम्। ननु—एवं सति रागादिमत्त्वादीश्वरस्याप्यनीश्वरताप्रसङ्ग इत्याशङ्क्याह—यः स्थितिमान्=[नित्य]कूटस्थः मायां द्वारीकृत्य तादृशाधिष्ठेयप्रपञ्चनियमनसत्त्वेऽपि स्वतो गगनादिवत् निर्विकारः। नहि वात्यादिभिर्व्योम्नः किञ्चित् छिद्यते नवा बालकल्पिततलमलिनतादिभिस्तस्य लेशोऽपि दृश्यते तद्वदसङ्गस्वभावस्यात्मनो न किञ्चिद् हीयते इति भावः।

अत्र—सर्वेष्वेव पादेषु मध्ये अन्ते च 'मानमान' इत्याकारकपदस्य व्यवधानशून्यतया पुनः पुनरावर्त्तनम्। तेन 'अव्यपेतम्' 'मरवर्त्म' इत्यादीनामक्षराणां व्यवधानकारितया 'व्यपेतम्' मध्यान्तयमकभिदम्। ननु—एकवर्णोत्तरं 'मान' इत्यस्यावर्त्तनात् कथमस्य 'मध्ययमकत्वम्' इति चेत्? शृणु—प्रकृते आद्यन्तयोरक्षरयोः अन्तरालतैव मध्यत्वेन विवक्षिता ततो दोषाभावः। वसन्ततिलकावृत्तम्॥ ४४॥

[ प्रतिपादं मिश्रस्य व्यपेतस्यादिमध्ययमकस्योदाहरणम् ]

**सारयन्तमुरसा रमयन्ती सारभूतमुरुसारधरा तम्।**
**सारसानुकृतसारसकाञ्ची सा रसायनमसारमवैति॥ ४५॥**

चतुर्ष्वपि पादेषु वर्त्तमानं व्यपेतमादिमध्ययमकमुदाहरति—'सारयन्तम्' इति। सा=काचित्। [प्रसिद्धा] योषा रसायनम्=वैद्यकशास्त्रप्रसिद्धं जराकार्श्यादिहरमौषधविशेषम् [अपि] असारम्=न सारः स्थिरः अंशो यत्र तम् असारम् तुच्छम् अवैति=जानाति अर्थात् प्रियस्पर्शजनितसुखापेक्षया अमृतमपि तुच्छं भावयते। कीदृशी सा—सारयन्तम् तम् उरसा रमयन्ती=आलिङ्गयन्तम् अथवा आत्मानमभिसारयन्तं सङ्केतस्थाने प्रापयन्तम् उरसा=वक्षसा रमयन्ती=प्रत्यालिङ्गनेन तम् आनन्दयन्ती कीदृशम्—'सारभूतम्' अयमेव मदर्थं जगति एकः सारभूतो रमणानन्ददातृत्वादिति श्रेष्ठतरम्। कीदृशी सा—उरुसारधरा=उरुसाराणि सुवर्णभूषणानि तेषां धरा धारयित्री पुनः कीदृशी—सारसानुकृतसारसकाञ्ची=सारसैः पक्षिविशेषैः अनुकृता अनुसृता सारसा सशब्दा काञ्ची रशना यस्याः सा सारसकूजितसंवादिरशनामतीत्यर्थः, अत्र—सर्वेषां पादानामादौ मध्ये च 'सार सार' इति यम्यमानपदस्य व्यवहितत्वेन पुनः पुनरावृत्तिदर्शनात् मिश्रं व्यपेतमादिमध्यभागगतं यमकम्। 'उरुसारं सुवर्णं स्यात्' इति [व्याडिः]। 'सारयन्तम्' इति चौरादिकस्य 'सृ आस्तरणे' इत्यस्य शतरि रूपम्। 'सारसानुकृते' त्यत्र—'जातिकालसुखादिभ्यः परा निष्ठा वाच्या' [ २।२।३६ ] इति वार्त्तिकेन निष्ठान्तस्य परानिपातः। परमिदम् प्रायिकम्—'कृतकटः' 'पीतोदक' इत्यादेरपि दर्शनात्। 'स्वागता' वृत्तम्—'स्वागतेति रनभाद्गुरुयुग्मम्' इति तल्लक्षणात्॥ ४५॥

**नयानयालोचनयाऽनयाऽनयानयानयान्धान् विनयानयायते।**
**न यानयासीर्जिनयानयानयानयानयास्तान् जनयानयाश्रितान्॥४६॥**

अधुना एकस्मिन्नेव पद्ये प्रथमतृतीयपादगतमव्यपेतमाद्यन्तयमकं द्वितीयचतुर्थपादगतश्च तदेवादिमध्ययमकमुदाहरति—'नया०' इति। तत्रादौ सुखेनार्थबोधाय पदविभागः—

नयानयालोचनया । अनया । अनयान् । अयानयान्धान् । विनय । अनयायते ! । न । यान् । अयासीः । जिनयानयान् । अनयानयान् । अयान् । तान् । जनय । अनयाश्रितान् । हे ! अनयायते !=अयते यातीति अया न अया 'अनया' अनपाया [अपायशून्या] एवम्भूता आयतिः उत्तरकालो यस्य सः तत्सम्बुद्धौ अनयायते ! स्थिरायते ! अप्रतिहतशासन ! राजन् ! इत्यर्थः । अनया=प्रत्यक्षमनुभूयमानया नयानयालोचनया=नयः नीतिः, अनयः अनीतिः, नयश्च अनयश्च 'नयानयौ' तयोः नयानययोः आलोचना समीक्षणा तया अर्थात् एतादृशो नय उपादेय एवंविधोऽनयः सर्वथा परित्याज्य इत्याकारकसदसद्विचारेण अनयान्=नयविकलान् अयानयान्धान्=अयः शुभावहो विधिः तस्य आनये प्राप्तौ आचरणे वा अन्धान् दृष्टिशून्यान् स्वेष्टमविचारयतो जनान् इत्यर्थः । विनय=शिक्षय विनयोपेतान् विधेहि यथा ते नीतिमार्गमनुसृत्य स्वहितमाचरेयुः तथा यतेथा इत्याशयः ।

अपि च जिन-यान-यान्=जिनानां बौद्धानाम् आर्हतानां वा यानं मार्गः मतप्रस्थानम् तत् जिनयानम् अवैदिकसम्प्रदायः तत् यान्ति इति जिनयानयाः [ 'या' धातोः 'ड' प्रत्ययः ] तान् जिनयानयान् दिगम्बरान् जैनान् बौद्धान् वा यान्=जनान् त्वम् न अयासीः=प्राप्तवानसि येषां सङ्गं नाकार्षीरित्यर्थः, अत एव अयानयान्=अयानम् अपथं यान्तीति अयानयानाः तान् [पूर्ववत् सिद्धिः] अवैदिकत्वात् कुपथगामिनः अनयाश्रितान्=अशुभमतावलम्बिनः जनान् तान् अयान् जनय=अं विष्णुं यान्तीति अयाः तथाभूतान् जनय=सम्पादय वैदिकधर्मावलम्बिन कुर्वित्यर्थः ।

अत्र—प्रथमे द्वितीये च पादे 'नयानया' इति आदावन्ते च व्यवधानरहिता आवृत्तिः, तृतीये चतुर्थे च आदिमध्ययोरपि अव्यवधानेन सा इति यथाक्रममव्यपेतमाद्यन्तयमकम्, आदिमध्ययमकञ्च एकस्मिन्नेव पद्ये निरूपितम् । 'अः' शब्दः स्यादभावेऽपि स्वल्पार्थप्रतिषेधयोः । अनुकम्पायाञ्च तथा वासुदेवे त्वनव्ययः' इति मेदिनी । वंशस्थवृत्तम् । लक्षणमुक्तं प्राक् ॥४६॥

[पादचतुष्टयगतस्य मिश्रव्यपेतस्य आद्यन्तयमकस्योदाहरणम्]

**रवेण भौमो ध्वजवर्त्तिवीरवेरवेजि संयत्यतुलास्त्रगौरवे ।**
**रवेरिवोग्रस्य पुरो हरे रवेरवेत तुल्यं रिपुमस्य भैरवे ॥ ४७ ॥**

पादचतुष्टयगतं व्यपेतमाद्यन्तयमकमुदाहरति 'रवेण' इति—श्रीकृष्णस्य भगवतो नरकासुरेण साकं सङ्ग्रामवर्णनमिदम् । भौमः=भूमेरपत्यं भौमः 'तस्यापत्यम्' [४।१।९२] इत्यण् । नरकासुरः ध्वजवर्त्तिवीरवेः=ध्वजवर्त्तिनः श्रीकृष्णस्य भगवतो ध्वजे [पताकायाम्] वर्त्तमानस्य वीरस्य महाप्राणस्य वेः पतत्रिणो गरुडस्य रवेण=ध्वानेन [कर्त्रा शब्देन] संयति=सङ्ग्रामे अवेजि=उद्वेगं नीत इत्यर्थः, कथम्भूते संयति – अतुलास्त्रगौरवे=अतुलम् अपारम् अस्त्राणाम् शक्त्यादीनां गौरवं बाहुल्यं यत्र तस्मिन् । पुनः कीदृशे—भैरवे=भीतिजनके अस्य हरेः=श्रीकृष्णस्य पक्षे सिंहस्य च पुरः=अग्रे रिपुम्=नरकाख्यम् अवेः=मेषस्य तुल्यम्=समम् अवेत=यूयं जानीत । यस्य वाहनस्यैव बलमसह्यं तस्य स्वबलस्य का कथा । किञ्च—यथा सिंहस्य पुरतो मेषः तद्वत् कृष्णस्याप्यग्रे नरकासुर इति भावः ।

अत्र—चतुर्ष्वपि पादेषु आदावन्तेऽपि 'रवे' इति यम्यमानं पदं व्यवधानरहितं पुनः पुनरावर्त्तितम् ततः मिश्रं व्यवहितमाद्यन्तयमकमिदम्।

'अवेजि' इति। 'ओविजी भयचलनयो'रिति तौदादिकः रौधादिको वा। कर्मणि तङ्। अवोपसृष्टः। तस्य लुङि 'चिण् भावकर्मणोः' [ ३।१।६६ ] इति चिण्। 'अवेत' इति अवोपसृष्टात् 'इण् गतौ' इत्यस्माद्धातोः लोटि मध्यमपुरुषस्य बहुवचने रूपम् ॥ ४७ ॥

**मयामयालम्ब्यकलामयामयामयामयातव्यविरामयामया।**
**मयामयार्त्तिं निशयामयामयामयामयामूं करुणा मयामया ॥४८॥**

पादचतुष्टयगतमव्यपेतमाद्यन्तयमकमुदाहरति—'मया०' इति। क्लिष्टत्वात् पदविभागस्तु—मयामयालम्ब्यकलामयामयाम्। अयाम्। अयातव्यविरामयामया। मया। अमयार्त्तिम्। निशया। अमया। अमया। अमय!। आमय। अमूम्। करुणामय!। आमया। इति बोध्यः। अथार्थः—[मित्रम्प्रति कस्याचिद्वियोगिन उक्तिरियम्।] हे! अमय !=मिनोति क्षिपतीति 'मयः' क्षिपकः त्यागकारीत्यर्थः [डुमिञ् प्रक्षेपणे इत्यस्माद्धातोः 'अन्येष्वपि दृश्यते' [२।२।१०२] इति पाणिनिसूत्रेण कर्त्रर्थे 'ड' प्रत्ययः [ न मयः अमयः अत्यागकारी पार्श्ववर्त्तीत्यर्थः, तत्सम्बुद्धौ हे अमय! सर्वथा ममान्तिके वर्त्तमान! तथा 'करुणामय' !=दयाशील! मित्र! मया=सह अमूम्=नायिकाम् अमय=सङ्गमय ['अम गतौ [इत्यस्मात् णिचि लोटि प्रथमपुरुषैकवचने रूपम् ] कथम्भूतेन मया—आमया=आमो रोगः ['अम रोगे:' इत्यस्य चौरादिकस्य कर्तरि अचि प्रत्यये रूपम् आमयति रोगयतीति आमः] प्रकृते चायं कामार्त्तिरूपः तम् आमं याति प्राप्नोतीति आमयाः क्विबन्तः [ सोमपावत् आकारान्तः ] तेन आमया। कामजनितपीडावतेत्यर्थः। 'आतो धातोः' [ ६।४।१४ ] इति पाणिनिसूत्रेण भस्याङ्गस्य [आकारस्य] लोपः। ननु तस्याः सङ्गमो दुर्घट इति चेन्मा मंस्था इति बोधनाय नायिकां विशेषयति—कीदृशीम् अमूं नायिकाम्—मयामयालम्ब्यकलामयामयाम्=मयः गमनं विनाशः [ 'मय गतौ' इत्यस्य अचि रूपम् ] प्रकृते च मयः कलाक्षयः अमयः कलानामुपचयः मयश्च अमयश्च तौ 'मयामयौ' ताभ्यां मयामयाभ्यां [ क्षयवृद्धिभ्याम् ] 'आलम्ब्यः' आश्रयणीयः अर्थात् कलावृद्धिह्रासवान् चन्द्रमाः तस्मात् यः 'आमयः' रोगः कामजनिता पीडैव यस्याः सा तथाभूता ताम् अर्थात् मद्विरहे कामोद्दीपनविभावेन चन्द्रेणार्त्तिं नीता सा अनायासेनैव सङ्गमयितव्या भविष्यतीति तस्याः सम्मेलनकरणे नैव तव क्लेश इति विभाव्यम्। किमर्थमेवं तप्यसे—इत्यत आह—[यतोऽयम्] 'निशया=रात्र्या ['निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इत्यमरः] हेतौ तृतीया। रात्रिरूपेण कारणेनेत्यर्थः, अमयार्त्तिम्=मयः प्राप्तिः। 'मय गतौ भौवादिकः। गत्यर्थानां प्राप्त्यर्थत्वात्। न मयः 'अमयः' अप्राप्तिः अमयेन [तस्याः प्राप्त्यभावेन] आर्त्तिः पीडा ताम् अमयार्त्तिम् अयाम्=अगच्छम्। 'या प्रापणे' इत्यस्य लङि उत्तमपुरुषैकवचने रूपम्। कथम्भूतया निशाया—अयातव्यविरामयामया=अयातव्यः अप्राप्तव्यः विरामः अवसानं येषां तादृशा यामाः प्रहरा यस्याः सा तया। ['द्वौ यामप्रहरौ समौ' इत्यमरः]। पुनः कथम्भूतया—अमया=न मा परिमाणं यस्याः सा तया, विरहित्वेनाऽदीर्घया इत्यर्थः। तथा—अमया=न मा लक्ष्मीः शोभा यस्याः सा तया तस्याः समागमाभावेन निरुत्सवयेत्यर्थः।

अत्र सर्वेषु पादेषु आदावन्ते च 'मया मया' इति यम्यमानपदस्य व्यवधानाभावेन पुनःपुनरावृत्तिदर्शनात् अव्यवहितम् 'लम्ब्यकला' इत्याद्यक्षरैर्मध्ये व्यवधानदर्शनात् व्यवहितञ्च मिश्रमाद्यन्तयमकम्। वंशस्थवृत्तम् ॥ ४८ ॥

[ पादचतुष्टयगतस्य व्यपेतादिमध्यान्तयमकस्य उदाहरणम् ]

**मतान्धुनानाऽऽरमतामकामतामतापलब्धाग्रिमतानुलोमता ।**
**मतावयत्युत्तमताविलोमतामताम्यतस्ते समता न वामता ॥ ४९ ॥**

सर्वपादगतं व्यपेतादिमध्यान्तयमकमुदाहरति—'मताम्' इति । कस्यचिन्महानुभावस्य स्तवनमिदम्। अथ पदविभागः—मतान्। धुनाना । आरमताम्। अकामताम् । अतापलब्धा। अग्रिमतानुलोमता । मतौ। अयती। उत्तमताविलोमताम्। अताम्यतः। ते। समता। न । वामता ॥ अथार्थः—अताम्यतः=न ताम्यतीति अताम्यन् तस्य कदाचिदपि चेतोग्लानिं न गच्छतः ते=तव मतौ=धिषणायाम् समता=समस्य भावः समता शत्रुमित्रादिषु समा वृत्तिः अस्ति इति शेषः । न वामता=प्रतिकूलता तु नैव विद्यते इत्यर्थः, कथम्भूता समता—आरमताम्=स्वात्मनि रममाणानां शब्दादिविषयेभ्यः प्रत्याहृतमनसां योगिनाम् मताम्=आदृताम् अकामताम्=निःसंकल्पतां निरभिलाषतामिति यावत् [ अपि ] धुनाना=कम्पयन्ती न्यक्कारयन्ती अर्थात् योगिजनसमताया अपि श्रेष्ठतरा भवदीया समता । पुनः कीदृशी—अतापलब्धा=न तापोऽतापः क्लेशाभावः तेन लब्धा अनायाससिद्धेत्यर्थः। पुनः किम्भूता—अग्रिमतानुलोमता=अग्रिमस्य भावः अग्रिमता श्रेष्ठता तस्या अनुलोमता अनुकूलभावो यया सा श्रेष्ठतासम्पादयित्रीत्यर्थः, उत्तमताविलोमताम्=उत्तमतायाः श्रेष्ठताया अर्थात् गुणिताया विलोमताम् वैपरीत्यं प्रातिकूल्यमिति यावत्, अयती=अप्राप्नुवती अर्थात् गुणैः सहैव विद्यमाना।

अत्र सर्वेषां पादानाम् आदिमध्यान्तेषु 'मता' इति यम्यमानं पदं सव्यवधानं पुनः पुनरावृत्तिं नीतम्, तेन व्यवहितमादिमध्यान्तयमकमेतत् । वंशस्थं वृत्तम् ॥ ४९ ॥

**कालकालगलकालकालमुखकालकाल !**
**कालकाल घनकालकाल पनकाल ! काल !।**
**कालकालसितकालका ललनिकालकाल-**
**कालकालगतु कालकाल ! कलिकालकाल ! ॥ ५० ॥**

इदानीमव्यपेतव्यपेतमादिमध्यान्तयमकमुदाहरति—अस्य पदविभागस्तु—प्रथमपादे एकं पदम् । द्वितीयपादे—उपरि पृथक् निर्दिष्टे द्वे पदे । अग्रे तु—कालकालसितकालका इत्येकम् । अथ च—ललनिका—इत्यपरम् । अलकालकालका । आलगतु । कालकाल ! कलिकालकाल !। इत्येवं वोध्यः । अर्थः—[ श्रीकृष्णं भगवन्तम्प्रति राधिकावयस्याया वचन-

---

१ शब्दादिविषयेभ्यो मनसः प्रत्याहाराभावे दोष उक्तः—[श्रीमद्भगवद्गीतायाम्]

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥
क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ इति । [२।६२,६३]

मिदम् ] हे ! काल !=कालयति सर्वमिति कालः, 'कर्मणि घञ्' [३।३।१६] अथवा कलयति आयुरिति 'कलः' पचादित्वाद् [३।१।१३४] 'अच्'। ततः 'प्रज्ञादिभ्यश्च' [५।४।३८] इति 'अण्'। कल एव कालः तत्सम्बुद्धौ हे ! काल ! कृष्ण ! [ उक्तञ्च—'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः' इति ।] ललनिका=अनुकम्पनीया [ दयनीया ] ललना इति ललनिका । 'अनुकम्पायाम्' [५।३।७६] इति सूत्रेण अनुकम्पार्थे 'कन्'। टापि—'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः' [७।३।४४] इति सूत्रेण अत इत्। एवम्भूता श्रीराधा आलगतु=त्वयि सम्यक् खचितचित्ता भवतु इति क्रियाकारकसम्बन्धः। कथम्भूत ! हे ! कृष्ण ! काल-कालगल-काल-कालमुखकालकाल !=कालः=सर्वभूतानां कलनात् संहारकारणात् कालः स चासौ कालगलः=[कालो गलो यस्य] नीलकण्ठो महादेवः स कालकालगलः, कालः= यमः तथा कालमुखः=वानरविशेषः 'लंगूर' इति ख्यातः, कालकालगलश्च कालश्च कालमुखश्चेति द्वन्द्वः, तेषां कालकम्=कार्ष्ण्यम् आलातीति कालकालगल-काल-कालमुख-कालकालः तत्सम्बुद्धौ, अर्थात् महादेवकण्ठ-यमशरीर-वानरविशेषमुखसमानकृष्णवर्ण ! तथा—हे ! कालकालघनकालकालपनकाल !=कं जलम् ['कं शिरोजलमाख्यातम्'] आलाति आदत्ते धारयति इति कालः, अत एव कालः=कालिमानं दधत् यः घनः=मेघः तस्य कालः=वर्षासमयः तस्मिन् कायन्ति शब्दं कुर्वन्तीति काल-काल-घनकालकाः=बर्हिणः मयूरा इत्यर्थः, 'कै' शब्दे क्विपि रूपम्। तेषाम् आलपनानि मुखानि 'कालकालघनकालकालपनानि' तानि इव कलते शब्दायते [शब्दं करोतीति] स तथा तत्सम्बुद्धौ। 'कल' शब्दे इत्यस्य रूपम् । 'कृतो बहुलमिति वक्तव्यम्' [३।४।११३] इति महाभाष्यकारवचनप्रामाण्यात् कर्त्तरि घञ्। शाकटायनोऽपि—'कृद् बहुलम् [४।३।५८] इत्यसूत्रयत्। ['कालकालपनकालकालघनकालकाल'! इति पाठे तु काले=मेघकाले कायन्तीति कालकाः=मयूराः तेषाम् आलपनम्=केकाख्यं रवं कालयति प्रेरयति इति 'कालकालपनकालः'। 'कल्' प्रेरणे चौरादिकः अर्थात् नीरपूरभरितः। स चासौ घनः=नीरदः तद्वत् काल श्यामवर्ण । ] तथा—हे ! कालकाल !=कालस्य मृत्योरपि कालः मृत्युः 'स कालकालो गुणी सर्वविद् य' इति श्रुतेः। अथवा—हे ! कालकाल !=कालेन समयेन कालयति प्रेरयतीति काककालः सर्वप्रेरकोऽन्तर्यामी। तथा च श्रुतिः—'यः सर्वेषु भूतेषु तिष्ठन्' इत्यादि बृहदारण्यके अन्तर्यामिब्राह्मणे। विष्णुपुराणेऽपि श्रीकृष्णस्य कालस्वरूपत्वमुक्तम्—'कालस्वरूपं रूपं तद् विष्णोर्मैत्रेय ! वर्त्तते' इति। तथाच—हे ! कलिकालकाल !=कलिकालस्य कलियुगस्यापि कालः मृत्युः कल्किरूपेण तस्यान्तकरत्वात् तत्सम्बोधनम्। एवम्भूत ! हे काल ! 'कृष्ण' इति पूर्वं विशेष्यपदमुक्तम् । 'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति [मेदिनी]।

सा ललनिका कीदृशी इति तां विशिनष्टि—कालकालसितकालका=कालकेन कार्ष्ण्येन आलसितं शोभमानं कं शिरः यैः तथाभूता ये अलकाः चूर्णकुन्तला यस्याः सा । अथवा कं जलम् आलातीति 'कालम्' सरः तत्र कायन्तीति कालकाः हंसाः कालकानामिव आलसितं लीलागतिर्ययोः तौ कालकौ पादौ यस्याः सा तादृशी।

अत्र चतुर्णामपि पादानामादौ मध्ये अन्ते च 'कालकाल' इति पदं व्यवधानरहितं

पुनःपुनरावृत्तञ्च अतोऽव्यवहितं तथा 'गलमुख' इत्यादिना व्यवहितञ्च आदिमध्यान्तयमकम् ॥ ५० ॥

[ अथ सन्दष्टयमकस्य लक्षणम् ]

**सन्दष्टयमकस्थानमन्तादी पादयोर्द्वयोः ।**
**उक्तान्तर्गतमप्येतत् स्वातन्त्र्येणात्र कीर्त्यते ॥ ५१ ॥**

अथ पराभिमतस्य स्वोक्तयमकान्तर्भूतस्यापि सन्दष्टयमकस्य स्थानं दर्शयति—'सन्दष्ट०' इति । द्वयोः पादयोः=समीपवर्त्तिनोः उपर्यधोभावेन स्थितयोः चरणयोः अन्तादी=प्रथमपादस्य अन्तो भागः द्वितीयपादस्य आदिर्भागः, एवमेव द्वितीयपादस्य अन्तः तृतीयपादस्य आदिश्च, तथा तृतीयपादस्य अन्तः चतुर्थपादस्य आदिश्च अनया रीत्या अन्तादी भागौ सन्दष्टयमकस्थानम्='सन्दष्ट' नामकयमकस्य स्थानं विषय इत्यर्थः, सन्दंशाकृति यमकं 'सन्दष्टयमकम्' । यथा—सन्दंशो हि उभयपार्श्ववलम्बनकारीभवति तथेदमपीति भावः । उक्तान्तर्गतम् अपि एतत्=यद्यपि एतत् 'रवेण भौम' इत्याद्यव्यपेतान्तादियमकमध्यपात्येव तथापि अत्र=यमकभेदमध्ये स्वातन्त्र्येण अपि=पृथग्भावेनापि कीर्त्यते=प्राचां मतानुरोधेन निरूप्यते इत्यर्थः ॥ ५१ ॥

[ सन्दष्टयमकस्योदाहरणम् ]

**उपोढरागाप्यबला मदेन सा मदेनसा मन्युरसेन योजिता ।**
**न योजितात्मानमनङ्गतापिताङ्गतापि तापाय ममास नेयते ॥५२॥**

सन्दष्टयमकमुदाहरति—'उपोढरागा' इति । [कश्चित् प्रियावियुक्तः स्वसखायं प्रति मानिन्या कृतां स्वावस्थामावेदयति ] सा=या तवापि प्रसिद्धा अबला=सुकुमारी मदेन=तारुण्यजनितेन विकारविशेषेण सीधुपानजनितेन वा उपोढरागा अपि=उपोढः समुत्सिक्तः रागः प्रेमा यस्याः सा मन्मात्रानुरागवतीत्यर्थः, एवम्भूता अपि योजितात्मानम्=योजितः निहितः आत्मा मनो यत्र तथाभूताम् अनङ्गतापिताम्=अनङ्गं मदनं तापयितुं शीलमस्या इति इत्यनङ्गतापिनी तस्या भावः अनङ्गतापिता ताम् गता=प्राप्ता 'अपि' अर्थात् मय्यनुरागसहिता कामसहिता सत्यपि मदेनसा=ममापराधेन [ कर्त्रा ] मन्युरसेन=क्रोधावेशेन [ समम् ] योजिता=सम्मेलिता सती 'मम' इयते=एतावत्परिमाणाय तापाय=व्यथायै न आस=न प्राप अपि तु प्रापैव अर्थात् एतदवस्था सा ममातिमात्रसन्तापहेतुतां भेजे । 'आस' इति 'अस' गतिदीप्त्यादानेषु इति धातोर्लिटि प्रथमपुरुषैकवचने रूपम्, अथ प्रथमपादस्यान्ते द्वितीयपादस्यादौ च 'मदेन सा मदेनसा' इत्यावृत्तिः । एवं द्वितीयपादस्यान्ते तृतीयपादस्यादौ च 'न योजिता न योजिता' इति, तथा तृतीयपादस्यान्ते चतुर्थपादस्यादौ च 'ङ्गतापिता ङ्गतापिता' इत्यावृत्तिः सन्दशन्यायेनास्ति अतः सन्दष्टयमकमिदम् ।

द्वितीयचतुर्थपादगतं सन्दष्टयमकं यथा—[ काव्यालङ्कारे रुद्रटः ] ।

ईदञ्च येन स्वयमात्मभोग्यतां समस्तकाञ्चीकमनीयताकुलम् ।
नितम्बबिम्बं कथमस्तु नो नृणां स मस्तकाञ्ची कमनीयताकुलम् ॥इति॥५२॥

---

१ कश्चिद्रागी परस्त्रियं दृष्ट्वा कश्चिदाह—इदं नितम्बबिम्बं श्रोणीतटं येन स्वयम्

[ समुद्गयमकस्य लक्षणम् ]

**अर्द्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः ।**

[ पादाभ्यासयमकस्य लक्षणम् ]

**पादाभ्यासोऽप्यनेकात्मा व्यज्यते स निदर्शनैः ॥ ५३ ॥**

एवं पादभागगतानि यमकानि निरूपितानि । अधुना समस्तपादगतयमकानि निरूपयितुकामः प्रथमं समुद्गयमकं दर्शयति—'अर्द्धाभ्यासः' इति । अर्द्धाभ्यासः=अर्धस्य पादद्वयस्य अभ्यासः पुनरावर्त्तनं यत् स समुद्गः=समुद्गसंज्ञो भवति । समुद्गः सम्पुटक इत्यनर्थान्तरम् । असौ यथा भागद्वयस्वरूपो भवति तथेदं [समुद्गसंज्ञं] यमकमपि पादद्वयात्मकत्वात् 'समुद्ग' इत्युच्यते। 'अस्य त्रयः भेदाः मताः' इत्यन्वयः । तथाहि—प्रथमतृतीययोः द्वितीयचतुर्थयोश्च पादयोः तुल्यतायामेकः प्रकारः। प्रथमद्वितीययोः तृतीयचतुर्थयोश्च तुल्यतायां द्वितीयः प्रकारः । एवं प्रथमचतुर्थयोः द्वितीयतृतीययोश्च तुल्यतायां तृतीयः प्रकार इति भेदत्रयम् ।

तत्र समस्तपादयमकेषु पादाभ्यासयमकस्वरूपं दर्शयति—'पादाभ्यास' इति । पादाभ्यासः=एकैकयाभ्यासः अपि अनेकात्मा=अनेकप्रकारो भवति अर्थात् पादस्य एकद्वित्रिरभ्यासद्वारा एकादशप्रकारो ज्ञेयः । उक्ताख्याप्रकारश्चायम्—प्रथमस्य द्वितीयतृतीयचतुर्थगतत्वात् त्रयो (३) भेदाः । एवं द्वितीयस्य तृतीय-चतुर्थगतत्वात् द्वौ (२) भेदौ । तृतीयस्य चतुर्थगतत्वे तु एक (१) एव । पुनश्च प्रथमः—द्वितीये तृतीये च, प्रथमः—द्वितीये चतुर्थे च, प्रथमः—तृतीये चतुर्थे च, द्वितीयः—तृतीये चतुर्थे च इति (४) चत्वारो भेदाः । अथ च—प्रथमो द्वितीये तृतीये चतुर्थे च स्यात् इति (१) एकः प्रकारः, एवं सङ्कलनया एकादशविधः (११) सम्पद्यते । सः=अयं पादाभ्यासः निदर्शनैः=उदाहरणैः व्यज्यते=समुद्गोदाहरणोत्तरमेव वक्ष्यमाणैरुदाहरणैः व्यक्तीकरिष्यते इत्यर्थः ॥ ५३ ॥

[ प्रथमतृतीयद्वितीयचतुर्थपादगतस्य समुद्गस्योदाहरणम् ]

**नास्थेय [ः] सत्वयावर्ज्यः परमायतमानया ।**

**नास्थेयः स त्वया वर्ज्यः परमायतमानया ॥ ५४ ॥**

समुद्गस्य भेदत्रयं निरूपयन् आदौ प्रथम-तृतीय-द्वितीय-चतुर्थपादगतं तदुदाहरति—'नास्थेयः' इति । [काञ्चित् मानवतीं प्रति तद्धितकारिण्या कस्याश्चिद्वचनमिदम्] परमायतमानया=परमः अत्यन्तं आयतः दीर्घः अतिदीर्घ इत्यर्थः, मानः प्रणयकोपो यस्याः सा तया तथाविधया [अपि] तथा—अस्थेयसत्त्वया ( अस्थेयःसत्वया )=अस्थेयम् अस्थिरं सत्त्वं स्वभावो यस्याः सा अस्थेयसत्त्वा तया 'त्वया' स ना=पुरुषः न वर्ज्यः=नैव त्याज्यः तदनुरो-

असहायेन आत्मभोग्यतां स्वोपकारितामनीयत नीतम्, स तथाविधो नृणां पुंसां मस्तकाञ्ची शिरोवर्त्ती कथं नो अस्तु कथं माभूत्, सौभाग्यातिशयवानित्यर्थः । कीदृशं कटीतटम् आकुलम् प्रयोगवशाच्चटुलम् अत एव समस्ता सम्यक् क्षिप्ता काञ्ची मेखला यतः तत्समस्तकाञ्चीकम् । तथा च—कमनीयताया रामणीयकस्य कुलं स्था[illegible] इति ॥

१ समुद्गलक्षणमाह—'रुद्रटः' (काव्यालङ्कारे) 'अर्धं पुनरावृत्तं जनयति यमकं समुद्गकं नाम' इति ।

धेनैव वर्त्तितव्यमित्यर्थः। किन्तु—आयतमानया सम्यक् यत्नमाचरन्त्या (भवत्या) आस्थेयः= आदरणीयः तथा आवर्ज्यः=प्रेमाविष्कारपूर्वकं स्ववशतां नेयः। अयं भावः—यस्मात् तव स्वभावो नैव स्थिरः ततो वल्लभत्यागे पश्चात्तापं विना नान्यत् किञ्चित् सेत्स्यति अतस्तथा यतस्व यथाऽसौ सर्वदाऽनुकूलो वर्त्तते इति। अत्र—प्रथमतृतीयौ पादौ द्वितीयचतुर्थपादौ च समानाविति 'समुद्गभेद' आद्यः॥ ५४॥[1]

[ प्रथमद्वितीयतृतीयचतुर्थपादगतस्य तस्योदाहरणम् ]

**नरा जिता माननया समेत्य न राजिता माननयासमेत्य।**
**विनाशिता वै भवताऽयनेन विनाऽशिता वैभवतायनेन॥ ५५॥**

प्रथमे द्वितीये पादे, तृतीये चतुर्थे च पादे तुल्यस्वरूपलक्षणं समुद्गयमकमुदाहरति— 'नरा' इति। [युद्धे प्राप्तविजयस्य राज्ञः स्तुतिरियम्] माननया=सत्कारणया लोकैः क्रियमाणया साधुवादपूजयेत्यर्थः। [णिजन्तात् 'मान पूजायाम्' इति धातोः 'ण्यासश्रन्थो युच्' (३।३।१०७) स्त्रियां 'युच्' प्रत्ययः] समेत्य=सङ्गतिं कृत्वा अर्थात् तत्सङ्गतेन त्वया अयनेन= सङ्ग्रामार्थं कृतेन प्रस्थानेन जिताः=पराभवं नीताः नराः=शत्रवः माननयासम्=मानश्च नयश्च माननयौ तयोः आसः क्षेपः तम् एत्य=प्राप्य न राजिताः=नैव शोभमानाः सन्तीत्यर्थः। अर्थात् त्वत्तः पराजिताः पलायिताश्च शत्रवः पत्रपलाशादिभिः कृतजीवनाः दुःखेनैव कालं यापयन्तीति अहो तेषां दुरवस्था। पलायमानशत्रुगतिमभिधाय साहसिकानामवस्थामाचष्टे—'विनाशिता' इति। भवता=महापराक्रमशालिना त्वया विनाशिताः=यमलोकं नीता ये ते वै=तु विना=गृध्रादिपक्षिणा (जातावेकवचनम्) आशिताः=खादिताः। कथम्भूतेन भवता—वैभवतायनेन=वैभवम् (ऐश्वर्यम्) तायते (विस्तारयते) इति वैभवतायनः तेन शत्रुध्वंसनादिलब्धैश्वर्यविस्तारणकर्त्रेत्यर्थः। 'तायृ' सन्तानपालनयोः। भ्वादौ पठितः। अस्मात् नन्द्यादित्वात् 'ल्यु' प्रत्ययः। 'यद्यपि नन्द्यादिर्नाकृतिगणः तथापि वित्तनाशनः कुलदमन इत्यादयः शिष्टप्रयोगानुसारेण नेया' इति व्याकरणान्तरानुरोधेनापि सिद्धमेतत्। अत एव पाणिनीयानां मते ग्रहादेराकृतिगणत्वाभावेऽपि शाकटायनादिमते तस्याकृतिगणत्वमपि। अथवा बाहुलकात् 'ल्यु' प्रत्ययोऽस्तु। अत्र प्रथमो द्वितीयश्च, तृतीयश्चतुर्थश्च पादः समान इति समुद्गयमकम्॥ ५५॥

[ प्रथमचतुर्थद्वितीयतृतीयपादगतस्य समुद्गस्योदाहरणम् ]

**कलापिनां चारुतयोपयान्ति वृन्दानि लापोढघनागमानाम्।**
**वृन्दानिलापोढघनागमानां कलापिनां चारुतयोऽपयान्ति॥ ५६॥**

प्रथमे चतुर्थे च पादे, द्वितीये तृतीये च पादे समतालक्षणं समुद्गभेदमाचष्टे— 'कलापिनाम्' इति। (प्रावृट्कालवर्णनमिदम्)। लापोढघनागमानाम्=लापः लपनं केकाध्वनिरित्यर्थः। स लापः ऊढः प्राप्तो यस्मात् तथाभूतो यो घनानां वारिदानाम् आगमः सम्प्राप्तिः

---

१ यथा वा—भट्टिकाव्यस्य दशमे सर्गे—

समिद्धशरणा दीप्ता देहे लङ्का मतेश्वरा।
समिद्धशरणादीप्ता देहेऽलङ्कामतेश्वरा॥

मेघसमयो येषाम् ते तादृशाः तेषाम् (मेघकालेन हृष्टचित्तानामित्यर्थः) कलापिनाम्=मयूराणाम् वृन्दानि=संघाः चारुतया=सौन्दर्येण वर्षाकालीनशोभाविशेषेण उपयान्ति=सङ्गतानि भवन्ति अर्थात् अनेकाः मयूराणां राजयः इतस्ततः सङ्घीभूय सञ्चरन्ति केकारवं च कुर्वते। परे तु—'लापेन ऊढ व्यञ्जितो घनानामागमो यै'रिति व्याख्यान्ति । 'वाहिताग्न्यादिषु' (२।२।३७) इति सूत्रेण 'लापोढ' इत्यत्र निष्ठायाः परनिपातः। (आहिताग्न्यादिः आकृतिगणः)

तथा कलापिनाम्=कलं मधुरमस्फुटञ्च ध्वनिम् आप्नुवन्तीति कलापिनः। ग्रहादित्वात् णिनिः। अथवा 'कं शिरोजलमाख्यातम्' इति कोषात् के जले लपन्तीति कलापिनः हंसाः तेषाम् 'च' आरुतयः=मनोहरा रावाः अपयान्ति=दूरीभवन्ति। वर्षाकाले हंसानां मदो न भवतीति वस्तुस्वभावः। कथम्भूतानां हंसानाम्—वृन्दानिलापोढघनागमानाम्= वृन्दानिलेन वृन्दः वृन्दीभूतोऽनिलः वृन्दानिलः वार्षिकेण संघीभूतेन वातेन अपोढः अपगतः घनस्य=नृत्यविशेषस्य आगमः उल्लासो येषां ते तेषाम्। 'घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययो'रिति (मेदिनी)। अत्र—प्रथमचतुर्थयोः द्वितीयतृतीययोः समानता इत्येवं निरूपिताः त्रयः समुद्गभेदाः। उपेन्द्रवज्रा छन्दः 'उपेन्द्रवज्रा जतजास्ततो गौ' इति तल्लक्षणात् ॥५६॥

[ अथ—प्रथमद्वितीयपादगतस्य पादाभ्यासस्योदाहरणम् ]

**न मन्दयावर्जितमानसात्मया नमन् दयावर्जितमानसात्मया।**
**उरस्युपास्तीर्णपयोधरद्वयं मया समालिङ्ग्यत जीवितेश्वरः॥५७॥**

प्रतिज्ञानुसारं नानाप्रकारं पादाभ्यासमुदाहरति—'न' इति । (नायकोपेक्षाकरणेन स्खलितमानायाः कस्याश्चिदनुशयोक्तिः।) मन्दया=मूर्खया नायकप्रसादनास्वादभङ्गिमविदुष्या नमन्=प्रह्वीभवन् अपि जीवितेश्वरः=प्राणनाथः उरसि=क्रोडे (तदीयवक्षसि) उपास्तीर्णपयोधरद्वयम्=उपास्तीर्णम् निरन्तरार्पितं स्तनद्वयम् वक्षोजयुगलं यत्र तत् यथा स्यात् तथा (क्रियाविशेषणमेतत्) न समालिङ्ग्यत=नैव सम्यक् आश्लिष्यत । कथम्भूतया मया—आवर्जितमानसात्मया=आवर्जिते अपरित्यक्ते माने प्रणयजन्यकोपे सात्मया प्रयत्नवत्या (आत्मना यत्नेन सह वर्त्तते इति सात्मा 'डाबुभाभ्यामन्यतरस्याम्' (४।१।१३) इति डाप्।) पुनः कथम्भूतया—दयावर्जितमानसात्मया=दयया करुणया वर्जितौ रहितौ मानसात्मानौ यस्याः सा तथाभूता तया। मानसञ्च आत्मा च तौ मानसात्मानौ। 'आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि' इति (मेदिनी)। अत्र प्रथमद्वितीयपादगतोऽभ्यासः ॥ ५७ ॥

[ प्रथमतृतीयपादगतस्याभ्यासस्योदाहरणम् ]

**सभा सुराणामबला विभूषिता गुणैस्तवारोहि मृणालनिर्मलैः।**
**स भासुराणामबला विभूषिता विहारयन्निर्विश सम्पदः पुराम्॥५८॥**

प्रथमतृतीयपादगतमभ्यासमुदाहरति—'सभा' इति। (भूपं प्रति कश्चिद्वन्दी=चाटुकारः आह) हे! भूमिपते! मृणालनिर्मलैः=मृणालवत् कमलनालदण्डवत् शुभ्रैः तव गुणैः= त्वदीयैः सौजन्यसौशील्यशौर्यौदार्यादिभिर्गुणैः सुराणाम्=अमराणाम् सभा=समितिः गोष्ठी आरोहि=सम्यगाक्रान्ता अर्थात् देवसभायामपि तव गुणानां चर्चा विद्यते। कीदृशी सभा- अबला=न बलः तन्नामा दैत्यो यत्र सा तथाभूता बलासुरविरहिता, इन्द्रेण नाशितत्वात्

भयहीना सती भवद्गुणान् गायतीति भावः । पुनः किम्भूता—विभूषिना विभुर्ब्रह्मा हरिर्हरो वा तस्य उषितं वासो यत्र वा । त्वञ्च एवम्भूतगुणोपेतः सन् अवलाः=प्रमदाः विहारयन्=क्रीडयन् रममाणः भासुराणाम्=भ्राजमानानां पुराम्=नगरीणां सम्पदः=सम्पत्तीः निर्विश=उपभुङ्क्ष्व । 'निर्वेशो भृतिभोगयो' रित्यमरः । अत्र—प्रथमतृतीययोः पादयोरभ्यासः ॥५८॥

[ तस्यैव प्रथमचतुर्थपादगतस्योदाहरणम् ]

**कलङ्कमुक्तं तनुमद्ध्यनामिका स्तनद्वयी च त्वदृते न हन्त्यतः ।**
**न याति भूतं गणने भवन्मुखे कलङ्कमुक्तं तनुमद्ध्यनामिका ॥ ५९ ॥**

प्रथमचतुर्थपादगतमभ्यासमुदाहरति—'कलम्' इति । (कस्यचिद् वशिनः गुणकीर्त्तनमिदम् ) कलम्=मधुरम् उक्तम्=उक्तिः अर्थात् प्रमदानाम्, तथा 'तनुमद्ध्यनामिका=तनुः शरीरम् तस्या मद्ध्यं मध्यभागं नामयतीति नामिका (णिजन्तात् 'नम्' धातोः 'ण्वुल्') अर्थात् अतिपृथुः स्तनद्वयी च=वक्षोजद्वन्द्वमपि कम्=पुरुषम् न हन्ति=न पीडयति अपि तु त्वां विहाय सर्वोऽपि जनः प्रमदानां मधुरलपनादिभिर्मोहिता जायन्ते अहो तव जितेन्द्रियतायाः प्रभावः । अत्र – मद्ध्येति 'अजादिहलन्तोऽदीर्घात्' इति वचनेन पाक्षिको 'मध्य' धकारस्य द्विर्भावः । यत एवम् अतः भवन्मुखे=भवान् मुखम् अग्रिमो यत्र तत् त्वत्प्रभृतौ गणने=सङ्ख्याने वशीकृतेन्द्रियपुरुषगणनायां प्रस्तुतायामित्यर्थः । अनामिका=अंगुष्ठतस्तुरीया अंगुली कलङ्कमुक्तम्=दोषरहितम् तनुभृत्=शरीरधारि भूतम्=अन्यत् सत्वम् 'कम्' अपि जीवम् न याति=नैव प्राप्नोति हि=इति निश्चितोऽयमर्थः । यदा वशीकृतेन्द्रियगणना प्रस्तूयते तदा त्वां विहाय अनामिका ऽन्यस्मिन् जन्तौ न पततीति भावः । 'भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीबम्' इति मेदिनी । अत्र प्रथमचतुर्थयोरभ्यासः ॥ ५९ ॥

[ द्वितीयतृतीयपादगतस्याभ्यासस्योदाहरणम् ]

**यशश्च ते दिक्षु रजश्च सैनिका वितन्वतेऽजोपम ! दंशिता युधा ।**
**वितन्वतेजोपमदं शितायुधा द्विषाञ्च कुर्वन्ति कुलं तरस्विनः ॥ ६० ॥**

द्वितीयतृतीयपादगमभ्यासमुदाहरति—'यश' इति । (कस्यचिज्जयेच्छो राज्ञो गुणकीर्त्तनमिदम् ) हे ! अजोपम !=अजस्य विष्णोरुपमा सादृश्यं यस्य तत्सम्बुद्धौ विष्णुसम ! राजन् ! अथवा 'हरसम' ! ('अजा विष्णुहरच्छागा' इत्यमरात्) किं वा—अजः=रघोः पुत्रः तत्सदृश ! ते=तव सैनिकाः=योद्धारः युधा=संग्रामेण (कृत्वा) दिक्षु=प्राच्यादिषु दशस्वपि दिशासु यशः च=कीर्त्तिम् रजः च=स्वपादोत्थितधूलिञ्च वितन्वते=विस्फारयन्ति । कथम्भूताः सैनिकाः—दंशिताः=कवचिनः तथा—शितायुधाः=शितानि (प्रत्यहं मृजाकरणात्) तीव्राणि आयुधानि शस्त्राणि येषां ते तादृशाः । तथा–तरस्विनः=वेगवन्तः पराप्रधृष्या इत्यर्थः । किञ्च–एवम्भूता ते द्विषाम्=शत्रूणाम् कुलञ्च=सङ्घमपि वितनु=शरीरहीनम् अतेजः=हतप्रभम् अमदम्=गर्वशून्यञ्च कुर्वन्ति=विदधते । अत्र—द्वितीये तृतीये च पादे अभ्यासः ॥ ६० ॥

[ तस्यैव द्वितीयचतुर्थपादगतस्योदाहरणम् ]

**बिभर्त्ति भूमेर्वलयं भुजेन ते भुजङ्गमोऽमा स्मरतो मदञ्चितम् ।**
**शृणूक्तमेकं स्वमवेत्य भूधरं भुजङ्गमो मा स्म रतो मदञ्चितम् ॥ ६१ ॥**

तदेव द्वितीयचतुर्थपादगतमुदाहरति—'बिभर्त्ति' इति। [कस्यचिन्नृपतेः स्तवनमिदम्] हे राजन्! ते=तव भुजेन=बाहेन अमा=समम् भुजङ्गमः=अनन्तः शेषो भगवान् भूमेः वलयम्=पृथिव्याः चक्रं (मण्डलम्) बिभर्त्ति=धारयते। अनन्तवत् तव भुजोऽपि भूभारभारीति गर्वो न विधेय इत्याह— स्मरतः=उभयोर्वृत्तान्तं विदितवतो मत्=मम अञ्चितम्=युक्तिमदित्यर्थः, एकम् उक्तम्=वचनम् शृणु=निशामय। किन्तत् इत्याह—'स्वम्' इति (त्वम्) स्वम्=स्वकीयम् भुजम्=बाहुम् भूधरम्=पृथिव्या धारणकम् (अथ च महीध्रं महीध्रवत् दृढतरम्) अवेत्य=अवगत्य रतः=प्रसन्नमनाः सन् चितम्=एधमानम् (वृद्धम्) मदम्=अहङ्कारं मा स्म गमः=मा वहेत्यर्थः। अत्र—द्वितीये चतुर्थे च पादेऽभ्यासः॥ ६१॥

[तस्यैव तृतीयचतुर्थपादगतस्योदाहरणम्]

**स्मरानलो मानविवर्धितो यः स निर्वृतिन्ते किमपाकरोति।**
**समन्ततस्तामरसेक्षणे! न समन्ततस्तामरसे! क्षणेन॥ ६२॥**

तदेव तृतीयचतुर्थपादगतमुदाहरति—'स्मरानलः' इति। [मानवतीं प्रति तद्वयस्या वक्ति] हे! तामरसेक्षणे!=कमलनयने! तथा अरसे! रसानभिज्ञे! अचतुरे! वा ते=तव स्मरानलः=स्मर एव अनलः मदनहुतभुक् [रूपकम्] मानविवर्धितः=मानेन प्रणयकोपजनितेन गर्वाख्येन चित्तवृत्तिविशेषेण विस्तृतः सन् वृद्धिं नीतः जाज्वल्यमान इत्यर्थः, 'यः' अस्ति इति शेषः। 'सः' क्षणेन=उत्सवेन समम्=सार्धम् किम् समन्ततः=सार्वात्म्येन निर्वृतिम्=सुखविशेषं रतिविलासजम् न अपाकरोति=न दूरीकरोति अपि तु निराकरोत्येव। अर्थात् तादृशमानकरणेनैव त्वया एतादृशी मदनानलज्वाला समुद्दीपिता येन सर्वं सुखं भस्मसात्कृतम् इत्यहोऽपूर्वस्ते दुराग्रहप्रकारः। अत्र—तृतीयचतुर्थयोः पादयोरभ्यासः॥ ६२॥

[प्रथम-द्वितीय-तृतीयपादगतस्य तस्योदाहरणम्]

**प्रभावतो नामन! वासवस्य प्रभावतो नाम नवासवस्य।**
**प्रभावतोऽनाम न वा सवस्य विच्छित्तिरासीत् त्वयि विष्टपस्य॥६३॥**

पादत्रयाभ्यासं निरूपयितुकामः आदौ प्रथम-द्वितीय-तृतीयपादगतमभ्यासमुदाहरति—'प्रभावतः' इति। अर्थसुगमतायै पूर्वं पदच्छेदं प्रदर्शयामः। प्रभावतः। नामन!। वासवस्य। [इति प्रथमः पादः]। प्रभावतः। नाम। नवासवस्य। [इति द्वितीयः पादः] प्रभौ। अतः। अनाम। न। वा। सवस्य। [इति तृतीयः पादः]। [चतुर्थः स्पष्टपदः] अथ व्याख्या—[कश्चित् श्रीकृष्णं स्तौति]—अयि! प्रभावतः प्रभावात् स्वप्रतापात् वासवस्य=इन्द्रस्य [अपि] नामन=नामयतीति नामनः तत्सम्बुद्धौ मखविघ्नकरणपारिजातहरणादिना इन्द्रस्यापि गर्वशातन! इत्यर्थः, तथा नाम=इति प्रसिद्धौ, हे! अनाम=नास्ति आमो रोगो यस्य सः तत्सम्बुद्धौ अनाम! अशरीरित्वात् ज्वरादिरोगो नास्ति लिङ्गशरीराभावाच्च कामादिरोगो नास्तीति भावः। तथा च श्रुतिः—'अकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्' इति। [नच सगुणस्यास्य श्रुतिस्मृतीतिहासपुराणादिषु शरीरधारित्वप्रसिद्धेः कथमिदमिति वाच्यम् महामायिनो वशिनस्तस्य नरचर्येव लीलामात्रत्वात् तेन तस्याक्षतेः।] विष्टपस्य=भुवनस्य प्रभौ=परिवृढे [स्वामिनि] 'त्वयि' सति दुर्दान्तदैत्यदलदमनादिना लोकं रक्षयति

सतीत्यर्थः, अतः=कंसशाल्वादिनिधनात् कर्मणः नवासवस्य=नवश्चासौ आसवो मद्यविशेषः, [ आसूयते असौ । 'ऋदोरप्' (३।३।३८) इति सूत्रेण 'षुञ्' अभिषवे स्वादिः अस्मात् धातोः 'अप्' प्रत्ययः ] तस्य नवासवस्य अभिनवमैरेयस्य वा=अथवा 'सवस्य' यज्ञस्य च विच्छित्तिः= विच्छेदः विनाशः न आसीत्=नैवाभवत् अर्थात् त्वयि सर्वेषां कामो धर्मश्च प्रावर्त्तत । तत्र भोगिनां सुरादिकामः धार्मिकानान्तु यज्ञादिधर्मः इति विवेकः ।

अत्र—प्रथमद्वितीयतृतीयपादानामभ्यासः । 'मैरेयमासवः शीधुः' इत्यमरः । **माधवस्तु**—'शीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् । मैरेयं धातकी पुष्पगुडधानाम्बुसंहितम्' इत्याह ॥ ६३ ॥

[ प्रथमद्वितीयचतुर्थपादगतस्य तस्योदाहरणम् ]

**परम्पराया बलवारणानां परम्पराया बलवारणानाम् ।**
**धूलीः स्थलीर्व्योम विधाय रुन्धन् परम्पराया बलवा रणानाम् ॥६४॥**

प्रथमद्वितीयचतुर्थपादगतं तदेवोदाहरति—'परम्' इति । [ कस्यचिद् भूमिपतेः स्तुतिरियम् ] पदविभागस्तु—परम् । परायाः । बलवाः । रणानाम् । १ मः । परम्परायाः । बलवारणानाम् । २ यः । परम् । पराय । अबलवारणानाम् । ४र्थः । ३यः स्पष्टः ॥ व्याख्या—हे ! पराय !=परः उत्तमः अयः शुभावहो विधिर्यस्य तत्सम्बोधने पराय! इति, त्वम् रणानाम्= संग्रामाणाम् परम्परायाः=समुदायस्य स्थलीः=अकृत्रिमा भूमीः धूलीः=रेणून् विधाय=सम्पाद्य व्योम=गगनम् रुन्धन्=प्रभूततरसैन्यरथाश्वनागपदातिपदसङ्घसमुत्थितधूलिभिरेव प्रावृण्वन् सन् परम्=उत्कृष्टं बलेन इति शेषः, अथवा परम्=प्रबलम् परम्=शत्रुम् परायाः= परागतवान् जितवानसीत्यर्थः । [ परापूर्वकात् 'या' धातोः लङि मध्यमपुरुषैकवचने रूपम् ] कीदृशः त्वम्—बलवाः=बलेन स्वसामर्थ्येन स्वकीयसैन्याद्युपकरणेन वा वारयति परबलानि इति 'बलवाः' । वारयतेः क्विपि रूपम् । कथम्भूतानाम् रणानाम्—बलवारणानाम्=बलमेषामस्तीति 'बलाः' अर्शआदित्वात् अच् । बलाः बलवन्तो वारणा गजा यत्र तेषाम् । पुनः कीदृशानाम्—अबलवारणाम्=न बलं येषां ते अबलाः दुर्बलाः तान् वारयन्तीति तेषाम् । अत्र प्रथमद्वितीयचतुर्थपादानमभ्यासः ॥ ६४ ॥

[ द्वितीयचतुर्थपादगतस्य तस्योदाहरणम् ]

**न श्रद्दधे वाचमलज्ज ! मिथ्या भवद्विधानामसमाहितानाम् ।**
**भवद्विधानामसमाहितानां भवद्विधानामसमाहितानाम् ॥ ६५ ॥**

तदेवान्यप्रकारमुदाहरति—'न' इति । [कञ्चन शठम्प्रति कस्याश्चन नायिकाया वचनमिदम्] हे ! अलज्ज !=व्रीडाशून्य ! भवद्विधानाम्=त्वादृशानाम् परवञ्चनैकमात्रव्रतानाम्, [ अयमर्थः—तुरीयपादगतस्य 'भवद्विधानाम्' इत्यस्य ] मिथ्यावाचम्=मृषावाक्यं न=नैव श्रद्दधे=विश्वसिमि । कथम्भूतानां भवद्विधानाम् असमाहितानाम्=अव्यवस्थितचित्तवृत्तीनाम् ['अनवस्थितचित्तस्य प्रसादोऽपि भयङ्कर' इत्युक्तेः] तथा—असमाहितानाम्=असमाः न समाः किन्तु विषमा अधिका इत्यर्थः, अहिताः शत्रवो येषाम् अत्यन्तशात्रवाणाम् । एतेन नायकस्य मौर्ख्यमपि व्यक्तीकृतम् । कीदृशीं वाचम्—असमाहितानाम्=न समः असमः असरलः कुराड-

लीभूतो यः अहिः भुजङ्गः तस्य इव तानः विस्तारो यस्याः ताम् वक्राभित्यर्थः, तथा—भवद्विधानाम्=भवे उत्पत्तिकाले अर्थात् मुखनिर्गमनोत्तरं श्रवणकाल एव द्विधानां द्वे धाने अर्थज्ञाने यस्याः तां तथाभूताम्, तथा-भवद्विधानाम्=भवे द्विधानाम् द्विधः अनः प्राणभूतोऽर्थो यस्याः ताम् छद्मना प्रयुक्तत्वात् द्व्यर्थबोधिकाभित्यर्थः। अत्र द्वितीय-तृतीय-चतुर्थपादेऽभ्यासः ॥ ६५ ॥

[ सर्वपादगतस्याभ्यासस्योदाहरणम् ]

**सन्नाहितोमानमराजसेन ! सन्नाहितोऽमानम ! राजसे न।**
**सन्नाहितो मानम राजसेन ! सन्ना हितोऽमानमराजसेन ॥ ६६ ॥**

त्रिषु पादेषु द्विरभ्यास उदाहृतः, सम्प्रति चतुर्ष्वपि पादेषु तदुदाहरति—'सन्' इति। अत्रायं पदविभागः—सन्। आहितोमानमराजसेन ! १। सन्नाहितः। अमानम !। राजसे। न। २। सन्नाहितः। मानम। राजसेन !। ३। सन्ना। हितः। अमानमराजसेन ४। अथ व्याख्या—[कश्चित् शैवं राजानं स्तौति] हे ! सन् !=सदाचारिन् साधो ! तथा हे ! आहितोमानमराजसेन !=न नमन्तीति अनमाः ब्राह्मणाः। पचादित्वात् अच्। अनमानां राजा अनमराजः चन्द्रः इत्यर्थः, '**सोमोऽस्माकं ब्राह्मणानाँ राजा**' इति मन्त्रवर्णेना। 'राजाहः सखिभ्यष्टच्' [५।४।९१] इति समासान्तः। 'उमा' गौरी। उमा च अनमराजश्च उमानमराजौ [तौ] उमानमराजौ आहितौ येन स आहितोमानमराजः महादेवः, तेन सेनः, इनेन सह वर्त्तत इति सेनः अर्थात् आहितोमानमराजेन सेनः तत्सम्बोधनम्, शिवभक्तितत्पर ! इत्यर्थः, तथा—हे ! अमानम !=न मानः परिमितिः यस्याः सा अमाना, सा तादृशी मा सम्पदा यस्य तत्सम्बुद्धौ अपरिमितसम्पत्तिसम्पन्न ! इत्यर्थः, तथा हे ! राजसेन=रजोविकारेण कामादिना मानम=नम्यते अधीनीक्रियत इति नमः, मा [नम्यते] इति मानमः तत्सम्बोधनम्, सुप्सुपेति समासः। कामक्रोधलोभाद्यपरिभूत ! इत्यर्थः। कामादीनां रजोगुणजत्वमुक्तं गीतायाम्—'काम एष क्रोध एष रजोगुणसमुद्भव' इति। अपि च—हे ! अमानमराजसेन= मानः सत्कारः मा लक्ष्मीः ते मानमे [द्वन्द्वः]। न [विद्येते] मानमे यस्याः सा अमानमा, सम्मानसम्पद्विहीना राजसेना प्रतिपक्षसैन्यं यस्य सः तत्सम्बोधनम्। एवम्भूत ! हे ! राजन्! त्वम् सन्नाहितः=कृतसंग्रामोद्योगः सन् न राजसे=न शोभसे। यतः त्वम्—सन्नाहितः=सन्ना अवसादं विनष्टिं गता अहिताः शत्रवो यस्य सः। तथा—सन्ना=संश्वासौ ना पुरुषः सत्पुरुष इत्यर्थः। अत एव हितः=सर्वेषां हितकृत् एतादृशगुणोपेतस्य तव सम्प्रति युद्धोद्योगो वृथैवेति भावः। अत्र—सर्वेषु पादेषु समोऽभ्यासः ॥ ६६ ॥

[ अथ श्लोकाभ्यासस्य लक्षणम् ]

**सकृत् द्विस्त्रिश्च योऽभ्यासः पादस्यैवं प्रदर्शितः।**
**श्लोकद्वयन्तु युक्तार्थं श्लोकाभ्यासः स्मृतो यथा ॥ ६७ ॥**

पादाभ्यासमुपसंहरन् श्लोकाभ्यासं लक्षयति—'सकृत्' इति। एवम्=दर्शितप्रकारेण सकृत् द्विः त्रिः च=एकवारं द्विवारं त्रिवारञ्च यः अभ्यासः=पुनरावर्त्तनम् सः पादस्य=श्लोकचरणस्य प्रदर्शितः=निरूपितः। तत्र—सकृदभ्यासः पादद्वयविषयः, द्विरभ्यासः पादत्रयविषयः, त्रिरभ्यासः पादचतुष्टयविषय इति विवेकः।

युक्तार्थम्=युक्तः सम्बद्धः अर्थः अभिधेयः यस्य तम् सङ्गतार्थम् एकवाक्यत्वसम्बन्धेन एकविशेष्यान्वयबोधकमित्यर्थः, तादृशं श्लोकद्वयम्=समानवर्णानुपूर्वीघटितपदघटिताष्टपादात्मकं पद्यद्वितयं श्लोकाभ्यासः=श्लोकाभ्याससंज्ञकं यमकम् स्मृतः=उक्तः कविभिरिति शेषः । यथा= इति अनुपदमुदाहराम इत्यर्थः ॥ ६७ ॥

[ श्लोकाभ्यासस्योदाहरणम् ]

**विनायकेन भवता वृत्तोपचितबाहुना ।**
**स्वमित्रोद्धारिणाऽभीता पृथ्वीयमतुलाश्रिता ॥ ६८ ॥**
**विनायकेन भवता वृत्तोपचितबाहुना ।**
**स्वमित्रोद्धाऽरिणाऽभीता पृथ्वी यमतुलाश्रिता ॥ ६९ ॥**

लक्षितं श्लोकाभ्यासमुदाहरति—'विनायकेन' इति । [ कश्चिद् राजानं स्तौति ] हे ! राजन् ! भवता=कारणभूतेन इयम् पृथ्वी=भूमिः अभीता=दुष्टेभ्यो भयरहिता 'जाता' इति शेषः । कीदृशेन भवता—विनायकेन=विनयति शिक्षयति दुर्जनान् इति विनायकः [ण्वुलन्तः] तेन दुष्टेभ्यो दण्डदात्रेत्यर्थः । तथा—वृत्तोपचितबाहुना=वृत्तौ वर्त्तुलौ उपचितौ पीवरौ बाहू भुजे यस्य तेन तादृशेन । पुनः किम्भूतेन—स्वमित्रोद्धारिणा=सु सुष्ठु अमित्रान् प्रबलान् शत्रून् [अपि] उद्धर्त्तुं ध्वंसयितुं शीलमस्य इति तेन तथाभूतेन । पुनः कीदृशेन—अतुलाश्रिता= तुलां समानताम् [उपमाम्] आश्रयते इति 'तुलाश्रित्' । 'श्रिञ्' धातोः क्विप् । न तुलाश्रित् 'अतुलाश्रित्' तेन तादृशेन उपमारहितेनेत्यर्थः, इति प्रथमश्लोकस्यार्थः ॥ ६८ ॥

'विनायकेन' इति—अभीता=अभ्येतीति 'अभीत्' अभिपूर्वात्, 'इण्' गतौ इत्यस्मात् धातोः 'क्विप्' । ततः तृतीयाया एकवचने रूपम् । युद्धार्थं त्वाम्प्रति आगच्छतेत्यर्थः । अरिणा विनायकेन=विगतो नायको यस्य सः तेन नायकशून्येन मृतस्वामिना इत्यर्थः । भवता=सता [विद्यमानेन] इयम् पृथ्वी=भूमिः यमतुला=यमस्य कृतान्तस्य तुला मानयन्त्रम् आश्रिता=अधिगता अर्थात् मृतमिति । यथा मानयन्त्रे न्यूनाधिकभावनिर्णयः क्रियते एवं यमस्य विचारस्थल्यामपि पापपुण्ययोर्विवेकः इति भावः । कथम्भूतेन अरिणा—उपचित-बाहुना=उपगतौ चितामिति उपचितौ तादृशौ बाहू भुजौ यस्य तथाभूतेन । 'उपचितौ' इत्यत्र 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' [वा०      ] इति वार्त्तिकेन उक्तविग्रहे सति समासः । पुनः कीदृशेन—स्वमित्रोद्धा=स्वानि [धनानि] मित्राणि [बन्धून्] च उज्जहाति परित्यजति इति 'स्वमित्रोद्धाः' तेन 'स्वमित्रोद्धा' तेन परिहृतधनबन्धुवर्गेण इत्यर्थः । 'स्वमित्र' पूर्वकात् उत्पूर्वात् 'ओहाक्' त्यागे इत्यस्मात् धातोः 'क्विप्' । तस्य सर्वापहारी लोपः । 'स्वमित्रोद्धा' इत्याकारान्तः 'सोमपा' शब्दवत् तस्य तृतीयैकवचने 'आतो धातोः' [६।४।४०] इति सूत्रेण आकारलोपे रूपम् । अत्र—समानानुपूर्वीवर्णघटितपदादित्वात् तादृशैकवाक्यतायाश्च श्लोकाभ्यासाख्यं यमकमिदम् ॥ ६९ ॥

[ अथ महायमकस्य लक्षणम् ]

**एकाक्षरचतुष्पादं तन्महायमकाह्वयम् ।**
**तत्रापि दृश्यतेऽभ्यासः सा परा यमकक्रिया ॥ ७० ॥**

सम्प्रति महायमकं लक्षयति—'एकाक्षर०' इति। एकाक्षरचतुष्पादम्=एकानि समानाकाराणि अक्षराणि येषां ते एकाक्षराः तादृशाः अभिन्नाः चत्वारः पादाः यस्य तत् तथाविधम् तत् महायमकसञ्ज्ञं यमकं भवतीत्यर्थः। तत्र अपि=उक्तयमकपादमध्ये अपि=अभ्यासः=पादखण्डस्य पुनरावृत्तिरूपमभ्यसनम् दृश्यते=महाकविनिबन्धेषु इति शेषः, सा=इयम् यमकक्रिया=यमकस्य यमनस्य क्रिया विधिः प्रकारो वा परा=सर्वोत्कृष्टा ज्ञेया यमकसीमेयमित्यर्थः।

यद्यपि चतुर्ष्वपि पादेष्वावृत्तेः समतया पादाभ्यासवृत्तियमकादस्यापाततो न किमपि विशेषः प्रतीयते इति विशेषवैचित्र्याभावात् पृथक् सङ्ख्यानमस्य नोचितमिति कश्चिदाशङ्केत तथापि अत्र पादखण्डाभ्यासात्मकवैचित्र्यमेव, ततोऽस्य वैशेषिकमित्यसौ प्रतिहस्तयितव्यः॥ ७०॥

[ महायमकस्योदाहरणम् ]

**समानयास ! मानया समानयासमानया।**
**समानया समानया समान ! या समानया॥ ७१॥**

महायमकमुदाहरति—[ कश्चित् प्रियाविरहातुरः स्वसुहृदं ब्रूते ] अस्य तावत् पदविभागः—समानयास !। मा। अनया [१]। समानय। असमानया [२]। समानया। समानया [३]। समान !। या। समानया [४]। अथ व्याख्या—हे ! समानयास !=समानः तुल्यरूपः यासः प्रयत्नः यस्य तत्सम्बोधनम् अर्थात् सर्वेष्वपि कर्त्तव्येषु समानप्रयासकारिन् !, तथा हे ! समान !=समः तुल्यः आनः प्राणो यस्य सः तत्सम्बुद्धौ मित्रत्वात् 'अभिन्नप्राण' इत्यर्थः। मा=माम् अनया=[प्रकरणगतया] नायिकया साकम् समानय=सम्मेलय तथा यतस्व यथा तया सह मम शीघ्रं समागमो भवेदिति, किम्भूतया तया—असमानया=न समाना तुल्या [अन्या नायिका] यस्याः सा तया निरुपमया लोकातिशायिसौन्दर्यवत्येत्यर्थः, तथा—समानया=मानेन प्रणयकोपेन सह वर्त्तत इति समाना तया मानिन्या, यद्यप्येवं तथापि समानया=मानः सत्कारः तत्सहितया सत्कारार्हयेत्यर्थः। सा का नायिका 'या' समानया=मा श्रीः सम्पत्तिः नयः नीतिः मा च नयश्च 'मानयौ' ताभ्यां सह वर्त्तत इति 'समानया' सम्पत्तिमती नीतिमती चेत्यर्थः। एतादृशनायिकया पुण्यलभ्यया सह समागमाय सत्वरो भव। अत्र चतुर्णामपि पादानामभ्यासः तत्रापि पादखण्डस्य स इति महायमकमिदम्। 'प्रमाणिका' वृत्तम्॥ ७१॥

[ विजातीयमिश्रयमकस्योदाहरणम् ]

**धराधराकारधरा धराभुजां भुजा महीं पातुमहीनविक्रमाः।**
**क्रमात् सहन्ते सहसा हतारयो रयोद्धुरा मानधुरावलम्बिनः॥७२॥**

अनेकानसजातीयसंमिश्रणभेदानुदाहृत्य सम्प्रति विजातीयसंमिश्रणभेदानपि कांश्चित् दिङ्मात्रं दर्शयति—'धरा०' इति। धराधराकारधराः=धरतीति 'धरः' ['धृञ्' धारणे इत्यस्मात् पचादित्वाद् अच्] धरायाः पृथिव्या धरः इति धराधरः=भूमिधारकः शेषो भगवान्। धरां धरतीति तु कुव्याख्यानम्, तथा सति 'धराधारः' धरांध्र' इति वा स्यात्। धराधरस्य आकारः आकृतिः इति धराधराकारः तस्य धराः तत्सदृशा अतिदीर्घा इत्यर्थः। एवमेव धराधराकारं धरन्तीति व्युत्पत्तिरपि दुष्टैव। तथा—अहीनविक्रमाः=न हीनः अहीनः समधिकोऽनल्प इति यावत्, विक्रमः पराक्रमः सामर्थ्यं येषां ते तादृशाः। किं वा—अहयः सर्पाः तेषाम्

इनः स्वामी अहीनः तस्य अहीनस्य नागराजस्य अनन्तस्य विक्रम इव विक्रमो येषां ते तथाविधाः। तथा—रयोद्धुराः=रयेण वेगेन उद्धुराः उत्कटाः वेगशालिनः। तथा—मानधुरावलम्बिनः=मानस्य धुरां भारम् अवलम्बन्ते इति मानधुरावलम्बिनः सम्मानपालका इत्यर्थः, एतादृशैर्विशेषणैः विशिष्टाः धराभुजाम्=पृथ्वीपालानां भुजाः=बाहाः क्रमात्=शत्रूणां आक्रान्तेः स्वबलप्रभावाद्वा महीम्=पृथिवीम् रक्षितुम्=पातुम् [ पालयितुम् ] सहन्ते=क्षमन्ते।

अत्र—प्रथमपादे अव्यपेतम् [अव्यवहितम्] आदिमध्ययमकम्, पादानां सन्धिषु च अव्यवहितम् अन्तादियमकम् तदेव सन्दंशयमकम्, द्वितीयपादे तु वर्णद्वयव्यवधानं 'मही मही' इति कृत्वा व्यपेतं मध्ययमकम्, तृतीयपादे एकाक्षरव्यवधानेन 'सह सह' इति, चतुर्थपादे तु वर्णद्वयव्यपेतं 'धुरा धुरा' इति मध्ययमकम्। एवञ्चानेकेषां विजातीयानां सम्मिश्रणमप्यत्र ज्ञेयम् ॥ ७२ ॥

[ अथ प्रतिलोमयमकस्य लक्षणम् ]

**आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा।**
**यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम् ॥ ७३ ॥**

अनुलोमयमकभेदाः प्रदर्शिताः सम्प्रति प्रतिलोमयमकभेदान् प्रदिदर्शयिषुः आदौ तल्लक्षणमाचष्टे—'आवृत्तिः' इति। पादार्धश्लोकगोचरा=पादश्च अर्धश्च श्लोकश्च ते पादार्धश्लोकाः ते गोचरा विषया यस्याः सा तथाभूता प्रातिलोम्येन=विपरीतभावेन [या] आवृत्तिः=अभ्यासः अर्थात् पादगोचरा, अर्धगोचरा, श्लोकगोचरा या आवृत्तिः सा 'प्रतिलोमत्वात्' प्रतिलोम–[विपरीत]–भावेन आवृत्तित्वात् 'प्रतिलोमम्' इति स्मृतम्=प्रतिलोमनामकं यमकमुक्तमित्यर्थः।

इदमत्राकूतकम्—यदा पूर्वपादस्य प्रतिलोमेन आवृत्त्या उत्तरपादो भवेत्, उत्तरपादस्यापि तद्वदावृत्त्या पूर्वपादो भवेत्, तदा तत् 'पादगोचरं यमकम्' उच्यते। एवम्—पूर्वार्धस्य प्रतिलोमावृत्त्या उत्तरार्धे, उत्तरार्धस्य विलोमावृत्त्या पूर्वार्धे सति 'अर्धगोचरं प्रतिलोमयमकम्' भवति। तथा समग्रपूर्वश्लोकस्य प्रतिलोमेनावृत्त्या यदि श्लोकान्तरम् तद्वत् तस्यापि आवृत्त्या पूर्वश्लोकश्चेत् तदा तत् 'श्लोकगोचरयमकम्' इत्याख्यायते ॥ ७३ ॥

[ पादप्रतिलोमयमकस्योदाहरणम् ]

**या मताश ! कृतायासा सायाता कृशता मया।**
**रमणारकता तेऽस्तु स्तुतेताकरणामर ! ॥ ७४ ॥**

अथ क्रमेणोदाहरन् आदौ पादगतं प्रतिलोमयमकमुदाहरति—'या' इति। [काचित् मानवती नायकं प्रति वक्ति] हे! मताश !=मता बुद्धा आशा परनायिकागोचरा इच्छा [लिप्सा] यस्य सः तत्सम्बोधनम्। या कृशता=क्षीणता कृतायासा=कृतः समुत्पादितः आयासः क्लेशो यया सा 'एवम्भूता मम' इति शेषः, 'मया' आयाता=अधिगतैव अर्थात् तव कदाचारमालोक्य पूर्वमेव क्षीणसत्त्वास्मि संवृत्ता, इतः परं त्वां त्यजन्त्या मयाऽन्या का कृशताऽनुभवनीया, सम्प्रति त्वया यथाकाममाचर्यताम्। किञ्च—हे! स्तुतेत !=स्तुतं स्तुतिम् [नुतिम्] इतः प्राप्त इति स्तुतेतः तत्सम्बोधने। अथवा—स्तुतं स्तुतियोग्यं प्रशस्तम् इतं गमनं यस्य स तत्सम्बुद्धौ स्तुतेत !, किं वा स्तुतात् स्तवनार्हात्सदाचारात् इतः स्खलितः निन्दिताचारः तत्स-

म्बोधनम् । तथा—अकरणामर !=अकरणे कर्त्तुमशक्ये कार्ये अमर ! देव ! देववत् शक्र्य-साध्यमपि साधयितुं क्षम ! तथा हे ! रमण !=कान्त ! ते=तव आरकता=आरयति गच्छतीति 'आरः' गन्ता 'ऋ गतौ' इत्यस्मात् स्वार्थण्यन्तात् 'अच्' । अथवा—'अकर्त्तरि च कारके सञ्ज्ञायाम्' [३।१।१३४] इति सूत्रेण 'घञ्' । अर्यते परजनोऽनेनेति 'आरः' 'स एव आरकः स्वार्थे कन्' तस्य भावः 'आरकता' इतस्ततो गमनम्, अस्तु=भवतु अर्थात् भवान् परनारीजनमेवाभिसरतु । अत्र—प्रथमपादस्य प्रतिलोमेनावृत्तिरिति तथा द्वितीयः पादः, द्वितीयपादस्य च तथैवावृत्त्या प्रथमः पादः,एवं तृतीयचतुर्थावपि, तस्मादत्र पादगोचरं प्रतिलोमयमकम् ॥७४॥

[ श्लोकार्धविषयस्य प्रतिलोमयमकस्योदाहरणम् ]

**नादिनो मदनाधी स्वा न मे काचन कामिता ।**
**तामिका न च कामेन स्वाधीना दमनोदिना ॥ ७५ ॥**

श्लोकार्धविषयं प्रतिलोमयमकमुदाहरति—'नादिन' इति । [कस्यचित् योगिनो वचनमिदम्] नादिनः=नादः नादाख्यं ब्रह्म अस्यास्तीति नादी तस्य 'नादिनः' नादनामकब्रह्मध्यानपरायणस्य मे=मम मदनाधी=मदनश्च आधिश्च मदनाधी मदनः कामः आधिर्मानसी व्यथा । तथा स्वा=स्वीया काचन=काचित् कामिता=शब्दस्पर्शादिविषयगर्धा न=नास्त्येव सर्वं वाक्यं सावधारणमिति न्यायात् । नादानन्दानुभवाप्यायितमानसस्य मम कामसम्बन्धेन मानसी व्यथा विषयाणाञ्च कापि कामना न वर्त्तत इति भावः । एवम् दमनोदिना=चक्षुरादिबाह्येन्द्रियाणां संयमनं दमः तं नोदितुं निरसितुं शीलमस्येति 'दमनोदी' [ ताच्छील्ये णिनिः ] दमध्वंसकः तेन तथाभूतेन कामेन=मदनेन हेतुभूतेन स्वाधीना=स्वः आत्मा अधीनः आयत्तः यस्याः सा स्वाधीना अवशीकृतेन्द्रियाणाम् आत्मानमाकुलयन्ती तामिका=ग्लानिः च=अपि न=नास्ति 'मे' इति पूर्वेणान्वयः । अत्राहुः **सुरेश्वराचार्याः**—

सरेचपूरैरनिलस्य कुम्भैः सर्वासु नाडीषु विशोधितासु ।
अनाहतादम्बुरुहादुदेति स्वात्मावगम्यः स्वयमेव नादः ॥ इति ।

एतादृशनादोत्पत्तिः दीर्घकालनैरन्तर्यसत्कारासेवितप्राणाभ्याससापेक्षा । अत्र—श्लोकस्य यत्पूर्वार्धं तस्य प्रतिलोमावृत्त्या च श्लोकार्धान्तरम्, तथा श्लोकोत्तरार्धस्य प्रतिलोमावृत्त्या च पूर्वार्धशरीरमिति कृत्वा 'प्रतिलोमयमकं श्लोकार्धविषयम्' ॥ ७५ ॥

[ श्लोकप्रतिलोमयमकस्योदाहरणम् ]

**यानमानय माराविकशोनानजनासना ।**
**यामुदारशताधीना मायामायमनादि सा ॥ ७६ ॥**
**सा दिनामयमायामा नाधीता शरदामुया ।**
**नासनाजनना शोकविरामायनमानया ॥ ७७ ॥**

—*—

इति यमकचक्रम् ।

—*—

१ न करणं क्रिया यस्मिन् तत् अकरणमिति भावप्रधानो निर्देशः ।

समग्रश्लोकगोचरं प्रतिलोमयमकमुदाहरति—'यानम्' इति । [ वारनारीपरायणस्य कस्यचित् स्ववयस्यम्प्रति वाक्यमेतत् ] हे ! वयस्य ! त्वम् यानम्=गजाद्यन्यतमं वाहनम् आनय= प्रापय । किमर्थमित्यत आह—उदारशताधीनाम्=उदाराणाम् धनव्ययकरणेऽसंकुचितचित्तानामाढ्यानां [श्रेष्ठिनामित्यर्थः] शतम् अधीनम् आयत्तं यस्याः सा ताम् याम्=वेश्याम् अहम् आयाम्=अगमम् । 'सा' मया आयम्=आगमनम् अनादि=अगादि कथितेत्यर्थं , अद्यावश्यं तवान्तिकमेष्यामीति [ 'णद्' अव्यक्ते शब्दे इत्यस्य कर्मणि लुङि एकवचने रूपम् । कथनार्थत्वविवक्षया अस्य सकर्मकत्वम्, तेन द्विकर्मकत्वात् 'सा' इत्यस्य गौणकर्मणः उक्तता ] एवं गमनमावश्यकमिति त्वया यानमवश्यमानेतव्यमित्यभिप्रायः । कथम्भूता सा—माराविकशा=मारः मदन एव अविर्मेषः तस्य कशा ताडनी अर्थात् कामिजनकामनिवारयित्री । तथा—ऊनानजनासना=ऊनाः धनविकला [ अपि सन्तः ] अनन्ति प्राणन्तीति ऊनानाः निर्धना इत्यर्थः, तान् जनान् अस्यति परिहरति इति 'ऊनानजनासा' निर्धनजनत्यागकारिणीत्यर्थः ॥ ७६ ॥

अधुना उक्तस्यैव श्लोकस्य प्रतिलोमावृत्तौ श्लोकान्तरं दर्शयति—'सा' इति । अस्यायं व्याख्यामार्गः—नाहमेव केवलं तद्वियोगेन तप्ये किन्तु सापि मयि अनुरक्तास्तीत्यतोऽप्यवश्यं त्वया यानानयनाय यातव्यमित्याह—सा=वेश्या अमुया=प्रवृत्तया शरदा=शरत्कालेन अतिमात्रं कामोद्दीपनकरेण आधीता=आधिं मानसीं व्यथाम् इता प्राप्ता शोकविरामा=शोकस्य विरहजनिततापविशेषस्य विरामोऽभावो यस्याः सा तथाभूता न=नैव वर्त्तत इति शेषः, अर्थात् सापि मद्वत् अनारतं विरहव्याकुला तिष्ठति । कथम्भूता सा—दिनामयमायामा=दिने दिवसे आमयस्य रोगस्य मायां कपटं छलम् अमति गच्छतीति दिनामयमायामा सखीसमक्षं विरहपीडां रोजव्याजेन प्रकाशयन्ती । पुनः किम्भूता—नासनाजनना=न आसनायाः स्थितेः जननम् विधानं यस्याः सा विरहतापेन निरन्तरास्थिरेत्यर्थः । पुनः कीदृशी – अयनमानया=अयनस्य मम गमनस्य मानं ज्ञानं दर्शनमिति यावत् तत् याति प्राप्नोतीति अयनमानया=ममागमनवर्त्मालोकनाकुलेत्यर्थः, सर्वाणि वेश्याविशेषणानि तदनुरागातिशयव्यञ्जनानि । 'नासनाजनना' इत्यत्र 'नैकयशा' इत्यादिवत् त्रिपदबहुव्रीहौ उत्तरपदपरत्वाभावात् नञोऽत्त्वाभावो बोध्यः । नच धनगर्धाया वेश्याया आसक्तिरनुपपन्ना वसन्तसेनादिषु तथादर्शनात् । अत्र दर्शितरीत्या श्लोकगोचरं प्रतिलोमयमकम् । इति यमकालङ्काराणां समुदायः समाप्त इत्यर्थः ॥ ७७ ॥[1]

[ गोमूत्रिकाबन्धस्य लक्षणम् ]

**वर्णानामेकरूपत्वं यत्त्वेकान्तरमर्धयोः ।**
**गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुः ॥ ७८ ॥**

कठिनतरयमकनिरूपणप्रस्तावेन तद्वत् कठिनतरान् कांश्चित् चित्रालङ्कारान्[2] दिदर्श-

---

१ महाकविप्रणीतेषु हरविजय-स्तुतिकुसुमाञ्जलि-देवीशतक-धर्मशर्माभ्युदयप्रभृत्यखण्डखण्डकाव्येषु नानाविधयमकस्य भूयान् समाचारः, ग्रन्थवृद्धिभिया रसपरिपन्थित्वाच्च मया तेषामिह समाहारो नोचितो मत इति विशेषजिज्ञासवः तत्तत्प्रकरणं स्वयमालोक्य विशेषबुद्धिचातुरीलिप्सां शमयन्तु ।

२ चित्रलक्षणं विश्वनाथोक्तं यथा 'पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते' इति ज्ञेयम्।

यिषुः आदौ गोमूत्रिकां लक्षयति—'वर्णानाम्' इति । अर्धयोः=ऊर्ध्वाधःपर्यायेण द्वाभ्यां पंक्तिभ्यां लिखितयोः श्लोकस्य पूर्वार्धोत्तरार्धयोः वर्णानाम्=अक्षराणाम् एकान्तरम्=एकवर्णव्यवधानसहितम् यत् एकरूपत्वम्=अभिन्नस्वरूपत्वम् तद्विदः=चित्रालङ्कारपण्डिताः कवयः तत् दुष्करम्=सहसा येन केनापि कविना कर्तुमशक्यं 'गोमूत्रिका' 'इति' प्राहुः=कथयन्तीत्यर्थः । 'यथा' इति वक्ष्यमाणोदाहरणाभिप्रायेणोक्तम् । यथा चलतो गोर्मूत्रं धाराविशेषाकारेण परिणमते तद्वत् श्लोकविशेषस्यापि लिखितुं शक्यत्वात् 'गोमूत्रिका' इति सादृश्यनिबन्धना सञ्ज्ञा ज्ञेया ॥ ७८ ॥

[ श्लोकार्धगोमूत्रिकाया उदाहरणम् ]

**म द नो म दि रा क्षी णा म पा ङ्गा स्त्रो ज ये द यम् ।**
× × × × × × × × × ×
**म दे नो य दि तत् क्षी ण म न ङ्गा या ञ्ज लिं द दे ॥ ७९ ॥**

'मदन' इति—अयम् मदनः=मन्मथः कामः मदिराक्षीणाम्=मदिरे मत्ते अक्षिणी नेत्रे यासां ताः तथाभूताः तासाम् अपाङ्गास्त्रः=अपाङ्गं कटाक्षो नेत्रप्रान्तभाग एव अस्त्रं प्रहरणं यस्य सः तथा सन् यदि=चेत् जयेत्=मयि प्रहारं कुर्यात्, तत्=तदा मदेनः=मम पाप्मा क्षीणम्=नष्टं 'भवेत्' इति शेषः, तदा च अनङ्गाय=कामाय अञ्जलिम्=पुष्पाञ्जलिं ददे=अर्पयेयम् नमस्कुर्यामित्यर्थः । सकामाभी रमणीभिरीक्षितश्चेद् भवेयं तदा कृतार्थः स्यामिति भावः ।

अत्र—विषमवर्णानां समानरूपत्वम्, एतादृशस्थले बन्धलिखितश्लोकोत्तरार्धस्य प्रथमाक्षरमारभ्य पूर्वार्धं पठनीयम् । यत्र तु समानां वर्णानामेकरूपत्वं तत्र पूर्वार्धप्रथमाक्षरमारभ्यैव पूर्वार्धम्, उत्तरार्धप्रथमाक्षरमारभ्यैव च उत्तरार्धं पठनीयं भवति ।

स वाजिसिन्धुरग्रामान् सम्भ्रमादभिधाव[ वि ]तः ।
जवादसिं स्फुरद्धामा बिभ्रन्नादमधात्ततः ॥

गोमूत्रिकाबन्धस्य अन्यदुदाहरणं यथा—

**स वा जि सिं धु र ग्रा मा न्सं भ्र मा द भि धा वि तः ।**
× × × × × × × × × × ×
**ज वा द सिं स्फु र द्धा मा बि भ्र न्ना द म धा त्त तः ॥**

[ धर्मशर्माभ्युदये ]

व्याख्या—सः=सुषेणः वाजिसिन्धुरग्रामान्=अश्वगजयूथान् सम्भ्रमात्=वेगात् अभिधावतः=इतस्ततः पलायमानान् निरीक्ष्य इति शेषः, स्फुरद्धामा=स्फुरत् लसत् धाम तेजः प्रतापो यस्य स तादृशः, जवात् वेगात् असिं खड्गं बिभ्रत्=धारयन् ततः=अनन्तरम् नादम्=गर्जनाम् अधात्=दध्रे । खड्गबन्धो यथा—

मारारिशक्ररामेभमुखैरासाररंहसा । साराब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥
माता न तानां संघट्टः श्रियां बाधितसम्भ्रमा । मान्याथ सीमा रामाणां शं मे दिश्यादुमाऽद्रिजा ॥

अनेन श्लोकद्वयेन खड्गबन्धः प्रस्तीर्यते । तत्र मुष्टेरुपर्य्यधः शाखाद्वयम् उपरि शाखाचतुष्पथे प्राथमिक 'मा' कारं विन्यस्य तिर्य्यगधःक्रमेण 'रारि' इत्यादि 'ह' कारान्तांश्चतुर्दश वर्णान् न्यसेदित्येका धारा । ततः खड्गशिखायां श्लिष्टं 'सा' इति न्यसेत्, ततस्तिर्य्यगूर्ध्वक-

मेण 'रारब्ध' इत्यादिवर्णचतुर्दशकं विलिख्य अररां धारां कुर्यात्, 'मा' कारः पूर्व 'मा' कारं प्रविष्टः, एवमग्रेऽपि तत्रैव प्रविष्टं कल्पयित्वा दक्षिणशाखायां 'ता' इत्यादिवर्णसप्तकं विन्यस्य वामशाखायां तिर्य्यग्विलोमेन 'श्रि' कारादिवर्णसप्तकं लिखेत्, 'मा' कारचतुष्पथे प्राथमिक 'मा' कारं प्रविष्टः, ततस्तमेव 'मा' कारमारभ्य अधोऽधः 'न्याथसी' इति त्रयो वर्णा मुष्टौ लेख्याः । ततोऽधश्चतुष्पथमध्ये तदन्तिम 'मा' कारं विन्यस्य तद्दक्षिणशाखायां 'रामाणां शम्' इति चतुरो वर्णान् लिखेत् । 'मा' कारः अधश्चतुष्पथस्य 'मा' कारं प्रविष्टः। ततो मुष्टेरधः त्सरुके 'द्विजा' इति वर्णद्वयं लेख्यमिति खड्गनिष्पत्तिः । मुरजबन्धो यथा—

सरलाबहलारम्भतरलालिबलारवा। वारलाबहलामन्दकरला बहलामला ॥ [काव्यालङ्कारे]

मुरजबन्धचित्रम् ।




[शरद्वर्णनमिदम्]—कीदृशी शरत् वर्तते इत्याह—'सरले'ति । सरलः दीर्घः आ समन्तात् बहलेन प्रभूतेन आरम्भेण तरलानां चञ्चलानाम् अलिबलानां भ्रमरसैन्यानाम् आरवः शब्दो यस्यां सा तादृशी । तथा—वारलाभिरंहसीभिर्बहला संनता व्याप्तेत्यर्थः, यदि वा—वारेण परिपाट्या लावो लवणं कर्षणं येषां तानि हलानि हलकृष्टक्षेत्राणि यस्यां सा तथाभूता 'वारलाबहला' । तथा—अमन्दकरला=अमन्दा यात्रायां कृतोद्यमाः करलाः करं बलिं लान्ति गृह्णन्तीति राजानो यस्यां सा तादृशी । अथवा—बहलम् अत्यर्थम् अमला निर्मला इति बहलामला ।

[अर्धभ्रमसर्वतोभद्रयोश्चित्रयोर्लक्षणम्]

**प्राहुरर्धभ्रमं नाम श्लोकार्धभ्रमणं यदि ।**
**तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः ॥ ८० ॥**

अर्धभ्रमं सर्वतोभद्रञ्च [चित्रम्] लक्षयति—'प्राहुः' इति । यदि श्लोकार्धभ्रमणम्= श्लोकस्य बन्धन्यस्तश्लोकसम्बन्धिपादचतुष्टयस्य अर्धेन अर्धमार्गेण भ्रमणम् अर्थात् अनुलो- मप्रतिलोमरूपयोरुच्चारणयोर्मध्ये केवलमनुलोमरीत्यैव भ्रमणेन पादनिस्सर- तत् 'अर्धभ्रमं नाम' चित्रं 'प्राहुः' चित्रविदः कवयः इति शेष-

अनुलोमप्रतिलोमाभ्यां 'भ्रमणम्' तदा 'तत्' सर्वतोभद्रम् नाम इष्टम्=मतमित्यर्थः । द्विविधोऽप्ययं बन्धः प्रायोऽष्टाक्षरवृत्तविशेषगोचरः । अस्य सन्निवेशप्रकारोऽयम्—प्रथमं चतुःषष्टिसंख्यानि कोष्ठानि अष्टपङ्क्तियोग्यानि लेख्यानि । पश्चात् प्रथमपङ्क्तिचतुष्टये क्रमेण चतुर्णामपि पादानां वर्णा विनिवेश्याः, तत उत्तरमधोलिखितपङ्क्तिचतुष्टये चतुर्थतृतीयद्वितीयपादा विपरीतक्रमेण लेख्याः । एवं स्थितौ अर्धभ्रमे अधः पङ्क्तिचतुष्टये परावृत्त्या, सर्वतोभद्रे च परावृत्त्या समावृत्त्या वा चतुर्थादिपादविन्यासः इति विशेषः । उद्धारक्रमस्तु [आवृत्तिक्रमः] अर्धभ्रमे चतुष्पादात्मिकायाम् ऊर्ध्वपङ्क्तौ वामात् दक्षिणतः, तथा पादचतुष्टयात्मिकायामधःपङ्क्तौ दक्षिणतो वा वामात्, एवं वामस्य ऊर्ध्वकोष्ठादधःक्रमेण दक्षिणस्य अधःकोष्ठात् ऊर्ध्वक्रमेण च अनुलोमोच्चारणेन प्रथमादिपादोत्थानं ज्ञेयम् । सर्वतोभद्रे तु वामात् दक्षिणतो दक्षिणात् वामतः ऊर्ध्वात् अधस्तः, अधस्तात् ऊर्ध्वतश्च अनुलोमविलोमाभ्यां सर्वत आवर्त्तनेन पादोपस्थितिर्विज्ञेया इति ॥ ८० ॥

[ अर्धभ्रमस्योदाहरणम् ]

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| म | नो | भ | व | त | वा | नी | कं |
| नो | द | या | य | न | मा | नि | नी |
| भ | या | द | मे | या | मा | मा | वा |
| व | य | मे | नो | म | या | न | त |
| त | न | या | म | नो | मे | य | व |
| वा | मा | मा | या | मे | द | या | भ |
| नी | नि | मा | न | य | या | द | नो |
| कं | नी | वा | त | व | भ | नो | म |

[ अर्धभ्रमः ]

व्याख्या—'मनोभव' इति । हे ! नत !=कामपरवशैर्नमस्कारार्ह ! मनोभव !=काम ! तव अनीकम्=सेनात्मिका मानिनी=इयं प्रणयकोपवती कामिनी 'तव' उदयाय=जयाय 'न न' अपि तु अस्त्येव । ननु—विजिजीषोः सैन्यं सापराधं दण्डयति तवापराधाभावात् चिन्तैव नास्तीत्याह—'वयम्' एनोमयाः=अपराधकारिणः मा वा=नवा 'भवामः' किन्तु भयात्=भीतेः अमेयामाः=अमेयः अपरिमितः आमो रोगो येषां ते तादृशाः एव । यद्यप्यस्माकमपराधो नास्ति तथापि त्रासात् तथाभूताः स्म इति भावः ॥ ८१ ॥

इत्यर्धभ्रमप्रकरणं समाप्तम् ।

[ अथ सर्वतोभद्रस्योदाहरणम् ]

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सा | मा | या | मा | मा | या | मा | सा |
| मा | रा | ना | या | या | ना | रा | मा |
| या | ना | वा | रा | रा | वा | ना | या |
| मा | या | रा | मा | मा | रा | या | मा |
| मा | या | रा | मा | मा | रा | या | मा |
| या | ना | वा | रा | रा | वा | ना | या |
| मा | रा | ना | या | या | ना | रा | मा |
| सा | मा | या | मा | मा | या | मा | सा |

[सर्वतोभद्रम्]

सर्वतोभद्रमुदाहरति—'सा' इति । अस्यायं पदच्छेदः—सा । अमायामामाया । मासा । [१] । मारानायायानारामा । [२] । यानावारारावा । अनाया । [३] । माया । रामा । माराय । अमा । [४] । [कश्चित् परदेशस्थः [परदेशी] विरही विलपति] सा=स्मृतिपथं प्राप्ता रामा=रमणी सुन्दरी मासा=चन्द्रमसा ['छायामृगधरो राजा माः' इति चन्द्रनामसु त्रिकाण्डशेषः] अमा=सह माराय=मम विनाशाय 'अस्ति' इति शेषः, अर्थात् स्मृतिविषयं प्राप्ता आलम्बनविभावरूपा रमणी दृश्यमानश्चायं चन्द्र उद्दीपनविभावरूपः, एतौ द्वावपि मम वियोगिनो नाशाय स्तः । किम्भूता सा—अमायामामाया=मायाया अभाव इति 'अमायम्' अकपटम् तस्य अमायस्य अव्याजस्येत्यर्थः, न मा परिमितिर्यस्य तत् 'अमम्' तस्य परिमाणरहितस्य आमस्य रोगस्य अर्थात् मदनजनितपीडाया आयाः आगमनं प्राप्तिर्यया सा तादृशी निर्व्याजकामव्यथाजनिकेत्यर्थः । पुनः कीदृशी—मारानायायानारामा=मारो मदनः, स एव आनायः जालम् जालवद् बन्धनकारणत्वात् तस्य आयानेन प्राप्त्या आरामः क्रीडा [अर्थात् कामस्यैव केलिर्यस्याः सा तथाभूता, निरन्तर[मादक]मदनव्यापारवतीत्यर्थः । पुनः किम्भूता—यानावारारावा=यानं गमनम् आ समन्तात् वारयतीति यानावारः प्रदेशयात्रानिषेधकः तादृश आरावः शब्दो [वचनं] यस्याः सा, स्वमधुरवचनभङ्गिविशेषेण मदीयविदेशगमनवारणकरीत्यर्थः । तथा—अनाया=नय एव नायः, न नायो नीतिर्यस्याः सा अनाया नीतिज्ञानरहिता कार्येष्वकुशलेति यावत् । पुनः कीदृशी—माया=मां श्रियं सौन्दर्यं याति प्राप्नोतीति माया=अतिसुन्दरी दर्शनमात्रेणैव कामिजनमनोहारिणीत्यर्थः । अनया रीत्या दुष्कराः सुकराश्च चित्रबन्धा वस्तुतो रसपरिपन्थिन एवाभान्ति तथापि कविबुद्धिविलासप्रभवाः यथायथं ग्रन्थान्तरेषु चित्राकुलचित्तैर्द्रष्टव्याः ॥८२॥

[ चित्रे स्वरस्थानवर्णनियमकथनम् ]

**यः स्वरस्थानवर्णानां नियमो दुष्करेष्वसौ ।**
**इष्टश्चतुःप्रभृत्येष दर्श्यते सुकरः परः ॥ ८३ ॥**

प्राचीनाः काव्यशोभाजनकत्वेन स्वरादिनियममपि अलङ्कारतया स्वीकुर्वन्ति यस्यानेके भेदाः सन्ति, परमिह तेषु दुष्करं भेदचतुष्टयं दर्शयितुमाह—'यः' इति । स्वरस्थानवर्णानाम्=स्वराः स्वयं राजन्ते ये अकारादयः, [यद्यपि] स्थानानि कण्ठताल्वादीनि [तथापि] एतेषां काव्ये निवेशासम्भवात् तत्रोच्चार्यमाणा वर्णा गृह्यन्ते, एवम्भूता वर्णाः कण्ठादिस्थानविशेषेषूच्चार्यमाणा व्यञ्जनरूपाः कण्ठ्यताल्व्यादिरूपाः तेषाम् नियमः=अन्यव्यावृत्त्या उपादानम् अर्थात् चतुर्भिरेव स्वरैः स्थानैर्वर्णैर्वा यन्निबन्धनम् तद्रूपावच्छिन्नो योऽलङ्कारः 'प्राचीनैः स्वीकृतः' इति शेषः, 'असौ' चतुःप्रभृति=चतुरादि यथा स्यात् तथा दुष्करेषु=आयाससाध्येषु मध्ये इष्टः=अर्थात् दुष्करत्वेनाभिमतः स 'एषः' दर्श्यते=निरूप्यते उदाहरणद्वारा । परः= एतदन्यः सुकरः=सुगमस्तु पद्यादिः ग्रन्थबाहुल्यभिया न दर्श्यत इति अर्थबललभ्यम् ।

इदन्तु बोध्यम्—'चतुःप्रभृति'इत्युक्तम्,तत्र प्रभृतिपदेन त्रयाणाम्,द्वयोः, एकस्य वा ग्रहणम् तेन स्वरस्थानवर्णानां प्रत्येकं चतुस्त्रिद्व्येकनियमरूपाश्चत्वारो भेदा इहोक्ता नेतरे इति ॥८३॥

[ अथ चतुःस्वरनियमस्योदाहरणम् ]

**आम्नायानामाहान्त्या वाग्गीतीरीतीः प्रीतीर्भीतीः ।**
**भोगो रोगा मोदो मोहो ध्येये धेच्छे देशे क्षेमे ॥ ८४ ॥**

तत्रादौ दीर्घचतुःस्वरनियममुदाहरति—'आम्नायानाम्' इति । आम्नायानाम्[1]=श्रुतिवाक्यानाम् वाक्=अन्त्या वाक् उपनिषद् [ब्रह्मविद्या] वेदान्तशास्त्रम् गीतीः=गानानि ईतीः[2]= अतिवृष्ट्याद्युपद्रवान् तथा प्रीतीः=पुत्रकलत्रप्रभृतिषु बन्धुषु स्नेहान् भीतीः=भयोत्पादकान् आह=आचष्टे । तत्र गीतयो विषयासक्तिहेतुत्वेन, ईतयः मनोव्यामोहकतया, पुत्राद्या वियोगादिदुःखप्रदत्वेन भयं जनयन्तीति वेदान्तवचसां[3] परामर्श इति भावः । तस्माद्धेतोः-- भोगः= गानादिविषयः रोगः=व्याधिरेव, मोदः=विषयानन्दः मोह एव अतस्मिंस्तदबुद्धित्वात् ।

यद्येवं तर्हि किमनुष्ठातव्यं भद्रलिप्सुनेत्याह—क्षेमे=विविक्ते देशे पुण्ये भागीरथीतीरादौ बदरिकाद्याश्रमेषु वा सकलोपद्रवविकले स्थाने ध्येये=ध्यानयोग्ये ब्रह्मणि धेच्छे=धाश्च इच्छा च धेच्छे, तत्र धानम् मनस एकाग्रीकरणम्, 'धाः' [क्विबन्तोऽयं शब्दः] इच्छा ध्यानस्यैव निरन्तरं लिप्सा, एते द्वे अनुष्ठातव्ये । 'ध्येच्छे' इति पाठेऽपि 'ध्या' ध्यानमिति स एवार्थः फलति । अत्र—'आ' 'ई' 'ओ' 'ए' इत्येवं चतुर्भिरेव दीर्घैः स्वरैः काव्यबन्धः । 'विद्युन्माला' वृत्तम् । 'मो मो गो गो विद्युन्माला' इति तल्लक्षणात् ॥ ८४ ॥

---

१ 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' [पू० मी० १।२।१] इत्यादिषु आम्नायशब्दः वेदवाचकत्वेन प्रसिद्ध इति बहु समर्थितमस्माभिः **निरुक्तसारे** ।

२ '**ईतिर्डिम्बे** प्रवासेऽतिवृष्ट्यादिषट्सु च स्त्रियाम्' इति मेदिनी ।

३ भोगादिषु रोगादिभयसत्त्वात् तेषां परित्याग एव सुखकर इति परः तत्परामर्शसारः '**शाङ्कर**' भारतीपाठेन [ शङ्कराचार्याणां कृतिस्वाध्यायेन ] ज्ञातुं सुग इति मन्ये ।

[ ह्रस्वत्रिस्वरस्योदाहरणम् ]

**क्षितिविजितिस्थितिविहितिव्रतरतयः परगतयः ।**
**उरु रुरुधुर्गुरु दुधुवुर्युधि कुरवः स्वमरिकुलम् ॥ ८५ ॥**

त्रिस्वरनियममुदाहरति—'क्षिति०' इति । क्षितिः=पृथिवी तस्याः विजितिः=विजयः स्वायत्तीकरणम्, स्थितिः=मर्यादा वर्णाश्रमादिविभागलक्षणा तस्या विहितिः=विधानम्, क्षितिविजितिश्च स्थितिविहितिश्च ते 'क्षितिविजितिस्थितिविहिती' ते एव व्रतम्=नियमः तत्र रतिः=प्रीतिः अनुरागो येषां ते तथाभूताः, तथा—परगतयः=पराः स्वज्ञात्युत्कर्षकरणात् श्रेष्ठा, गतिः ज्ञानम् अवस्था वा येषां ते तादृशाः, [ एवम्भूताः ] कुरवः=कुरुदेशजाता राजानः युधि=रणे स्वम्=स्वीयम् अरिकुलम्=शत्रुवृन्दं उरु=अधिकं यथा स्यात् तथा [ क्रियाविशेषणमिदम् ] रुरुधुः=प्रावव्रिरे किञ्च—गुरु=अतिशयं यथा तथा दुधुवुः=ईरयाञ्चक्रिरे कम्पयामासुरित्यर्थः । अत्र—'ई' 'अ' 'उ' एते त्रयः स्वराः ह्रस्वा एव काव्यबन्धकराः । 'रुरुधुः' इति 'रुधिर' आवरणे इत्यस्य लिटि प्रथमपुरुषबहुवचने रूपम् । 'दुधुवुः' इति 'धू' विधूनने इत्यस्य तथैव लिटि रूपम् । 'गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययो' रिति [ मेदिनी ] । त्वरितगतिर्वृत्तम् । 'त्वरितगतिश्च नजनगै'रिति तल्लक्षणात् ॥ ८५ ॥

[ द्विस्वरस्योदाहरणम् ]

**श्रीदीप्ती ह्रीकीर्त्ती धीनीती गीःप्रीती ।**
**एधेते द्वे द्वे ते ये नेमे देवेशे ॥ ८६ ॥**

द्विस्वरमुदाहरति—'श्रीदीप्ती' इति । श्रीः=लक्ष्मीः दीप्तिः शोभा तयोर्द्वन्द्वः ते, एवम्—ह्रीः व्रीडा [ लज्जा ] कीर्त्तिः=यशश्च ते, धीः=मेधा बुद्धिः नीतिः=नयश्च ते, गीः=वाणीः प्रीतिः=प्रसन्नता च ते, एते 'द्वे द्वे' ते=तव एधेते=वर्धेते । ये इमे=द्वे द्वे देवेशे=इन्द्रे [ अपि ] न=नैव विद्येते इति शेषः । अत्र—'ई' 'ए' इति द्वावेव स्वरौ काव्यबन्धकरौ । 'वाणी' वृत्तम् । 'सर्वे चेद्दीर्घार्णा वाणीति प्रोक्ता सा' इति तल्लक्षणात् ॥ ८६ ॥

[ एकस्वरस्योदाहरणम् ]

**सामायामामाया मासा मारानायायाना रामा ।**
**यानावारारावानाया माया रामा मारायामा ॥ ८७ ॥**

[ इति स्वरनियमः ]

एकस्वरमुदाहरति—'सा' इति । अयं श्लोकः पूर्वं सर्वतोभद्रोदाहरणे व्याख्यातः । अत्र—आकार एवैकः स्वरः बन्धालङ्कारकारी ॥ ८७ ॥

[ स्थाननियमे—चतुःस्थानस्योदाहरणम् ]

**नयनानन्दजनने नक्षत्रगणशालिनि ।**
**अघने गगने दृष्टिरङ्गने ! दीयतां सकृत् ॥ ८८ ॥**

अधुना स्थाननियमं निरूपयन् आदौ चतुःस्थानमुदाहरति—'नयना०' इति । [ मानवतीं प्रति कस्यचित् कामुकस्योक्तिरियम् ] हे ! नयनानन्दजनने !=नयनयोः नेत्रयोः आनन्दस्य दायिनि ! नेत्रमहोत्सवप्रदे ! अङ्गने !=प्रशस्ताङ्गवति ! सुन्दरि ! अघने=न घनाः मेघा यत्र तस्मिन् नीरदनिहीने गगने=व्योमनि सकृत्=एकवारम् दृष्टिः दीयताम्=दृक्पातो विधी-

यताम्। तादृशशारदगगनदर्शनस्य कामोद्दीपिकरत्वात् अस्या मानो नङ्क्ष्यतीति नायकहार्दम्। अथवा—'नयना०' इति गगनस्य विशेषणम्। कथम्भूते गगने—नयनानन्दजनने=निर्मलत्वात् दृष्टिरोधाभावात् दृग्घर्षकारिणि। अत्र दन्त्य—कण्ठ्य—तालव्य—मूर्धन्य—वर्णा बन्धनस्वरूपाधायका इति तेषां चत्वार्येव स्थानानि ॥ ८८ ॥

[ त्रिस्थानस्योदाहरणम् ]

**अलिनीलालकलतं कं न हन्ति घनस्तनि !।**
**आननं नलिनच्छायनयनं शशिकान्ति ते ॥ ८९ ॥**

त्रिस्थानं निरौष्ठ्यमूर्धन्यमुदाहरति—'अलि०' इति। हे ! घनस्तनि !=घनौ निबिडौ [कठोरौ] स्तनौ कुचौ यस्याः सा तत्सम्बोधने पीवरवक्षोजे ! इत्यर्थः, ते=तव आननम्=मुखम् [दृष्टं सदित्यर्थः] कम्=जनं [ युवकमेव, जरठानां क्षीणकामत्वात् ] न हन्ति=नैवाकुलीकरोति, अपितु दर्शनमात्रेणैवं कामोत्थानकरत्वात् सर्वमपि विह्वलयति। कीदृशं तत्—अलिनीलालकलतम्=अलिनः षट्पदाः [भ्रमराः तद्वत् नीलाः श्यामवर्णा अलकलताः लताकाराः चूर्णकुन्तला यत्र तत् तादृशम्। पुनः किम्भूतम्—नलिनच्छायनयनम्=नलिनच्छाये उत्पलतुलिते नयने नेत्रे यस्मिन् तत् तथाभूतम्। तथा—शशिकान्ति=शशी चन्द्रः तद्वत् कान्तिः शोभा यस्य तदेतादृशमित्यर्थः। अत्र—कण्ठ्यदन्त्यतालव्यवर्णानामेव निबन्धनमिति त्रीण्येव स्थानानि ॥ ८९ ॥

[ द्विस्थानस्योदाहरणम् ]

**अनङ्गलङ्घनालग्ननानातङ्का सदङ्गना।**
**सदानघ ! सदानन्दनताङ्गासङ्गसङ्गतः ॥ ९० ॥**

दन्त्यकण्ठ्यवर्णैः द्विस्थानमुदाहरति—'अनङ्ग०' इति। [कश्चित् भार्याया अनादरं कृत्वा गानवाद्यादिभिर्मनो विनोदयन् कालं यापयति, तम्प्रति तस्य सुहृदः उक्तिरियम्] हे ! सदानघ !=सर्वावस्थास्वेव चिन्ताशून्य ! तथा हे ! सदानन्दनताङ्ग !=सदानन्दम् सर्वदा आनन्दजनकं गानवादनादिकं तत् कर्म तत्र नतानि व्यापृतानि अङ्गानि गात्राणि यस्य तत्सम्बोधनम्। असङ्गसङ्गतः=न सङ्गः सत्सङ्गो येषां ते असङ्गाः दुर्जनाः तेषां सङ्गतः तैः सह गोष्ठीकरणादित्यर्थः। सदङ्गना=सती पतिव्रता [निर्दोषा] चासावङ्गना इति सदङ्गना धर्मनिष्ठा साध्वी महिला· अनङ्गलङ्घनालग्ननानातङ्का=अनङ्गः कामः तस्य लङ्घनया आक्रान्त्या अर्थात् त्वद्विरहे समुज्ज्वलितकामस्य निरोधेन लग्नाः सम्भाव्यमाना नाना अनेके आतङ्काः सन्तापाः अथवा परासक्तिदोषशङ्का यस्याः सा तादृशी 'भवेत्' इति शेषः। साध्व्या अपि स्त्रियाः परित्यागेन निरुद्धकामायाः कदाचित् अरक्षणात् दोषाः प्रादुष्युरिति गानवादनादिजनितं मुधा प्रमोदं परिहृत्य निर्दोषायां तस्यामनुरागं विधेहीति भावः। अत्र—कण्ठ्यदन्त्यवर्णानामेव बन्धनकरत्वमिति द्विस्थानत्वमस्य काव्यस्य। जीवादिग्रन्थे कृताऽपि पाठान्तरयोजना न बहूपादेया इत्युपेक्ष्यतेऽस्माभिः ॥ ९० ॥

[ एकस्थानस्योदाहरणम् ]

**अगा गां गाङ्गकाकाकगाहकाघककाकहा।**
**अहाहाङ्क खगाङ्कागकङ्कागखगकाकक ॥ ९१ ॥**

---

(प्र०) एकस्थानं चित्रमुदाहर ? तदुदाहरणं व्याख्याहि च ?

कण्ठ्यैरक्षरैः एकस्थानं चित्रमुदाहरति--'अगाः' इति । तत्रादौ बालानां सुखबोधाय पदानि विभजामहे--अगाः । गाम् । गाङ्गकाकाकगाहक । अघककाकहा । अहाहाङ्ग । खगाङ्कागकङ्क । अगखगकाकक ॥ अथ व्याख्या--[हे!] गाङ्गकाकाकगाहक !=गङ्गाया इदं गाङ्गम् 'तस्येदम्' [४।३।१२०] इति 'अण्' । गाङ्गञ्च तत् कम्=जलम् इति 'गाङ्गकम्' । आ समन्तात् कानम् शब्द इति 'आकाः' । 'आङ्' पूर्वात् 'कै' शब्दे इत्यस्मात् धातोः 'अन्येभ्योऽपि दृश्यते' [३।२।१७८] इति सूत्रेण भावे 'क्विप्' 'सोमपा'वत् प्रक्रिया । एवम्--'अक' कुटिलायां गतौ इति धातोः 'उणादयो बहुलम्' [३।३।१] औणादिको भावे 'अच्' । अकनम् अकः=इति तु प्राचामनुरोधेन, तेषामशुद्धव्युत्पत्तिबाधनाय प्रयोगसाधुतामात्रप्रदर्शनार्थम् [प्रकृतार्थसङ्गतये] । **वयन्तु**--उक्तात् धातोः कर्त्तर्येव पचाद्यच् [३।१।१३४] अकति कुटिलं गच्छतीति 'अकः' तरङ्गः । आका [सह] अकः इति आकाकः=सशब्दवक्रगतिमांस्तरङ्गः इत्यर्थः । गाङ्गकस्य [गङ्गाजलस्य] आकाक इति 'गाङ्गकाकाकः' गङ्गाजलसम्बन्धिसशब्दतरङ्गः, तं गाहते विलोडते इति गाङ्गकाकाकगाहः । 'कर्मण्यण्' [३।२।१] स एव 'गाङ्गकाकाकगाहकः' स्वार्थे कन् । अथवा गाहते इति 'गाहकः' कर्त्तरि ण्वुल्, तस्य षष्ठीतत्पुरुषः समासः । तत्सम्बुद्धौ हे ! गाङ्गकाकाकगाहक !=गङ्गाजलतरङ्गावगाहिन् ! इति समुदितपदार्थः । तथा--हे अहाहाङ्ग !='हाहा' इति दीनध्वनेरनुकारः तं दीनध्वनिम् अङ्गति गच्छतीति 'हाहाङ्गः' । 'अगि' गतौ इत्यस्मात् कर्मण्यण् । न हाहाङ्गः इति 'अहाहाङ्गः' तत्सम्बोधनं हे ! अहाहाङ्ग ! सदानन्दमग्नेत्यर्थः । तथा--हे ! खगाङ्कागकङ्क !=खे आकाशे गच्छन्तीति 'खगाः' सूर्याद्या ग्रहाः । [ 'खगः सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे' इति मेदिनी ] । 'अन्येष्वपि दृश्यते' [ ३।२।१०१ ] इति सूत्रेण सप्तम्यन्त'ख'कारकोपपदात् 'गम्' धातोः 'ड' प्रत्ययः । अङ्क्यतेऽनेन इति अङ्कः=चिह्नम् । 'अकि' लक्षणे इत्यस्मात् 'हलश्च' [ ३।३।१२१ ] इति सूत्रेण करणे 'घञ्' । खगाः सूर्याद्या अङ्काः चिह्नानि यस्य सः 'खगाङ्कः' स चासौ 'अगः' पर्वत इति 'खगाङ्कागः' सुमेरुः पर्वत इत्यर्थः, तं खगाङ्कागं [ सुमेरुं ] कङ्कते गच्छतीति 'खगाङ्कागकङ्कः' तत्सम्बोधनं तथा । 'ककि' गतौ इत्यस्मात् कर्मण्यण् । अर्थात् सुकृतसामर्थ्यातिशयेन सुमेरु[ स्वर्ग ]सुखभोगाधिकारिन् ! तथा हे ! अगखगकाकक !=अगन्ति शब्दस्पर्शादिविषयेषु धावन्तीति 'अगानि' तानि च खानि=चक्षुरादीन्द्रियाणि इति 'अगखानि' । तानि गच्छति व्याप्नोति 'भूम' रूपत्वात् 'अगखगम्' कारणभावात् सकलेन्द्रिय[तज्जन्यसुख]-व्यापि इत्यर्थः, तच्च तत् कम्=सुखं ब्रह्मेत्यर्थः, 'कं खं ब्रह्मे'ति श्रुतेः । तस्मै अगखगकाय विषयानन्दायेत्यर्थः, [ तस्मै ] न ककते नैव चपलीभवतीति अगखगकाककः तत्सम्बोधनं तथा, निरतिशयब्रह्मानन्दाभिलाषिन् ! इत्यर्थः । 'कक' लौल्ये धातुः । लौल्यं गर्वश्चापल्यञ्चेति । एवम्भूत ! हे तादृश ! त्वम् अघककाकहा=कुत्सितानि अघानि इति अघकानि 'कुत्सिते' [५।३।७४] इति सूत्रेण कुत्सितार्थे 'कन्' । निन्दितानि पापानि अतिपापानीत्यर्थः, 'अघकानि' एव 'काकाः' वायसाः उपद्रवकारित्वात् इति 'अघककाकाः' तान् हन्तीति 'अघककाकहा' क्विपि रूपम् ।

---

१ 'अङ्को' भूषारूपकलक्ष्मसु । चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः' इति कोषान्तरम् ।

गर्हिततरपापवायसहन्ता इत्यर्थः । एतादृशस्त्वम् गाम्=भूमिम् अगाः=अयाः गतवानसि इत्यर्थः । यद्यपि सर्वोऽपि प्राणी भूमिं गतः तथापि सुकृतिन एव सफलं जन्मेति बोधयितुं तथोक्तिः । अथवा—'गाम्' स्वर्गम् 'अगाः' यायाः । 'आशंसायां भूतवच्च' [ ३।३।१३२ ] इति सूत्रेण भविष्यति काले वर्त्तमानवत् भूतवच्च प्रत्ययः । अत्र—कण्ठ्या एव सर्वे वर्णाः तैरेव च पद्यबन्धत्वात् एकस्थानचित्रमिदम् ॥ ९१ ॥

[ इति ] कण्ठ्यादिस्थानोच्चार्यमाणवर्णनियमः समाप्त इत्यर्थः ।

[ वर्णनियमे चतुर्वर्णचित्रस्योदाहरणम् ]

**रे रे रोरूरुरूरोरुगागोगोऽगाङ्गगोऽगगुः ।**
**किं केकाकाकुकः काको मामा मामम मामम ! ॥ ९२ ॥**

वर्णनियमेषु आदौ चतुर्वर्णमुदाहरति—'रे रे' इति । [ काचित् बहुपण्या वाराङ्गना स्वाभिलाषिणम् [ अल्पधनम् ] भिल्लं प्रति वक्ति ] 'रे रे' ! इति संबोधनं नीचार्थकम् । रे ! रे ! मामम !=मायां श्रियां मम ममत्वं यस्य तत्सम्बोधनम् 'मम' इति विभक्तिप्रतिरूपकम-व्ययम् । भावप्रधानो निर्देश इति । दरिद्रत्वात् धनस्य व्ययकरणे कृपण ! । अथवा—मामम !=मायां लक्ष्म्याम् अममत्वं यस्य तत्सम्बोधनम् श्रीविहीनेत्यर्थः । एतादृशो दरिद्र-तरस्त्वम् मा मा=न न, न कदापीत्यर्थः, माम् अम=उपसर्प । 'अम' गत्यर्थः । 'माम' इति निषेधार्थे सम्भ्रमे द्विर्वचनम् अव्ययश्च तत् । अयमर्थः चतुर्थपादस्य । यतः—काकः=करटः किम् केकाकाकुकः=केकां मयूरवाणीं [ 'केका वाणी मयूरस्य' इत्यमरः ] तस्याः काकुः मद-जनितो विकारविशेषः [ 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः ] तां [ केकाकाकुं ] कायति शब्दायते शब्देन प्रकटीकरोति इति 'केकाकाकुकः' मयूरवाणीसदृशवा-णीकथनकामः । 'कै' शब्दे अस्माद्धातोः 'डः' प्रत्ययः । अर्थात् यथा वायसो मयूरकेको-च्चारणे साभिलाषोऽपि व्यर्थमनोरथो जायते तथैव त्वमपि मयि व्यर्थसंकल्प इति ज्ञेयम् । इति तृतीयपादार्थः । अपि चाधमकार्यकारित्वादपि त्वं सर्वथा ममानर्ह इत्याह—रोरूरुरूरोरु-गागोगः=रोरूयते त्रासेन पुनः पुनः अतिशयेन वा रौतीति रोरूः, यङ्लुगन्तात् 'रु' शब्दे इत्यस्मात् धातुमात्रात् क्विब्विधानात् 'क्विप्' । 'यस्य हलः' [६।४।४९] इति यलोपे रूपम् । रोरूश्चासौ रुरुः मृग इति 'रोरूरुरुः' तस्य 'उरसः'[1] वक्षःस्थलस्य या 'रुक्' प्रक्षिप्तशरकृत-वेधोत्पन्ना पीडा तद्रूपम् यत् 'आगः' अपराधः [ 'आगोऽपराधो मन्तुश्च' इत्यमरः ] पाप्मविशेषः । तत् [ आगसम् ] गच्छति प्राप्नोति इति 'रोरूरुरूरोरुगागोगः' पूर्ववत् गमेर्डः । [ 'सारस्वतास्तु'—एतस्मिन्विषये **'नाम्नि च'** इति सूत्रं पठन्ति । कर्मादिनियमरहितनाममात्रोपपदाद् धातोः कर्त्तरि भावे च 'डः' प्रत्ययो भवतीत्यर्थः ] निरपराधप्राणिहिंसाकरत्वात् पापाचारीत्यर्थः । एवम्भूतस्त्वं नीचकर्मकृत् ततोऽपि न मम योग्य इति भावः इति प्रथमपादार्थः । किञ्च—त्वम् अगाङ्गगः=अगः पर्वतः तस्य अङ्गम् एकदेशः तं गच्छतीति 'अगाङ्गगः' पर्वतीयः अतो नैव नागर इत्यतोऽपि ममानर्हः 'असि' इति शेषः । अपि च—अगगुः=असि । न गच्छति

---

१ के मूर्धनि कायति । कै शब्दे । 'अन्येभ्योऽपि दृश्यते' [ वा० ३।२।१०१ ] इति 'डः' । 'हलदन्तात् सप्तम्याः' [ ६।३।९ ] इत्यलुक् ।

प्राप्नोति प्राकरणिकं विषयं पूर्वोत्तरसम्बन्धं वेति 'अगा' असम्बद्धा। 'गौः' वाक्। अगा गौः यस्य सा अगगुः 'गोस्त्रियोरुपसर्जनस्य' [१।२।४८] इति ह्रस्वः। 'चित्रगु'वत्। असम्बद्धभाषणस्वभावत्वादपि सर्वथा ममायोग्योऽसीति मदर्थं काममन्यत्र पूरयेति सर्वसारः।

अत्र—'र' 'ग' 'क' 'म' इत्याकारैश्चतुर्भिरेव वर्णैर्बन्धः समाप्तिं नीत इति चतुर्वर्णचित्रमिदम्। न चात्र 'अङ्ग' इति ङकारसद्भावेऽपि कथं चतुर्वर्णता इति शङ्कनीयम्, वर्णपदस्य वृत्तपूरकवर्णपरत्वात् ङस्य वृत्तपूरकत्वाभावात्। यदि च सर्वथा शुद्धमेवोदाहरणं दिदृक्षितं स्यात् तदा 'शिशुपालवधस्य' एकोनविंशे सर्गे तृतीयं पद्यं पठनीयम्। यथा—

जजौजोजाजिजिज्जाजी तं ततोऽतिततातितुत्।
भाभोऽभीभाभिभूभाभूरारारिररिरीररः॥ इत्यादि।

अस्येयं व्याख्या—'जजा'विति। ततोऽवलोकनानन्तरं जजन्तीति जजाः योधाः। 'जज युद्धे' पचाद्यच्। जजानामोजसा जाता जजौजोजा तामाजिं जयतीति जजौजोजाजिजित्। जयतेः क्विप्। जजतीति जाजी योधी। ताच्छील्ये णिनिः। अतिततानत्युद्धतानतितुदति अतिव्यथयतीत्यतितुत्। तुदतेः क्विप्। भस्यभिवाभा यस्य स भाभो नक्षत्रकान्तिः 'नक्षत्रमृक्षं भं तारा' इत्यमरः। नास्ति भीर्येषां तेऽभियो निर्भीकाः तानिभान् गजानभिभवतीति अभीभाभिभूः। क्विप्। तस्याः भासस्तेजसो भूः स्थानम् अभीभाभिभूभाभूः। अराः सन्त्येषामित्यरीणि चक्राणि तैः रीणन्ति अरिरियो रथाः। 'री गतिश्लेषणयोः' इति धातोः क्विप्। तेषाम् ईरं प्रेरणं राति अरिरीररो रथिकः। 'आतोऽनुपसर्गे कः'। अरिः शत्रुर्बलभद्रः तं वेणुदारिणम् आर, योद्धुमाससारेत्यर्थः। 'ऋ गतौ' इति धातोर्लिट् द्विर्भावे कृते णलि वृद्धिः अभ्यासस्योरदत्वे 'अत आदेः' इति दीर्घे पुनः सवर्णदीर्घः। भिन्नैकाक्षरपादाख्योऽनुप्रासभेदः। भाभ इत्युपमानुप्रासयोरेकवाचकानुप्रवेशलक्षणसंकरः। 'धर्मशर्माभ्युदये'ऽपि—

रैरोऽरीरोरुरुरत्काकुकं केकिकङ्किकः। चञ्चच्चञ्चूच्चचिच्चोचे तततातीति तं ततः॥

अस्यायमर्थः—रायं धनं राति ददातीति रैरः। अरीन् ईरयन्तीति अरीराः सुभटाः, तेषाम् उरुः महान्.... ... .... ...

केकिना कङ्कते इत्येवंशीलः केकिकङ्की कार्त्तिकेयः तस्य कः कामो यस्य स केकिकङ्किकः। चञ्चन्ती चञ्चुर्दक्षा उच्चा महती चिद् बुद्धिर्यस्य सः। ततां प्रचुरां तां लक्ष्मीम् अतति गच्छति इत्येवंशीलः तततातो इति पृथक् पदम्। काकुकम्=मर्मव्यथकं शब्दम्। 'ऊचे' इति क्रियापदम्, तम् इति कर्म। ततः अनन्तरम्॥ ६२॥

[ अथ त्रिव्यञ्जनस्योदाहरणम् ]

**देवानां नन्दनो देवो नोदनो वेदनिन्दिनः।**
**दिवं दुदाव नादेन दाने दानवनन्दिनः॥ ६३॥**

वर्णचित्रे त्रिवर्णचित्रमुदाहरति—'देवानाम्' इति। देवानाम्=देवा इन्द्राद्याः तेषाम् नन्दनः=दैत्यदमनात् हितकरः प्रीणयिता, तथा—वेदनिन्दिनः=वेदान् श्रुतीः निन्दितुं शीलमस्यास्तीति, तस्य वेदनिन्दकनास्तिकलोकस्य नोदनः=नोदयतीति नोदनः निरासकर्त्ता [नन्द्या-

१ व्याकरणान्तरे कृन्मात्रस्य बहुलत्वात्। तथा च शाकटायनः—'कृद्बहुलम्'

दित्वात् 'ल्युः'] देवः=दीव्यतीति नृसिंहावतारधारी विष्णुर्भगवान् दानवनन्दिनः=दानवान् दैत्यान् नन्दयितुं शीलमस्य तस्य हिरण्यकशिपोः दाने=खण्डने [नाशने] 'दो' अवखण्डने इत्यस्य ल्युटि रूपम् । हिरण्यकशिपोर्वक्षःस्थलविदारणवेलायां नादेन=गर्जनेन दिवम्=अन्तरिक्षम् दुदाव=उदताप्सीत् । अर्थात् अन्तरिक्षचारिणो देवादीन् विस्मापयामास । अत्र 'द' 'व' 'न' इत्येवं त्रिभिरेव वर्णैर्बन्धो विहित इति 'त्रिवर्ण चित्र'मिदम् ॥ ६३ ॥

[ अथ द्विवर्णचित्रस्योदाहरणम् ]

**सूरिः सुरासुरासारिसारः सारससारसाः ।**
**ससार सरसीः सीरी ससूरुः स सुरारसी ॥ ६४ ॥**

द्विव्यञ्जनवर्णचित्रमुदाहरति—[बलभद्रस्य जलक्रीडावर्णने पद्यमिदम्] सूरिः=कविः [ 'कविः । धीमान् सूरिः कृती' इत्यमरः ] तथा—सुरासुरासारिसारः=सुराश्च असुराश्चेति सुरासुराः तान् आसर्तुं शीलमस्य इति सुरासुरासारी । शीलार्थे णिनिः । तादृशः सारः सामर्थ्यं [बलं] तस्य स तथाविधः । ससूरुः=सु सुष्ठु ऊरू इति 'सूरुः' । सूरुभ्यां सह वर्त्तते इति ससूरुः । तथा—सुरारसी=सुरायाः मधुनो रसः सुरारसः । स अस्यास्तीति तादृशः 'अत इनिठनौ' [ ५।२।११५] इति मत्वर्थीय इनिः । मधुपानानुरक्तः । एवम्भूतः सः=पुराणादिप्रसिद्धः सीरी=हली बलभद्रः सरसीः=कासारान् कृत्रिमपद्माकरान् इत्यर्थः [ 'कासारः सरसी सरः' इत्यमरः ] ससार=विहाराय [जलक्रीडायै] उपगतवान् । 'सृ' धातोर्लिटि प्रथमपुरुषैकवचने रूपम् । अत्र—'स' 'र' इति द्वाभ्यामेव व्यञ्जनाभ्यां पद्यबन्ध इति द्विव्यञ्जनवर्णचित्रमिदम् । यथा वा 'धर्मशर्माभ्युदये'—

कैाननाः कानने नुन्ना नाकेऽनीकाङ्कनिनः ।
के के नानीकिनीनेन नाकीनैकाकिनो ननु ॥ ६४ ॥

[ अथैकव्यञ्जनवर्णचित्रस्योदाहरणम् ]

**नूनं नुन्नानि नानेन नाननेनाननानि नः ।**
**नाऽनेना ननु नाऽनूनेनैनेनानानिनो निनीः ॥ ६५ ॥**

[ इति वर्णनियमः ]

एकव्यञ्जनवर्णचित्रमुदाहरति—'नूनम्' इति । [बलवच्छत्रुपराजितस्य राज्ञः सैनिकानां दैन्योपेतं वचनमिदम्] पदविभागस्तु—नूनम् । नुन्नानि । न । अनेन । (१) न । आननेन । अननानि । नः । (२) । न । अनेनाः । ननु । ना । अनूनेन । (३) एनेन । अनान् ।

---

[४।३।५८] इति पपाठ । अथवा नोदनमस्यास्तीति नोदनः अर्शआदित्वादच्, किंवा 'कृत्य ल्युटो बहुलम्' [३।४।११३] इति ज्ञेयम् ।

१ सूयते विचित्राणि वाक्यानि यथाप्रकरणं प्रयुंक्ते इति 'सूरिः'। 'सूङः क्रिः'[उ०४।६४] इति सूत्रेण 'षूङ' प्राणिगर्भविमोचने इत्यस्मात् औणादिकः 'क्रि' प्रत्ययः । धातूनामनेकार्थत्वादर्थभेदः । बाहुलकाद्वा ।

२ काननाः=कुत्सितमुखाः । अनीकाङ्के संग्रामोत्सङ्गे कनन्तीत्येवंशीलाः । नानीकिनेन=सेनापतिना । नाकीन !, एकाकिना इति पृथक्पदे । हे ! नाकीन ! देवेश ! शिष्टं स्पष्टम् ।

इनः। निनीः (४)। इति ज्ञेयः। अथ व्याख्या—अनेन=विजयवता पुरतोदृश्यमानेन शत्रुणा [कर्तृपदमिदम्] आननेन=भ्रूभङ्गवता मुखेन [एव] करणभूतेन नः=अस्माकम् अननानि=असवः प्राणाः नूनम्=निश्चयेन, न न नुन्नानि=न पराकृतानि इति न अपितु अपनीतान्येव, अस्याननमेवालोक्य अस्माकं प्राणा निर्गतप्रायाः सम्प्रहारस्य तु कैव कथा। [पूर्वार्धस्यार्थोऽयम्।][1] ननु=भोः! बान्धवाः! अनूनेन=न ऊनेन ओजस्विना प्रबलिना एनेन=एतेन शत्रुणा राज्ञा इनः=स्वामी ना=पुरुषः अस्माकं 'प्रभु' रित्यर्थः, अनान्=प्राणान् निनीः=निनीषुः मुखे घासं दत्त्वा रक्षितुमिच्छुः सन् अनेनाः=न एनः पापं यस्य सः अनेनाः निष्पापः 'न' नास्ति अपितु सपाप एव। यद्यसौ क्षात्रं धर्ममुल्लङ्घ्य युद्धे प्राणान् न हास्यति तदासौ पाप एव। युद्धे मरणस्यैव धर्महेतुत्वादिति भावः। तस्मात् यथाशक्ति सङ्ग्रामेऽभिमुखं स्थेयमिति हृदयम्। अत्र—केवलं 'न' वर्णेनैव बन्धसमाप्तिः कृता इति एकवर्णव्यञ्जनचित्रमिदम्। 'निनीः' इति सन्नन्तात् 'णीञ्'धातोः क्विपि प्रथमाया एकवचने रूपम्। अन्यदुदाहरणं यथा—'धर्मशर्माभ्युदये'—

> कैङ्कः[2] किं कोककेकाकी किं काकः केकिकोऽककम्।
> कौकः कुकैककः कैकः कः केकाकाकुकाङ्ककम्॥ ९५॥ इत्येकाक्षरचित्रम्॥

इति वर्णनियमचित्रकाव्यं समाप्तमित्यर्थः॥

[ प्रहेलिका ]

**इति दुष्करमार्गेऽपि कश्चिदादर्शितः क्रमः।**
**प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः॥ ९६॥**

चित्रोपसंहारपूर्वकं प्रहेलिकामुपक्रमते—'इति' इति। इति=दर्शितप्रकारेण दुष्करमार्गे अपि=चतुरादिवर्णग्रन्थनरूपत्वात् कठिनतरे कष्टसाध्येऽपि नियमे कश्चित्=अल्पतरः क्रमः=नियमः प्रकारो वा आदर्शितः=उदाहरणैर्निरूपितः किन्तु—इतोऽन्येऽपि दुष्करतराः पद्मबन्धमुरजबन्धक्रियाकारकगुप्तिप्रभृतयः पूर्वैरुक्ता इहानुक्ता क्रमाः सन्ति नचैत एव, किन्तु ग्रन्थबाहुल्यभिया इह नावतारिताः ते ग्रन्थान्तरतोऽवसेयाः इत्यभिप्रायः। पुनः=सम्प्रति प्रहेलिकाप्रकाराणाम्=प्रहेलिकाया भेदानाम् प्रहेलिकाख्यकाव्यविशेषाणां गतिः=रीतिः उद्दिश्यते=वर्ण्यते। यद्यपि 'रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका' इति प्रहेलिकानामलङ्कारत्वं केषाञ्चिदसम्मतम् स्वस्यापि च तत्तथा भाति, तथापि कथञ्चित् तासामुपयोगं मत्वा निरूपणमावश्यकमिति ज्ञातव्यम्। प्रहेलिकायाः सामान्यलक्षणन्तु—'श्रीधर्मदास'-सूरिणा 'विदग्धमुखमण्डने' कृतम्—

> व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्।
> यत्राबाह्यान्तरावर्थौ कथ्यन्ते ताः प्रहेलिकाः॥ इति॥ ९६॥

---

१ सैनिकानां स्वबन्धुजनान् प्रति उक्तिरियम्।

२ कङ्कः=बकः। कोककेकाकी=चक्रवाकहंसगामी। काकः=ध्वाङ्क्षः। केकिकः=मयूरवत् क आत्मा शरीरं यस्य सः। कुकैककः=स्वर्गपृथ्वीजलेष्वद्वितीयः।

[ प्रहेलिकाया उपयोगित्वनिरूपणम् ]

**क्रीडा गोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे ।**
**परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥ ९७ ॥**

प्रहेलकोपयोगं दर्शयति—'क्रीडा०' इति । क्रीडागोष्ठीविनोदेषु=क्रीडाप्रयोजना गोष्ठी क्रीडागोष्ठी तत्र ये विनोदाः विविधभङ्गया प्रमोदवचांसि तेषु । किंवा-अन्योन्यं चातुर्या वाक्प्रयोगः 'क्रीडा' । विदग्धानामासनबन्धो 'गोष्ठी' । काव्यालापेन कालयापनं 'विनोदः' । क्रीडा च गोष्ठी च विनोदश्च ते तेषु तज्ज्ञैः=प्रहेलिकापण्डितैः सह आकीर्णमन्त्रणे=जनसंकुलो देशः आकीर्णमित्युच्यते तस्मिन् यन्मन्त्रणं परस्परं रहस्यालापः तत्र, अपि च=तथा—परव्यामोहने=परेषां बोद्धव्यव्यतिरिक्तानां व्यामोहने अज्ञातृत्वसम्पादने 'प्रहेलिकाः सोपयोगाः=प्रयोजनवत्यः सन्ति, एवमासां यमकादिवत् रसपरिपन्थित्वेऽपि अलङ्कारत्वं नायुक्तम्, इतरत्र तु दोष एवेति भावः ॥ ९७ ॥

[ अथासां लक्षणसहितानि नामानि ]

**आहुः 'समागतां' नाम गूढार्थां पदसन्धिना ।**
**'वञ्चिता'ऽन्यत्र रूढेन यत्र शब्देन वञ्चना ॥ ९८ ॥**

अर्धार्धेन द्वयोः प्रहेलकयोर्लक्षणं निर्दिशति—'आहुः' इति । पदसन्धिना=सुप्तिङन्तं पदम् पदयोः सन्धिः पदसन्धिः तेन पदसामीप्यजनितसन्धिकार्येण गूढार्थाम्=गूढः दुर्बोधः अर्थो यस्याः तां तादृशीं प्रहेलिकां समागतां नाम आहुः=कथयन्ति ।

अन्यत्र=विवक्षितार्थेतरे यत्र=यस्मिन् स्थले रूढेन=रूढिशक्तिमता प्रसिद्धेन 'शब्देन' या वञ्चना=परप्रतारणा क्रियते सा 'वञ्चिता' नाम प्रहेलिका ज्ञेया इति शेषः ॥ ९८ ॥

**'व्युत्क्रान्ता'ऽतिव्यवहितप्रयोगान्मोहकारिणी ।**
**सा स्यात् 'प्रमुषिता' यस्यां दुर्बोधार्था पदावली ॥ ९९ ॥**

'व्युत्क्रान्ता' इति । अतिव्यवहितप्रयोगात्=अतिव्यवहितानाम् अत्यन्तं व्यवधानवतां पदानां प्रयोगात् सन्निवेशात् [ या ] मोहकारिणी=बोद्धुः [ श्रोतुः ] अर्थावगम-विधुरता-जनयित्री [ सा ] 'व्युत्क्रान्ता' इति नामोच्यते । यस्याम्=प्रहेलिकायाम् पदावली=पदपंक्तिः पदानां समूहः दुर्बोधार्था=दुर्बोधो दुर्गोऽर्थो यस्याः सा अल्पप्रसिद्धपदप्रयोगात् दुर्ग्राह्यार्था 'सा प्रमुषिता' नाम प्रहेलिका स्यात्=भवतीत्यर्थः ॥ ९९ ॥

**समानरूपा गौणार्थारोपितैर्ग्रथिता पदैः ।**
**'परुषा' लक्षणास्तित्वमात्रव्युत्पादितश्रुतिः ॥ १०० ॥**

गौणार्थारोपितैः=गौणार्थेन साध्यवसानगौणलाक्षणिकार्थेन आरोपितैः सादृश्यसम्बन्धेन प्रयुक्तैः पदैः ग्रथिता=गुम्फिता प्रहेलिका 'समानरूपा' नाम, तथा—लक्षणास्तित्वमात्रव्युत्पादितश्रुतिः=लक्षणं सूत्रमनुशासनमिति यावत् तस्य अनुशासनशास्त्रस्य अस्तित्वमात्रेण तदर्थेऽस्य शक्तिरस्तीति ज्ञानमात्रेण कृत्वा व्युत्पादिता साधिता श्रुतिः शब्दः यस्यां सा तादृशी 'परुषा' नाम प्रहेलिका ज्ञेया ॥ १०० ॥

**संख्याता नाम संख्यानं यत्र व्यामोहकारणम् ।**
**अन्यथा भासते यत्र वाक्यार्थः सा 'प्रकल्पिता' ॥ १०१ ॥**

यत्र संख्यानम्=वर्णगणना अथवा प्रयुक्तः संख्यावाची शब्दः व्यामोहकारणम्=श्रोतुः शीघ्रं निश्चयाभावेन विशेषतो मोहजनिका [ मोहजनकः] सा संख्यानघटिता 'संख्याता' उच्यते । यत्र वाक्यार्थः=शाब्दबोधः अन्यथा भासते=आपाततः प्रतीयमानात् अर्थात् प्रकारान्तरेण प्रतीतिपर्यवसानं प्राप्नोति सा अन्यस्यार्थस्य प्रकृष्टकल्पनाहेतोः 'प्रकल्पिता' इति नाम प्रहेलिका भवति ॥ १०१ ॥

**सा नामान्तरिता यस्यां नाम्नि नानार्थकल्पना ।**
**'निभृता' निभृतान्यार्था तुल्यधर्मस्पृशा गिरा ॥ १०२ ॥**

यस्याम्=प्रहेलिकायां नाम्नि=सञ्ज्ञायाम् नानार्थकल्पना=नानार्थानाम् अनेकाभिधेयानां शब्दस्य बहूनामर्थानां कल्पना विभावना 'घटेत' इति शेषः, सा नामान्तरिता=प्रहेलिका ज्ञातव्या इति शेषः । यस्याम् तुल्यधर्मस्पृशा=प्रकृताप्रकृतयोः [ प्रस्तुताप्रस्तुतयोः ] साधारणधर्मप्रतिपादनया गिरा=वचसा निभृतान्यार्था=निभृतः गोपितः अन्यार्थः प्रस्तुतार्थो यत्र सा तथाभूता 'निभृता' इत्युच्यत इति शेषः ॥ १०२ ॥

**'समानशब्दो'पन्यस्तशब्दपर्यायसाधिता ।**
**'संमूढा' नाम या साक्षान्निर्दिष्टार्थापि मूढये ॥ १०३ ॥**

उपन्यस्तशब्दपर्यायसाधिता=उपन्यस्तेन उपनिबद्धेन शब्दपर्यायेण पदीयस्वार्थप्रतिपादकनामान्तरेण साधिता प्रणीता या सा 'समानशब्दा' भवति ।

शब्दपर्यायश्चात्र लक्षणाद्वारा एकार्थबोधकत्वरूपः नतु अभिधयापि एकार्थशक्यत्वरूपः तथा सति अर्थस्य गोप्यत्वाभावे प्रहेलिकैव न स्यादित्यवश्यं ध्यातव्यम् । या=वाक् प्रहेलिका साक्षात्=वाचकपदेन निर्दिष्टार्था अपि=निर्दिष्टः कथितः अर्थोऽभिधेयो यत्र तथाभूता अपि मूढये=आपाततो मोहाय भवति, सा 'संमूढा' नाम निगद्यते इति शेषः । 'मूढये' इति । 'मुह' वैचित्ये । दिवादिः । भावे 'क्तिन्' । चतुर्थ्येकवचनम् ॥ १०३ ॥

**योगमालात्मिका नाम या स्यात् सा 'परिहारिका' ।**
**'एकच्छन्ना'ऽऽश्रितं व्यक्तं यस्यामाश्रयगोपनम् ॥ १०४ ॥**

या=गीः [ वाक् ] योगमालात्मिका=योगानां योगशक्त्या [प्रकृतिप्रत्ययसमुदायरूपया] साधितानां पदानां माला समुदाय एव आत्मा स्वरूपं यस्यां सा तथाभूता अर्थात् योगशक्तिमच्छब्दपरम्परया रूढपदबोध्यानामेकैकानामर्थानां बोधकारिणी या सा 'परिहारिका नाम' प्रहेलिका । परिहरति शीघ्रमेवार्थबोधं वारयतीति योगसमाख्यया तथा व्यपदिष्टेः । यस्याम्=प्रहेलिकायाम् आश्रितम्=आधेयम् व्यक्तम्=स्फुटं भवेत् [परन्तु] आश्रयगोपनम्=आश्रयस्य आधारस्य गोपनं स्यात् सा एकच्छन्ना नाम प्रहेलिका । एक आश्रयः छन्नः निगूढः यत्र सा इति योगात् उक्तनाम्नी प्रहेलिका भवतीत्यर्थः ॥ १०४ ॥

**सा भवेद् 'उभयच्छन्ना' यस्यामुभयगोपनम् ।**
**'सङ्कीर्णा' नाम सा यस्यां नानालक्षणसङ्करः ॥ १०५ ॥**

यस्याम् उभयगोपनम्=आश्रिताश्रययोर्द्वयोरपि गोपनं संवरणं भवेत्, सा 'उभयच्छन्ना' भवेत् । यस्याम् नानालक्षणसङ्करः=नानालक्षणानाम् उक्तानां समागतादिपञ्चदश-

प्रहेलिकाप्रकाराणां मध्ये द्वित्र्यादिलक्षणानां सङ्करः साहित्यरूपेणावस्थानं सा 'सङ्कीर्णा नाम' ज्ञातव्या इति शेषः ॥ १०५ ॥

[ अदुष्टादुष्टप्रहेलिकासङ्ख्यानम् ]

**एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः ।**
**दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश ॥ १०६ ॥**

'एता' इति । एताः=समागताद्याः षोडश=शुद्धसङ्कीर्णभेदैरित्यर्थः, अन्याः=च्युताक्षरादत्ताक्षरादिभेदभिन्नाः अधीताः=दुष्टत्वेन पठिता इत्यर्थः । स्पष्टमन्यत् ॥ १०६ ॥

[ दुष्टप्रहेलिकानां स्वरूपम् तासां वर्जनञ्च ]

**दोषानपरिसङ्ख्येयान् मन्यमाना वयं पुनः ।**
**साध्वीरेवाभिधास्यामस्ता दुष्टा यास्त्वलक्षणाः ॥ १०७ ॥**

ननु—दुष्टाः प्रहेलिका याः पूर्वैराचार्यैरुक्ताः तासामिहानिरूपणात् तव ग्रन्थस्य न्यूनता स्यादित्याशङ्कयाह—'दोषान्' इति । वयं पुनः=वयन्तु अपरिसङ्ख्येयान्=गणयितुमशक्यान् दोषान्=वाक्यार्थबोधप्रतिबन्धकीभूतान् मन्यमानाः=जानन्तः साध्वीः=दोषप्राचुर्याभावेन यमकादिवत् अलङ्कारताङ्गताः एव अभिधास्यामः=उदाहरणद्वारा निरूपयिष्यामः । अदुष्टानां लक्षणन्तु अधस्तादुक्तमेवेति भावः । याः तु=प्रहेलिकाः अलक्षणाः=अधोनिरूपितसमागतादिलक्षणहीनाः ताः दुष्टाः=दोषवत्यः [मन्तव्याः] तासां निरूपणे व्यर्थं प्रायासं मन्ये इति भावः ।

सारस्तु—समागतादिषोडशसङ्ख्याकप्रहेलिकानामलङ्कारत्वं [यमकादिवत्] मयापि [दण्डिना] मन्यते नेतरासामिति ज्ञेयः ॥ १०७ ॥

[ क्रमशः उदाहरणेषु—समागताया उदाहरणम् ]

**न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि ।**
**अस्थानरुदितैरेभिरलमालोहितेक्षणे ! ॥ १०८ ॥**

---

१ उक्तञ्च विश्वनाथेन—

रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका । उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका ॥

च्युताक्षरा दत्ताक्षरा च्युतदत्ताक्षरा च । उदाहरणम्—

कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम् । किं करोतु कुरङ्गाक्षी वदनेन निपीडिता ॥

अत्र 'रसाले' इति वक्तव्ये 'साले' इति 'रः' च्युतः । 'वने' इत्यत्र 'यौवने' इति 'यौ' दत्तः । 'वदनेन' इत्यत्र 'मदनेन' इति 'मः' च्युतः । 'वः' दत्तः । आदिशब्दात् क्रियाकारकगुप्त्यादयः । तत्र क्रियागुप्तिर्यथा—

पाण्डवानां सभामध्ये दुर्योधन उपागतः । तस्मै गाञ्च हिरण्यञ्च सर्वाण्याभरणानि च ॥

अत्र—'दुर्योधनः' इत्यत्र 'अदुर्योऽधनः' इति 'अदुः' इति क्रियागुप्तिः । एवमन्यत्रापि ।

(प्र०) प्रहेलिकानां किं सामान्यलक्षणम् ? कासामलङ्कारत्वं कासाञ्च नेति अत्र कीदृशो दण्डिनः स्वरसः । तासां विशेषलक्षणञ्च तत्तदुदाहरणेषु योजनया स्फुटीकुरु ? (उ०) अस्य पृ० ३२६ पं० २१ तः प्रहेलिकाप्रकरणान्तम् ।

आदौ समागतां प्रहेलिकामुदाहरति—'न' इति । [काञ्चित् मानवतीं गोपिकां प्रति सान्त्वनां कुर्वतः श्रीकृष्णस्य वाक्यमिदम् ] हे ! आलोहितेक्षणे !=आ समन्तात् लोहिते रक्ते [कोपवशात्] ईक्षणे नयने यस्याः तत्संबोधनम् मया=मम चेतः=चित्तम् गोरसाभिज्ञम्= गोरसस्य दधिदुग्धादेः अभिज्ञं रसवित् न=नास्ति । 'मया' इति षष्ठ्यर्थे तृतीया । अथवा— 'धार्यते' इति क्रियापदमध्याहृत्य व्याख्येयम् । उभयत्रापि सारस्तु—न मया तव दधिदुग्धादि अपहृतम् । अतः कस्मात्=कारणात् त्वं प्रकुप्यसि=क्रोधं करोषि । एभिः=एतादृशः अस्थानरुदितैः=कारणं विना रोदनैः अलम्=मा रोदीरित्यर्थः । अयमर्थः जनसमाजे गोप्यवृत्तान्तसंवरकः, अनेनास्या दध्यादि आच्छिन्नं स्यादितीयं रोदितीति लोका जानीयुः ।

वास्तवो [विवक्षितो गूढो] ऽर्थस्तु—मया चेतः आगोरसाभिज्ञम्=आगसः अपराधस्य त्वदितरनायिकान्तरासक्तिलक्षणस्य यो रसः आस्वादः तस्य अभिज्ञं 'न' धार्यते अर्थात् त्वामन्तरा नान्यां रमेय तस्मान्मुधैव त्वयैतावान् मानः क्रियते । अत्र—'मे' आगोरसाभिज्ञम्' इति पदयोर्विभागे 'एचोऽयवायावः' [ ६ । १ । ७८ ] इति सूत्रेण 'ए'कारस्य अयादेशे कृते 'मयागोरसाभिज्ञम्' इति निष्पद्यते । तेन च निष्पन्नेन प्रकृतार्थः संवृतः । तादृशसन्धिना प्रकृतार्थ[गूढार्थ]संवरणरूपत्वादियं 'समागता' नाम प्रहेलिका [प्रथमा] ॥१०८॥

[वञ्चिताया उदाहरणम्]

**कुब्जामासेवमानस्य यथा ते वर्धते रतिः ।**
**नैवं निर्विशतो नारीरमरस्त्रीविडम्बिनीः ॥ १०९ ॥**

वञ्चितामुदाहरति—'कुब्जाम्' इति । [कान्यकुब्जपुर्यां तत्रत्यायां महिलायामासक्तम्प्रति कश्चिदाह] कुब्जाम्=न्युब्जपृष्ठाम् काञ्चन स्त्रीम् आसेवमानस्य=रममाणस्य ते=तव यथा= येन प्रकारेण रतिः=अनुरागः वर्द्धते=एधते एवम्=तथा अमरस्त्रीविडम्बिनीः=सुराङ्गनातुल्याः नारीः=अन्या महिलाः निर्विशतः=उपभुञ्जानस्य न=[सा रतिः] नैव वर्धते इति पुनरप्यनुषङ्गणीयम् इति ऋजुरीत्याऽर्थः । गूढस्तु—कुब्जाम्=कान्यकुब्जपुरीम् तत्रत्यां स्त्रीं वेति ज्ञेयम् ।

अत्र—'कुब्जा' पदं भुग्नपृष्ठायां स्त्रियामेव प्रसिद्धः वक्तुरभिप्रेतायां कान्यकुब्जनगर्यां तत्रत्यायां नार्यां वा न तस्य तथा प्रसिद्धिरिति अप्रसिद्धस्यार्थस्य पण्डितजनज्ञेयतया संवृतिः । अतो विशेषलक्षणसङ्गतिरप्यस्तीति [द्वितीया] 'वञ्चिता' नाम प्रहेलिका ॥ १०९ ॥

[ व्युत्क्रान्ताया उदाहरणम ]

**दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके ।**
**मुखं वल्गुरवं कुर्वंस्तुण्डेनाङ्गानि घट्टयन् ॥ ११० ॥**

व्युत्क्रान्तामुदाहरति—'दण्डेषु' इति । कर्कशकण्टके=कर्कशाः खराः कण्टकाः यस्मिन् तादृशे पद्मिन्याः=कमलिन्या दण्डे=नाले अङ्गानि=अवयवान् घट्टयन्=कर्षयन् तथा तुण्डेन= मुखेन वल्गुरवम्=मनोहरं शब्दं कुर्वन्=विदधत् हंसः=कादम्बः पद्मिन्या मुखम्=आस्यं 'चुम्बति' इति प्रसिद्धोऽर्थः । परमत्र पदानां सन्निवेशोऽतिव्यवहित इति वाक्यार्थबोधहेतोरासत्तेर्व्युत्क्रमो जातः अत इयं 'व्युत्क्रान्ता' नाम [ तृतीया] प्रहेलिका । एषा च क्लिष्टत्वदोषान्नातिभिद्यते ॥ ११० ॥

[प्रमुषिताया उदाहरणम्]

**खातयः कनि ! काले ते स्फातयः स्फार्हवल्गवः ।**
**चन्द्रे साक्षाद्भवन्त्यत्र वायवो मम धारिणः ॥ १११ ॥**

प्रमुषितामुदाहरति—'खातय' इति । हे ! कनि !=कुमारि ! [ 'कन्या कनी कुमारी च' इति हेमचन्द्रः ] ते=तव काले=पादे काल्यते प्रेर्यते प्रक्षिप्यतेऽसौ कालः पादः 'अकर्त्तरि च कारके सञ्ज्ञायाम्, [३।३।१९] इति 'कल प्रेरणे' इति धातोः 'कर्मणि घञ्' । स्फातयः= स्फायनं स्फाः ['स्फायी' वृद्धौ । अस्मात् क्विपि 'य' लोपे रूपम्] वृद्धिरित्यर्थः। तस्या अतिः। गतिर्यत्र ते प्रभूता इत्यर्थः । तथा—स्फार्हवल्गवः=स्फाम् स्फीतताम् अर्हन्तीति स्फार्हाः प्रभूताः । वल्गन्तीति वल्गवः स्फार्हाः प्रभूताः वल्गवः ध्वनयो येषां ते स्फार्हवल्गवः एवम्भूताः ते=तव खातयः=खम् आकाशम् तस्यायमिति 'खः' शब्दः । अतनम् 'अतिः' । 'इक् कृष्यादिभ्यः।' [वा० ३।३।१०८] इत्यनेन 'अत' धातोः इक् । खस्य शब्दस्य अतिः प्राप्तिर्येषु ते खातयः अलङ्काराः 'सन्ति' इति शेषः । तव बहुमूल्यानि प्रभूतानि भूषणानि— शब्दायन्ते इत्ययमर्धश्लोकार्थः । तस्मिन् चन्द्रे=सशिञ्जितनूपुराद्यलङ्कारवति आह्लादके तव पादे 'मम' वायवः=असवः[प्राणाः] धारिणः=अवस्थिता 'भवन्ति' इति शेषः, 'धृङ्' अवस्थाने इत्यस्य रूपम् । अत्र—अप्रसिद्धार्थे बहुभिः पदैः निरूपितः प्रकृतोऽर्थः श्रोतृसमाजे संवृत इति प्रमोषकरणादियं 'प्रमुषिता' [चतुर्थी] प्रहेलिका ॥ १११ ॥

[समानरूपाया उदाहरणम्]

**अत्रोद्याने मया दृष्टा वल्लरी पञ्चपल्लवा ।**
**पल्लवे पल्लवे ताम्रा यस्यां कुसुममञ्जरी ॥ ११२ ॥**

समानरूपामुदाहरति—'अत्र' इति । अत्र=अस्मिन् उद्याने=आरामे पञ्चपल्लवा= पञ्चशाखकोपेता वल्लरी=लता 'मया' दृष्टा=विलोकिता । यस्याम्=वल्लर्याम् पल्लवे पल्लवे= प्रतिपत्रम् ताम्रा=रक्ता कुसुममञ्जरी=पुष्पशिञ्जरिः 'राजते' इति शेषः ।

अत्र काचित् नायिका उद्यानरूपत्वेन आरोपिता । तस्या बाहुः वल्लरीत्वेन अंगुलयः पल्लवत्वेन नखाः कुसुममञ्जरीत्वेन चाध्यासिताः, परमत्र उद्यानादीनि पदानि नायिकाद्यर्थाभिधाने नाभिधापेक्षाणि किन्तु गौण्या तथा बोध इति सादृश्यसम्बन्धहेतुकेयं 'समानरूपा' पञ्चमी प्रहेलिका। इयञ्च 'वापी कापि स्फुरति गगने' इत्यादिवत् अतिशयोक्तिरूपैवाभाति ॥ ११२ ॥

[परुषाया उदाहरणम्]

**सुराः सुरालये स्वैरं भ्रमन्ति दशनार्चिषा ।**
**मज्जन्त इव मत्तास्ते सौरे सरसि सम्प्रति ॥ ११३ ॥**

परुषामुदाहरति—'सुरा' इति । सुरा मद्यम् । सुरां करोतीति सुराय ते 'तत्करोति तदाचष्टे' इति 'णिच्' । ततः क्विप् । अथवा—सुरा एषामस्तीति सुराः शौण्डिका अर्श आदिभ्योऽच् । किंवा—सु सुष्ठु राः ध्वनिविशेषो येषां ते सुराः [ 'रैः' शब्दे क्विपि रूपम् ] दशनार्चिषा=दशनानां दन्तानाम् अर्चिषा मयूखैः उपलक्षिताः विवृतास्यत्वात् स्वैरम्= स्वच्छन्दं यथा स्यात् तथा सुरालये शौण्डिकागारे मद्यालये इत्यर्थः, भ्रमन्ति=पर्यटन्ति ।

कीदृशः ते—सम्प्रति=अधुना ते सुराः सौरे=सुराया इदं सौरं तत्र सरसि=तटाके मज्जन्तः इव=ब्रुडन्तः सन्त इव मत्ताः=प्रमादङ्गताः । अत्र—'सुराः' इति पदं देववाचि तथापि अनुशासनस्यास्तित्वमात्रमाश्रित्य 'सुराकारिपु' 'सुरापेपु' च अशक्तमपि प्रयोजितं प्रयोक्तुः पारुष्यं व्यनक्तीति 'परुषा' इयं [षष्ठी] प्रहेलिका ॥ ११३ ॥

[संख्याताया उदाहरणम्]

**नासिक्यमध्या परितश्चतुर्वर्णविभूषिता ।**
**अस्ति काचित् पुरी यस्यामष्टवर्णाह्वया नृपाः ॥ ११४ ॥**

संख्यातामुदाहरति—'नासिक्यमध्या' इति । 'काचित् पुरी अस्ति'। कथम्भूता पुरी-नासिक्यमध्या=नासिकायां भवः नासिक्यः 'शरीरावयवाच्च' [४।३।६३] इति सूत्रेण 'यत्'। सच [प्रकृते] 'ञ' कारः । नासिक्यः मध्ये यस्याः सा तादृशी । तथा--परितः=सर्वतः चतुर्वर्णविभूषिता=चतुर्भिर्वर्णैः 'क' 'आ' 'च' 'ई' इति चतुर्भिरक्षरैः [ नासिक्यञकारसहितैः ] विशेषेण भूषिता मण्डिता ग्रथितेत्यर्थः एवम्भूता सा पुरी काञ्ची' इति संवरणीयोऽर्थः । यद्यपि 'काञ्ची' इत्याकारः शब्दः संज्ञा, नगरी तु तदभिधेयोऽर्थः तथापि सञ्ज्ञासञ्ज्ञिनोरभेदोपचारात् पुर्या द्वे विशेषणे । यस्याम्=पुर्याम् अष्टवर्णाह्वया नृपाः=अष्टौ वर्णा अक्षराणि यस्मिन् तथाभूत आह्वयोऽभिधानं येषां तादृशाः नृपा राजान 'आसन्' शेषः । एतावता 'पुण्ड्रकनामानो राजानोऽभूवन्' इत्यर्थो लभ्यो भवति । 'पुण्ड्रक'शब्दे च 'प, उ, ण, ड, र, अ, क, अ' एते अष्टौ वर्णा निबन्धकाः सन्ति । पुण्ड्रकवंशीया 'राजानः पूर्वं काञ्च्यामभूवन् इति हि लोके ख्यातिः । एवमुक्तानामष्टानामक्षराणां संख्यानेन श्रोतॄणां व्यामोहकरणात् 'संख्याता' नाम [सप्तमी] प्रहेलिका बोध्या ॥ ११४ ॥

[ प्रकल्पिताया उदाहरणम् ]

**गिरा स्खलन्त्या नम्रेण शिरसा दीनया दृशा ।**
**तिष्ठन्तमपि सोत्कम्पं वृद्धे मां नानुकम्पसे ॥ ११५ ॥**

प्रकल्पितामुदाहरति—'गिरा' इति । हे ! वृद्धे !=जरठे स्खलन्त्या=वार्धक्येन प्रभ्रश्यन्त्या गिरा=वाण्या, नम्रेण=अवनतेन शिरसा=उत्तमाङ्गेन तथा-दीनया=कातरभावङ्गतया दृशा=दृष्ट्या चक्षुषा च उपलक्षिता [उपलक्षणे तृतीया] त्वम् सोत्कम्पम् । वेपथुमन्तम् तिष्ठन्तम् अपि=स्थितवन्तमपि न अनुकम्पसे=नैव दयसे इति प्रसिद्धोऽर्थः गोप्याऽर्थस्तु-हे ! वृद्धे !=ऋद्धे ! लक्ष्मि ! ['ऋद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे' इत्यमरः] निर्धनत्वात् स्खलद्गिरा नम्रशिरसा दीनचक्षुषा चोपलक्षितं तथा सोत्कम्पं मां त्वं नानुकम्पसे मम दारिद्र्यं नापाकरोषि ।

अत्र--आदौ प्रतीयमानादर्थात् यत् प्रकृतत्वेन अर्थान्तरकल्पना तत इयं 'प्रकल्पिता' नाम [अष्टमी] प्रहेलिका ॥ ११५ ॥

[ नामान्तरिताया उदाहरणम् ]

**आदौ राजेत्यधीराक्षि ! पार्थिवः कोऽपि गीयते ।**
**सनातनश्च नैवासौ राजा नापि सनातनः ॥ ११६ ॥**

नामान्तरितामुदाहरति—'आदौ' इति । हे ! अधीराक्षि !=अधीरे चपले अक्षिणी

यस्याः तत्सम्बोधनम् चपलदृशे ! इत्यर्थः, कः अपि पार्थिवः=पार्थिवशब्दवाच्यः आदौ=प्रथमम् 'राजा' 'इति' नाम्ना गीयते=अभिधीयते । परन्तु असौ=पार्थिवः न एव राजा=वस्तुतो राजा पृथिवीपतिः नास्ति न च सनातनः=नित्यश्च नास्ति। तस्मात् 'कोऽसौ अस्ति' इति गम्यः प्रश्नः। संवरणीयः उत्तरभूतोऽर्थस्तु—कोपि पार्थिवः=पृथिवीविकारः वृक्षविशेषः 'स आदौ' प्रथमभागे 'राजा इति गीयते उच्चार्यते अर्थात् तद्वाचकाभिधेयस्य प्रथमभागे 'राजा' इति शब्दः श्रूयते तथा—सः ना तनः=इति शब्दशून्यो नास्ति अर्थात् तन्नाम्नोऽन्ते 'तन' शब्दोऽपि वर्त्तेत एव एवञ्च—'राजातनवृक्ष' इति संवरणीयोऽर्थो निर्गतो भवति। स च पियालवृक्षः। 'राजातन पियालः स्यात्' इत्यमरः। अत्र—'राजातन' इत्यभिधातव्ये नानार्थकल्पना कृता तत इयम् 'नामान्तरिता [नवमी] प्रहेलिका । लक्षणे नामपदं वस्तुमात्रतात्पर्यकम् । तेन—

तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः। गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥

इत्यादावपि 'नामान्तरिता' प्रहेलिका । अत्र—जलपूरितघटात्मके वस्तुनि वक्तव्ये प्रथमं नानार्थकल्पनात् नामान्तरिता । किञ्च—

य एवादौ स एवान्ते मध्ये भवति मध्यमः। अस्यार्थं या न जानाति तन्मुखे तं ददाम्यहम् ॥

इत्यादावपि सैव । अत्र 'यवस' इत्यर्थः प्रतिपाद्यः ॥ ११६ ॥

[ निभृताया उदाहरणम् ]

**हृतद्रव्यं नरं त्यक्त्वा धनवन्तं व्रजन्ति काः ।**
**नानाभङ्गिसमाकृष्टलोका वेश्या न दुर्धराः ॥ ११७ ॥**

निभृतामुदाहरति—'हृतद्रव्यम्' इति । नानाभङ्गिसमाकृष्टलोकाः=नानाभङ्गिभिः अनेकविधाभिश्चतुरचेष्टाभिः समाकृष्टाः [सम्यक्] स्वायत्तीकृता लोका जना याभिः तास्तथाभूताः हृतद्रव्यम्=हृतम् अपहृतं क्षीणताङ्गतं द्रव्यं धनं यस्य स तादृशः तम् नरम्=मनुष्यं त्यक्त्वा=विहाय धनवन्तम्=आढ्यं पुरुषम् काः व्रजन्ति=यान्ति [इति मम प्रश्नः]। यदि—उक्तविशेषणविशिष्टा वेश्या एव भवितुमर्हन्तीति उत्तरं ब्रवीमि इत्युच्येत तत्राह—दुर्धराः वेश्या न=दुःखेन धारयितुं योग्या महाव्ययकारणात् सकलधनक्षयविनाशहेतोश्च दुर्धरा वेश्या वारनार्यो मम प्रश्नस्य विषयो न अतस्त्वमन्यदुत्तरं ब्रूहि ? । अत्र—उत्तररूपः संवरणीयोऽर्थः 'पर्वतनिर्गता नद्यः' इति । तद्यथा—नाना अनेके भङ्गाः तरङ्गाः सन्त्यस्येति 'नानाभङ्गि' जलम्, तेन समाकृष्टाः सम्यक् समीपमानीताः अवतरन्तो लोकाः जना याभिः ताः तथाभूताः । किञ्च—दुर्धराः=महाजलप्रवाहात् विविधवक्रनक्रादिजन्तुप्रसराद्वा दुर्गम्याः । किं कृत्वा 'हृतद्रव्यं नरं त्यक्त्वा' हृतानि द्रव्याणि [द्रुर्वृक्षः, तस्य विकारोऽवयवो वा 'द्रव्यम्' । 'द्रोश्च' [४।३।१६१] इति पाणिनिसूत्रेण 'यत्'] वृक्षसम्बन्धीनि शाखापल्लवादीनि वस्तूनि यस्य तं 'नरम्' नरसदृशम् आश्रयप्रदमित्यर्थः[1], कं यान्ति—धनवन्तम्=धनं रत्नादि तद्वन्तं रत्नाकरं समुद्रमित्यर्थः। अत्र—विशेषणानामुभयत्रापि साम्यात् 'एकतरनिषेधेऽन्यतरविधिनान्तरीयकत्वम्' इति नियमात् 'नदी' एवोत्तरे युज्यते । परन्तु—तस्या अर्थः तुल्यविशेषणबलात् प्रतीतोऽपि वाचकशब्दानुपादानात् 'निभृता' नाम [दशमी] प्रहेलिका ॥ ११७ ॥

१ आश्रयप्रदत्वसादृश्याद् गौणोऽयं प्रयोगः ।

[ समानशब्दाया उदाहरणम् ]

**जितप्रकृष्टकेशाख्यो यस्तवाभूमिसाह्वयः।**
**स मामद्य प्रभूतोत्कं करोति कलभाषिणि ! ॥ ११८ ॥**

हे ! कलभाषिणि !=मधुरालापे ! जितप्रकृष्टकेशाख्यः=केशस्य आख्या केशाख्या 'बाल' इति नाम। प्रकृष्टः उत्तमो यः केशः तस्य आख्या अभिधायकं नाम 'प्रवाल' इति। जिताः न्यक्कृताः प्रकृष्टकेशाख्या प्रवाला येन सः तथाभूतः। अभूमिसाह्वयः=भूमिः धरा नास्ति भूमिर्यस्य सः अभूमिः अधरः अभूमिना समः आह्वयो नाम यस्य स अभूमिसाह्वयः, एवम्भूतः 'यः तव' अभूमिसाह्वयः ओष्ठं इति फलितोऽर्थः। सः अद्य माम् प्रभूतोत्कम्= अत्युत्कण्ठावन्तं करोति=विधत्ते। प्रवालतुल्यः [रक्ततरः] तवौष्ठो मामाकुलयतीति सर्वोऽर्थः। अत्र—'प्रकृष्टकेशाख्यः 'अभूमि'शब्दश्च लक्षितलक्षणाया प्रवालाधरयो- र्बोधं जनयतः। तथाहि—'प्रकृष्टकेशस्य' प्रवालशब्दे 'अभूमि'शब्दस्य च 'अधर'शब्दे पूर्वं लक्षणा लक्षितयोश्च तयोः शब्दयोः शक्त्या प्रवालाधररूपद्वयार्थस्य यथाक्रममुपस्थितिः। तदियं प्रस्तुतस्य समानशब्देनार्थोपस्थित्या 'समान शब्दा' [एकादशी] प्रहेलिका ॥ ११८ ॥

[ संमूढाया उदाहरणम् ]

**शयनीये परावृत्त्य शयितौ कामिनौ क्रुधा।**
**तथैव शयितौ रागात् स्वैरं मुखमचुम्बताम् ॥ ११९ ॥**

संमूढामुदाहरति—'शयनीये' इति। कामिनौ=[दम्पती] कामुकौ क्रुधा=प्रणयक्रोधेन शयनीये=आस्तरणे [शय्यायाम् ] परावृत्त्य=विमुखीभूय शयितौ=निद्राणौ। 'तथैव शयितौ' परावृत्त्य शयितावपि परावर्त्तनां कृत्वा रागात्=प्रीतेः स्वैरम्=स्वच्छन्दम् मुखम्=आननम् अचुम्बताम्=चुम्बितवन्तौ। अत्र—क्रुधा शयितयोः परावृत्त्य मुखचुम्बनं [ चुम्बनं वक्त्र- संयोगविशेषः] न युज्यत इत्यापाततोऽर्थस्य व्यामोहः पर्यन्ते तु आदौ प्रणयकोपेन परावृत्त्य तयोः शयनम् पश्चात् कामुकतया समुद्बुद्धरागहेतोः पुनः 'परावृत्य शयितौ' इति परावृत्तयोः पार्श्वान्तरसञ्चालनेन सम्मुखत्वान्मुखचुम्बनं सुघटमेवेति बाह्यदृष्ट्या श्रोतॄणां व्यामोहकरणा- दियं 'सम्मूढा' [द्वादशी] प्रहेलिका ॥ ११९ ॥

---

१ शक्यपरम्परासम्बन्धः **लक्षितलक्षणा**। पदीयशक्यार्थस्य लक्ष्यमाणेनार्थेन सह यः परम्परासम्बन्धः सा लक्षितलक्षणा। यथा—'मधुकरः शब्दायते' इत्यर्थप्रतिपाद- नाय केनचिद् आप्तेन 'द्विरेफो रौति' इति वाक्यं प्रयुक्तम्। तद्वाक्यश्रवणोत्तरं श्रोता पुरुषः 'द्विरेफ' पदस्य शक्यार्थरूपे 'रेफ'द्वये शब्दकर्तृत्वानुपपत्तिं मत्वा 'द्विरेफ' पदेन मधुकरव्यक्तिं लक्षणयाऽवगच्छति, एवम्भूता या लक्षणा सा 'लक्षितलक्षणा' अर्थात् द्विरेफपदस्य शक्यार्थो रेफद्वयम्, तस्य मधुकरव्यक्त्या साक्षात्सम्बन्धस्तु भवितुं नार्हति किन्तु तयोः रेफयोः साक्षा- त्सम्बन्धो 'भ्रमर' पदे, स्वघटितपदवाच्यत्वरूपपरम्परासम्बन्धस्तु मधुकरव्यक्तौ वर्त्तते। 'स्व' पदेन द्विरेफपदशक्यार्थभूतरेफद्वयग्रहणम्, तेन घटितं 'भ्रमर' पदम्, तद्भ्रमरपदवाच्यत्व- सम्बन्धो मधुकरे इति। एवमेव प्रकृते 'प्रकृष्टकेश' पदस्य प्रवालशब्दे 'अभूमि' शब्दस्य च अधरशब्दे लक्षणां कृत्वा पश्चात् [दर्शितरीत्या] तदर्थयोर्बोधो लक्षितलक्षणाया। लक्ष- णायाः सरलः प्रपञ्चो मदीय-**न्यायमुक्तावलीप्रभायां** शब्दखण्डे द्रष्टव्यः।

[ परिहारिकाया उदाहरणम् ]

**विजितात्मभवद्वेषिगुरुपादहतो जनः ।**
**हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ १२० ॥**

परिहारिकामुदाहरति—'विजितात्म०' इति । विः पक्षी, तेन विना गरुडेन जितः पराजितः इन्द्रः [अमृताहरणसमये गरुडेन इन्द्रः पराजित इति पौराणिकी प्रसिद्धिः] तस्य आत्मभवः=तनूजः अर्जुनः, तस्य द्वेषी शत्रुः कर्णः तस्य गुरुः पिता सूर्यः, तस्य पादैः किरणैः, हतः तापमुपनीतः जनः=पुरुषः, हिमापहामित्रधरैः=हिमं जाड्यं शैत्यम् अपहन्तीति हिमापहः अनलः, तस्य अमित्रः शत्रुः जलम्, तस्य धरैः वारिदैः व्याप्तम्=आच्छादितम् व्योम=आकाशम् अभिनन्दति=समाद्रियते । अत्र यौगिकैरेव पदैः झटिति प्रकृतार्थसंवरणकरणात् 'परिहारिका' नाम (त्रयोदशी) प्रहेलिका ॥ १२० ॥

[ एकच्छन्नाया उदाहरणम् ]

**न स्पृशत्यायुधं जातु न स्त्रीणां स्तनमण्डलम् ।**
**अमनुष्यस्य कस्यापि हस्तोऽयं न किलाफलः ॥ १२१ ॥**

एकच्छन्नामुदाहरति—अमनुष्यस्य=मनुष्येषु अगणनार्हस्य 'कस्य अपि' पुरुषस्य हस्तः=पाणिः जातु=कदाचित् 'अपि' आयुधम्=अस्त्रम् 'न स्पृशति' नैव छुपति 'स्त्रीणां स्तनमण्डलं च=नारीकुचमण्डलमपि न स्पृशति तथापि 'अयं हस्तः' अफलः=निष्फलः (व्यर्थः) न किल=अपि तु सफल एव इत्यस्यार्थस्यापाततः प्रतीतिः । परमत्र—शस्त्रस्त्रीस्तन-स्पर्शाभावेन 'नायं वीरः नापि शृङ्गारी इति कथमस्य हस्तस्य साफल्यम् इति विरोधवदव-भासनात् प्रकृते 'अमनुष्य' पदेन गन्धर्वो लक्ष्यते तस्य हस्तो गन्धर्वहस्तः, इति समुदितार्थः प्रतीतः, तेन 'एरण्डवृक्ष' इति संवृतार्थबोधः । उक्तञ्च 'हारावल्याम्'—

'अमण्डपञ्चाङ्गुलवर्धमाना गन्धर्वहस्तस्त्रिपुटीफलश्च' इति, तस्य फलमस्त्येवेति आश्रितं फलं स्पुटं प्रतीयते नत्वाश्रयस्य वृक्षस्य स्फुटाप्रतीतिरिति 'एकच्छन्ना' इयं (चतुर्दशी) प्रहेलिका ॥ १२१ ॥

[ उभयच्छन्नाया उदाहरणम् ]

**केन कः सह सम्भूय सर्वकार्येषु सन्निधिम् ।**
**लब्ध्वा भोजनकाले तु यदि दृष्टो निरस्यते ॥ १२२ ॥**

उभयच्छन्नामुदाहरति—'केन' इति । कः=पदार्थः केन=पदार्थेन सह सम्भूय=मिलित्वा सर्वकार्येषु=सकलासु क्रियासु सन्निधिम्=सन्निकर्षम् लब्ध्वा=प्राप्य भोजनकाले तु=अभ्यवहारवेलायाम् यदि दृष्टः=यदि नाम आलोकितः स्यात् तदा निरस्यते=नितरामस्यते क्षिप्यते समुत्सार्यते इति प्रसिद्धयोजनया प्रश्नः ।

अस्योत्तरन्तु—'केन' मस्तकेन सम्भूय कस्य शिरसः अयं कः केशः 'तस्येदम्' [पा० ४।३।१२०] इतीदमर्थेऽण् । स च सर्वकालेषु सन्निधिं प्राप्तोऽपि भोजनकाले दृष्टः सन् दूरमुत्सार्यते । अत्र—आश्रयस्य मस्तकस्य आश्रितस्य केशस्य च उभयोरपि छन्नत्वात् 'उभयच्छन्ना' इयम् (पञ्चदशी) प्रहेलिका ॥ १२२ ॥

---

१ 'स्पृशत्यामृशति स्पर्शे छुपत्यालभते च षट्' इति बुद्धिवर्गे 'आख्यातचन्द्रिका'।

[ संकीर्णाया उदाहरणम् ]

**सहया सगजा सेना सभटेयं न चेज्जिता ।**
**अमात्रिकोऽयं मूढः स्यादक्षरज्ञश्च नः सुतः ॥ १२३ ॥**

सङ्कीर्णामुदाहरति—'सहया' इति । सहया=हयैर्वाजिभिः सहिता, सभटा=भटैः योद्धृभिः सहिता अर्थात् साश्वा, सकरिका सयोधा इयम्=शत्रूणां सेना=चमूः चेत्=यदि न जिता=नैव पराभवं नीता स्यात्=भवेत् तदा नः=अस्माकम् अयम्=पुरः स्थितः सुतः= आत्मजः (कीदृशः) अक्षरज्ञः=अक्षरब्रह्मविदपि अमात्रिकः=मीयन्ते इन्द्रियैः परिच्छिद्यन्ते इति मात्राः=शब्दादिविषया ('मात्रास्पर्शास्तु कौन्तेय !' इति भगवदुक्तेः) मात्रा अर्हतीति मात्रिकः । **'तदर्हति'** (५।१।६३) इति पाणिनिसूत्रेण अर्हत्यर्थे 'ठञ्' । न मात्रिकः अमात्रिकः वैषयिकसुखास्पृक् तथा—मूढः च=मूर्खश्च 'स्यात्' ब्रह्मविदपि मूर्खत्वेन गण्यः स्यात् । वस्तुतः—ब्रह्मविदपि साधारणलोकदृष्टैः मूर्खत्वेन गण्यते 'या निशा सर्वभूतानाम्' इति भगवदुक्तेः, एवमयमर्थः अपाततः प्रतीतिविषयः । संवरणार्ह[गूढ]स्तु—हश्च यश्च हयौ हकारयकारौ वर्णौ ताभ्यां सहिता 'सहया' इत्यादि रीत्या हकारयकाराभ्यां भकारटकाराभ्यां च सहिता 'इयम् सेना' इनः चराचरस्रष्टा प्रभुः प्रजापतिः [ब्रह्मा] तेन सहिता प्रजापतिनैव सृष्टा 'वर्णमाला' इत्यर्थः । स्मर्त्तारश्चाहुः—'धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा' इति । [सेयम्] नचेज्जिता नाभ्यस्ता तदा अमात्रिकः=मात्रा अचः अकाराद्याः तज्ज्ञानरहितोऽयं जनः 'न सुतः' अक्षरज्ञः=अक्षरं वेदः न क्षरति विपर्यैति किन्तु प्रतिसर्गं निश्वासन्यायेन समानानुपूर्वीक एव तिष्ठति इति व्युत्पत्तेः तस्य 'ज्ञः' अधीतवेदोऽपि वर्णमालाविज्ञानशून्यश्चेत् तदा 'मूढः' मूर्ख एव । अर्थात् पठितवेदः=कीरवद्रटितवेदोपि यदि वर्णलेखनादिप्रकारानभिज्ञः तदा मूर्खः एव । 'योऽर्थज्ञः स इत्सकलं भद्रमश्नुते' ( महाभा० प० आ० ) इति श्रुतेः । अत्र वर्णलेखनमुपलक्षणमर्थज्ञानादेः । बहवः सन्त्येवंविधा दुष्प्रबुद्धा ध्वांक्षमुखा खट्वारूढा लोके इत्याशयः । एवमियं सङ्कीर्णा नाम षोडशीः प्रहेलिका ॥ १२३ ॥

[ संकीर्णायाः स्वरूपोपपादनम् ]

**सा नामान्तरितामिश्रा वञ्चितारूपयोगिनी ।**
**एवमेवेतरासामप्युन्नेयः सङ्करक्रमः ॥१२४॥** [ प्रहेलिकाचक्रम् ]

—*—

इति शब्दालङ्काराः ।

—*—

उक्तोदाहरणे सङ्कीर्णायाः स्वरूपं लापयति—'सा' इति । सा=अथ उक्ता सङ्कीर्णाभिधा प्रहेलिका नामान्तरितामिश्रा=हयादिशब्दानामनेकार्थकल्पनात् 'नामान्तरिताख्या' प्रहेलिकालक्षणोपेता, तथा—वञ्चितारूपयोगिनी='सेना' पदस्य 'चमू' रूपार्थस्य प्रसिद्धस्यापि अविवक्षितभावं मत्वा अर्थान्तरकल्पनात्वात् वञ्चितायाः प्रहेलिकाया यद् रूपं लक्षणं तद्योगिनी तल्लक्षणसमन्विता अप्यस्ति, अत एवोक्तोदाहरणे सङ्करत्वात् प्रहेलिकायाः 'सङ्कीर्णा' इति सञ्ज्ञा युज्यते । एवमेव=अनयैव रीत्या इतरासाम्=अन्यासामपि प्रहेलिकानां सङ्करक्रमः=

अन्योन्यं साङ्कर्यप्रकारः उन्नेयः=अवसेयः ग्रन्थबाहुल्यभिया दिङ्मात्रम्प्रादर्शीति भावः ॥१२४॥

इतीति--प्रहेलिकानां प्रकरणसमाप्तिरित्यर्थः । शब्दालङ्कारप्रकरणञ्च समाप्तम् ॥

—*—

चकार यो दीर्घतरां प्रहेलिकां संसारचक्रोपधिना महान् वशी ।
स सर्वशास्त्रार्थरसो निपीयते मयात्मनात्माऽत्मवतां वरेण्यः ॥

—*—

[ अथ दोषनिरूपणम् ]

**अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।**
**शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धिकम् ॥ १२५ ॥**
**देशकालकलालोकन्यायागमविरोधि च ।**
**इति दोषा दशैवैते वर्ज्याः काव्येषु सूरिभिः ॥ १२६ ॥**

इत्थं काव्यस्य उपादेयान् गुणानलङ्कारांश्च सविस्तरं निरूप्य दुष्प्रयुक्ताया: गोः प्रयोक्तुरेव गोत्वशंसनात् तदीयहेयानपि कांश्चिद् धर्मान् दोषाख्यान् [परैरपरैश्चानेकधा वर्णितानपि निरूपयितुकाम आचार्यः सम्प्रति शिष्यबुद्धिव्याकुलतापरिहाराय संक्षेपेणैव वर्णयितुमुपक्रमते—'अपार्थम्' इति । 'अपार्थम्, व्यर्थम्, एकार्थम्, ससंशयम्, अपक्रमम्, शब्दहीनम्, यतिभ्रष्टम्, भिन्नवृत्तम्, विसन्धिकम्, देश काल-कला-लोक-न्यायागमविरोधि, च' इति=एतादृशं वाक्यं दुष्टमित्यर्थः, 'इति' शब्दोऽत्र वाक्यपरिसमाप्तौ । 'अपार्थम्' इत्यादि नपुंसकनिर्देशात् 'वाक्यम्' इति विशेष्यपदस्य अध्याहारो बोध्यः । तेन 'अपार्थं [अपार्थदोषवत्] वाक्यं दुष्टम्, व्यर्थं वाक्यं दुष्टम्' इति रीत्या सर्वत्र योजनीयम् । अध्याहृतं 'वाक्य' पदं पदादीनामप्युपलक्षकं यथायथं बोध्यम् । एते=अपार्थादयः दोषाः=हेयत्वेन निर्दिष्टाः वाक्यापकर्षका धर्माः सूरिभिः=अलङ्कारशास्त्रस्वरूपविज्ञैः काव्येषु=कविकर्मभूतेषु निबन्धेषु वर्ज्याः= अवश्यं हातव्याः ।

यद्यपि श्रुतिकटुप्रभृतयोऽनेके दोषाः काव्यापकर्षका नवीनैः प्राचीनैश्च काव्यविज्ञैराचार्यैः तेषु तेषु निबन्धेषु वर्जनीयत्वेनोक्ताः तेऽप्यत्र वक्तव्याः, अन्यथा ग्रन्थन्यूनतापरिहारानुपपत्तेः तथापि शाब्दबोधविघटकत्वेनावश्यं परिहर्त्तव्यानामेव प्रयोक्तृगोत्वप्रकाशनत्वात् तेषामिहानभिधानं न ग्रन्थन्यूनतामावेदयति । अपि च श्रुतिकट्वादयो वैरस्यमात्राधायका नात्यन्तं वाक्यार्थबोधप्रतिकूलतावहा इत्येतैरेव शिष्यजिज्ञासाप्रशान्तेः एतज्ज्ञानेनैव च इतरेषामपि बुद्धिवैभवेन स्वयं ज्ञातुं सुगत्वात् ते इह नोक्ता इत्यपि न विस्मर्त्तव्यम् । एतेनैवाभिप्रायेण **वामनः** 'गुणविपर्ययात्मानो दोषाः' [अधि० २ सू० १] 'अर्थतस्तदवगमः' [अधि० २ सू० २] 'सौकुमार्याय प्रपञ्चः' [अधि० २ सू० ३] इति प्रपञ्चितवान् । इत्थमपार्थादीनां दशानामेवावश्यं परिहेयता दण्डिमतसिद्धा ।

यद्यपि सामान्यलक्षणपरिज्ञानोत्तरमेव विशेषदर्शनं न्याय्यम् तथापि 'दोषा' इति पदोक्त्या योगबलादेव तल्लक्षणमप्युक्तं भवति । तथाहि—'दुष' वैकृत्ये इत्यस्माद्धातोः 'अकर्त्तरि च कारके सञ्ज्ञायां घञ्' [३।३।१९] इति सूत्रेण करणे घञि कृते 'दुष्यति विकृतं भवति काव्यमनेन इति **दोषः**, इति व्युत्पत्त्या 'काव्यविघटकत्वं दोष-

त्वम्' इति दोषसामान्यलक्षणमुक्तं भवति। विघटकत्वञ्च—उपादेयगुणादिधर्माभिमतप्रतीतिव्यवधायकत्वेन ज्ञेयम् ॥ १२५, १२६ ॥[1]

[ प्रतिज्ञाहान्यादीनां दोषत्वाभावकथनम् ]

**प्रतिज्ञाहेतुदृष्टान्तहानिर्दोषो न वेत्यसौ।**
**विचारः कर्कशः प्रायस्तेनालीढेन किं फलम् ॥ १२७ ॥**

ननु—'दशैवेति' अवधारणमयुक्तमाभाति प्रतिज्ञाहान्यादीनामपि महर्षिगोतमप्रतिपादितानां न्यायशास्त्रप्रसिद्धानां विवक्षितार्थप्रतिबन्धकत्वेन दोषत्वाभिधानात्, 'प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टञ्च नेष्यते' इत्यादि भामहोक्तेश्च तेषां दोषत्वाभावः, तत्र किं युक्तमयुक्तं वेति संशयापाकरणाय स्वसिद्धान्तमाविष्करोति—'प्रतिज्ञा'० इति। प्रतिज्ञाहेतुदृष्टान्तहानिः=प्रतिज्ञा च हेतुश्च दृष्टान्तश्च ते, तेषां हानिः हतिर्विरोध इति यावत्, दोषः नवा इति असौ विचारः=विवेकः अन्यतरपक्षावधारणमिति यावत्, प्रायः=बाहुल्येन कर्कशः=कठोरः न्यायशास्त्रीयप्रक्रियासम्बन्धित्वात् प्रकृते प्रयोजनशून्य इत्यर्थः। अतः तेन आलीढेन=आस्वादितेन ज्ञातेन तेन विचारेण किम् फलम्=न किञ्चिदपि फलमस्तीति भावः।

अयमाशयः—[तत्र] साध्यनिर्देशः प्रतिज्ञा, प्रतिज्ञायाः हानिः प्रतिज्ञाहानिः सा च प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा यथा— शब्दोऽनित्यः प्रत्यक्षगुणत्वात्, इत्यत्र 'सोऽयं गकारः' इत्यादिप्रत्यभिज्ञाबलात् परेण बाधे उद्भाविते 'अस्तु तर्हि नित्यः शब्दः' इति नित्यत्वमङ्गीकुर्वन् वादी शब्दस्यानित्यत्वप्रतिज्ञां जहाति इत्येवमादि गोतमतन्त्रे सविस्तरं प्रपञ्चितम्। तदाद्या निग्रहस्थाननाम्ना दोषाः, तत्र—'भोजराजो'ऽपि कांश्चिद् अलङ्कारशास्त्रे दोषत्वेन निरूपितवान्। यथा—

यावज्जीवमहं मौनी ब्रह्मचारी पिता मम।
माता च मम बन्ध्यासीदपुत्रश्च पितामहः ॥ इति।

तेषामत्र प्रपञ्चो नातीवोपयुक्त इति ते मयोपेक्षिता इत्याशयः ॥ १२७ ॥

---

१ जयदेवस्तु—

स्याच्चेतोविशता येन सक्षता रमणीयता।
शब्देऽर्थे च कृतोन्मेषं दोषमुद्घोषयन्ति तम् ॥ इति—

दोषसामान्यलक्षणमुक्तवान्। 'द्रागर्थरसाद्यन्यतरधीप्रतिबन्धकत्वं तदवच्छेदकतया सिद्धो जातिविशेषो वा दोषत्वम्' निष्कर्षः।

श्लेषप्रसादसमतादिगुणानां रसार्थावबोधजनकतया सिद्धीनामभावकूटो दोषः, ननु जात्यन्तरम्। यथा—श्रुतिकटुत्वं सौकुमार्याभावः कान्तेर भावो ग्राम्यादिरित्याद्याह 'सरस्वतीकण्ठाभरणकारः। तदुक्तं वामनेन—

यो हेतुः काव्यशोभायाः सोऽलङ्कारो निगद्यते।
गुणोऽपि तादृशो ज्ञेयो दोषः स्यात्तद्विपर्ययः ॥ इति।

एवञ्च 'काव्यशोभाहेतुगुणाभावत्वमेव दोषत्वमिति' तेषां मतम्। काव्यप्रकाशादौ तु विनिगमकाभावादर्थरसावबोधजनकत्वं गुणत्वं तत्प्रतिबन्धकत्वञ्च दोषत्वमित्युक्तं भवति ॥

[ अपार्थस्य सापवादं लक्षणम् ]

**समुदायार्थशून्यं यत् तदपार्थमितीष्यते ।**
**उन्मत्तमत्तबालानामुक्तेरन्यत्र दुष्यति ॥ १२८ ॥**

उद्देशानुसारं दोषभेदान् निरूपन् क्रमप्राप्तमपार्थं लक्षयति—'समुदायार्थशून्यम्' इति । समुदायस्य वाक्यघटकपदसमूहस्य महावाक्यघटकवाक्यसमुदायस्य वा योऽर्थः वाक्यार्थबोधेनैकभावमापन्नः प्रतिपाद्यो विषयः तेन शून्यं यत्=वाक्यम् तत् 'अपार्थम् इति' अपार्थाख्यदोषवत् इष्यते=कथ्यते । यत्र—पदार्थस्य वाक्यार्थस्य वा आकाङ्क्षायोग्यतासत्यभावेन विशेष्यविशेषणतयाऽन्वयो बाधितो भवति तत्र तत्र अपार्थो नाम दोषः, तादृशदोषवत् पदं वाक्यं वा अपार्थमिति निर्गलितोऽर्थः । अस्यापवादस्थलमाह—'उन्मत्त०' इति। उन्मत्तमत्तबालानाम्=उन्मत्ताः उन्मादादिरोगवशात्, मत्ताः सुरापानादिना विकृतिं गताः, बालाः शिशवः, तेषाम् उक्तेः=वचनात् अन्यत्र=इतरत्र उन्मत्तादिभिन्नजनानामुक्तौ 'दुष्यति' दोषवद् भवति । उन्मत्तादीनां वाक्यादुक्तौ अपार्थो नैव दोष इति भावः ॥ १२८ ॥

[ अपार्थस्योदाहरणम् ]

**समुद्रः पीयते देवैरहमस्मि जरातुरः ।**
**अमी गर्जन्ति जीमूता हरेरैरावणः प्रियः ॥ १२९ ॥**

आदौ बहुवाक्यघटितमपार्थं दोषमाह—'समुद्र' इति । देवैः=सुरैः मेघः समुद्रः=सागरः पीयते=आस्वाद्यते अहं जरातुरः=जराजीर्णगात्रः अस्मि=भवामि अमी जीमूताः=बलाहका गर्जन्ति=गर्जानां कुर्वते [नदन्ति] हरेः=इन्द्रस्य ऐरावणः=ऐरावतः प्रियः=हृद्यः इत्यर्थः।

अत्र—स्वार्थबोधं विश्रान्तानामपि चतुर्णां वाक्यानां परस्परमाकाङ्क्षाद्यभावेन अङ्गाङ्गित्वाभावः, तेन च एकवाक्यताविरहात् समुदितोऽर्थो नास्तीति अपार्थदोषवदिदं वाक्यमपार्थम् । उक्तञ्च 'भट्टपादैः'—

स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥ इति ॥

एवञ्चायं वाक्यार्थगतो दोषः । बहुपदगतं यथा—अग्निना सिञ्चति । रामः कृष्णः गौः अश्वः गर्धभः उष्ट्रो हस्तीति ॥ १२९ ॥

**इदमस्वस्थचित्तानामभिधानमनिन्दितम् ।**
**इतरत्र कविः को वा प्रयुञ्जीतैवमादिकम् ॥ १३० ॥**

उक्तमपार्थस्वरूपमुपपादयति—'इदम्' इति । अस्वस्थचित्तानाम्=उन्मादादिरोगवताम् इदम्=पूर्वोक्तम् अभिधानम्='समुद्रः पीयते' इत्यादि वाक्यम् 'अनिन्दिम्' निन्दितं [दुष्टं] न भवतीत्यर्थः वाक्यप्रयोक्तुरवधानरहितत्वात् इतरत्र=अस्वस्थचित्तादिभ्योऽन्यत्र 'कः कविः' वा=निश्चयेन एवम् आदिकम्=दर्शितदोषयुक्तं वाक्यं प्रयुञ्जीत=व्यवहरेत्, स्वस्थः कोऽपि कविर्नैतादृशं दुष्टं वाक्यं प्रयुङ्क्ते इत्यर्थः ॥ १३० ॥

[ व्यर्थस्य लक्षणम् ]

**एकवाक्ये प्रबन्धे वा पूर्वापरपराहतम् ।**
**विरुद्धार्थतया व्यर्थमिति दोषेषु पठ्यते ॥ १३१ ॥**

व्यर्थं लक्षयति—'एकवाक्ये' इति। एकवाक्ये=एकस्मिन् वाक्ये वा=अथवा प्रबन्धे=वाक्यसमुदायात्मके ग्रन्थे यत् वाक्यम् पूर्वापरपराहतम्=पूर्वोत्तरसङ्गतिविकलं विरुद्धार्थतया=विरुद्धश्चासावर्थश्च विरुद्धार्थः तस्य भावः तत्ता तया अर्थविरोधेन हेतुनेत्यर्थः, दोषेषु=अपार्थादिदोषेषु मध्ये व्यर्थम्=व्यर्थदोषवत् पठ्यते=गण्यते इत्यत्र तात्पर्यम् ।

प्रबन्धगतशब्दार्थयोः परस्परं विरोधात् शाब्दबोधानुपपत्तिरेवास्य दोषतायां बीजम् (अत एव) व्यर्थे वाक्यार्थबोधोत्तरं पर्यालोचनया अर्थविरोधप्रतीतिः, अपार्थे तु आकांक्षादिविरहेण वाक्यार्थबोध एव न भवतीत्यनयोर्विशेषः । विरुद्धमतिकारित्वप्रकाशितविरुद्धग्वामतपरार्थत्वादीनाम्परैः स्वीकृतानामप्यत्रैवान्तर्भावः प्रयोक्तुरत्यन्ताज्ञत्वप्रकाशकत्वसाम्यात् ॥१३१॥[1]

[ व्यर्थस्योदाहरणम् ]

**जहि शत्रुबलं कृत्स्नं जय विश्वम्भरामिमाम् ।**
**तव नैकोऽपि विद्वेष्टा सर्वभूतानुकम्पिनः ॥ १३२ ॥**

[प्रबन्ध]वाक्यगतं व्यर्थमुदाहरति—'जहि' इति । कृत्स्नम्=समग्रम् शत्रुबलम्=शत्रुसैन्यम् अथवा सम्पूर्णं शत्रूणां सामर्थ्यं जनधनादिहेतुकम् जहि=नाशय । इमाम् विश्वम्भराम्=पृथ्वीम् जय=वशीकुरु । सर्वभूतानुकम्पिनः=सर्वेषां प्राणिनामुपरि दयादृष्टिशालिनः तव एकः अपि विद्वेष्टा=विशेषेण द्वेषकृत् सपत्नः न=नास्ति इति ऋजुरर्थः ।

अत्र शत्रुमात्ररहितस्य समग्रशत्रुबलक्षयकरणम्, सर्वभूतानुकम्पिनः लोकमात्रजयश्च पूर्वोत्तरसन्दर्भपर्यालोचनया विरुद्धोऽवभासते । प्रबन्धगतेन वाक्यगतं व्याख्यातम् ॥ १३२ ॥

[ व्यर्थदोषस्य क्वचिद् गुणत्वम् ]

**अस्ति काचिदवस्था सा साभिषङ्गस्य चेतसः ।**
**यस्यां भवेदभिमता विरुद्धार्थाऽपि भारती ॥ १३३ ॥**

व्यर्थदोषस्य कदाचित् [वक्तृविशेषोक्तौ] गुणभावं दर्शयति—'अस्ति' इति । साभिषङ्गस्य=विरहादिना तिरस्कारोऽभिषङ्गः तेन सह वर्त्तमानः साभिषङ्गः तस्य वियोगाद्यभिभूतस्य चेतसः=हृदयस्य सा काचित्=वक्तुमशक्या हिताऽहितादिविवेकाक्षमा अवस्था=दशा अस्ति=विद्यते । यस्याम्=दशायाम् विरुद्धार्था=अर्थसङ्गतिशून्या 'अपि' भारती=कविवाक् अभिमता=इष्टा निर्दुष्टतयाभिलषिता भवेत्=स्यात्, श्रोतॄणाम् इति शेषः । 'अभिमता' इत्युक्त्या न केवलस्य क्वचिद्दोषाभावः अपि तु गुणत्वमपीति प्रत्यायितम् ॥ १३३ ॥

**परदाराभिलाषो मे कथमार्यस्य युज्यते ।**
**पिबामि तरलं तस्याः कदा नु दशनच्छदम् ॥ १३४ ॥**

उक्तमर्थमुदाहरणेन स्पष्टीकरोति—'परदारे'ति । मे=मम आर्यस्य=सदाचारिणः परदाराभिलाषः=परकीयनारीषु रतिः कथम्=केन प्रकारेण युज्यते न=कथमपि युज्यत इति भावः । तस्याः=परदाराणाम् [परकीयायाः स्त्रियः] तरलम्=व्रीडावशात् त्रासोत्पन्नसम्भ्रमाद्वा कम्पमानम् दशनच्छदम्=अधरम् कदा=कस्मिन् काले नु=निश्चितम् पिबामि=आस्वादये [चुम्बये]।

अत्र—आर्यत्वाभिमानवतः पुरुषस्य परदाराभिलाषो न युक्तः अतः तादृशीमयुक्ततां

१ एतेषां प्रपञ्चः 'काव्यप्रकाशादिषु' 'मत्प्रणीतप्रभाया'ञ्च द्रष्टव्यः। ग्रन्थगौरवभयान्नात्र कृतः।

प्रतिपादयत एव प्रयोक्तुर्यत् परकीयाधरपानौत्सुक्यमुत्तरार्धे ग्रथितं तद्व्यर्थमेव, यतः पूर्वार्धे व्यङ्ग्यः शान्तभावः, उत्तरार्धे शृङ्गारस्य व्यभिचारी औत्सुक्यं नाम तयोर्द्वयोः विरोधः, परमनेन वाक्यप्रयोक्तुर्वियोगाभिभूतत्वं व्यक्तीकृतमिति तस्य शृङ्गारपोषकतया चमत्कारविशेषावहत्वेन गुणत्वमेव ॥ १३४ ॥

[ अथ-एकार्थस्य लक्षणम् ]

**अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते ।**
**अर्थतः शब्दतो वापि तदेकार्थं मतं यथा ॥ १३५ ॥**

एकार्थं लक्षयति—'अविशेषेण' इति । [पूर्वोक्तमिति सामान्ये नपुंसकम् अर्थतः शब्दत इति प्रथमार्थे तसिलन्तम् 'यत्र' इति पदस्य अध्याहारः] यदि यत्र पूर्वोक्तम्, अर्थतः शब्दतः वा अपि=यस्मिन् वाक्ये पूर्वोक्तः शब्दोऽर्थो वा अविशेषेण=समानरूपेण [एकरूपेण] भूयः अपि कीर्त्यते=पुनरपि उच्चार्यते उपनिबद्ध्यते वा, तत् एकार्थम् मतम्=तद्वाक्यम् एकार्थदोषोपेतं ज्ञातम् । इत्थमयं शब्दगतः अर्थगतश्च द्विविधो दोषः । ततः—'एकार्थकशब्दस्य अर्थस्य यत् पुनरुक्तत्वं तदेकार्थत्व'मिति सामान्यलक्षणं फलितम् । तेन पुनरुक्ताख्योऽर्थदोषः कथितपदत्वञ्च शब्दगतो दोषोऽन्यैरुक्तोऽत्रैव सङ्गृहीतः । यत्र तु—विशेषविवक्षायै उक्तस्य पुनरुक्तिः तत्र न दोषः एतच्चानुपदं स्फुटीभविष्यति । 'यथा' इति वक्ष्यमाणोदाहरणाभिप्रायेणोक्तम् ॥ १३५ ॥

[ एकार्थस्योदाहरणम् ]

**उत्कामुन्मनयन्त्येते बालां तदलकत्विषः ।**
**अम्भोधरास्तडित्वन्तो गम्भीराः स्तनयित्नवः ॥ १३६ ॥**

अर्थगतमेकार्थमुदाहरति—'उत्काम्' इति । तदलकत्विषः=[ 'तत्' पदेन बालायाः परामर्शः] तस्याः बालायाः अलकानां केशानां त्विट् [ कान्तिः ] इव त्विट् येषां ते तादृशाः स्तनयित्नवः=स्तनन-[गर्जन]-कारिणः तडित्वन्तः=सविद्युताः गम्भीराः=जलपूरिततया घनतराः एते अम्भोधराः=मेघाः उत्काम्=उत्कण्ठिताम् बालाम्=उद्बुद्धयौवनाम् उन्मनयन्ति=उत्कण्ठयन्ति । अत्र—उत्कोन्मनःशब्दौ अम्भोधरतडित्वत्स्तनयित्नुशब्दाश्च स्वरूपेण भिन्ना अपि एकार्थपर्यायतया एकस्मिन्नेव अर्थे शक्ताः, अतः उक्तस्यैवार्थस्य पुनरुक्तिकरणात् अर्थगतोऽयमेकार्थो नाम दोषः, तादृशदोषवदिदं वाक्यं दुष्टम् । शब्दगतमेव कथितपदम् अर्थ-

---

१ यथा वा काव्यप्रकाशादौ—

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा,
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा,
चेतः ! स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥

अत्र—शान्तरसस्याङ्गभूतानां वितर्कमतिशङ्काधृतीनां विप्रलम्भस्याङ्गैः औत्सुक्यस्मृतिदैन्यचिन्ताभिः सह विरोधः, सच प्रयोक्तुर्विरहातुरत्वाभिव्यञ्जनात् शृङ्गारं प्रकर्षयन् गुणः संवृत्तः । उक्तञ्च—'सञ्चार्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः' इति ।

गतमेव पुनरुक्तमिति नव्यकल्पना 'प्रकाशादौ' द्रष्टव्या। दुष्टिर्बीजन्तु श्रोतुर्वैरस्याधायकत्वम। यदि चेयं नायिका विरहोत्कण्ठिता तदा नायमत्र दोषः ॥ १३६ ॥[1]

[ एकार्थस्यापवादः ]

**अनुकम्पाद्यतिशयो यदि कश्चिद् विवक्ष्यते।**
**न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया ॥ १३७ ॥**

लक्षणवाक्ये 'अविशेषेण' इत्युक्तम्, तस्य फलं दर्शयन् एकार्थस्यापवादमाह—'अनुकम्पा०' इति। यदि कश्चित् अनुकम्पाद्यतिशयः=अनुकम्पादीनामतिशयैः अर्थात् प्रस्तुतस्य अनुकम्पनीयत्वादिविशेषः विवक्ष्यते=वक्तुमिष्यते तदा पुनरुक्तः अपि=द्विविधोऽप्येकार्थः, न दोषः, प्रत्युत इयम्=पुनरुक्तिः अलङ्क्रिया=काव्यशोभाकरत्वाद् अलङ्कार एव भवतीत्यर्थः। एवं यत्र रसेनाक्षिप्तचेताः वक्ता वक्ति तदुक्तावपि एकार्थदोषाभावः। तथाचोक्तं 'भोजराजेन'—

असारं संसारं परिमुषितरत्नं त्रिभुवनं निरालोकं लोकं मरणशरणं बान्धवजनम्।
अदर्पं कन्दर्पं जननयननिर्माणमफलं जगज्जीर्णारण्यं कथमपि विधातुं व्यवसितः॥

अत्र—'असारं संसारम्' इत्यभिधाय पुनः त्रिभुवनस्य परिमुषितरत्नत्वादिकथनं विशेषाप्रतिपादकत्वेऽपि शान्तरसाक्षिप्ततया गुणत्वम्। एवमाद्यन्यदपि बोध्यम् ॥ १३७ ॥

[ एकार्थस्य गुणस्थलम् ]

**हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा।**
**हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥ १३८ ॥**

अनुकम्पायामेकार्थदोषाभावं [गुणत्वम्] दर्शयति—'हन्यते' इति। सा वरारोहा=वरवर्णिनी अकाण्डवैरिणा=निर्निमित्तशत्रुणा स्मरेण=मदनेन हन्यते=पीड्यते, सा चारुसर्वाङ्गी=चारूणि सुन्दराणि वृत्तानुपूर्वाणि सर्वाणि अङ्गानि यस्याः सा तादृशी 'हन्यते', सा मञ्जुभाषिणी=मधुरालापिनी 'हन्यते'।

अत्र—'हन्यते' इति क्रियापदं पुनः पुनरुक्तमपि प्रकृतायाः अनुकम्पनीयतां ख्यापयतीति वैचित्र्याधायकतया न दोषः। एवम्—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च। सम्पत्तौ च विपत्तौ च महतामेकरूपता॥

इत्यादौ विधेयानुवादादिस्थलेऽपि[2] दोषाभावो बोध्यः ॥ १३८ ॥

[ ससंशयस्य लक्षणम् ]

**निर्णयार्थं प्रयुक्तानि संशयं जनयन्ति चेत्।**
**वचांसि दोष एवासौ ससंशय इति स्मृतः ॥ १३९ ॥**

ससंशयं लक्षयति—'निर्णयार्थम्' इति। निर्णयार्थम्=बोद्धव्यस्य [श्रोतुः] प्रवृत्तिनिवृत्त्योरेकतरनिश्चयार्थम् प्रयुक्तानि=व्यवहृतानि वचांसि=पदानि चेत्=यदि संशयम्=एक-

---

१ कथितं यथा—'श्यामाब्जश्यामलोचना'। अत्र–श्यामाब्जवत् श्यामे लोचने यस्या इति 'श्यामा' पदं पुनरुक्तम्। [चन्द्रालोके]

२ 'आदि' पदेन विहितानुवादादीनां परिग्रहः। तस्य विवरणं साहित्यदर्पणे 'विश्वनाथेन' कृतम्।

स्मिन् धर्मिणि भावाभावावगाहि ज्ञानम् जनयन्ति=उत्पादयन्ति तदा असौ एव दोषः ससंशय इति [नाम्ना] स्मृतः=उक्तः तादृशदोषवद् वाक्यं ससंशयमित्यर्थः । अयमपि द्विविधः-शब्दगतोऽर्थगतश्च । यस्मिन् वाक्ये संशयोत्पत्त्युत्तरमन्वयबोधो बाध्यते तत्र शब्दगतः । यत्र त्वर्थप्रतीत्युत्तरकालेऽनिश्चयः तत्र अर्थगतः ॥ १३९ ॥

[ शब्दगतस्य ससंशयस्योदाहरणम् ]

**मनोरथप्रियालोकरसलोलेक्षणे ! सखि ! ।**
**आराद्वृत्तिरसौ माता न क्षमा द्रष्टुमीदृशम् ॥ १४० ॥**

शब्दगतं ससंशयमुदाहरति—'मनोरथ०' इति । [ सकामं जारमीक्षमाणां तन्मातृरहस्यभेदभिया त्रस्ताम्प्रति तदीयवयस्याया उक्तिरियम् ] मनोरथस्य अभिलाषितस्य प्रियः वल्लभः मनोरथप्रियः जारः उपपतिरिति यावत् तस्य आलोके दर्शने यो रसः प्रीतिविशेषः तेन लोले चपले ईक्षणे नयने यस्याः तत्संबोधनं हे मनोरथप्रियालोकरसलोलेक्षणे ! सखि != आलि ! 'असौ' [तव] माता=जननी आराद्वृत्तिः=आरात् दूरे वृत्तिः वर्त्तनं स्थितिर्यस्याः सा तादृशी ईदृशम्=त्वदीयवल्लभदर्शनात्मकं कर्म द्रष्टुम्=ज्ञातुम् न क्षमा=न समर्था, यतः सा व्यवहिता तस्मात् तवेमां चेष्टां न ज्ञास्यतीति सानुरागं तमवलोकयेति भावः ।

अत्र—'आराद् दूरसमीपयोः' इति [अमर]कोषाद्यप्रामाण्यात् 'आराद्वृत्ति' रित्यस्य दूरवर्त्तिनी ते माता तेन त्वमीदृशे कर्मणि प्रवर्त्तस्व अथवा समीपवर्त्तिनी सेति ततस्त्वं निवर्त्तस्व इति प्रवृत्तिनिवृत्त्योरेकतरनिश्चयाभावात् सन्देह एव वाक्यार्थस्य पर्यवसानम्, तेनात्र ससंशयो दोषः । स च उभयार्थकशब्दप्रयोगहेतुकत्वात् शब्दगतः । अर्थगतो यथा—'काव्यप्रकाशे'—

मात्सर्यमुत्सार्य विचार्यकार्यमार्याः ! समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ इति ॥

अत्र प्रकरणादेर्निश्चयाभावात् किं शान्तो वक्ता शृङ्गारी वेति न निश्चयः, तेन संशयः ।

[ससंशयस्य गुणभावः]

**ईदृशं संशयायैव यदि वा तु प्रयुज्यते ।**
**स्यादलङ्कार एवासौ न दोषस्तत्र तद् यथा ॥ १४१ ॥**

अयं क्वचिद् गुणोऽपि भवति—'ईदृशम्' इति । यदि वा तु=यदि च ईदृशम् संशयाय एव प्रयुज्यते=ईदृशं वाक्यं संशयमुद्दिश्यैव उच्यते तदा असौ=संशयः अलङ्कार एव स्यात्=काव्यशोभाधायकतया अलङ्कारभावं भजते इत्यर्थः । तत्र=तादृशि वाक्ये 'दोषः न' 'तत् यथा' अग्रे उदाहरणेन अनुपदं निरूपयामः ॥ १४१ ॥

**पश्याम्यनङ्गजातङ्कलङ्घितां तामनिन्दिताम् ।**
**कालेनैव कठोरेण ग्रस्तां किं नस्त्वदाशया ॥ १४२ ॥**

उक्तदोषस्यापवादस्थलमाह—'पश्यामि' इति । [कश्चन नायकम्प्रति काचित् दूती आह] अनङ्गजातङ्कलंघिताम्=अनङ्गात् कामात् जायते इति अनङ्गजः स चासौ आतङ्को व्याधिः तेन लंघिताम् आक्रान्ताम् विरहव्यथाकुलामित्यर्थः, अनिन्दिताम्=सर्वावयवसुन्दरीम् कठोरेण=क्रूरेण कालेन=मृत्युना ग्रस्ताम्=व्याप्ताम् इव पश्यामि=आलोचये त्वदाशया=त्वं सङ्गतो

भविष्यसीति तव प्रत्याशया नः=अस्माकम् किम्=किं प्रयोजनम्। त्वामनासाद्य साद्य मान्मथज्वरातुरा आसन्नमृत्युर्वर्त्तते, अतस्तवाशा सम्प्रत्यस्माकं निष्फला इत्यर्थः।

अथवा—न अङ्गजातङ्कलंघिता=शारीरिकपीडाक्रान्ता इति अनङ्गजातङ्कलंघिता ताम् कठोरेण=तीव्रेण कालेन=ग्रीष्मसमये नेत्यर्थः, ग्रस्तां पश्यामि त्वदाशया नः किम्? तस्याः काचन शारीरिकी व्यथा न वर्त्तते केवलं त्वामनासाद्य चिन्तया जागरणपरा ग्रीष्मतापेन व्याकुलीक्रियते इत्ययमर्थ इति संशयः एव, परमत्र दूत्या विवक्षा वर्त्तते इति स गुणतां गतः॥१४२॥

**कामार्त्ता घर्मतप्ता वेत्यनिश्चयकरं वचः।**
**युवानमाकुलीकर्त्तुमिति दूत्याह नर्मणा॥ १४३॥**

उक्तोदाहरणे अस्य गुणत्वं प्रतिपादयति—'कामार्त्ता' इति। 'दूती' युवानम्=तरुणम् आकुलीकर्त्तुम्=व्यामोहयितुम् नायकान्तिकगमनाय सोत्कण्ठं विधातुम् कामार्त्ता=मदनविह्वला घर्मतप्ता=ग्रीष्मतप्ता वा इति अनिश्चयकरम् वचः=सन्दिग्धं वाक्यम् नर्मणा=भङ्गिविशेषेण आह=आख्यातवती उभयविधार्थस्य निर्णयायाशक्तो नायिकः व्याकुलीभूतः शीघ्रमेव तत्समीपं यास्यतीति दूत्या सन्दिग्धमप्युक्तं वचो गुणवदेव सम्पन्नं नतु दोषः, तस्मादत्र संशयालङ्कार इत्यर्थः॥ १४३॥

[ अपक्रमस्य लक्षणम् ]

**उद्देशानुगुणोऽर्थानामनूद्देशो न चेत् कृतः।**
**अपक्रमाभिधानं तं दोषमाचक्षते बुधाः॥ १४४॥**

अपक्रमस्य लक्षणमाचष्टे—'उद्देशा०' इति। अर्थानाम्=प्रतिपाद्यानां विषयाणाम् उद्देशानुगुणः=आद्यो न्यासः उद्देशः, उद्देशस्य अनुगुणः योग्य इति उद्देशानुगुणः प्रथमोपन्यासानुरूपः इत्यर्थः [यः] अनूद्देशः=पश्चात् न्यासः [सः] चेत्=यदि न कृतः=नावतारितः [तदा] बुधाः=अलङ्कारशास्त्रविदः 'तम्' दोषम् अपक्रमाभिधानम्='अपक्रम' नामानं आचक्षते=भणन्ति।

अयमाशयः—'क्रमवतां क्रमवद्भिरेवान्वय' इति सिद्धान्तः स चेन्न कृतः तदा अपक्रमो दोषः। वाक्यार्थबोधमान्द्यमेवात्र दुष्टिबीजम्, तस्मादयं दोषोऽत्यन्तं परिहार्यः। यद्यपि नवीनैः स्वीकृतयोः शब्दार्थयोरक्रमत्वदुष्क्रमत्वयोरत्रैवान्तर्भावः शक्यः कर्त्तुम् तथापि न तयोरत्यन्तं परिहार्यता वाक्यार्थबोधस्याऽविघटनात्। तथाहि—

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया पिनाकिना।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी॥

अत्र—द्वयमिति परामृष्यमाणं वाक्यम् 'त्वम्' इत्यस्यानन्तरं चकारो युक्तः। किं वा - 'देहि मे वाजिनं राजन्! गजेन्द्रं वा मदालसम्' इत्यत्र दुष्क्रमत्वं दोषः, यतः उत्कृष्टमेव वस्तु प्रथमं याच्यते तदलाभे तु निकृष्टं याच्यं भवति, परमत्र गजेन्द्रान्न्यूनस्य वाजिनः प्रथमं याचनीयत्वमुपन्यस्तमिति क्रमस्य दुष्टत्वात् दुष्क्रमता, तथाप्यत्र वाक्यार्थबोधस्य बाधो न भवतीत्यस्य नात्यन्तं परिहार्यता॥ १४४॥

[ अपक्रमस्योदाहरणम् ]

**स्थितिनिर्माणसंहारहेतवो जगताममी ।**
**शम्भुनारायणाम्भोजयोनयः पालयन्तु वः ॥ १४५ ॥**

अपक्रममुदाहरति—'अमी' जगताम्=चराचरप्रपञ्चस्येत्यर्थः, स्थितिनिर्माणसंहार-हेतवः=स्थितिः पालना, निर्माणं रचना, संहारः विनाशना, तेषां द्वन्द्वः, तेषां हेतवः कारणभूताः, शम्भुनारायणाम्भोजयोनयः=शम्भुः शिवः, नारायणो विष्णुः, अम्भोजयोनिः ब्रह्मा ते वः=युष्मान् पालयन्तु=अवन्तु ।

अत्र—आदौ उद्दिष्टाः स्थितिनिर्माणसंहाराः, तेषां क्रमिकान्वये युक्ते नारायणाम्भोजयोनिसम्भव इत्येव अनूद्देष्टव्यं स्यात् नच तथा कृतमिति क्रमलंघनेन शाब्दबोधस्य विघटितत्वात् अपक्रमो दोषः ॥ १४५ ॥

[ अपक्रमस्य दोषताभावः ]

**यत्नः सम्बन्धविज्ञानहेतुकोऽपि कृतो यदि ।**
**क्रमलङ्घनमप्याहुः सूरयो नैव दूषणम् ॥ १४६ ॥**

अपक्रमस्यादोषत्वं क्वचित् इत्याह—'यतः' इति । यदि=चेत् सम्बन्धविज्ञानहेतुकः= सम्बन्धः अन्वयः तस्य विज्ञानम् विशेषावगतिः तत् सम्बन्धविज्ञानम् तत् हेतुर्यस्य स तादृशः यत्नः=प्रयासविशेषो रचनायाम् 'अपि' कृतः विहितः तदा सूरयः=साहित्यनयनिपुणमतयः क्रमलंघनम् अपि दूषणं न एव आहुः अर्थात् उभयोर्मध्ये एकतरान्वयिनि पदार्थे अक्रमिकस्यापि अन्वयबोधे सयत्ने उक्तदोषाभावो नतु गुणत्वम् शोभाविशेषानाधायकत्वात् ॥ १४६ ॥

**बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिषु ।**
**आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः ॥ १४७ ॥**

एतदुदाहरणेन स्पष्टीकरोति—'बन्धुत्याग' इति । बन्धुत्यागः=स्वजनपरित्यागः तनुत्यागः=शरीरत्यागः (तथा) देशत्यागः=स्वाभिजनत्यागः, इति त्रिषु=एषु त्रिषु त्यागेषु आद्यन्तौ= बन्धुत्यागदेशत्यागौ आयतक्लेशौ=आयतः दीर्घकालपर्यन्तः क्लेशः दुःखं याभ्यां तौ तादृशौ दैर्घकालिकदुःखप्रदौ स्त इति शेषः, मध्यमः=तनुत्यागः क्षणिकज्वरः=अत्यल्पकालपर्यन्तसन्तापदः तस्मात् कामं तनुत्यागो भवतु नाम नतु बन्धुत्यागदेशत्यागौ स्यातामिति भावः।

अत्र—तनुत्यागापेक्षया बन्धुत्यागदेशत्यागयोर्गौरवं बुबोधयिषितमिति हेतोः निर्दिष्टत्यागानां क्रममुल्लङ्घ्यापि 'आयतक्लेशौ' इत्यनेन आद्यन्तयोरन्वयः कृतः इति क्रमलङ्घनं नैव दोषावहम् ॥ १४७ ॥

[ शब्दहीनस्य लक्षणम् ]

**शब्दहीनमनालक्ष्यलक्ष्यलक्षणपद्धतिः ।**
**पदप्रयोगोऽशिष्टेष्टः शिष्टेष्टस्तु न दुष्यति ॥ १४८ ॥**

शब्दहीनं लक्षणयति—'शब्दहीनम्' इति । अनालक्ष्यलक्ष्यलक्षणपद्धतिः=न आलक्ष्या अनालक्ष्या अज्ञेया लक्ष्यस्य सजातीयोदाहरणान्तरस्य लक्षणस्य अनुशासनस्य सूत्रकोषधातुपाठादेः [नियामकस्य] पद्धतिः मार्गः पदप्रयोगरूपा सरणिः यस्य स तादृशः

अशिष्टेष्टः=शिष्टेतरैरज्ञैः प्रयुक्तः अर्थात् अज्ञानसमुत्थः पदप्रयोगः=पदानाम्, पदयोः, पदस्य वा प्रयोगो व्यवहार उच्चारणादिरूपः शब्दहीनम्=शब्दो हीनोऽपकृष्टो यत्र योगबलसिद्धं तादृश-दोषवद् वाक्यादि 'शब्दहीनम्' भवति । अत्रैव परैरुक्तानां असाधुत्वाप्रयुक्तत्वासमर्थत्वाभिधानां दोषाणां सङ्ग्रहः । किं वा—अशिष्टेष्टः=अनुशासनसिद्धोऽपि शिष्टैर्यदि नेष्टः तदापि तादृश-पदप्रयोगो दोषायैव । यथा—'दैवतानि पुंसि वा' इति कोशे सत्यपि पुंल्लिङ्गो दैवतशब्द-प्रयोगो दुष्टः । एवमेव 'हन्' हिंसागत्योरिति गमनार्थेऽपि 'हन्' धातुः शिष्टः 'हन्ति कुञ्जं कृशोदरी' इत्यादिषु दुष्ट एव शिष्टैरप्रयुक्तत्वात् । इत्थमनुशासनसिद्धं तद्विरुद्धं वा शिष्टेष्टं चेन्न दोषाय, तद्विपरीतन्तु दोषायैवेति सारः । अस्यापवादस्थलमाह—'शिष्टेष्टः तु' इति । अनु-शासनादिविरुद्धोऽपि शिष्टैः कविभिश्चेत् इष्टः प्रयुक्तः तदा न दुष्यति=दोषतामावहतीत्यर्थः । यथा 'वलति' इत्यादिप्रयोगेषु अनुशासनबलाद् आत्मनेपदम् परन्तु—'चेतः परं वलति शैलवनस्थलीषु' इत्यादावनुशासनविरुद्धमपि परस्मैपदप्रयोगं कुर्वाणः कविर्नापराधभाग्भवति। पद्धत्यादिशब्देषु गत्यर्थे 'हन्' धातोः प्रयोगः शिष्टेष्टत्वात् न दुष्टः । वेदे तु साक्षात् हन्तिर्ग-त्यर्थः 'आहन्ति गभे पसो०' (यजु० अ० २३ कं० २२) इत्यादिषु ॥ १४८ ॥

[ शब्दहीनस्योदाहरणम् ]

**अवते भवते बाहुर्महीमर्णवशक्करीम् ।**
**महाराजन्नजिज्ञासा नास्तीत्यासां गिरां रसः ॥ १४९ ॥**

शब्दहीनमुदाहरति—'अवते' इति । हे ! महाराजन् ! भवते=भवतः बाहुः=भुजः अर्णवशक्करीम्=अर्णवः सागरः शक्करी मेखला यस्याः सा ताम् ससमुद्रामित्यर्थः, महीम्=पृथिवीम् । अवते=रक्षति पालयतीत्यर्थः । अजिज्ञासा=अत्र महीपालनविषये संशयाभावात् ज्ञातुमिच्छा विचारणा न=नास्ति अर्थात् इदं सत्यमेव । आसाम्=ईदृशानां गिराम्=वाणीनाम् रसः=माधुर्यानुकूलः शृङ्गाराद्यनुप्राणितः राजविषयको रतिभावो न अस्ति=विद्यमानोऽपि नास्वाद्यते, पदानामसाधुतया तत्पूर्ववर्त्तिनोऽन्वयबोधस्य अभावात् । अयं भावः—'अवते' इत्यत्रात्मनेपदम्, 'भवते' इत्यत्र षष्ठीस्थाने चतुर्थी, 'अर्णवशक्करीम्' इत्यत्र बहुव्रीहौ समा-सान्तेन 'कपा' भाव्यम् । 'महाराजन्' इत्यत्रापि 'राजाहः सखिभ्यष्टच्' ( ५।४।९१ ) इति समासान्तः 'टच्' प्राप्तः तदकरणाद् व्याकरणविरुद्धत्वेन च्युतसंस्कृतता सर्वमिदमनुशासन-विरुद्धम् । 'शक्करी' शब्दश्च 'शक्करीच्छन्दसो भेदे नदीमेखलयोरपि' इति मेदिनीप्रामाण्यात् मेखलार्थकोऽपि केनापि न प्रयुक्त इत्यप्रयुक्तोऽपि । सर्वमिदं ग्रथितमपि श्रोतृमति वैकल्यमासा-दयत् वाक्यार्थबोधविघटनकारीति ज्ञेयम् । परन्तु बहुव्रीहौ कबेकान्तनियमश्चिन्त्यः ॥१४९॥

[ शब्दहीनस्यापवादस्थलप्रदर्शनम् ]

**दक्षिणाद्रेरुपसरन् मारुतश्चूतपादपान् ।**
**कुरुते ललिताधूतप्रवालाङ्कुरशोभिनः ॥ १५० ॥**
**इत्यादिशास्त्रमाहात्म्यदर्शनालसचेतसाम् ।**
**अपभाषणवद् भाति नच सौभाग्यमुज्झति ॥ १५१ ॥**

'शिष्टेष्टस्तु न दुष्यति' इत्युक्तं स्पष्टीकरोति—'दक्षिणाद्रेः' इति । (मलयपर्वतीयवायु-

धूनिताम्रवनवर्णनमिदम्) दक्षिणाद्रेः=मलयाचलस्य उपसरन्=समीपं गच्छन् मारुतः=पवनः चूतपादपान्=आम्रवृक्षान् ललिताधूतप्रवालांकुरशोभिनः=ललितम् इति भावप्रधानो निर्देशः। ललितेन लालित्येन आ समन्तात् धूताः धूनिताः अर्थात् मन्दं मन्दं चालिताः ये प्रवालांकुराः सद्योनिर्गतपत्रप्ररोहाः तैः शोभिनः शोभावतः कुरुते=विधत्ते।

'इत्यादी'ति—इत्यादि=दक्षिणाद्रेरित्यादि पूर्वोक्तं वाक्यम् शास्त्रमाहात्म्यदर्शनालसचेतसाम्=शास्त्रम् अनुशासनं व्याकरणादि तस्य यत् माहात्म्यम् रहस्यं तस्य दर्शने अलसं वैमुख्यं प्राप्तं चेतो मनो येषां तेषाम् व्याकरणादिशास्त्रविचारविमुखमनसामित्यर्थः, अपभाषणवत्=अपशब्दवत् भाति=प्रतीयते वस्तुतस्तु नापशब्दरूपता। अत एव न च सौभाग्यम् उज्झति=शिष्टैरिष्टत्वात् सौष्ठवं न परिजहाति।

इदमत्राकूतकम् - 'उपसरन्' इति क्रियापदस्य 'दक्षिणाद्रेः' इति कर्म, कर्मणि तु 'कर्मणि द्वितीया' (२।३।२) इत्यनुशासनबलात् द्वितीया विभक्तिः स्यात् अर्थात् 'दक्षिणाद्रिमुपसरन्' इति भाव्यम् परन्तु सम्बन्धसामान्यविवक्षया सर्वत्र शिष्टैः षष्ठी इष्यते। अत एव 'षष्ठी शेषे' (२।३।५०) इति सूत्रवृत्तौ 'कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्, भजे शम्भोश्चरणयो' रित्यादि दीक्षितैरुक्तम्॥ १५०, १५१॥

[ यतिभ्रंशस्य निरूपणम् ]

**श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः।**
**तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा॥ १५२॥**

यतिस्वरूपप्रदर्शनपूर्वकं यतिभ्रष्टं लक्षयति—'श्लोकेषु' इति। श्लोकेषु=नानालक्षणलक्षितेषु पद्येषु नियतस्थानम्=नियतं छन्दोविद्भिर्नियतीकृतं स्थानं यस्य तत् तादृशम् पदच्छेदम्=सुप्तिङन्तस्वरूपस्य पदस्य छेदं विरामं यतिम्=विदुः=अवगच्छन्ति। सुधिय इति शेषः। पदान्ते जिह्वाया विश्रामविशेषो यतिरिति निर्गलितोऽर्थः। यथा 'छन्दोमञ्जर्याम्' --

यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते। सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया॥
क्वचिच्छन्दस्याखे यतिरभिहिता पूर्वकृतिभिः पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च।
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां यथा कृष्णः पुष्णात्वतुलमहिमा मां करुणया॥

प्रपञ्चस्तु—**श्रीनारायणभट्ट**विरचितायां वृत्तरत्नाकरव्याख्यायां द्रष्टव्यः। श्वेतमाण्डव्यप्रभृतयस्तु यतिं नेच्छन्ति। 'तदपेतम्' इति। तदपेतम्=उक्तलक्षणाया यतेः अपेतं प्रच्युतं दर्शितलक्षणयतिविरहितं [वचनम्] श्रवणोद्वेजनम्=श्रवणयोः कर्णयोरुद्वेगकरं दुःखप्रदमिति यावत् यतिभ्रष्टम्=यतिभ्रष्टनामकदोषोपेतं भवतीत्यर्थः। 'यथा' इत्यग्रे उदाह्रियते इत्याशयः॥१५२॥

[ यतिभ्रष्टस्योदाहरणम् ]

**स्त्रीणां सङ्गीतविधिमयमादित्यवंश्यो नरेन्द्रः**
**पश्यत्यक्लिष्टरसमिह शिष्टैरमेत्यादि दुष्टम्।**
**कार्याकार्याण्ययमविकलान्यागमेनैव पश्यन्**
**वश्यामुर्वीं वहति नृप इत्यस्ति चैवं प्रयोगः॥ १५३॥**

यतिभ्रष्टमुदाहरति—'स्त्रीणाम्' इति। अयम् आदित्यवंश्यः नरेन्द्रः=सूर्यान्वयजः

कश्चिद् राजा शिष्टैः अमा=सहृदयैः सह अक्लिष्टरसम्=अक्लिष्टाः पर्याप्ताः हृदयग्राहिणः रसा यत्र तादृशम् स्त्रीणां सङ्गीतविधिम्=नारीणां [नारीभिः क्रियमाणम्] सङ्गीतस्य विधिर्विधानं प्रकारो यत्र तत् नाट्यमित्यर्थः, इह=सदसि पश्यति=आलोकते इत्यन्वितार्थः, इत्यादि=एवमाकारम् एतत्प्रभृति दुष्टम्=यतिभ्रंशदोषोपेतं पद्यमित्यर्थः । तथाहि—

सप्तदशाक्षरायां वृत्ताविदं 'मन्दाक्रान्तं' छन्दः । तल्लक्षणमुक्तं 'वृत्तरत्नाकरे'—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति । एतल्लक्षणानुसारं चतुर्भिः षड्भिः सप्तभिश्च यतिः कर्त्तव्या, अर्थात् प्रथमतः चतुर्थेऽक्षरे, ततः षष्ठे, ततः सप्तमे यतिर्निवेश्या । अत्र तु—चतुर्थादिवर्णानां पदमध्यवर्त्तित्वात् यतिर्भ्रष्टतां गता । यथा च—'स्त्रीणां सङ्गी' इति चतुर्थेऽक्षरे 'मयमा' इति दशमे विरामाभावेन वैरस्यम् अतो 'यतिभ्रष्ट' मिदम् । अस्यापवादं दर्शयति—'कार्याकार्याणी'ति । अयम् नृपः=भूपः आगमेन एव=नीतिशास्त्रेण एव कार्याकार्याणि=कर्त्तव्याकर्त्तव्यानि पश्यन्=आलोचयन् वश्याम्=स्वाधीनाम् उर्वीम्=भूमिम् वहति=धारयति तत्पालनां विधत्त इत्यर्थः । इति अस्ति च एवं प्रयोगः=इत्यादिः प्रयोगो दोषरहितो भवतीत्यर्थः । अर्थात् 'कार्या' इत्यस्य प्रातिपदिकभागान्ततया नामभेदगतत्वात्तस्यादुष्टत्वम् । आह च भोजराजः-

स्वरसन्ध्यकृते प्रायो धातुभेदे तदिष्यते । नामभेदे च शेषेषु न दोष इति सूरयः ॥ इति ॥

तदेतादृशमन्यदप्यधस्तात् कृतव्याख्यानम् ॥ १५३ ॥

[ उक्तेऽर्थे उपपत्तिः ]

**लुप्ते पदान्ते शिष्टस्य पदत्वं निश्चितं यथा ।**
**यथा सन्धिविकारान्तं पदमेवेति वर्ण्यते ॥ १५४ ॥**

ननु पदमध्ये विरामरूपस्य उक्ताकारस्य उभयत्रापि यतिभ्रंशस्य एकत्र दोषभावः परत्रादुष्टत्वमित्यत्र किं विनिगमकमित्याशङ्कायामाह —'लुप्ते' इति । पदान्ते=सुप्तिङन्तं पदम् तस्य अन्ते शिष्टे वर्णे लुप्ते=अदृष्टे सति 'भूरि हर' इत्येवमादिषु विभक्तिलोपे जाते सति 'शिष्टस्य' अवशेषतां गतस्य प्रकृतिभागस्य प्रकृत्यंशस्य 'यथा पदत्वम्' पदभावः निश्चितम्=कृतसिद्धान्तम् तथा=तद्वत् सन्धिविकारान्तम्=द्वयोः स्वरयोः सन्धानं [प्रकृते] सन्धिः तत्कृतो यो विकारो दीर्घयत्वादिरूपः आदेशः स अन्ते यस्य तत् तादृशमपि पदमध्यमपि पदम् एव इति वर्ण्यते=पदान्त एवेति कविभिर्निश्चीयते । एवञ्च—'कार्याकार्याण्ययम्' इत्यादौ 'ण्य' इत्येवमादिस्थले, स्वरसन्धिजनितयकारादिविकाररूपवर्णान्ते 'र्या' इत्यादौ च पदमध्येऽपि यतिर्न दोषतां स्फोरयति । एतच्च पूर्वमपि स्फुटितप्रायम् ॥ १५४ ॥

[ उक्तस्य प्रतिप्रसवस्यैकदेशता ]

**तथापि कटु कर्णानां कवयो न प्रयुञ्जते ।**
**ध्वजिनी तस्य राज्ञः केतूदस्तजलदेत्यदः ॥ १५५ ॥**

स्वरसन्धिकृतस्य प्रतिप्रसवस्यैकदेशतामाह—'तथापि' इति । तथापि=स्वरसन्धिकरणेन पदमध्यस्य पदान्ततास्वीकारेऽपि कवयः=साहित्यशास्त्रपारङ्गताः सूरयः कर्णानाम्=श्रोत्रयोः कटु=उद्वेजकं दुःखकरम् तस्य राज्ञः=भूपस्य ध्वजिनी=सेना केतूदस्तजलदा=केतुभिः पताकाभिः उदस्ताः ऊर्ध्वं क्षिप्ता जलदाः मेघा यया सा तादृशी 'अस्ति' इति शेषः, इति अदः=एवमादि, न प्रयुञ्जते=नैव व्यवहरन्ति ।

अत्र--'केतूदस्ते' त्यत्र 'तू' इति स्वरसन्धिकार्यभूतदीर्घोपेतं पदान्तमपि 'के' इत्यत्राक्षरे यतिस्थानपातित्वेन श्रोतॄणां श्रोत्रयोर्वैरस्यमावहतीति स्वरसन्धावपि पादान्ते पदमध्ययतिर्दुष्टैवेति ध्येयम् ॥ १५५ ॥

[ भिन्नवृत्तस्य लक्षणम् ]

**वर्णानां न्यूनताधिक्ये गुरुलघ्वयथास्थितिः ।**
**तत्र तद्भिन्नवृत्तं स्यादेष दोषः सुनिन्दितः ॥ १५६ ॥**

भिन्नवृत्तं लक्षयति—'वर्णानाम्' इति। अत्र 'तत्र' इत्युक्तेः 'यत्र' इत्यध्याहार्यम्, यत्तदोर्नित्यसम्बन्धात् । यत्र=श्लोके वर्णानाम्=[ बहुवचनमविवक्षितम् ] वर्णस्य वर्णयोः वर्णानां वा न्यूनताधिक्ये=न्यूनता आधिक्यं वा तथा गुरुलघ्वयथास्थितिः=गुरूणां लघूनां वा वर्णानां या अयथास्थितिः नियमं विनाऽवस्थानम् विन्यासविशेषः तत्र=पद्ये तत् भिन्नवृत्तम्=भिन्नं नियमभङ्गोपेतं छन्दो वृत्तं यत्र तत् छन्दोभङ्गाख्यदोषवत् स्यात्=भवेत् । एषः दोषः सुनिन्दितः=कवेर्निन्दावहत्वात् [ छन्दोज्ञानानभिज्ञतया ] सर्वथा वर्जनीय इत्यर्थः ॥ १५६ ॥

[ भिन्नवृत्तस्योदाहरणम् ]

**इन्दुपादाः शिशिराः स्पृशन्तीत्यूनवर्णता ।**
**सहकारस्य किसलयान्यार्द्राणीत्यधिकाक्षरम् ॥ १५७ ॥**

एकेनैव पद्येन न्यूनताधिक्ये भिन्नवृत्तमुदाहरति—'इन्दुपादाः' इति । इन्दुपादाः=चन्द्रमयूखाः शिशिराः=शीतला स्पृशन्ति=छुपन्ति, इति ऊनवर्णता=इत्यत्र प्रथमे पादे ऊनवर्णता अर्थात् प्रथमः पादोऽष्टाक्षरो वचनीयः तदनुक्त्वा सप्ताक्षर उक्तः सहकारस्य=चूतस्य किसलयानि=पत्राणि आर्द्राणि=नवनवानि सन्ति इति शेषः, इति अधिकाक्षरम् अत्र तृतीयः पादो नवाक्षर उक्त इत्यक्षराधिक्यमिति वर्णन्यूनाधिकभावे भिन्नवृत्तोदाहरणम् ॥ १५७ ॥

**कामेन बाणा निशिता विमुक्ता मृगेक्षणास्वित्ययथागुरुत्वम् ।**
**स्मरस्य बाणा निशिताः पतन्ति वामेक्षणास्वित्ययथालघुत्वम् ॥१५८॥**

गुरुलघ्वयथास्थितिरूपं भिन्नवृत्तमुदाहरति—'कामेन' इति । मृगेक्षणासु=हरिणाक्षीषु कामेन=मन्मथेन निशिताः=तीव्राः बाणाः=सायकाः विमुक्ताः=त्यक्ताः इति अन्विातार्थः। इति अयथागुरुत्वम्=अत्र—प्रथमपादे उपेन्द्रवज्रालक्षणके आदौ 'का' इति गुरुवर्णोऽयथास्थानं निवेशितः ।

अयमाशयः—अयं श्लोकः इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः। यद्यपि उपजातिवृत्तस्यादौ प्रस्तारविधया इन्द्रवज्रायाः पादस्वीकारे न कोऽपि दोष आभाति तथापि—

उपजातिविकल्पानां सिद्धो यद्यपि सङ्करः । तथापि प्रथमं कुर्यात् पूर्वपादाक्षरं लघु ॥
गुर्वक्षरेण संरुद्धं ग्रन्थियुक्तमिवाग्रतः । करोति प्रथमं स्थूलं किञ्चित् कर्णकदर्थनाम् ॥

इत्यभियुक्तोक्तेः पूर्वं गुर्वक्षरनिवेशेन "अयथागुरुत्वं" नाम वृत्तभङ्गो दोषः। अस्मभ्यन्तु नैतद्बहु रोचते 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः' इत्यादिमहाकविप्रणीतेषु काव्येषु आदौ गुरुवर्णनिवेशदर्शनात् उभयोर्जातिप्रस्तारवैयर्थ्यापत्तेश्च ।

स्मरस्येति—स्पष्टार्थम्। इदमुत्तरार्धम् 'इन्द्रवज्रावृत्तम्' । 'स्यादिन्द्रवज्रा ततजास्ततो गौ' इति तल्लक्षणात्, तेनात्र प्रथमं तगणे निवेशनीये गुरुर्वर्णः स्यात्, परमत्रादौ 'स्म' इति

लघ्वक्षरं निवेशितम्। तगणस्तु अन्तलघुर्भवति। तथा च पैङ्गलं सूत्रम् **'सा ते क त्'** [अ० १।५] इति अन्तलघोस्त्रिकस्य 'त' संज्ञा परिभाषिता। अत्र तु तद्वैपरीत्यं कृतम्। इदमपि चिन्त्यम्॥ १५८॥

[ विसन्धिकस्य लक्षणम् ]

**न संहितां विवक्षामीत्यसन्धानं पदेषु यत्।**
**तद्विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम्॥ १५९॥**

विसन्धिकं लक्षयति—'न' इति। संहिताम्=वर्णयोः परस्परं सम्मिलनरूपं सन्धिम् न=नहि विवक्षामि=वक्तुमिच्छामि, विधायकसूत्रे सत्यपि प्रयोक्तुं न कामये इतीच्छया यत् पदेषु असन्धानम्=पदघटकवर्णेषु यः सन्ध्यभावः तत् विसन्धि इति निर्दिष्टम्=तद्विसन्धिदोषयुक्तं पदादि कथितं शास्त्रज्ञैरित्यर्थः। प्रगृह्यादिहेतुकं न='ईदूदेद्द्विवचनं प्रगृह्यम्' [१।१।११] इत्याद्यनुशासनबलसिद्धः सन्ध्यभावः 'विसन्धि' संज्ञकं दूषणं नेत्यर्थः। वि गतः सन्धिर्यत्रेति बहुव्रीहिसमासाश्रयणात् 'विसन्धि' इति पदं वाक्यादिविशेषणम्।

इदन्तु बोध्यम्—प्रगृह्यादिहेतुकसन्ध्यभावेऽपि सकृत्प्रयोग एव दोषाभावः पुनः पुनः प्रयोगे तु दोष एव। यथा—'धीदोर्बले अतितते उचितानुवृत्ती आतन्वती विजयसम्पदमेत्य भातः' इत्यादौ। यत्तु—कैश्चित् 'विसन्धि' पदेन सन्धौ कष्टत्वम् अश्लीलत्वञ्चेत्यभिप्रेतम्, तदुपेक्ष्यम्। यथा—

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः। नात्रर्जु युज्यते गन्तुं शिरोनमय तन्मनाक्॥

इदन्तु वाक्यगतं श्रुतिकटुत्वमेव।

वेगादुड्डीय गगने चलण्डामरचेष्टितः। अयमुत्पतते पत्री तदत्रैव रुचिङ्कुरु॥

इत्यत्र तु 'लण्डे'ति जुगुप्साव्यञ्जकमश्लीलम्, 'चिङ्कु' इत्यत्र व्रीडाव्यञ्जकं तत्॥१५९॥

[ विसन्धिकस्योदाहरणम् ]

**मन्दानिलेन चलता अङ्गनागण्डमण्डले।**
**लुप्तमुद्भेदि घर्माम्भो नभस्यस्मद्वपुष्यपि॥ १६०॥**

विवक्षाकृतं विसन्धिकमुदाहरति—'मन्दानिलेन' इति। नभसि=गगने चलता=वाता मन्दानिलेन=मन्दगतिना वायुना अङ्गनागण्डमण्डले=अङ्गनायाः कामिन्याः गण्डमण्डले कपोलपाल्याम् अस्मद्वपुषि अपि=अस्माकं देहेऽपि उद्भेदि=निर्गतं घर्माम्भः=प्रस्वेदवारि लुप्तम्=लोपं नीतमित्यन्वितार्थः। अत्र 'चलता' इति प्रथमपादस्थान्तपदाकारस्य 'अङ्गना' इति द्वितीयपादस्थादिपदाकारेण सह छन्दोभङ्गभयात् दीर्घाभावो न विहितः, तस्मादत्र विवक्षाकृतः [ ऐच्छिकः ] विसन्धिदोषः॥ १६०॥

[ विसन्धेर्दोषाभावस्थलम् ]

**मानेर्ष्ये इह शीर्येते स्त्रीणां हिमऋतौ प्रिये।**
**आसु रात्रिष्विति प्राज्ञैराम्नातं व्यस्तमीदृशम्॥ १६१॥**

प्रगृह्यादिहेतुकसन्ध्यभावे दोषाभावमुदाहरति—'मानेर्ष्ये' इति। 'इह' हिमऋतौ=हेमन्तकाले आसु रात्रिषु=हेमन्तनिशासु स्त्रीणाम्=कामिनीनाम् मानेर्ष्ये=मानः प्रणयकोपः,

ईर्ष्या नायकापराधजनितः कोपः, मानश्च ईर्ष्या च ते मानेर्ष्ये=प्रिये=प्रणयिजनविषये इत्यर्थः, शीर्येते=भ्रश्यतः हेमन्तर्त्तौ रतिमात्रस्योद्दीपकत्वादिति भावः। इति ईदृशम् प्राज्ञैः व्यस्तम्=सन्ध्यभावः आम्नातम्=अनुशिष्टम्। अर्थात् मानेर्ष्ये इह इत्यत्र 'ईदूदेद्द्विवचनं प्रगृह्यम्' [१।१।११] इति पाणिनिमुन्यनुशासनेन द्विवचनस्थस्य एकारस्य 'एचोऽयवायावः' [६।१।७८] इति सूत्रविहितः एकारस्य 'अय्' इत्यादेशरूपः सन्धिर्निषिद्धः। तथा—'हिमऋतौ' इत्यत्र 'ऋत्यकः' [६।१।११८] इति सूत्रेण ऋकारे परे अकारस्य विकल्पेन सन्धिनिषेधः कृतः, तस्मादत्र न दोष इत्याशयः॥ १६१॥

[ देश-काल-कला-लोक-न्यायागमानां लक्षणम् ]

**देशोऽद्रिवनराष्ट्रादिः कालो रात्रिन्दिवर्त्तवः।**
**नृत्यगीतप्रभृतयः कलाः कामार्थसंश्रयाः॥ १६२॥**
**चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता।**
**हेतुविद्यात्मको न्यायः सस्मृतिः श्रुतिरागमः॥ १६३॥**

देशादिविरोधं निरूपयितुकाम आदौ तेषां लक्षणमाह—'देश' इति। अद्रिवनराष्ट्रादिः देशः=अद्रिः=महीधरः, वनम्=अरण्यम् आरामादिर्वा राष्ट्रम् राज्यम्, इत्येवमादिर्देश आदिना समुद्रप्रभृतिग्रहः। रात्रिन्दिवर्त्तवः कालः=बहुवचनेन मासवर्षादिपरिग्रहः। कामार्थसंश्रयाः=कामश्च अर्थश्च कामार्थौ तौ संश्रयौ प्रयोजकत्वेनाश्रयभूतौ येषां ते नृत्यगीतप्रभृतयः कलाः=कामसाधकाः अर्थसाधकाश्च नृत्याद्याः='कला' उच्यन्ते इत्यर्थः। 'प्रभृति' पदेन नानाविधवादित्रादीनां परिग्रहः। एताः कलाः चतुःषष्टिसंख्याकाः शैवतन्त्रादिषु प्रसिद्धा श्रीधराचार्येण श्रीमद्भागवतटीकायाम्, वात्स्यायनप्रणीते कामसूत्रे, मधुसूदनसरस्वतीभिश्च महिम्नःस्तवटीकायाम् सकलशास्त्रमहावाक्यतैकवाक्यताप्रकरणे उक्ताः शिष्यबुद्धिवैशद्याय ता इहापि नाम्ना निर्दिश्यन्ते। तथाहि—यथा 'नृत्यम्, गीतम्, वाद्यम्, नाट्यम्, आलेख्यं विशेषकच्छेद्यम्, तण्डुलकुसुमबलिविकाराः, पुष्पास्तरणम्, दशनवसनाङ्गरागाः, मणिभूमिकाकर्म, शयनरचनम्, उदकवाद्यम्, उदकघातः, चित्रायोगाः, माल्यग्रथनविकल्पाः, शेखरापीडयोजनम्, नेपथ्ययोगाः, कर्णपत्रभङ्गाः, गन्धयुक्तिः, भूषणयोजनम्, ऐन्द्रजालम्, कौचुमारयोगाः, हस्तलाघवम्, चित्रशाकपूपभक्ष्यविकारक्रिया, पानकरसरागासवयोजनम्, सूचीवापकर्म्माणि, सूत्रक्रीडा, प्रहेलिका, प्रतिमाला, दुर्वचकयोगाः, पुस्तकवाचनम्, नाटिकाख्यायिकादर्शनम्, काव्यसमस्यापूरणम्, पट्टिकावेत्रवाणविकल्पाः, तर्कुकर्म्माणि, तक्षणम्, वास्तुविद्या, रूप्यरत्नपरीक्षा, धातुवादः, मणिरागज्ञानम्, आकरज्ञानम्, वृक्षायुर्वेदयोगाः, मेषकुक्कुटलावकयुद्धविधिः, शुकसारिकाप्रलापनम्, उत्सादनम्, केशमार्जनकौशलम्, अक्षरमुष्टिकाकथनम्, म्लेच्छितकविकल्पाः, देशभाषाज्ञानम्, पुष्पशकटिकानिमित्तज्ञानम्, यन्त्रमातृका, धारणमातृका, सम्पाठ्यम्, मानसी काव्यक्रिया, क्रियाविकल्पाः, छलितकयोगाः, अभिधानकोषच्छन्दोज्ञानम्, वस्त्रगोपनानि, द्यूतविशेषः, आकर्षक्रीडा, बालक्रीडनकानि, वैनयिकीनां विद्यानां ज्ञानम्, वैजयिकीनां विद्यानां ज्ञानम्, वैतालिकीनां विद्यानां ज्ञानञ्चेति (६३)॥१६२॥

'चराचराणाम्' इति। चराचराणाम्=त्रसस्थावराणाम् भूतानाम्=जीवानाम् [या]

प्रवृत्तिः=वृत्तान्तः [सा] लोकसञ्ज्ञिता='लोक'शब्देन व्यवह्रियत इत्यर्थः । हेतुविद्यात्मकः न्यायः='हेतु' पदेनात्र तर्कग्रहः हेतुप्रधाना विद्या हेतुविद्या सा आत्मा स्वरूपं यस्य सः तादृशः न्यायः युक्तिमूलकं न्यायादिदर्शनशास्त्रमित्यर्थः । एतेनात्र सकलास्तिकनास्तिकदर्शनं 'न्याय' पदेन ग्राह्यमिष्टम् । सस्मृतिः श्रुतिः आगमः=स्मृतिः आर्षं मानवादि वाक्यम् तया स्मृत्या सह वर्त्तत इति सस्मृतिः श्रुतिः वेदः [इह] 'आगम' पदेनोच्यते इत्यर्थः । एतेन परकीयानामपि शास्त्राणामागमपदेन गौण्या वृत्त्या ग्रहणम्, अन्यथा वर्णनायाः कवेरव्यापकतापत्तेः ॥१६३॥

[ देशादिविरोधस्य लक्षणम् ]

**तेषु तेष्वयथारूढं यदि किञ्चित् प्रदर्श्यते ।**
**कवेः प्रमाद्देशादिविरोधीत्येतदुच्यते ॥ १६४ ॥**

देशादिविरोधं लक्षयति--'तेषु' इति । यदि तेषु तेषु अयथारूढं किञ्चित् प्रदर्श्यते=तेषु तेषु देशकालादिषु यदि किञ्चिदपि अयथारूढम्=अप्रसिद्धं वर्ण्यते यथा—कीटकदेशे कुङ्कुमोत्पत्तिवर्णनम्, काश्मीरेषु गुवाकनारिकेलोद्यानवर्णनं वा तत् एतत् कवेः प्रमादात्=कवयितुर्मोहात् [वर्ण्यमानं]देशादिविरोधि[इति]उच्यते=देशविरुद्धं कालविरुद्धमित्येवमादि भण्यते ॥१६४॥

[ देशविरोधस्योदाहरणम् ]

**कर्पूरपादपामर्शसुरभिर्मलयानिलः ।**
**कलिङ्गवनसम्भूता मृगप्राया मतङ्गजाः ॥ १६५ ॥**

देशविरोधमुदाहरति—'कर्पूर' इति । मलयानिलः=मलयाचलात् प्रवान् वायुः कर्पूरपादपानां हिमवालुकाद्रुमाणाम् आमर्शेन स्पर्शेन सुरभिः घ्राणतर्पणः 'अस्ति' इति शेषः । 'अथ कर्पूरमस्त्रियाम् । घनसारश्चन्द्रसञ्ज्ञः सिताभ्रो हिमवालुका' इत्यमरः । मतङ्गजाः=हस्तिनः कलिङ्गवनसम्भूताः=कलिङ्गनामकदेशारण्यजाताः गजाः मृगप्रायाः=मृगसदृशाः क्षुद्रकाया इत्यर्थः ।

अत्र चीनदेशभवानां कर्पूरपादपानां मलयाद्रौ वर्णनमिति अद्रिरूपदेशविरुद्धता । कलिङ्गदेशे तथाविधगजानामप्रसिद्धेर्वनरूपदेशविरोधो ज्ञेयः ॥ १६५ ॥

**चोलाः कालागुरुश्यामकावेरीतीरभूमयः ।**
**इति देशविरोधिन्यो वाचः प्रस्थानमीदृशम् ॥ १६६ ॥**

पर्वतवनात्मकदेशविरोधमुदाहृत्य राष्ट्रात्मकदेशविरोधमुदाहरति—'चोलाः' इति । कालागुरुश्यामकावेरितिरभूमयः=कालागुरुणा श्यामाः कृष्णाः कावेर्य्याः तदाख्याया नद्याः तीरभूमयः तटप्रान्तभागा येषु तादृशः चेलाः=कर्णाटकान्तर्गतदेशविशेषाः सन्ति । अत्र कावेरीतीरे कालागुरूणामुत्पत्तिर्न भवतीति तद्विरुद्धवर्णनात् राष्ट्ररूपदेशविरोधः । यथा वा मम—

शालिकोटादधोभागे चन्द्रभागा सरिद्वरा । शीतोदा वर्त्तते यत्र स्नान्ति रात्रिन्दिवा नराः ॥

चन्द्रभागाया नद्या देशविरोधः, सा च वर्जाराबादनगरकोपान्त्यवर्त्तिनी । रात्रिमिति स्नाने आगमविरोधोऽपि ॥ १६६ ॥

[ कालविरोधस्योदाहरणम् ]

**पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती ।**
**मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥ १६७ ॥**

**श्रव्यहंसगिरो वर्षाः शरदो मत्तबर्हिणः ।**
**हेमन्तो निर्मलादित्यः शिशिरः श्लाघ्यचन्दनः ॥ १६८ ॥**

कालविरोधमुदाहरति द्वाभ्याम्—'पद्मिनी' इति । पद्मिनी=कमलिनी नक्तम्=रात्रौ उन्निद्रा=विकसिता । 'कुमुद्वती' अह्नि=दिवा स्फुटति=प्रफुल्लति । मधुः=वसन्तः उत्फुल्लनिचुलः=विकसितवेतसतरुः । निदाघः=ग्रीष्मकालः मेघदुर्दिनः=वारिदाक्रान्तः । वर्षाः=प्रावृषः श्रव्यहंसगिरः=श्रव्याः श्रुतिसुखावहाः हंसानां कादम्बानां गिरः वाण्यो यासु तादृश्यः । शरदः=शरत्कालाः मत्तबर्हिणः=मत्ताः बर्हिणो मयूरा यासु ताः । हेमन्तः निर्मलादित्यः=निर्मलः हिमाद्यावरणरहितः आदित्यः सूर्यो यत्र । शिशिरः श्लाघ्यचन्दनः=शीतर्तुः संसेव्यचन्दनानुलेपः 'अस्ति' इत्येवं यथावचनं सर्वत्र क्रियासम्बन्धो ज्ञेयः ।

अत्र—पद्मिन्या विकाशो दिवा नच रात्रौ, कुमुद्वत्याश्च रात्रावेव न दिवा, निचुलाः प्रावृष्येव स्फुटन्ति नतु मधौ, मेघच्छन्नमहो दुर्दिनं वर्षास्वेव नतु ग्रीष्मे, हंसानां श्रव्या गिरः शरद्येव न वर्षासु, बर्हिणो वर्षास्वेव माद्यन्ति न शरत्सु, आदित्यस्य नैर्मल्यं ग्रीष्माद्यृतुष्वेव नतु हेमन्ते, चन्दनस्य शैशिर्यं ग्रीष्म एव श्लाघ्यं नतु शिशिरर्तौ इति तत्तद्विपरीतवर्णनात् नानाविधः कालविरोधो बोध्यः ॥ १६७, १६८ ॥

**इति कालविरोधस्य दर्शिता गतिरीदृशी ।**
**मार्गः कलाविरोधस्य मनागुद्दिश्यते यथा ॥ १६९ ॥**

कालविरोधमुपसंहरन् [ दिङ्मात्रं ] कलाविरोधदर्शनं प्रतिजानीते—'इति' इति । 'मनाग् उद्दिश्यते' इति कथनात् विस्तरे ग्रन्थबाहुल्यभीतिं मन्यते । शिष्टं स्पष्टम् ॥१६९॥

**वीरशृङ्गारयोर्भावौ स्थायिनौ क्रोधविस्मयौ ।**
**पूर्णसप्तस्वरः सोऽयं भिन्नमार्गः प्रवर्त्तते ॥ १७० ॥**

कलासु नाट्यं प्रधानम् क्षिप्रमेव सामाजिकहृदयावर्जकत्वात् इति, तस्मादादौ तद्विरोधमेवोदाहरति—'वीरशृङ्गारयोः' इति । वीरशृङ्गारयोः=वीररसशृङ्गाररसयोः 'स्थायिनौ भावौ क्रोधविस्मयौ' परस्परं विरुद्धौ इति शेषः । इदमुक्तं भवति—

अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः ।
आस्वादांकुरकन्दोऽसौ भावः स्थायीति सम्मतः ।
रसावस्थः परं भावः स्थायितां प्रतिपद्यते ॥

इत्युक्तया दिशा रसस्य प्रारम्भाच्चरमसीमान्तं समुद्रिक्तास्वादरूपत्वेन स्थिरं वर्त्तमानो भावः [चित्तवृत्तिविशेषः] 'स्थायी' इति पदवाच्यो भवति । तत्र वीरे उत्साहः, शृङ्गारे रतिश्च स्थायीति मर्यादा, एवमेव रौद्रस्य क्रोधः अद्भुतस्य विस्मयः स्थायी, यदि तु वीरे शृङ्गारे च व्यभिचारिरूपेणावस्थितस्य क्रोधस्य विस्मयस्य वा स्थायित्वेन निर्देशः क्रियेत तदा नाट्यकलाविरोधो दोषः । क्रोधादीनां स्वरूपं रसवत्प्रकरणे पूर्वं प्रदर्शितमिति तत एवावगन्तव्यम् ।

गतिकलाविरोधं दर्शयति—'पूर्ण०' इति पूर्णसप्तस्वरः=पूर्णाः साकल्येन प्रयुक्ताश्च ते सप्त स्वराः-'निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः' इत्युक्ता यत्र स तथाविधः सः अयम् भिन्नमार्गः प्रवर्त्तते=भिन्नः तत्तत्कालनिषिद्ध-

स्वरान्तरसाङ्कर्यरहितः स चासौ मार्गः तत्तत्कालविहितस्वरप्रयोगः प्रवर्त्तते, गीत्यां प्रवृत्तो भवति एतदन्यथाकरणे तु विरोधः अर्थात् सङ्गीतशास्त्रे सप्तानां स्वराणां प्रयोगो भिन्नकालिको विहितः तेषामेकदैव साकल्येन प्रयोगः गीतकलाविरोधो दोषः । तथाचाह भरतः—

प्रभाते सुरतो निन्द्यः ऋषभः पञ्चमोऽपि च । जनयेत् प्रधनं ह्युद्धा पञ्चत्वं पञ्चमोऽपि च ॥
पञ्चमस्य विशेषोऽयं कथितः पूर्वसूरिभिः । प्रगे प्रगीता जनयेद्दर्शनस्य विपर्ययम् ॥इति॥ १७०॥

**इत्थं कलाचतुःषष्टिविरोधः साधु नीयताम् ।**
**तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति ॥ १७१ ॥**

कलाविरोधमुपसंहरति—'इत्थम्' इति । इत्थम्=अनेन प्रकारेण कलाचतुःषष्टिविरोधः= कलानाम् पूर्वोक्तानां या चतुःषष्टिः तस्या विरोधः साधु=यथा तथा नीयताम्=अवगम्यताम् । यथा नाट्यगीतयोर्द्वयोः कलयोर्विरोधोऽस्माभिः निरूपितः तथा शिष्टानामपि कलानां विरोधो विज्ञातव्यः । ननु कास्ताः कलाः यासां विरोधो निदर्शितः इत्याशङ्क्याह—'तस्या' इति । तस्याः=चतुःषष्टिसंख्याकायाः कलायाः रूपम्=स्वरूपम् कलापरिच्छेदे=कलापरिच्छेदनामके ग्रन्थे आविर्भविष्यति=ज्ञातं भविष्यतीति स एवावलोकनीयः । एतेन **कलापरिच्छेदो**ऽपि दण्डिकृतिरिति सम्भाव्यते ॥ १७१ ॥

**आधूतकेशरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः ।**
**गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः ॥ १७२ ॥**

लोकविरोधमुदाहरति—'आधूत०' इति ।[अयम्] हस्ती=गजः आधूतकेशरः=आधूताः समन्ततो धूनिताः केशराः सटाः यस्य तादृशोऽस्ति इति शेषः । तुरङ्गमः=अश्वः तीक्ष्णशृङ्गः= खरशृङ्गः । एरण्डः=एतन्नामा द्रुमः गुरुसारः=गुरुः गरिष्ठः सारः मज्जा यस्य सः । खदिरद्रुमः= गायत्रीद्रुमः निःसारः=सारशून्योऽस्ति । 'गायत्री बालतनयः खदिरो दन्तधावन' इत्यमरः ।

अत्र—हस्तिनः केशरवत्त्वम्, अश्वस्य तीक्ष्णशृङ्गत्वम्, एरण्डस्य गुरुसारत्वम्, खदिरस्य सारशून्यत्वं स्पष्टं लोकविरुद्धम् । अयं चरस्याचरस्य च विरोधो दर्शितः ॥ १७२ ॥

**इति लौकिक एवायं विरोधः सर्वगर्हितः ।**
**विरोधो हेतुविद्यासु न्यायाख्यासु निदर्श्यते ॥ १७३ ॥**

लोकविरोधमुपसंहरन् न्यायविरोधं दर्शयितुं प्रतिजानीते—'इति' इति । इति=दर्शित-प्रकारः लौकिक एव अयं विरोधः सर्वगर्हितः=देशादिविरोधापेक्षया सर्वथा हेयोऽयं लोक-विरोधः कवयितुरत्यन्ताज्ञत्वप्रकाशनादिति भावः । न्यायाख्यासु=न्यायाभिधासु हेतुविद्यासु= तर्कप्रधानेषु शास्त्रेष्वित्यर्थः, विरोधः निदर्श्यते=उदाहरणेन स्पष्टीक्रियते ॥ १७३ ॥

**सत्यमेवाह सुगतः संस्कारानविनश्वरान् ।**
**तथाहि सा चकोराक्षी स्थितैवाद्यापि मे हृदि ॥ १७४ ॥**

बुद्धमतदर्शनरूपन्यायविरोधमुदाहरति—'सत्यम्' इति [ कश्चिद् विरहाकुलो वक्ति ] सुगतः=बुद्धः संस्कारान्=अनुभवजन्यान् स्मृतिहेतुभूतान् भावनापरपर्यायान् [ आत्मधर्मान् ] अविनश्वरान्=स्थिरान्, सत्यम् एव आह=तथ्यमाचष्टे, तथा हि=इत्ययं योग्य एवार्थः, यतः सा चकोराक्षी अद्य अपि मे [मम] हृदि मनसि स्थिता एव=वर्त्तते स्मरणगोचरा एवेत्यर्थः ।

संस्कारा अनुभवजन्या भवन्ति, स्मृतिञ्च जनयन्ति इति स्थितो वस्तुस्वभावः, परन्तु सौगतनये भावमात्रस्य क्षणिकत्वात् संस्कारा अपि न चिरं तिष्ठन्ति, किन्तु द्वितीयक्षणवृत्ति-ध्वंसप्रतियोगिनः ते, क्षणभङ्गवादो हि प्रसिद्धः सौगतानाम् तद्विरुद्धमिह संस्कारस्थैर्यग्रन्थनं वक्तुरज्ञतां बोधयत् सहृदयहृदयमुद्वेजयतीति सौगतमतविरुद्धतया हेतुविद्याविरोधोऽयम्॥१७४॥

**कापिलैरसदुद्भूतिः स्थान एवोपवर्ण्यते ।**
**असतामेव दृश्यन्ते यस्मादस्माभिरुद्भवाः ॥ १७५ ॥**

साङ्ख्यदर्शनन्यायविरोधमुदाहरति—'कापिलैः' इति । कापिलैः=सांख्यैः असदुद्भूतिः=असतां प्रागभावप्रतियोगिनामनित्यानां घटपटादिपदार्थानाम् अथ च दुष्टानाम् उद्भूतिः उत्पत्तिः स्थान एव=युक्तमेव उपवर्ण्यते=कीर्त्यते। अत्र हेतुमाह—'असताम्' इत्यादि। यस्मात् अस्माभिः असताम् एव उद्भवाः दृश्यन्ते=अविद्यमानानामेव प्रादुर्भावा अवालोक्यन्ते, अर्थात् असन्तो दुर्जना एव जायन्ते [म्रियन्ते च] नतु सज्जनाः । अयमभिसन्धिः—

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥

इति सत्कार्यवादिनो हि साङ्ख्याः । एषां मते सतः सदेव जायते नत्वसत्, अन्यथा सिकताकणेभ्योऽपि तैलोत्पत्तिप्रसङ्गात्, एवं स्थितेऽपि प्रकृते श्लेषसामर्थ्यात् असच्छब्दस्य वाक्यार्थयोर्हेतुहेतुमद्भावः साङ्ख्यमतविरुद्ध एवोपनिबद्ध इति दोषः ॥ १७५ ॥

**गतिर्न्यायविरोधस्य सैषा सर्वत्र दृश्यते ।**
**अथागमविरोधस्य प्रस्थानमुपदिश्यते ॥ १७६ ॥**

न्यायविरोधमुपसंहरन् आगमविरोधनिरूपणं प्रतिजानीते—'गतिः' इति। सा एषा=सौगतकापिलाभिहितप्रकारा न्यायविरोधस्य गतिः=दृष्टान्तरूपा सर्वत्र=वेदान्तादिष्वपि दृश्यते=ज्ञायतामित्यत्र तात्पर्यम्। 'अथ' इत्यादि स्पष्टार्थम्। प्रस्थानम्=गतिर्दृष्टान्त इति यावत्॥१७६॥

**अनाहिताग्नयोऽप्येते जातपुत्रा वितन्वते ।**
**विप्रा वैश्वानरीमिष्टिमक्लिष्टाचारभूषणाः ॥ १७७ ॥**

आगमविरोधे आदौ श्रुतिविरोधमुदाहरति—'अनाहिताग्नयः' इति। एते अक्लिष्टाचारभूषणाः=अक्लिष्टः अक्षुण्णः अप्रतिहतो य आचारः सन्ध्यानुष्ठानादिः अन्तरङ्गभूतः शौचादिर्वा स एव भूषणं मण्डनमिव येषां ते तादृशाः अनाहतसदाचारोपेता इत्यर्थः, जातुपुत्राः अनाहिताग्नयः अपि=अकृताग्न्याधाना अपि विप्राः=ब्राह्मणाः वैश्वानरीम् इष्टिम्=विश्वानरदेवताकं यज्ञं वितन्वते=विदधते ।

अत्र आहिताग्नीनामेव वैश्वानरेष्टेर्विधानात् तद्विरुद्धमिदं श्रुत्यागमविरुद्धम् । भूतसमष्ट्यात्मको विराट् पुरुषोऽत्र विश्वानर उच्यते, तत्सम्बन्धिनी इष्टिर्वैश्वानरेष्टिरिति आहुः । इयमिष्टिः पूर्वमीमांसायाः चतुर्थेऽध्याये चतुर्थे पादेऽपि नैमित्तिकत्वेन चिन्तिता ॥ १७७ ॥

**असावनुपनीतोऽपि वेदानधिजगे गुरोः ।**
**स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥ १७८ ॥**

स्मृतिविरोधमुदाहरति—'असौ' इति । अनुपनीतः अपि असौ=अकृतोपनयनसंस्कारोऽप्ययम् 'गुरोः' सकाशात् वेदान्=ऋगादीन् अधिजगे=अध्यैष्ट। अत्र दृष्टान्तरूपामुप-

पत्तिमाह—'स्वभावशुद्ध' इति । स्वभावशुद्धः=प्रकृतिनिर्मलः स्फटिकः=मणिविशेषः संस्कारं न अपेक्षते=शुद्धिविशेषं गुणाधानरूपं न अपेक्षते=नाकांक्षते ।

अत्र अनुपनीतस्य वेदाध्ययने स्मृतिविरोधः । तदुक्तं मनुना—

नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते ।
शूद्रेण हि समस्तावद् यावद् वेदे न जायते ॥ इति ॥ १७८ ॥

[ उक्तविरोधस्य क्वचिद् गुणत्वम् ]

**विरोधः सकलोऽप्येष कदाचित् कविकौशलात् ।**
**उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥ १७९ ॥**

उक्तविरोधमपवदति—'विरोध' इति । एषः=उक्ताकारः सकलः=सम्पूर्णः 'अपि' विरोधः=देशप्रभृत्यागमान्तः कविकौशलात्=कवयितुर्वर्णनापाण्डित्यात् कदाचित् दोषगणनाम्=दोषान्तर्भावम् उत्क्रम्य=उल्लङ्घ्य गुणवीथीम्=गुणमार्गम् विगाहते=स्पृशति गुणभावं भजते इत्यर्थः ॥ १७९ ॥

**तस्य राज्ञः प्रभावेण तदुद्यानानि जज्ञिरे ।**
**आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥ १८० ॥**

देशविरोधस्य गुणभावं दर्शयति—'तस्य' इति । तस्य राज्ञः=नरपतेः प्रभावेण=प्रतापेन तदुद्यानानि=तदुपवनानि । आर्द्रांशुक०=आर्द्राणि सद्यस्कानि अभिनवानि अंशुकानि वस्त्राणि एव प्रवालानि पत्राणि येषां तेषाम् सुरशाखिनाम्=देवतरूणाम् आस्पदम्=स्थानम् जज्ञिरे= भेजिरे प्रापुरित्यर्थः । ['प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे' इति विश्वः]

अत्र मर्त्योद्यानेषु नाकीयसुरशाखिसम्भवो देशविरुद्धतया वर्णितोऽपि वर्णनीयस्य राज्ञः महाविभूतिमत्त्वेनोदात्तालंकृतिं स्पष्टीकरोति इति चमत्कारविशेषोत्पादनात् गुणो जातः, कवेः कौशलञ्चात्र उदात्तालङ्कारोपनिबन्धनम् ॥ १८० ॥

**राज्ञां विनाशपिशुनश्चचार खरमारुतः ।**
**धुन्वन् कदम्बरजसा सह सप्तच्छदोद्गमान् ॥ १८१ ॥**

कालविरोधस्य गुणतामादर्शयति—'राज्ञाम्' इति । खरमारुतः=कठोरः पवनः शर्करिल इत्यर्थः, राज्ञाम्=प्रस्तुतस्य नृपस्य प्रतिपक्षभूतानां भूपानाम् विनाशपिशुनः=विध्वंससूचकः सप्तच्छदोद्गमान्=सप्तपर्णपुष्पाणि धुन्वन्=कम्पयन् कदम्बरजसा=कदम्बानां नीपानां रजसा परागेण सह=साकमेव चचार=अवासीत् । अत्र—यद्यपि विजिगीषो राज्ञोः संग्रामयात्रा सप्तपर्णपुष्पाणामुद्गमाश्च शरदि जायन्ते तदा च कदम्बपुष्पाणि न सम्भवन्ति, तेषां वर्षाकालभवत्वादिति स्पष्टं कालविरोधः, तथापि 'अकाले फलपुष्पाणि देशोपद्रवकारणम्' इत्यादि विष्णुधर्मोत्तरीयवाक्येन अकालेऽपि फलपुष्पोद्गमनं सम्भावितम् तदत्र प्रतिपक्षभूपानां विनाशसूचनात् विजिगीषो राज्ञः उत्कर्षातिशयव्यञ्जकत्वेन गुण एव जातः एतादृशव्यङ्ग्योपनिबन्धनमेव च कवेः कौशलम् १८१॥

**दोलाभिप्रेरणत्रस्तवधूजनमुखोद्गतम् ।**
**कामिनां लयवैषम्यं गेयं रागमवर्धयत् ॥ १८२ ॥**

कलाविरोधस्य गुणभावं दर्शयति—'दोला०' इति । दोलायाः हिन्दोलायाः यत्

अभिप्रेरणम् अभितः प्रेरणम् सवेगचालनम् तेन त्रस्तानां भीतानां वधूजनानां यानि मुखानि तेभ्यः उद्गतम् उच्चरितम् लयवैषम्यम्=लयस्य गीतवाद्यादिसाम्यस्य वैषम्यं वैपरीत्यं यस्मिन् तथाभूतमपि गेयम्=गानम् भयेन लयासङ्गतमपि कामिनाम्=रतिभोगेच्छुकानां रागम्= प्रीतिविशेषम् अवर्धयत्=वृद्धिं निन्ये । अत्र गीतशास्त्रानुसारं लयानुवेध्येव गानं श्रोतॄणां मनो हरतीति वस्तुस्थितिः, परन्त्वत्र तद्वैपरीत्येन गीतात्मककलाविरोधः स्पष्टः, सच वधू-जनेषु कामिनां रत्याधिक्यव्यञ्जनाद् गुणो जातः ॥ १८२ ॥

**ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् ।**
**अबलाविरहक्लेशविह्वलो गणयत्ययम् ॥ १८३ ॥**

लोकविरोधस्य गुणतां दर्शयति—'ऐन्दवात्' इति । अयम् अबलाविरहक्लेशविह्वलः= कान्तावियोगजनितदुःखाकुलान्तःकरणः कामी=कामुकः ऐन्दवात्=इन्दुसम्बन्धिनः अर्चिषः= मयूखात् अपेक्ष्य [ल्यब्लोपे पञ्चमी] हव्यवाहनम्=हुतभुजम् शिशिरम्=शीतलम् गणयति= कल्पयते । अत्र—हव्यवाहनः शिशिरश्चेति लोकविरोधः, परमसौ विरहिषु चन्द्रमयूखा-नामत्यन्तमुद्दीपकताव्यञ्जनाद् गुण एव वृत्तः ॥ १८३ ॥

**प्रमेयोऽप्यप्रमेयोऽसि सफलोऽप्यसि निष्फलः ।**
**एकस्त्वमप्यनेकोऽसि नमस्ते विश्वमूर्त्तये ॥ १८४ ॥**

न्यायविरोधस्य गुणतां दर्शयति—'प्रमेय' इति । प्रमेयः=प्रमाणजन्यज्ञानगोचरः 'अपि' अप्रमेयः असि=स्वयम्प्रकाशरूपत्वात् अप्रमेयोऽसि । सफलः=फलं कार्यं जगद्रूपम् तेन सहितः जगत्कारणमपि निष्फलः=तद्भिन्नः वास्तवकारणत्वाभावात् तदसङ्गत्वाच्च निर्लेपो-ऽसीत्यर्थः । एकः=अद्वैततत्त्वमपि त्वम् अनेकः असि=नामरूपयोस्त्वत्सत्तानतिरिक्तसत्त्वात् 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेः । मायया बहुरूपतया प्रतीयमानत्वाच्च एवम्भूताय विश्वमूर्त्तये=प्रपञ्चस्वरूपाय ते=तुभ्यम् 'नमः' । अत्र—एकस्मिन्नेव वस्तुनि प्रमेयत्वाप्रमेय-त्वादिकं परस्परं विरोधीति परन्तु ब्रह्मणो[१] व्यञ्जनात् गुणो जातः ॥ १८४ ॥

**पञ्चानां पाण्डुपुत्राणां पत्नी पाञ्चालपुत्रिका ।**
**सतीनामग्रणीश्चासीद्दैवो हि विधिरीदृशः ॥ १८५ ॥**

आगमविरोधस्य गुणतां दर्शयति—'पञ्चानाम्' इति । पाञ्चालपुत्रिका=पाञ्चाली द्रुपदा-त्मजा पञ्चानाम् पाण्डुपुत्राणाम् पत्नी=युधिष्ठिरादीनां पञ्चानामपि [यज्ञसंयुक्ता] पाणिगृहीता सतीनाम् च अग्रणीः आसीत्=पतिव्रतानां धुरि कीर्त्तनीयाऽभवदित्यर्थः । हि=तथाहि दैवः=देव-सम्बन्धी विधिः=विधानम् ईदृशः=आगमनिघ्नताविरही । नहि[२] दैवं विधानं साधारणजनीयमा-गमविधानमनुसरति देवशक्तेरलौकिकत्वात् अर्थात् तेषां तस्याश्च देवांशप्रभवत्वात् तथापति-पत्नीभावः आगममत्याक्राम्यन्नपि अपवादरूपत्वेनाविरुद्ध एव । अयमाशयः—एकस्याः स्त्रियः

१ **'सर्वधर्मोपपत्तेश्च'** [ब्र० सू० २।१।३७] इत्यत्र ब्रह्मणो महामायत्वेन सर्व-धर्मोपपत्तिः समर्थिता ।

२ एतच्च **'देवादिवदपि लोके'** [ब्र० सू० २ । १ । २५] इत्यत्राधिकरणे करणेहत्य निरीक्षणीयम् ।

बहुपतित्वं सतीत्वञ्च आगमविरुद्धमपि दैवविधानस्य लोकसीमोल्लङ्घनताव्यञ्जनात् गुणः॥ १८५॥

**शब्दार्थालङ्क्रियाश्चित्रमार्गाः सुकरदुष्कराः।**
**गुणा दोषाश्च काव्यानामिह सङ्क्षिप्य दर्शिताः॥ १८६॥**

पूर्वप्रतिज्ञातगुणादिनिरूपणानन्तरं स्वग्रन्थमुपसंहरति--'शब्दार्था०' इति। इह=अस्मिन् काव्यादर्शनामके ग्रन्थे काव्यानाम् शब्दार्थालङ्क्रियाः=शब्दनिष्ठा अर्थनिष्ठाश्च उभयालङ्काराः अनुप्रासस्वभावाख्यानप्रभृतयः तथा सुकरदुष्कराः=सुकरा दुष्कराश्च चित्रमार्गाः=चित्रालङ्कृतीनां प्रकाराः गुणाः दोषाः च=श्लेषप्रभृतयो गुणाः अपार्थत्वाद्या दोषाः संक्षिप्य दर्शिताः=संक्षेपेण निरूपिताः विस्तरे क्रियमाणेऽपि तेषामानन्त्यात् सुकुमारमतिव्यामोहकत्वात्, दर्शितप्रकारेण शिष्यैरपि तेषां स्वयमूहितुं शक्यत्वाच्चेति भावः॥ १८६॥

**व्युत्पन्नबुद्धिरमुना विधिदर्शितेन**
**मार्गेण दोषगुणयोर्वशवर्त्तिनीभिः।**
**वाग्भिः कृताभिसरणो मदिरेक्षणाभि-**
**र्धन्यो युवेव रमते लभते च कीर्त्तिम्॥ १८७॥**

इत्याचार्यदण्डिनः कृतौ काव्यादर्शे शब्दालङ्कारदोषविभागो नाम
तृतीयः परिच्छेदः।

---

यथोक्तया अपि ग्रन्थस्य पूर्णतां समर्थयन् समाप्तिं करोति—'व्युत्पन्नबुद्धिः' इति। अमुना=प्रदर्शितेन विधिदर्शितेन=विधीयन्ते प्रतिपाद्यन्ते वस्तुस्वरूपाण्येभिरिति विधयः लक्षणानि [व्युपसृष्टात् 'धाञ्' धातोः 'उपसर्गे घोः किः' (३।३।९२) इति पाणिनिसूत्रेण 'किः' प्रत्ययः। अथवा—'विध' विधाने इति तौदादिकात् 'इगुपधात् कित्' (उ० ४।१२०) इति सूत्रेण 'इन्' प्रत्ययः] तैर्विधिभिर्दर्शितेन विवेचितेन दोषगुणयोः=हेयोपादेयधर्मयोः मार्गेण=प्रकारेण व्युत्पन्नबुद्धिः=व्युत्पन्ना व्युत्पत्तिमती बुद्धिर्यस्य सः परिनिष्ठितमतिरित्यर्थः, तथा तेनैव मार्गेण वशवर्त्तिनीभिः=अभ्यासवशात् स्वायत्ताभिः वाग्भिः काव्यस्वरूपाभिः वाणीभिः कृताभिसरणः=कृतम् अनुष्ठितम् अभिसरणम् उद्योगो येन सः शास्त्राभ्यासे सदोद्यतः पुरुषः रमते=ब्रह्मास्वादसहोदररसानुभविता जायते तथा कीर्त्तिम् च=यशश्च लभते प्राप्नोति अर्थात् काव्यस्य मौलिभूतं प्रयोजनं यन्निर्वृतिः कीर्त्तिश्च सर्वत्र देशे काले वा सत्ख्यातिरूपा तां भजते इत्येतावता काव्यप्रयोजनमुपसंहृतं भवति। उक्तमर्थमुपमया स्पष्टीकरोति—मदिरेक्षणाभिः=मदमत्तनयनाभिः मदाघूर्णितदृष्टिभिः सुन्दरीभिः वशवर्त्तिनीभिः=निरतिशयप्रेमवशात् स्वाधीनाभिः विधिदर्शितेन=तडिदादिरूपदैवप्रकाशितेन दोषगुणयोः मार्गेण=अनेन पथेन याने सुमहान् दोषः, अनेन च तद्दोषाभावः गुणो वा इत्येवमात्मना विनिरूपितेन वर्त्मना कृताभिसरणः=विहिताभिसारः युवा=तरुण इव रमते=रतिप्रीतिमनुभवति कीर्त्तिञ्च=तादृशाङ्गनाप्रेमास्पदीभूततया यशोविशेषञ्च लभते=प्राप्नोति। यथा कश्चित् तरुणः अनुकूलदैवतयाऽवबुद्धेन शोभनेन मार्गेण कस्याश्चन सुन्दर्या अभिसाराय प्रचलन् तल्लाभेन तदीयहार्दगोचरः सन् सुप्रीतः सुकीर्त्तिश्च जायते तद्वत् मदुक्तसंक्षिप्तगुणादिलक्षणपरिशीलनेन देशकालादिविषयविवेचनाविचक्षणः सन् काव्यं ज्ञातुं कर्तुं वा प्रवृत्तः निर्वृतिमान् कीर्त्तिमांश्च भवति इति भावः। शम्। वसन्ततिलकावृत्तम्। शिवम्॥ १८७॥

## अथ टीकाकारस्यातिसङ्क्षिप्तः परिचयः—

अस्ति प्रसिद्धा नगरी विशाला यां **शालिकोटे**ति जना वदन्ति ।
याऽनेकवर्णैरपि भूष्यमाणा वर्णैश्चतुर्भिर्न जहाति सत्ताम् ॥ १ ॥
यामार्हतास्तीर्थमुशन्ति जैनं हिंसापिशाचीं परितो हरन्तः ।
यत्राऽभवत् पूर्णमतिर्महात्मा **पूर्णो** मनस्वी यतवाक् कृतात्मा ॥ २ ॥
यः प्राप्य 'गोरक्ष'गुरुं गिरीशं संसारवार्धिं चुलकीचकार ।
**लूना**पविद्धोऽपि चचाल नाद्धा मात्रागमे दोषमुदीक्षमाणः ॥ ३ ॥
स्वधर्मसंरक्षणकारणाय प्राणाहुतिर्येन ददे तुरुष्कैः ।
प्रज्वालितेऽन्यायहुताशने यैत्[३] **हकीकता**ख्यः पुँरिवंशकेतुः ॥ ४ ॥
तस्यां नगर्यामभवद् द्विजाग्र्यो दुर्गापदाम्भोजमिलिन्दकल्पः ।
नाम्ना **तुलाराम** इति प्रसिद्धो राजन्यकं यं बहुशो निषेवे ॥ ५ ॥
**तुलसीराम**स्तस्माल्लेभे जन्मापरः शिवः शान्तः ।
शिवभक्तिभावभरितं यस्य मनो नैव दीनतां भेजे ॥ ६ ॥
तस्मात् **देवीदासः** सकलोपाध्यायकर्मणां कुशलः ।
परिडतजनतामध्ये मुमुहे धिषणा न यस्य कृत्येषु ॥ ७ ॥
तस्मात्स्वधर्मे दृढभक्तिभाजो **नृसिंहदेवो** जनिमाप तस्मिन् ।
काले यदा घोरपिशाचवृत्तिर्जनेषु वासं बहुधा वितेने ॥ ८ ॥
क्वचित् क्वचित् परिडतरूपशब्दः श्रुतौ जनानामचरत् प्रचारम् ।
कश्चित् कृती ब्राह्मणपादकञ्जे न्यधात्–शिरः स्वं वृषमीक्षमाणः ॥ ९ ॥
एवंविधे दुर्घटनेऽपि काले क्वचित् क्वचिद् ये गुरवो न्यवात्सुः ।
स्वताततनिर्दिष्टपथानुयातो नैकानि शास्त्राण्यपठत् स तेभ्यः ॥ १० ॥
तेषां गुरूणां कृपयाऽहमद्य स्वतातसावित्रतपःप्रभावात् ।
ग्रन्थाननेकान् व्यरचं सुराणां वाणीं समार्चं परमां पवित्राम् ॥ ११ ॥

---

## दुर्जनप्रशस्तिः—

---

नमामि बद्धाञ्जलिरेष तांस्तान् विनापराधं पराचित्तमर्म ।
तुदन्ति हा ! वक्रवचःशरौघैः खलाः किराता इव निर्दया ये ॥ १ ॥
यान्यक्षराणि लिखितुं विधिना न शेके निःशङ्कमत्र खललेखविधिः प्रसूते ।
साधोर्ललाटपटलस्फटिके तु तानि व्यक्तं प्रमाणपथशून्यसहोदराणि ॥ २ ॥
परोपघातो व्यसनं दुरात्मनामतः परेषां गुणतापि जालताम् ।
प्रयाति सद्यः खलपूर्वसन्निधावहो दुरन्ता कुजनाभिमानिता ॥ ३ ॥

---

१ 'स्यालकोट' इति प्रसिद्धा । २ लूनया 'लूना' इत्याख्यया विमात्रा अपविद्धः= भोगाय याच्ञानैष्फल्ये सति 'शालिवाहन' राजद्वाराऽपवाहितः । लूनश्चासावपविद्धश्चेत्यपि । ३ यत्=यस्यां नगर्याम् । ४ 'पुरियाँ' इतिप्रसिद्धज्ञातिमति क्षात्रियवंशे केतुरिव केतुः ।

असज्जनान् संरचतो भवे भवे विधा विधातुर्विविधा विडम्बना ।
विरच्य वेषं स्वरुचा मनोरमं स तेन तेने किल कालिमा मुखे ॥ ४ ॥
एते हि धूर्ता निज-पेट-पेटी-प्रपूरणार्था धनिकानुपेत्य ।
संयावपूपाज्यरसादिगर्धा निन्दन्ति सूरीन् निगमान्तनिष्ठान् ॥ ५ ॥

—*—

## [एतद्] ग्रन्थनिर्माणकालः—

—*—

युग्मैर्वस्वङ्कचन्द्राख्ये वैक्रमे शुभवत्सरे ।
भाद्रे मासे दले कृष्णेऽमायां चन्द्रजवासरे ॥ १ ॥
काव्यादर्शस्य 'कुसुम-प्रतिमां' नाम नामतः ।
'सौभाग्यवत्या' विवृत्या टीकां पूरितवानहम् ॥ २ ॥
पञ्चमे जार्जभूपेन्द्रे भारते सति शासति ।
इमामकार्षं सरलां टीकां छात्रहितेष्टये ॥ ३ ॥
तुष्यतां तेन माकान्त उमाकान्तश्च कर्मणा ।
शर्म वो यच्छतां नित्यं पठतां सर्वकर्मसु ॥ ४ ॥
या मे गृहस्थाश्रमधर्मवोढ्री सखा परं कौशलमन्त्रणासु ।
'**सुहागवन्ती**'ति सुनामरूपा स्ववंशनाम्नः स्थितिकामयित्री ॥ ५ ॥
तद्धार्दसम्पोषणकामपूर्त्यै तदीयनाम्ना व्यरचं स्फुटार्थाम् ।
निगूढभावां 'विवृतिं' सुधीशाः ! मान्द्यं मदीयं क्षमयन्तु सन्तः ॥ ६ ॥
विप्राः सन्तु कदर्थनाविरहिताः पृथ्वी सशस्या भवेत्
काले वर्षतु वारिदोऽपि पवनाः संवान्तु सौख्यायनाः ।
राजानो निजमित्रतां प्रतिदिनं संवर्धयन्तु क्षणः
सर्वेषां गृहकेषु नित्यमतुलः सञ्जायतां सर्वथा ॥ ७ ॥

इति श्रीपण्डितदेवीदासतनुजनुषा सारस्वतवंशावतंसेन सतीविष्णुदेवीगर्भजेन स्यालकोट-वास्तव्य—(लवपुरवास्तव्य)—जैनन्यायविशारद—कवितार्किक—[तन्त्रचक्रवर्त्ति]दर्शनाचार्य—**नृसिंहदेव**शास्त्रिविरचितायां स्वोपज्ञ'सौभाग्यवती' विवृतिसहितायां 'कुसुमप्रतिमा'-ख्यायां काव्यादर्शव्याख्यायां
तृतीयः परिच्छेदः ।

**समाप्तश्चायं ग्रन्थः ।**

ॐ

# 'प्रभा' टीकोपेता न्यायसिद्धान्तमुक्तावली।

माननीयाः ! शास्त्रिमहाभागाः ! परीक्षादित्सवः ! छात्राश्च !

सहर्षमिदमावेद्यते भवतां पुरुतः कवितार्किकदर्शनाचार्य-**नृसिंहदेव**शास्त्रिरचितायाः न्यायसिद्धान्तमुक्तावल्याः 'प्रभा' नाम्नी टीका सम्प्रति मुद्रिता सती विक्रयाय प्रस्तुता वर्त्तते। इयं टीकाऽत्यन्तं सरला, सन्ति दिनकर्याद्याः अन्याः अप्यस्याष्टीकाः परन्तु मूलार्थावगमाय ताः सम्प्रति छात्राणां नोपकुर्वन्ति यादृशीयमुपकारपरायणा शास्त्रिभी रचिता। अनेके विद्वांस एनां श्लाघन्ते। अत्र मूलपङ्क्तेः पूर्वमर्थः प्रकाशितः पश्चात्तद्भावः सरलसंस्कृतेनोद्घाट्य दर्शितः सामान्यलक्षणादिकठिनस्थलेषु रहस्यबोधनाय यादृशी सरलता कृता सा नान्यत्रोपलभ्यते। अवच्छेदकादिकठिना नव्यन्यायशास्त्रपरिभाषाः क्वचित् टिप्पणे क्वचिन्मूलेऽतिमात्रं परिष्कृताः। अहो ! अनुमानखण्डे व्याप्तिपक्षतादिस्वरूपं यथा सरलं प्रदर्शितं तदन्यत्र किं केन दर्शयितुं शक्यते? शब्दखण्डे शाब्दबोधस्य लक्षणं दर्शयित्वा तद्भेदाः मतभेदेन च वाक्यार्थबोधप्रकारः शक्तिवादरहस्यं स्वतःपरतःप्रामाण्यवादो विधिवाद उपाधिवादश्चेत्याद्या विषयाः सुस्पष्टं तथा लिखिता येनाध्यापकानां विशारदमध्यमादिपरीक्षादित्सूनां छात्राणां पाठने पठने च कथमपि क्लेशो न भवेत्। आदौ पण्डितानां मनोविनोदनाय 'न्यायतत्त्वसमीक्षा' नाम्नी भूमिका विरच्य शास्त्रिभिर्योजिता यत्रेश्वरसिद्धिर्महत्या आरभट्या प्रादर्शि, अभावत्वस्य चाखण्डोपधिता न्यरूपि। छात्राणामुपकाराय एका सरला संक्षिप्ता भूमिका पृथगेव विनिवेशिता तत्तद्विषयस्य झटित्यवगमाय प्रारम्भे विषयसूची च नियोजिता। किञ्च प्रसङ्गसङ्गत्या क्वचित् क्वचित् शास्त्रिभिः पूर्वमीमांसाया विषयोऽपि टिप्पणादिष्वतिसरलतां नीतः, एवंविधा अनेके गुणा अस्या अवलोकनेनैव ज्ञातुं शक्यन्ते। एतस्या आश्रयं गृहीत्वा मुक्तावल्या अभ्यासकारिणः छात्राः सर्वथोत्तीर्णा भविष्यन्तीति सम्भावयामः। सेयमस्माभिरतिमनोहरैर्मुम्बईसीसकाक्षरैर्मुद्रापिता प्रकाशिता च। कर्गलपत्रादीनां महर्घतायां सत्यामपि पिपाठिषुजनसौलभ्याय मूल्यमप्यस्या उचितमेव स्थापितम्, तदेतस्याः प्रचारेण शिथिलप्रचारस्य न्यायशास्त्रस्य पुनरुद्धारः क्रियतां महाभागैरिति सानुनयं निवेदयामः।

प्रत्यक्षखण्डस्य मूल्यम् २) रूपकद्वयम्। अनुमानादिद्वितीयखण्डस्य मूल्यम् २), मिश्रितभागद्वयस्य मूल्यम् [ केवल विद्यार्थियों के लिये ] ३।।) रूपकत्रयम्, अष्टाणकाश्च।

निवेदकः—

**मेहरचन्द लक्ष्मणदास,**

**संस्कृत पुस्तकालय, सैदमिट्ठा बाज़ार, लाहौर।**

# काव्यादर्शस्य मूलश्लोकानामकारादिक्रमेण अनुक्रमणी ।

# छात्रों के लिये परमोपयोगी पुस्तकें

## पद्मचन्द्रकोष

### व्युत्पत्ति विषय सहित ३०००० तीस हज़ार शब्दों का

### बृहत् संस्कृत-हिन्दी कोष

इस कोष में प्रथम मोटे टाइप में संस्कृत शब्द, पीछे उस से कुछ बारीक टाइप में उन के लिङ्ग, व्याकरणानुसार संस्कृत में व्युत्पत्ति और एक एक शब्द के हिन्दी भाषा में अनेक अर्थ स्पष्ट कर दिए गए हैं, जिस से थोड़ा पढ़ा लिखा भी लाभ उठा सकता है। यह कोष यूरोप तथा भारत के बड़े बड़े धुरन्धर विद्वानों, प्रिंसिपलों और प्रोफैसरों की सर्वश्रेष्ठ सम्मतियाँ प्राप्त कर चुका है। संस्कृत तथा हिन्दी के विद्यार्थियों के लिए अत्यन्त उपयोगी है। कोष बड़े आकार का है। तृतीयावृत्ति छप कर विक्रयार्थ प्रस्तुत हुई है। सजिल्द। मूल्य ६) छः रुपया।

## मध्यकौमुदी सटिप्पण

व्याकरणाचार्य पं० श्रीधरानन्द जी शास्त्रिकृत सरल संस्कृत टिप्पणी सहित। इसमें बहुत सी उपयोगी बातें जोड़ दी गई हैं। विषयानुक्रमणिका, प्रत्याहारों की तालिका, अचों के १८ भेदों का चक्र, वर्णों के स्थान और प्रयत्न के बोधक कोष्ठक अधिक लाभदायक होने से प्रारंभ में रख दिए गए हैं। अन्त में लिङ्गानुशासन और गणपाठ आवश्यक समझ कर इसमें जोड़ दिए गए हैं। विद्यार्थियों का लाभ सोच कर अन्त में परीक्षा के प्रश्न पत्र और उत्तर लिखने की शैली को भी सम्मिलित कर दिया गया है। बढ़िया छपाई कागज़। सजिल्द १।) विद्यार्थियों से १) एक रुपया।

## पञ्चतन्त्र मूलमात्र

### विषयानुक्रमणिका और श्लोकानुक्रमणिका सहित

त्रुटित-पाठ-योजनादि से अत्यन्त परिश्रम पूर्वक संशोधित किया हुआ सर्वोत्तम संस्करण, बढ़िया और मोटे कागज पर निर्णय-सागरी टाइप के दिव्य अक्षरों में अति उत्तमता से छपकर विक्रयार्थ प्रस्तुत हुआ है। बढ़िया मज़बूत कपड़े की जिल्द। मूल्य लागतमात्र। अजिल्द ।।।) आ०। सजिल्द १) रु०

## पञ्चतन्त्र सटीक

संस्कृतटीका सहित भी बहुत बढ़िया पञ्चतन्त्र छप गया है। टीकाकार हैं पञ्जाब के धुरन्धर विद्वान्—कवितार्किक पं० नृसिंहदेवशास्त्री दर्शनाचार्य लवपुरीय। ऐसी सरल, विस्तृत और विद्यार्थियों के लिए विशेष उपयोगी टीका आपने आज तक नहीं देखी होगी। जीवानन्द तथा जीवारामादि विद्वानों की सब टीकाओं को मात कर दिया है।

टीका ऐसी सरल है कि थोड़ी बुद्धिवाले विद्यार्थी भी भली प्रकार समझ सकते हैं। इसके साथ श्लोकानुक्रमणिका तथा विषयानुक्रमणिका भी लगा दी गई हैं। पृष्ठ संख्या ६५० से ऊपर। विदित हो कि जीवानन्द विद्यासागर वाले पञ्चतन्त्र के पृष्ठ हैं ५८२ और मूल्य ३) है, किन्तु हमने विद्यार्थियों के हित के लिये बहुत सूक्ष्म लाभ रखकर केवल २॥) ही नियत किया है =) प्रति रुपया के हिसाब से ।-) कमीशन काटकर केवल २≶) ही शेष लिए जायँगे।

# अनुवादप्रभा

## अनुवाद के लिए अत्यन्त उपयोगी पुस्तक

आज तक जितनी भी अनुवाद की पुस्तकें निकली हैं, इसने उन सब को मात कर दिया है। इस से साधारण छात्र भी थोड़े ही समय में आसानी से संस्कृत में सुन्दर अनुवाद बनाना सीख सकता है। यह नवीन चतुर्थावृत्ति लेखक ने पुनः परिश्रम करके बहुत ही परिवर्द्धित और परिसंस्कृत की है। कई उपयोगी बातें और भी बढ़ा दी गई हैं, जिस कारण पृष्ठों की संख्या भी बहुत बढ़ गई है। तदपि विद्यार्थियों के हित के लिये मूल्य केवल ।॥) बारह आने ही रखा है।

# लोकोक्तिरत्नप्रभा

इस में संस्कृत की लोकोक्तियों का अपूर्व संग्रह किया गया है, जो अनुवाद और प्रस्ताव को रोचक और मुहावरेदार बनाने के लिये विद्यार्थियों को परमोपयोगी है। मूल्य केवल ॥) आठ आना ।

# स्वप्नवासवदत्त नाटक

खरड्डीत्युपाह्वपण्डितविजयानन्दशास्त्रिविरचित विजयवैजयन्तीनामक सर्वाङ्गपूर्ण सरल संस्कृत व्याख्या तथा अत्यन्त उपयुक्त तथा परिमार्जित रोचक हिन्दी अनुवाद सहित। विद्यार्थियों के लिए परमोपयोगी छपाई सफाई देखने योग्य। पुष्ट चिकना कागज। मजबूत कपड़े की जिल्द। सजिल्द मूल्य केवल १॥)

# ऊरुभङ्ग नाटक

व्याकरणाचार्य पं० श्रीधरानन्द जी शास्त्री कृत अन्वय, विस्तृत व्याख्या, और रोचक हिन्दी अनुवाद सहित। विद्यार्थियों की सुगमता के लिये पहले मोटे टाइप में मूल श्लोक फिर उससे कुछ बारीक टाइप में अन्वय, तब विस्तृत संस्कृत व्याख्या, तदनन्तर, जीती जागती भाषा में विशुद्ध, सरल, और मार्मिक हिन्दी अनुवाद। छपाई परम सुन्दर निर्णयसागरी टाइप में। पुष्ट चिकना कागज। मूल्य केवल ॥-) विद्यार्थियों से ॥)

## वाग्भटालङ्कार

अन्वय, विस्तृत व्याख्या, और समुज्ज्वल हिन्दी अनुवाद सहित। इसके व्याख्याकार और अनुवादक हैं—विद्याभास्कर वेदरत्न प्रो० उदयवीर शास्त्री, न्याय वैशेषिक सांख्य योग तीर्थ, वेदान्त विशारद। विद्यार्थियों की सुगमता के लिये पहले मोटे टाइप में मूल श्लोक फिर उससे कुछ बारीक टाइप में अन्वय, तब विस्तृत संस्कृत व्याख्या, तदनन्तर, प्रोफेसर महोदय की उद्भट लेखनी से निकला हुआ जीती भाषा में विशुद्ध, सरल, और मार्मिक हिन्दी अनुवाद। छपाई परम सुन्दर निर्णयसागरी टाइप में। पुष्ट चिकना काग़ज़। मूल्य केवल १) एक रुपया।

## पञ्जाब यूनिवर्सिटी

की

रत्न, भूषण, प्रभाकर हिन्दी परीक्षाओं

और

प्राज्ञ, विशारद, शास्त्री संस्कृत परीक्षाओं

की सब पुस्तकें

नीचे लिखे पते से मंगाइए।

नोट—उपरोक्त परीक्षाओं की पुस्तक सूची पृथक् छप कर तय्यार है। कार्ड भेज कर मंगवा लीजिए।

प्राप्तिस्थान—

# मेहरचन्द लक्ष्मणदास

## संस्कृत पुस्तकालय

### सैद मिट्ठा बाज़ार, लाहौर